एवमार्यमिश्रान् विज्ञापयामि । अये ! किन्तु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते ? अङ्ग ! पश्यामि । 31679

[ नेपथ्ये ]

(क) उस्सरह उस्सरह अय्या ! उस्सरह ।

---

( क ) उत्सरतोत्सरतार्याः ! उत्सरत ।

---

उदयन–वासवदत्ता–पद्मावती–वसन्तकानां मुख्यपात्राणां सूचनादत्र मुद्रालङ्कारः । तल्लक्षणं च–'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः' । इति । आर्यावृत्तमिदम् । तल्लक्षणं यथा **श्रुतबोधे**—'यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥' इति ॥ १ ॥

इदानीं सूत्रधारः प्रधानपात्रनामधेयसूचनसहचरितं मङ्गलं निबध्य प्रकृतनाटकीयकथावस्तुसूचनोपक्रमं प्रतिजानान आह—**एवमिति** । आर्यमिश्रान् कुलशीलाद्यार्यगुणसम्पन्नान् श्रेष्ठान् सामाजिकानित्यर्थः, एवं बुद्धिस्थेन वक्ष्यमाणेन वा प्रकारेण, विज्ञापयामि निवेदयामि । नाटकावलोकनकौतूहलेन समुपस्थितानां सामाजिकसहृदयानाम् अभिधास्यमानविधया मनोऽनुरञ्जयामीति भावः । तदानीमेव नेपथ्ये स्ववर्गीयजनोत्थापितं कमपि शब्दविशेषं निशम्य तदर्थं जानन्नप्ययमज्ञानमभिनयति—**अये** इति । आश्चर्याभिनयसूचकमव्ययमिदम् । किन्तु खलु किं नामेदं, किं कारणं चेत्यर्थः, मयि सूत्रधारे, विज्ञापनव्यग्रे निवेदनोन्मुखे सति, सामाजिकान् प्रति कथावस्तु विज्ञापयितुं मनसि कृतविचारे सतीत्यर्थः, शब्द इव श्रूयते कुतोऽपि कोऽपि ध्वनिरिवाकर्ण्यते । 'किमीयः कीदृशोऽय'मिति विशेषाकारेणाऽनिश्चितं कमपि शब्दमहं शृणोमीत्यर्थः । अङ्ग भोः, पश्यामि जानामि, दृशेर्ज्ञानार्थत्वादयमर्थः । कुतस्त्यः कीदृशोऽयं शब्द इति निश्चिनोमीत्यर्थः ।

नेपथ्ये तमेव शब्दाकारमाह—**उस्सरहेत्यादि** । त्रिरुक्तिस्त्वराविशेषं द्योतयति । उत्सरणमपसरणम् । 'ननु भोः ! इतः स्थानात्तूर्णमपसरत । मध्येमार्गं न

---

( दारु ) जी की भुजायें आपका ( दर्शकों का ) रक्षण करें ॥ १ ॥

आप सज्जनों से मेरा यह विज्ञापन है । ऐं ! यह शब्द, जब कि मैं आप लोगों से कुछ कह रहा हूँ, इसी समय कहाँ से सुनाई पड़ रहा है ? अच्छा देखता हूँ ।

( नेपथ्य में )

हटो, हटो लोगो ! हटो !

सूत्रधारः—भवतु, विज्ञातम्।

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः॥ २॥

---

स्यातव्य'मित्येवं लोकानामपसारणम्। नेपथ्यं च नाटकीयपात्राणां तत्तद्रूपभूमिकाग्रहणसाधनं स्थानम्।

पूर्वोक्तं शब्दविशेषं श्रुत्वाह सूत्रधारः—**भवत्विति**। भवतु अस्तु, शब्द इति शेषः। नेपथ्यसमुत्थोऽयमपरोक्षोऽप्ययस्तु नाम शब्दः, विज्ञातम् किंविधः कस्यायं शब्द इति मया तर्कितमित्यर्थः।

तदेवाह—**भृत्यैरिति**। स्निग्धैः स्नेहपूर्णैः आप्तैर्विश्वस्तैरित्यर्थः, अत एव कन्यानुगामिभिः, अनुगन्तुं शीलमेषां तेऽनुगामिनः परिचारकाः, 'सुप्यजातौ णिनिस्ताच्छील्ये' इति ताच्छील्ये णिनिः, कन्यायाः कुमार्याः पद्मावत्या अनुगामिनस्तैः पद्मावतीपरिचारकैरित्यर्थः। उत्सारणाकारिणां भृत्यानां पुरोगामित्वस्यौचित्यादत्र पश्चाद्गमनकारितांशपलक्षणलक्षितेनाऽनुगामिपदेन परिचारकरूपोऽर्थो लक्ष्यते। तेनानुगामिशब्दोऽयं लाक्षणिको मन्तव्यः। अत एव 'कन्यामनुगन्तुं शीलमेषा'मिति नात्र विग्रहः कार्यः। मगधराजस्य मगधदेशाधीश्वरस्य दर्शकस्य, 'मगधानां राजे'ति राजान्तात्तत्पुरुषाट्टच्, भृत्यैः सेवकैः भटैरिति यावत्, तपोवनगतः आश्रमस्थः, सर्वः सकलो बालवृद्धादिः, जनस्तापसलोकः, धृष्टं निःशङ्कं यथा तथेति क्रियाविशेषणम्, उत्सार्यते दूरीक्रियते मार्गमध्यादपसार्यत इत्यर्थः। कर्मणि प्रयोगोऽयम्। उत्सारणायां धृष्टत्वं चात्र भृत्यानां प्रभुनिदेशवशवर्तिनामस्वतन्त्रणां युज्यत एव। पद्मावतीप्रवेशसौकर्योपयोगिनीयं तापसजनोत्सारणा भटैराचर्यमाणा नेपथ्ये प्रवर्तते, तस्या एव शब्दोऽयं श्रूयमाणोऽस्तीति सूत्रधारस्योक्तेराशयः। अनुष्टुब् वृत्तम्। तल्लक्षणं यथा **श्रुतबोधे**—'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्। द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः॥' इति॥ २॥

---

सूत्र०—अच्छा, मालूम हुआ।

कन्या का अनुयायी मगधराज का प्रिय सेवकवर्ग तपोवन में रहनेवाले सभी लोगों को ढिठाई से हटा रहा है॥ २॥

[ निष्क्रान्तः । ]

स्थापना ।

[ प्रविश्य ]

भटौ—( क ) उस्सरह उस्सरह अय्या ! उस्सरह ।

[ ततः प्रविशति परिव्राजकवेषो यौगन्धरायण आवन्तिकावेषधारिणी वासवदत्ता च । ]

---

( क ) उत्सरतोत्सरतार्याः ! उत्सरत ।

---

**निष्क्रान्त इति** । एवं भाविनं पात्रप्रवेशं संसूच्य कृतकार्यः सूत्रधारो रङ्गान्निर्गतोऽभूदित्यर्थः ।

**स्थापनेति** । सूत्रधारकृतः प्रस्तावोऽयं, प्रारप्स्यमानस्य कथावस्तुनः स्थापनात्, प्रस्तावनापरपर्याया स्थापनेत्यभिधीयते **नाट्यशास्त्रकारैः** । आमुखमप्येतस्या एव नामान्तरम् । तथा च **साहित्यदर्पणे विश्वनाथकविराजः**—'नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥' इति । अन्यत्र च प्रस्तावनास्वरूपमित्थमुपवर्णितम्—'विधेर्यथैव सङ्कल्पो मुखतां प्रतिपद्यते । प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता ॥' इति । पञ्चविधासु प्रस्तावनाभिदासु प्रवर्तकाभिधाऽत्र प्रस्तावना । तथा च तल्लक्षणमपि **साहित्यदर्पणे**—'कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत् । तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्तकम् ॥' इति ।

साम्प्रतं सूत्रधारसूचनानुसारम् उत्सारयतो भटद्वयस्य प्रवेशमाह कविः—**प्रविश्येति** । उस्सरहेत्यादि नेपथ्यसमुद्भूतस्य तस्यैव शब्दस्याम्रेडनम् ।

**तत** इति । परिव्राजकवेषः, परिव्राजकस्येव वेषो यस्य सः, काषायवस्त्रधारिसंन्यासिसदृशवेषवानित्यर्थः । आवन्तिकावेषधारिणी, अवन्तिदेशोद्भवया स्त्रिया सदृशं वेषं गृहीतवतीत्यर्थः । 'तत्र भवः' इत्यर्थे 'काश्यादिभ्यष्ठञ्ञिठौ'इत्यनेन काश्यादेराकृतिगणत्वकल्पनया अवन्तीशब्दाद् ञिठप्रत्यये टस्येकादेशे ञित्वादादिवृद्धौ स्त्रीत्वे टापि 'आवन्तिके'ति रूपसिद्धिः ।

---

( सूत्रधार जाता है । )

प्रस्तावना समाप्त ।

( दो सिपाहियों का प्रवेश )

दोनों सिपाही—हटो, हटो मान्यो ! हटो ।

(तब संन्यासी के वेष में यौगन्धरायण तथा अवन्तीदेश के लोगोंके वेषमें वासवदत्ता का प्रवेश)

यौगन्धरायणः—[ कर्णं दत्त्वा ] कथमिहाप्युत्सार्यते ? कुतः—

**धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-**
**र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते ।**

---

**कर्णं दत्त्वेति** । श्रोत्रं शब्दानुसारिण्या दिशोऽभिमुखं कृत्वा, तच्छब्दश्रवणमभिनीयेत्यर्थः । **कथमिति** । हन्त ! शान्तेऽस्मिन्नाश्रमेऽपि तपस्विनामनुचितमिदमुत्सारणं क्रियत इत्यर्थः ।

'कुत' इति तस्यैव स्वरूपमुपदर्शयति—**धीरस्येति** । धीरस्य गम्भीरस्य स्थिरचित्तस्य इन्द्रियार्थसुखोपभोगनिरपेक्षस्येत्यर्थः, आश्रमसंश्रितस्य, आश्रमं तपोवनं संश्रितस्तस्य 'द्वितीयाश्रिते'ति समासः, वसतः निवासं कुर्वतः तपोवनस्थस्येत्यर्थः, वन्यैः वने भवैरुत्पन्नैः, वनशब्दात् भवार्थे यत् , फलैः, फलपदं चात्र साहचर्यात् , कन्दमूले अप्युपलक्षयति, तथा च फलशब्दस्य कन्दमूलफलैरित्यर्थः, तुष्टस्य सन्तोषं प्राप्तस्य, मानार्हस्य, मानः सत्कारः तदर्हस्य तद्योग्यस्य आदरणीयस्येति यावत् , वल्कलवतः, वल्कलमस्यास्तीति वल्कलवान् तस्य, 'तदस्यास्ती'ति मतुप् , वल्कलं वृक्षत्वक् , तां वसानस्येत्यर्थः । तपस्विनो हि वने सुलभैर्वल्कलैरेव स्वां तनूमाच्छादयन्ति । एतादृक्पूर्वोक्तविशेषणविशिष्टस्य जनस्य तापसलोकस्य, त्रासः समुत्सारणासमुत्थं कष्टं, समुत्पाद्यते, उद्भाव्यते, भृत्यैरिति शेषः । तपोवनस्थास्त्यक्तसंसारास्तापसाः समुत्सारणपरैर्भृत्यैर्व्यर्थमेव क्लेश्यन्त इति भावः । अथवा प्रभुनिदेशपरतन्त्रैर्भृत्यैः किमपराद्धम् , सर्वोऽयमपराधः प्रभोरेवेति स एव वाच्य इत्याशयेनोत्तरार्धमाह—**उत्सिक्त इति** । भोः रे इत्यनादरसूचनम् , उत्सिक्तः अतिक्रान्तमर्यादः, विनयात् अपेतपुरुषः, अत्र विनयपदं समस्तं युज्यते, विनयात् नम्रतायाः अपेता अपगता भ्रष्टाः पुरुषा भृत्यरूपा यस्य स उद्धतभृत्य इत्यर्थः, चलैरस्थिरैः परिवर्तिभिः, भाग्यैरैश्वर्यशालित्वरूपैः, विस्मितो विशेषेण स्मितः अतिगर्वितः, 'विस्मयोऽद्भुतमाश्चर्यम्' इति कोषाद्विस्मयशब्दस्याश्चर्यार्थकत्वमिव 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः' इति कोषप्रामाण्यात् स्मयतेर्दर्पार्थकत्वमपि युज्यते । कोऽयं को नाम प्रभुः, अयमिति सामान्यतो निर्देशात्तत्प्रभुनाम्नोऽनुपादानमत्राऽनादरमेव

---

**यौगन्धरायण**—( कान लगाकर ) क्यों ? यहां भी हटाया जा रहा है । क्योंकि—

धीर, आश्रमनिवासी, वन के फलों से संतुष्ट, वल्कलधारी, सम्मान तथा पूजा के योग्य जनों में भी त्रास उत्पन्न किया जा रहा है । कौन देसा है, जिसके सेवक उद्धत हैं और जो स्वयं अभिमानी तथा अस्थिर भाग्यों पर घमण्ड करता है और शान्त इस तपोवन को

उत्सिक्तो विनयादपेतपुरुषो भाग्यैश्चलैर्विस्मितः
कोऽयं भो ! निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया ॥ ३ ॥

वासवदत्ता—(क) अय्य ! को एसो उस्सारेदि ?

यौगन्धरायणः—भवति ! यो धर्मादात्मानमुत्सारयति ।

---

(क) आर्य ! क एष उत्सारयति ?

---

द्योतयति तस्य । आज्ञया 'उत्सारणं कुरुते'त्येवंरूपेण स्वकीयादेशेन, निभृतं शान्तम्, इदं तपोवनं तापसाश्रममिमम्, ग्रामीकरोति अग्रामं ग्रामं करोति, अभूततद्भावे च्विः, अग्रामरूपमपि ग्रामरूपतां नयतीत्यर्थः । समुत्सारणाऽऽज्ञया विरक्तांस्तापसान् भृशं क्षोभयन् स्वभावतः शान्तमिदं तपोवनमशान्तेनोद्धतग्राम्यजनप्रायेण ग्रामेण समानतां प्रापयन् क एष मदान्दोऽनुचितमाज्ञापयतीति स्पष्टोऽर्थः । अत्र च भाग्यविशेषणीभूतेन 'चलै'रिति पदेन समम् अर्थौचित्याक्षिप्तः अपिशब्दः सङ्गमनीयः । ततश्चायमर्थो ध्वन्यते—भाग्यानि सदा कस्याप्येकरूपाणि नावतिष्ठन्ते, चक्रवत् तानि परिवर्तन्ते क्रमेण । एष तु किम्प्रभुः साम्प्रतमैश्वर्यमदेनात्मानं विस्मृत्य 'अस्थिरमिदमैश्वर्य'मित्यनवधारयन्नस्थिरैरप्यैश्वर्यसूचकैः स्वीयैर्भाग्यैरित्यमवलिप्त इति महीयानस्य बुद्धेर्व्यामोह इति । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं यथा **वृत्तरत्नाकरे—**
'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥' इति ॥ ३ ॥

ईदृगनुचितं तपस्विनामुत्सारणं सोढुमशक्नुवती 'उत्सारणकारी कस्तावदेष पुरुष' इति जिज्ञासया वासवदत्ता ब्रूते—**अय्येति** ।

**भवतीति** । पूजनीये ! इत्यर्थः । त्यदादिगणपठितस्य भवतुशब्दस्य स्त्रियां सम्बुद्धिरियम् । भावातोर्डवतुप्रत्यये स्त्रीत्वविवक्षायाम् 'उगितश्च' इति ङीप् प्रत्ययेन तत्सिद्धिः । शत्रन्तस्य भूधातोर्नेदं रूपम्, ततः स्त्रियां 'भवन्ती'ति प्रयोगापत्तेः । 'त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः' इति तु प्रायोवादः । बीजं चात्र तत्सम्बोधनाभावे तादृशप्रयोगप्राचुर्याऽनुपलम्भ एव । भाष्ये तु 'हे सः, हे असौ' इति सम्बोध-

---

अपनी आज्ञा से गाँव बना रहा है ॥ ३ ॥

वासव०—आर्य ! यह कौन हटा रहा है ?
यौग०—आर्य ! जो अपने को धर्म से हटाता है ।

वासवदत्ता—(क) अय्य ! ण हि एव्वं वत्तुकामा, अहं वि णाम उस्सारइदव्वा होमि त्ति ।

यौगन्धरायणः—भवति ! एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते ।

वासवदत्ता—(ख) अय्य ! तह परिस्समो परिखेदं ण उप्पादेदि, जह अअं परिभवो ।

---

(क) आर्य ! नह्येवं वक्तुकामा, अहमपि नामोत्सारयितव्या भवामीति ।
(ख) आर्य ! तथा परिश्रमः परिखेदं नोत्पादयति, यथायं परिभवः ।

---

नान्तं पदं दृश्यते प्रत्युक्तम् । अतो 'भवतुशब्दस्य त्यदादिगणपठितत्वेन ततः सम्बुद्धिरियमसङ्गते'ति न भ्रमितव्यम् । य इति । उचितकारितारूपाद्धर्मादात्मानमवपातयन्नेवाऽनुचितोत्सारणकारी पुरुषो विज्ञेय इत्यर्थः । तपस्विनामपसारणं नाम धर्मविरुद्धं कार्यम् , अतोऽस्यानेऽस्यायमनुयोगः पापैकफल एवेति तात्पर्यम् ।

अय्येति । एवं वक्तुकामा नास्ति, 'अहमप्युत्सारयितव्या भवामी'त्यस्मि वक्तुकामाऽहम्' इति सङ्गतिः । वक्तुकामेत्युभयान्वयि । वक्तुं कामोऽभिलाषो यस्याः सेति तदर्थः । 'तुं काममनसोरपी'ति मकारलोपः । नामशब्दः प्रश्नार्थः । 'यः किल धर्माच्च्युतः स एवोत्सारणकारी'ति वक्तुं नोत्सहे, किन्तु 'कदाचिन्मामपि नायमुत्सारये'दिति शङ्कयैव तद्विषयिणी पृच्छाऽस्ति ममेति वाक्यार्थः । 'भृत्यैर्लोकमुत्सारयन्ती पथि याऽहं पुरा गमनसुखमन्वभूवम् , सैवाहमन्येनोत्सारिता कथमीदृशीं तिरस्क्रियां सहिष्ये' इतीदम् अपिशब्देन सूच्यते ।

भवतीति । अनिर्ज्ञातानि स्वरूपतोऽनवगतानि, दैवतानि देवाः, देव एव देवता देवतैव दैवतम् , स्वार्थिकतल्प्रत्ययान्तदेवताशब्दात् स्वार्थेऽण् । एवं पूर्वोक्तप्रकारेण, अवधूयन्ते तिरस्क्रियन्ते । दैवतशब्देन सहाऽपिशब्दो योजनीय आक्षेपलभ्यः । अपरिचितानां देवानामप्येवमनादरो भवति भवत्याः का कथेत्यर्थः । अनादरश्चायं गृहीतवेषान्तराया भवत्याः स्वरूपस्याऽज्ञानादेवेति भावः ।

अय्येति । गमनपरिश्रमादधिकं परिखिद्येऽधुनाऽमुनाऽपमानेनेत्यर्थः ।

---

वासव०—आर्य ! मैं ऐसा कहना नहीं चाहती, क्या मैं भी हटाई जाऊँगी ?
यौग०—आर्ये ! पहिचान न होने से देवता भी तिरस्कृत होते हैं ।
वासव०—आर्य ! थकावट मुझे वैसा खेद उत्पन्न नहीं करती है जैसा कि अपमान ।

*यौगन्धरायणः*—भुक्तोज्झित एव विषयोऽत्रभवत्या, नात्र चिन्ता कार्या । कुतः—

पूर्वं त्वयाप्यभिमतं गतमेवमासी-
च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः ।

---

**भुक्तोज्झित इति** । अत्रभवतीशब्दः पूज्यार्थवाचकः । एष विषयः, भृत्याचरितलोकोत्सारणपूर्वं गमनमित्यर्थः । भुक्तोज्झितः, 'पूर्वं भुक्तः पश्चादुज्झित' इति मयूरव्यंसकादिसमासः । पूज्यया भवत्याऽनुभूतपूर्वोऽयमुत्सारणाज्ञाप्रदानरूपो विषयः साम्प्रतं कार्यविशेषप्रच्छादितस्वस्वरूपया परित्यक्तः, अतोऽनादरपात्रं जाता भवती । अत्र विषये चिन्तयाऽनया नात्माऽवमाननीयो भवत्येति ।

'कुत' इति चिन्ताया अनवसरत्वमेवाह—**पूर्वमिति** । पूर्वं पूर्वस्मिन् काले नगरावस्थानसमय इत्यर्थः, त्वयापि भवत्यापि, अनया पद्मावत्यैवेत्यपिशब्दार्थः, एवमेतादृशम् , एतादृशत्वं चात्र परिजनकर्तृकश्लाघापूर्वकत्वं बोध्यम् , अभिमतमभीष्टम् इच्छानुरूपमिति यावत् , क्रियाविशेषणमिदम् , गतमासीत् प्रस्थितमासीत् । गमेः कर्मणि क्तः, मार्गरूपं कर्म चात्र प्रसिद्धत्वान्नोक्तम् , कर्तुरनुक्तत्वात् 'त्वये'ति कर्तरि तृतीया । पुनः भूयः, भर्तुः विपक्षापहृतराज्यस्योदयनस्य पत्युः, विजयेन सम्पत्स्यमानेन राज्यप्राप्तिलक्षणेन जयेन, श्लाघ्यं परिजनैः प्रशंसनीयं यथा स्यात्तथा, गमिष्यसि यास्यसि । पद्मावतीयं सम्प्रति 'इत इतो गच्छतु भवती'ति मार्गस्थलोकोत्सारणपुरःसरं परिजनैः कृतप्रशंसा यथा यदृच्छया गच्छति, तथा पूर्वं नगरे वसन्ती राज्यसुखमनुभवन्ती परिजनाचरितसमुचितसमुदाचारा त्वमपि स्वेच्छया गताऽऽसीः । अग्रेऽपि पत्यौ विजयश्रिया समलङ्कृते सतीत्यमेव गमनसुखमनुभविष्यस्येव । अतः कार्यगौरवादभ्युपगतमाधुनिकमीदृशं वेषान्तरस्वीकृतिरूपं दशाविशेषमधिजग्मुषी परिभवमात्मनः सम्भाव्य मा तावदिदानीं विमनायस्वेति भावः । उक्तमर्थं समर्थयते—**कालक्रमेणेति** । कालक्रमेण समयानुसारं, परिवर्तमाना विभिन्नरूपतां गच्छन्ती, एकरूपतया सर्वदाऽवतिष्ठमानेत्यर्थः, जगतो लोकस्य, भाग्यपङ्क्तिः अदृष्टपरम्परा, चक्रारपङ्क्तिरिव चक्रस्य रथाङ्गस्य अराणां पङ्क्तिः श्रेणि-

---

**यौग०**—आपको तो इसका पहले ही से अनुभव है। किन्तु आजकल छूटा हुआ है। इसमें चिन्ता न करनी चाहिये। क्योंकि—

पहले आप भी इस प्रकार इच्छानुसार जाया करती थीं और फिर भी अपने पति की

कालक्रमेण जगतः परिवर्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥ ४ ॥

भटौ—(क) उस्सरह अय्या ! उस्सरह ।

[ ततः प्रविशति काञ्चुकीयः । ]

---

(क) उत्सरतार्याः ! उत्सरत ।

---

रिव, गच्छति व्रजति । चक्रस्यनाभिनेम्योरन्तः सङ्घटिताः काष्ठखण्डविशेषा अराण्यु-च्यन्ते । यथा चक्रगतान्यराणि क्रमेणोपर्यधो गच्छन्ति दृश्यते, तथा शुभान्य-शुभानि च जनस्य भागधेयान्यपि समयगत्यनुसारं विपरिवर्तन्त एवेत्यत्र समय-महिमोद्भवं क्लेशमनुभवन्त्यापि समयगतिं प्रतीक्षमाणया त्वया न मनः खेदनीय-मिति श्लोकार्थः । अमुमेवार्थमुद्घाटितवान् **मेघदूते**—'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा, नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेणे'त्यनेन महाकविः **श्रीकालिदासः** । अत्र पूर्वार्धप्रतिपादितस्य विशेषस्योत्तरार्धप्रतिपादितेन सामान्ये-नार्थेन समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । वसन्त-तिलकावृत्तम् । तल्लक्षणं यथा **वृत्तरत्नाकरे**—'उक्ता वसन्ततिलका तभजा जगौ गः ॥' इति । कतिचिन्महाशयास्तावदत्र भावार्थे विहितेन क्तप्रत्ययेन साधितस्य गतमित्यस्य गमनमित्यर्थम् अभिमतमिति च क्रियाशब्दं स्वीकृत्य 'गमनं त्वया-ऽप्यभिमतमासी'दित्यर्थमाविष्कुर्वन्ति । गमिष्यसीति भविष्यत्कालिकक्रियानुरोधेन गत-मिति भूतकालिकीं क्रियामाश्रित्य तत्रैवार्थे स्वारस्यमौचित्यं च पश्यद्भिरस्माभिर्येषा व्याख्यातं तथा स्पष्टमेवोपरिष्टादिति ॥ ४ ॥

**उस्सरहेति** । पूर्ववद् भूयोऽपि तदेवोद्घोषणम् ।

अनुचितं तपस्विजनोत्सारणं वारंवारमाचरन्तौ विवेकाभाववन्तौ भटौ वार-यिष्यतो विवेकशालिनः काञ्चुकीयस्य प्रवेशमाह—**तत** इति । राज्ञो भृत्यविशेषः काञ्चुकीयश्च—'ये नित्यं सत्यसम्पन्नाः कामदोषविवर्जिताः । ज्ञानविज्ञानकुशलाः

---

विजय होने पर सेवकों से सत्कृत होकर जाएँगी । क्योंकि समय के फेर से बदलने वाली जगत् की भाग्यदशा पहिये की अरों की भाँति ( ऊपर, नीचे ) होती रहती है ॥ ४ ॥

दोनों सिपाही—हटो, लोगों ! हटो ।

( कञ्चुकी आता है । )

काञ्चुकीयः—सम्भपक ! न खलु न खलूत्सारणा कार्या। पश्य—

**परिहरतु भवान् नृपापवादं न परुषमाश्रमवासिषु प्रयोज्यम्।**
**नगरपरिभवान् विमोक्तुमेते वनमभिगम्य मनस्विनो वसन्ति ॥५॥**

---

काञ्चुकीयास्तु ते मताः ॥' इत्युक्तलक्षणलक्षितः 'कञ्चुकी'ति प्रसिद्धः। एष च राज्ञः सन्निधावन्तःपुरे वा वर्तमानो वेत्रधरः प्रायो यत्र तत्र नाटकेषु वृद्ध एवोपवर्ण्यते। काञ्चुकीयशब्दश्चायं कञ्चुकशब्दात् छण्प्रत्ययेन सिद्धो वेदितव्यः। छस्य 'आयनेयी नीयियः' इत्यादिना ईयादेशो णित्त्वादादिवृद्धिश्च। छण्प्रत्ययस्तु 'भक्तिः' इत्यर्थे 'वेणुकादिभ्यश्छण वाच्य' इति गहादिगणपठितवार्तिकेन वेणुकादेराकृतिगणत्वान्निष्पद्यते। कञ्चुको भक्तिः भज्यः सेव्योऽस्येति तदर्थः।

**सम्भपकेति**। इदञ्च पूर्वोक्तयोरुत्सारयतोरेकतरस्य भटस्य नामधेयम्। **न खल्विति**। खलुपदं निश्चयार्थकम्, द्वौ नञौ निषेधदार्ढ्यं गमयतः। उत्सारणमिदं सर्वथाऽनुचितम्। अकार्यादस्मात्कार्याद्विरमेति भावः। पश्य विचारयेत्यर्थः।

किं तद्विचारणीयमित्याकाङ्क्षायामाह—**परिहरत्विति**। भवान् त्वं, नृपापवादं, नृपस्य राज्ञो दर्शकस्य अपवादो निन्दा तम्, सा च निन्दा नगरनिर्विशेषमत्रापि तपोवने प्रवर्तितयाऽनुचितोत्सारणाज्ञया परैरारोप्यमाणैव। परिहरतु दूरीकरोतु, प्राप्तकाले लोट्, मदुक्तस्यैतस्य चायं कालः प्राप्तः। राज्ञो निन्दाया अवसरो भवदीयैतत्कार्येण समुपस्थितोऽयमिदानीमित्यर्थः। राज्ञि कलङ्कमुत्पादयितुं न नाम चेष्टनीयं भवता। अतोऽनुचितं प्रवर्तमानमुत्सारणाकार्यमिदं निरुध्य सोऽयं राजापवादः परिहरणीय इति भावः। एतत्कार्यस्यानौचितीमेवाह—**नेति**। आश्रमवासिषु तपोवनाश्रयेषु मुनिषु, परुषं रूक्षं क्रूरमिति यावत्, वाक्यमिति शेषः, परुषमिति भावप्रधानं वा, परुषत्वं कठोरतेत्यर्थः, न प्रयोज्यं न प्रयोक्तुं युक्तम्। यतः, मनस्विनः प्रशस्तं मनो येषां ते प्रशस्तमानसाः, 'प्रशंसायां विनिः, विषयवैतृष्ण्यादिनिबन्धनमेव मनसः प्राशस्त्यं तेषाम्। एते तपोवनस्यास्तपस्विनः, नगरपरिभवान् नगरे सम्भावितानपमानान्, विमोक्तुं परिहर्तुं, वनमभिगम्य तपश्चरणोचित-

---

कञ्चुकी—सम्भपक ! मत हटाओ, मत हटाओ, देखो—

तुम राजा की निन्दा को दूर करो, आश्रमवासियों से इस प्रकार रूखा वर्ताव करना उचित नहीं। क्योंकि, ये मानो शहर की आपदाओं को त्यागने के हेतु वन में आकर रहते हैं ॥५॥

उभौ—(क) अय्य ! तह ।

[ निष्क्रान्तौ । ]

यौगन्धरायणः—हन्त ! सविज्ञानमस्य दर्शनम् । वत्से ! उपसर्पावस्तावदेनम् ।

---

(क) आर्य ! तथा ।

---

माश्रमं गत्वा, वसन्ति निवासं कुर्वन्ति । तापसास्त्वेते शान्तचित्ता नगरे सम्भाव्यमानेभ्योऽपमानेभ्य आत्मानं मोचयितुमिच्छयैवाऽसम्भावितदोषं तपोवनमधिवसन्ति । अत्रापि यद्येतादृशी तिरस्क्रिया लभ्या तर्हि तैः क्व गन्तव्यमिति क्रूरवाचा क्रूरतया वा तपस्विनो नोत्सार्य कदर्थनीया इति भावः । तपस्विनामनादरेण चनुदाचारविरोधोऽनर्थापत्तिश्चेत्येवंविधानुचितकार्याचरणं न श्रेयस्करमिति गूढोऽर्थः । काव्यलिङ्गमलङ्कृतिः । पुष्पिताग्रा वृत्तम् । तल्लक्षणं यथा **वृत्तरत्नाकरे—** 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।' इति ॥ ५ ॥

**अय्य तहेति ।** युक्तियुक्तं यथा भवद्भिरुक्तं तथाङ्गीकृतमावाभ्याम् , गम्यतेऽधुनेत्यर्थः ।

**निष्क्रान्ताविति ।** एतेन तयोर्निर्गमनमुक्तम् ।

काञ्चुकीयोपदेशं गृहीत्वा ताभ्यां निर्गतमिति यौगन्धरायणः काञ्चुकीयस्य वैदुष्यं प्रशंसति-**हन्तेति ।** हन्तशब्दस्य हर्षोऽर्थः, 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो'रित्यमरः, उत्सारणभयनिवृत्त्यैव हर्षः । सविज्ञानं विज्ञानेन सहितम् , अस्य काञ्चुकीयस्येत्यर्थः, दर्शनं ज्ञानं बुद्धिर्वा । वत्से ! इति वासवदत्तायाः सम्बोधनम् , बालिके ! इति तदर्थः । उपसर्पणं समीपे गमनम् । तावदिति वाक्यालङ्कारे । एनमिति काञ्चुकीयमुद्दिशति । 'उत्सारयन्तौ भटौ स्ववचःप्रभावेण ततोऽनुचितादुत्सारणकार्यान्निवारितवान् ज्ञानविज्ञानसम्पन्नः काञ्चुकीयोऽयमुपसर्पणयोग्य' इति वाक्यार्थः । अत्र च राज्ञः प्रधानमन्त्रिणो वृद्धस्य यौगन्धरायणस्याऽऽदरणीयस्य वासवदत्तां राजमहिषीमप्युद्दिश्य 'वत्से' इति सम्बुद्धिः स्थान एव ।

---

दोनों—आर्य ! अच्छा ।

( चले गये । )

यौग०—अहा ! इसकी बुद्धि विज्ञान से पूर्ण है । देवी ! हम लोग इसके पास चलें ।

वासवदत्ता—(क) अय्य ! तह ।

यौगन्धरायणः—[ उपसृत्य ] भोः ! किङ्कृतेयमुत्सारणा ?

काञ्चुकीयः—भोस्तपस्विन् !

यौगन्धरायणः—[ आत्मगतम् ] तपस्विन्निति गुणवान् खल्वयमालापः । अपरिचयात्तु न श्लिष्यते मे मनसि ।

---

(क) आर्ये ! तथा ।

---

यौगन्धरायणसूचितं तदुपसर्पणं स्वीकुर्वती वासवदत्ताऽऽह—**अय्येति** । तथा, उपसर्पणं कर्तुमहमधुना सन्नद्धैवास्मीति ।

'उत्सारणायां किं कारण'मिति यौगन्धरायणस्य काञ्चुकीयं प्रति प्रश्नः—**किंकृतेयमिति** । किंकृता किमिति कृता, किमर्थमिदमुत्सारणं कृतमिति यावत् ।

तत्कारणं सूचयितुमिच्छता काञ्चुकीयेन प्रयुक्तं 'भोस्तपस्विन्' इति सम्बोधनमात्मनः श्रुत्वा तत्र परिव्राजकवेषधारी यौगन्धरायणश्चित्ते किञ्चिद्विचारयति स्म । तदेवाह—**(आत्मगतम्) तपस्विन्नितीत्यादिना** । आत्मगतं स्वगतम् , मनसीति यावत् । तथा च तल्लक्षणं **साहित्यदर्पणे**—'अश्राव्यं स्वगतं मतम्' इति । अश्रावणीयो मानसस्तस्यायं विचार इत्यर्थः । खलुपदं निश्चये । गुणवान् प्रशस्तगुणः, प्रशंसायां मतुप् , आलाप आभाषणं, सम्बोधनमिति यावत् , श्लिष्यते सम्बध्यते । सम्बोधनेऽस्मिन्नूनं प्रशस्तो गुणोऽस्ति, मदीयं वेषमिमं दृष्ट्वा प्रयुक्तं चेदं मत्सम्मानमेव द्योतयति । किन्तु तादृशेन गुणेन परिचयाभावादयथार्थसंन्यासिनो मनसि मे नैतत्सम्बोधनमवकाशं लभते । प्रशंसासूचकस्याप्यस्योपचारस्य लक्ष्यीभवितुमयोग्योऽस्मीति मनसि मन्येऽहमित्याशयः । श्लिष्यतेः परस्मैपदित्वात् 'श्लिष्यते' इत्यात्मनेपदप्रयोगोऽयं 'च्युतसंस्कृति'नामानं काव्यदोषमुद्भावयति । यद्वा—कर्तुः कर्मवद्भावेन कर्मकर्तरि तत्प्रयोगात् कथमपीदं समर्थनीयमिति कापि स्थितस्य गतिश्चिन्तनीया ।

---

वासव०—आर्य ! अच्छा ।

यौग०—( पास जाकर ) अजी ! यह हटाना किसलिये है ?

कंचुकी—हे तपस्वी !

यौग०—( आपही आप ) इसका 'तपस्वी' कहकर बातचीत करना आदर प्रकट करता है, किन्तु अभ्यास न होने से मुझे अच्छा नहीं लगता ।

काञ्चुकीयः—भोः ! श्रूयताम् । एषा खलु गुरुभिरभिहितनामधेयस्यास्माकं महाराजदर्शकस्य भगिनी पद्मावती नाम । सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्यानुज्ञाता तत्रभवत्या राजगृहमेव यास्यति । तदद्यास्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः । तद् भवन्तः—

तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानि ।

---

'भोः श्रूयताम्' इत्यादि तदेव पूर्वविशिष्टं काञ्चुकीयस्य वाक्यम् । 'भोः' इति यौगन्धरायणस्य सम्बोधनम् । उत्सारणाकारणं नाम कर्मपदं चार्यानुगतम्, श्रूयतामिति श्रवणोन्मुखीकरणम् । यदिदमुत्सारणं क्रियते स्म, तत्कारणेऽस्मिन्मया प्रतिपाद्यमानेऽवधानं दीयतां भवतेत्यर्थः । गुरुभिरभिहितनामधेयस्य, गुरुभिः पूज्यैर्महद्भिः अभिहितं कथितं कृतमिति यावत् नामधेयं नाम यस्य तादृशस्य, 'नामधेयं च नाम चे'त्यमरः, गुरुकृतनामकरणस्येत्यर्थः । इदं च 'महाराजदर्शकस्ये'त्यस्य विशेषणम् । 'आश्रमस्थां महादेवीमभिगम्य तत्रभवत्याऽनुज्ञाते'त्यन्वयः । आश्रमस्थामाश्रमवासिनीम्, वार्द्धके मुनिवृत्तिं स्वीकृत्य महादेव्या आश्रमे निवासः । अभिगम्य समीपं गत्वा, अनुज्ञाता लब्धानुज्ञा, आश्रमपदमाश्रमस्थानम् । 'पदं व्यवसितत्राणस्थानलक्ष्माऽङ्घ्रिवस्तुषु' इति कोषात् पदशब्दस्य स्थानमर्थः । अभिप्रेतः अभीष्टः । 'तद्भवन्त' इत्यग्रिमश्लोके योजनीयम् । दर्शकनाम्नोऽस्माकं महाराजस्य भगिनीयं पद्मावती तपोवनमधिवसन्त्या महाराजस्य मातुर्महादेव्याः समीपं गत्वा दर्शनं कृत्वा ततोऽनुज्ञां च लब्ध्वा राजभवनं राजगृहनामकं स्थानं वा गमिष्यति, तेन हेतुना राजभगिनी सेयमद्याश्रमे निवासं कर्तुमिच्छतीत्यर्थः । अत्र 'गुरुभिरभिहितनामधेयस्ये'ति महाराजदर्शकविशेषणं 'पूज्यानां नाम न ग्राह्य'मित्यभियुक्तोक्तसदाचारमर्यादाऽनतिक्रमकारितां द्योतयति काञ्चुकीयस्य । 'गुरवो नामकरणं कुर्वन्ती'त्याचारपरिपाटीमपि प्रकटयत्येतत् ।

तीर्थोदकानीति । तत् तस्मात्कारणात्, राजभगिन्याः पद्मावत्या आश्रम-

---

कञ्चुकी—अजी ! सुनिये । ये हमारे महाराज की-जिनका नाम बड़ों ने 'दर्शक' रक्खा है-बहिन पद्मावती हैं ? वे आश्रम में रहनेवाली हमारे महाराज की माता महादेवी से मिलकर उनकी आज्ञा पाकर फिर राजगृह को ही लौट जायँगी । तो आज उनका निवास इसी आश्रम में माना गया है । अत एव आप—

धर्मप्रिया नृपसुता न हि धर्मपीडा-
मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः ॥ ६ ॥

*यौगन्धरायणः*—[ स्वगतम् ] एवम् ! एषा सा मगधराजपुत्री

---

निवासेन हेतुनेत्यर्थः, भवन्तः वासवदत्तायौगन्धरायणावुद्दिश्य पूज्यत्वेन बहुत्वोक्तिर्जनान्तराभिप्रायेण वा, तपोधनानि तपसे तपश्चर्यार्थं धनानि, द्रव्याणि तपःसाधनीभूतान् पदार्थानित्यर्थः, स्वैरं स्वच्छन्दं, वनात् अरण्यात्, उपनयन्तु आनयन्तु । कानि तानि द्रव्याणीत्याह–तीर्थोदकानि, तीर्थस्य पवित्रस्य नद्यादेर्जलाशयस्य उदकानि जलानि, समिधः पलाशतरोः काष्ठखण्डानि, कुसुमानि पुष्पाणि, दर्भान् कुशान् । तीर्थोदकसमित्कुसुमदर्भाणां चैतेषां यथाक्रमं सकलधर्म्यकार्यहोमदेवार्चनव्रतादिक्रियासूपयुक्तत्वमवगन्तव्यम् । हि यस्मात्कारणात्, धर्मप्रिया, धर्मः प्रियो यस्या सा धर्मानुरागिणी, नृपसुता राजपुत्री पद्मावती, तपस्विषु तापसजनेषु विषये, धर्मपीडां, धर्मस्य तपोरूपस्य पीडा बाधा, विघ्न इति यावत् तां, 'पीडा बाधे'त्यमरः, न इच्छेत् न वाञ्छेत्, एतत् इदं तपोविघ्नस्पृहाराहित्यम्, अस्याः पद्मावत्याः, कुलव्रतं वंशव्रतम्, अस्तीति सामान्यक्रियाक्षेपः, कुलपरम्पराचरितो धर्मोऽस्तीत्यर्थः । कुलक्रमागतं मुनिजनतपश्चरणाऽभिरक्षणव्रतं पालयन्त्या धर्मेऽनुरागं वहन्त्याः पद्मावत्यास्तापसजनतपोविघ्नोपरोधरूपोऽभिलाषः पूरणीयो भवद्भिस्तीर्थादिपदार्थाहरणेनेति तात्पर्यम् । काव्यलिङ्गमलङ्कारः । वसन्ततिलका वृत्तम्, लक्षणमुक्तं प्राक् ॥६॥

काञ्चुकीयसूचितस्वरूपां पद्मावतीमालोच्य यौगन्धरायणोऽपि तत्स्वरूपं मनसा निर्दिशति—**एवमिति** । एवम् इत्थम्, इदमेवोत्सारणकारणं काञ्चुकीयः प्रतिपादयति । तदेतत् सम्भाव्यत इत्यर्थः । **एषा सेति** । स्वामिनो भर्तुरुदयनस्य, देवी भार्या, भविष्यति सम्पत्स्यते, इतीत्थं, पुष्पकभद्रादिभिः 'पुष्पकभद्रे'त्यादिनामधारिभिः, आदेशिकैः, आदेश आज्ञा, स्वेच्छानुसारिभाविफलसूचनमिति यावत्, आदेशः शीलमेषामित्यादेशिकास्तैः, 'शीलम्' इत्यनेन ठक् । 'इदमित्थं जायता'मिति यदृच्छयाऽनुग्रहबुद्ध्या शुभाशुभलक्षणफलसूचनशीलैस्त्रैकालिकसकलविषयाऽभिज्ञैः

---

तपस्या के साधन तीर्थ-जल, समिधा, पुष्प तथा कुश-आदि जङ्गल से अपने इच्छानुसार ले आवें । धर्मात्मा वे राजा की बेटी, तपस्वियों के धर्म में बाधा डालना नहीं चाहतीं, क्योंकि यह उनका वंशपरम्परागत व्रत है ॥ ६ ॥

**यौग०**—(आप ही आप) ऐसा ? यह तो वही मगधराज की कुमारी पद्मावती है, जो पुष्पक

पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति । ततः—

प्रद्वेषो बहुमानो वा सङ्कल्पादुपजायते ।
भर्तृदाराभिलाषित्वादस्यां मे महती स्वता ॥ ७ ॥

सिद्धपुरुषैरित्यर्थः। यद्वा—'ज्योतिःशास्त्रफलं पुराणगणकैरादेश इत्युच्यते' इति सिद्धान्तशिरोमणौ प्रतिपादितत्वाद् आदेशो नाम ज्योतिःशास्त्रफलम्। अत्रार्थे 'आदेशेन दीव्यति, आदेशः शिल्पमेषा'मित्युभयथापि विग्रहः। उभयत्र यथाक्रमं 'तेन दीव्यति' 'शिल्पम्' इत्याभ्यां ठक्। 'दैवगतिरीदृशी'ति जन्मस्थग्रहानुगतज्यौतिषसिद्धान्तानुसारियथोचितफलसूचनचतुरैर्ज्यौतिषिकैरिति यावत्। या आदिष्टा यदीयं भविष्यत् स्वरूपं पूर्वमेव सूचितमित्यर्थः, सेयं मगधराजस्य पुत्री पद्मावतीनामधेयाऽस्तीति । सिद्धदैवज्ञसूचनानुसारं राजमहिष्याः पदमनुभविष्यन्ती सेयमेव पद्मावती विद्यत इति सङ्क्षिप्तोऽर्थः। ततः तस्मात्कारणात्, राजमहिषीत्वेनैव निमित्तेनेत्यर्थः।

**प्रद्वेष इति।** सर्वत्र पुरुषस्य, प्रद्वेषो द्वेषातिशयः, बहुमानोऽत्यादरो वा, सङ्कल्पात् मानसात्कर्मणः, 'सङ्कल्पः कर्म मानसम्' इत्यमरः, चित्तवृत्तिविशेषादित्यर्थः, उपजायते उद्भवति। यस्य चित्ते यादृशो भाव उत्पद्यते यद्विषये, स तद्भावानुसारेणैव तं प्रद्वेष्टि बहु मन्यते वा। चित्तगतं भावमन्तरेण किमपि कारणान्तरं न सम्भवति प्रद्वेषादरयोरिति भावः। भर्तृदाराभिलाषित्वात्, भर्तुः स्वामिन उदयनस्य दाराः भार्येति भर्तृदाराः। पुंसि बहुवचने च केवलं दारशब्दः, प्रयुज्यते, तथा चामरः—'अथ पुम्भूम्नि दाराः' इति। भर्तृदारा इत्यभिलाषः स्पृहा अस्यास्तीति भर्तृदाराभिलाषी तस्य भावो भर्तृदाराभिलाषित्वं तस्मात्, 'स्वामिनो भार्येयं भूयादि'ति स्पृहाशालित्वादित्यर्थः। मत्वर्थीयेनिप्रत्ययान्ताभिलाषिन्शब्दात् 'तस्य भावस्त्वतलौ'विति भावार्थे त्वप्रत्ययः। मे मम यौगन्धरायणस्येत्यर्थः, अस्यां पुरो दृश्यमानायां पद्मावत्यां, महती 'अलघ्वी, स्वता स्वस्य भावः, आत्मीयवाचिस्वशब्दात्तल् भावार्थे, 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये' इति कोषात् स्वशब्दस्या-

भद्र-प्रभृति सिद्ध या ज्योतिषियों के कथनानुसार महाराज उदयन की रानी होगी। इसीसे—
वैर या आदर मन की भावना से होता है। यह स्वामी की स्त्री हो इस इच्छा से इस पर मुझे बड़ी आत्मीयता (अपनापन) हो रही है ॥ ७ ॥

वासवदत्ता—[ स्वगतम् ] (क) राअदारिअत्ति सुणिअ भइणिआसिणेहो वि मे एत्थ सम्पज्जइ ।

[ ततः प्रविशति पद्मावती सपरिवारा चेटी च । ]

चेटी—(ख) एदु एदु भट्टिदारिआ इदं अस्समपदं पविसदु ।

---

( क ) राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र सम्पद्यते ।
( ख ) एत्वेतु भर्तृदारिका इदमाश्रमपदं प्रविशतु ।

---

त्मीयार्थबोधकता । स्वात्मीयताबुद्धिरस्तीत्यर्थः । पूर्वम् 'अनुचितोत्सारणाज्ञाप्रवर्तिकेय'मिति सङ्कल्पात् पद्मावत्यां द्वेषो ममासीत् , इदानीं तु 'भूयादियं मे महिषी'ति सङ्कल्पो मयि महतीं पद्मावतीविषयिणीं स्वात्मीयताबुद्धिं बलादुत्पादयतीति भावः । अनुष्टुब् वृत्तं प्रागुक्तलक्षणम् ॥ ७ ॥

**राअदारिअत्तीति** । काञ्चुकीयप्रदर्शितं पद्मावत्याः परिचयं प्राप्य वासवदत्तायास्तद्विषये मानसोद्गारोऽयम् । अत्र पद्मावत्याम् , भगिनिकास्नेहः, भगिन्येव भगिनिका, स्वार्थे कः, तस्याः स्नेहः, भगिनीतुल्यः स्नेह इति यावत् । सेयं पद्मावती 'राजकन्या'स्तीति काञ्चुकीयमुखान्निशम्य भगिनीतुल्यं स्नेहमप्यस्यां वहामीत्यर्थः । राजकुमार्या वासवदत्तायाः पद्मावत्यां राजकुमार्यां भगिनीप्रेम सम्भवत्येव । अपिशब्देनात्र बहुमानः सूच्यते । स च कुलीनायां वासवदत्तायास्तादृश्यां पद्मावत्यां युज्यत एव । तथा च 'आदरविशेष इव भगिनीप्रेमापि वर्ततेऽस्यां पद्मावत्यां ममे'ति वासवदत्तोक्तेराशयः ।

साम्प्रतं पद्मावत्या आश्रमप्रवेशमाह—**ततः प्रविशतीति** । परिवारेण सहिता सपरिवारेति पद्मावत्या विशेषणम् । 'परिवारः सखीवर्गः, चेटी दासी' इत्यनयोर्भेदमाकलय्य चेट्याः पृथङ् निर्देशः । वस्तुतस्तु—चेट्या अपि परिवारान्तःपातात् परिवारशब्दादेव तदुपस्थितेः सिद्धौ पुनः प्रयुक्तं चेटीपदं प्रधानपरिचारिकारूपमर्थं बोधयति ।

मार्गप्रदर्शनरूपं स्वामिन्युपचारात्मकं चेट्याः स्वकर्तव्यं निर्दिशति—**एदुएद्विति**।

---

वासव०—( आप ही आप ) 'राजा की कन्या' यह सुनकर इस पर बहिन का सा स्नेह भी मुझे होता है ।

( अपनी सहेलियों और दासी के साथ पद्मावती आती है । )

दासी—आइये, राजकुमारी जी ! आइये । इस आश्रम में प्रवेश करिये ।

[ ततः प्रविशत्युपविष्टा तापसी । ]

तापसी—(क) साअदं राअदारिआए।

वासवदत्ता—[ स्वगतम् ] (ख) इअं सा राअदारिआ। अभिजणाणुरूवं खु से रूवं।

पद्मावती—(ग) अय्ये ! वन्दामि।

---

( क ) स्वागतं राजदारिकायाः।
( ख ) इयं सा राजदारिका। अभिजनानुरूपं खल्वस्या रूपम्।
( ग ) आर्ये ! वन्दे।

---

'एतु एतु' इत्यादरे वीप्सा, अधीष्टे लोट्, अधीष्टश्च आदरपूर्वको व्यापारः। भर्तृदारिका राज्ञः सुता, 'राजा भट्टारको देवस्तत्सुता भर्तृदारिका' इत्यमरः। आगम्यतां राज्ञः कुमार्या पुरो दृश्यमानेऽस्मिन्नाश्रमे प्रविश्यतामित्यर्थः।

तत इति। प्रविशतीति प्रकृतोपयोगिनमुपविष्टायास्तापस्याः प्रवेशं सूचयति। राजकुमार्याः पद्मावत्या आगमने तापस्या अभ्युत्थानपूर्वकप्रवेशस्यौचित्ये मुखतः प्रतीयमानेऽपि, वृद्धायास्तपोविभूतिशालिन्यास्तस्यास्तादृशाचारप्रदर्शनं नितरामनौचित्यमिव पुष्णातीत्युपविष्टाया एव तापस्याः प्रवेशोऽत्र सूचितः।

तपोवनं प्रविष्टाया राजकुमार्याः पद्मावत्याः शुभागमनमभिनन्दन्ती तापस्याह—**साअदमिति**। स्वागतं शुभागमनम्।

रूपवतीं पद्मावतीमवलोक्य हृद्गतं भावं सूचयति वासवदत्तायाः कविः—**इअमिति**। इयमेषा पुरो दृश्यमानेत्यर्थः, सा काञ्चुकीयसूचिता। अभिजनानुरूपम् अभिजनयोग्यम् कुलोचितमिति यावत्, 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः। यथास्या राजकुमार्याः कुलं प्रशंसनीयं, तथा रूपमपि प्रशंसामर्हतीत्यर्थः।

अय्ये इति। तापसीमुद्दिश्य सम्बुद्धिरियम्। आर्ये! पूज्ये! वन्दनं नमस्कारः। नमस्करोतीयं पद्मावती तत्रभवतीं तापसीमित्यर्थः।

---

( बैठी हुई तपस्विनी का प्रवेश। )

तापसी—राजकुमारी! तुम्हारा स्वागत है।

वासव०—( आप ही आप ) यह वही राजकुमारी है। इसका रूप भी कुल के अनुकूल ही है।

पद्मावती—आर्ये! प्रणाम करती हूँ।

*तापसी*—(क) चिरं जीव। पविस जादे! पविस। तवोवणाणि णाम अदिहिजणस्स सअगेहं।

*पद्मावती*—(ख) भोदु भोदु। अय्ये! विस्सत्थह्मि। इमिणा बहुमाणवअणेण अणुग्गहिदह्मि।

*वासवदत्ता*—[स्वगतम्] (ग) ण हि रूवं एव्व, वाआ वि खु से महुरा।

---

(क) चिरं जीव। प्रविश जाते! प्रविश। तपोवनानि नामाऽतिथिजनस्य स्वकगेहम्।

(ख) भवतु भवतु। आर्ये! विश्वस्तास्मि। अनेन बहुमानवचनेनानुगृहीतास्मि।

(ग) न हि रूपमेव, वागपि खल्वस्या मधुरा।

---

**चिरमिति**। चिरं जीव दीर्घायुर्भवेति कृतप्रणामां पद्मावतीं प्रत्याशीर्वचनं तापस्याः। अतिथियोग्योपचारं दर्शयति—**पविसेति**। हर्षार्थे प्रविशेति द्विःप्रयोगः। हर्षश्च तापस्या राजकन्यारूपातिथिविशेषलाभेनैव। जाते! वत्से इत्यर्थः। सम्बोधनं चेदं पद्मावतीविषयकं पुत्रीभावौपयिकं वात्सल्यभावनाविष्करोति वृद्धायास्तापस्याः। **तवोवणाणीति**। तपोवनानि किलाभ्यागतानां स्वीयगृहसदृशानि सन्तीत्यर्थः। वत्से! चिरायुर्भव, स्वगृहनिर्विशेषे तपोवनेऽस्मिन्निःशङ्कं कुरु प्रवेशमिति वाक्यार्थः।

**भोदु भोद्विति**। स्वागतोपचारादमुष्मात् सङ्कुचन्त्याः पद्मावत्याः 'पुनरपि पूज्यायास्तापस्या उपचारप्रदर्शनं मयि मा भू'दिति तन्निवारणे त्वराविशेषं सूचयति द्विरुक्तिरियम्। आस्तां तावदिदमुपचारप्रदर्शनम्, पर्याप्तोऽयमुपचार इत्यर्थः। विश्वस्ता जातविश्वासा, शङ्काविरहितेति यावत्। बहुमानवचनेन बहुलादरसूचकवाक्येन। स्वागतपरिप्रश्नान्निःशङ्काऽहं भवदीयमेतादृक्सुबहुसत्कारप्रदर्शनानुग्रहं शिरसा वहामीत्यर्थः।

पूज्यया तापस्या कृतं तादृशं स्वागताभिनन्दनं विलोक्य वैलक्ष्यं वहन्तीं विनयवर्तीं पद्मावतीं प्रशंसति स्वान्ते वासवदत्ता—**णहीति**। न केवलं रूपमिदं मनोहरं,

---

**तापसी**—चिरं जीव, आओ बेटी! आओ। तपोवन तो अतिथियों का अपना घर है।
**पद्मावती**—अच्छा, अच्छा। आर्ये! निश्चिन्त हूँ। इस आदर के भाषण से अनुगृहीत हुई हूं।
**वासव०**—(आप ही आप) केवल रूप ही नहीं, इसकी वाणी भी मधुर है।

तापसी—(क) भद्दे ! इमं दाव भद्दमुहस्स भइणिअं कोच्चि राआ ण वरेदि ?

चेटी—(ख) अत्थि राआ पज्जोदो णाम उज्जणीए । सो दारअस्स कारणादो दूदसम्पादं करेदि ।

---

(क) भद्रे ! इमां तावद् भद्रमुखस्य भगिनिकां कश्चिद् राजा न वरयति ?

(ख) अस्ति राजा प्रद्योतो नामोज्जयिन्याः । स दारकस्य कारणाद् दूतसम्पातं करोति ।

---

वचनमप्येतदीयं तथेति सर्वथेयं प्रशंसनीयेत्यर्थः । पूर्वप्रदर्शिता विनयोक्तिरेव पद्मावतीवचसो माधुर्यं व्यनक्ति । मधुरवचनेयं कथं नाम नाभिनन्दनीयेति भावः ।

इदानीं पद्मावतीविवाहौपयिकं प्रकृतमर्थमवतारयितुमिच्छन् कविस्तापसीमुखेन चेटीं प्रति प्रश्ननाह—**भद्द इति** । भद्रे ! कल्याणि ! इमां पुरो दृश्यमानामित्यर्थः । तावदिति वाक्यालङ्कारे, भद्रमुखस्य भद्रं मुखं यस्येति विग्रहः, कल्याणसूचकवदनस्य प्रियदर्शनस्येति यावत्, महाराजदर्शकस्येत्यर्थः । भद्रमुखशब्दोऽयं तत्प्रतिपाद्यमहाराजदर्शकविषयिणीं द्योतयति वत्सलतां तापस्याः । भगिनिकाम् अनुकम्पनीयां भगिनीं पद्मावतीमिति यावत्, अनुकम्पायां कन् । न वरयति ? न ईप्सति ? पत्नीत्वेन किं न प्राप्तुमिच्छतीति काकुः । केनचिद्राज्ञा सह पद्मावत्याः प्रियदर्शकभगिन्या विवाहसम्बन्धविषयको वार्तालापो न तावदुपक्षिप्तः किमिति वाक्यार्थः । ईप्सार्थकवरधातोश्चौरादिकाण्णिचि वरयतीति रूपम् । पद्मावतीविवाहसम्बद्धोऽयमर्थः पद्मावतीं प्रष्टुं न साम्प्रतमिति तत्परिचारिकां चेटीं प्रति प्रश्नोऽत्र युज्यते तापस्याः ।

चेट्या उत्तरमाह—**अत्थीति** । दारकस्य पुत्रस्य, कारणाद्धेतोः, स्वपुत्रार्थमित्यर्थः । दूतसम्पातं, दूतः सन्देशहरः, 'स्यात्सन्देशहरो दूतः' इत्यमरः, तस्य सम्पातः प्रेषणमिति यावत् तं, करोति कुरुते । दूतं सम्प्रेषयतीत्यर्थः । उज्जयिन्याः प्रद्योतनामा राजा स्वपुत्रेण सह पद्मावत्या विवाहसम्बन्धं घटयितुमिच्छतीति भावः ।

प्रद्योतराजपुत्रेण सह पद्मावत्याः सम्पत्स्यमानं विवाहसम्बन्धं स्वात्मसम्बन्धेन

---

तापसी—कल्याणी ! क्या कोई राजा इस दर्शक महाराज की बहिन को नहीं वरता ?
दासी—उज्जैन का प्रद्योत नामक राजा है, उसने लड़के के वास्ते दूत भेजा है ।

वासवदत्ता—[ आत्मगतम् ] (क) भोदु भोदु । एसा अ अत्तणीआ दाणि संवुत्ता ।

तापसी—(ख) अर्हा खु इअं आइदी इमस्स वहुमाणस्स । उभआणि राअउलाणि महत्तराणि त्ति सुणीअदि ।

पद्मावती—(ग) अय्य ! किं दिट्ठो मुणिजणो अत्ताणं अणुग्ग-

( क ) भवतु भवतु । एषा चात्मीयेदानीं संवृत्ता ।

( ख ) अर्हा खल्वियमाकृतिरस्य वहुमानस्य । उभे राजकुले महत्तरे इति श्रूयते ।

( ग ) आर्य ! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुम् ? अभिप्रेतप्रदा-

सानन्दमनुमोदमाना मानसं वासवदत्ताह—**भोदु भोद्विति** । भवतु भवत्विति द्विः प्रयोगस्तावद् 'दूतसम्प्रेषणपुरःसरोऽसौ विवाहसम्बन्धः शीघ्रं सङ्घटता'मिति त्वराभिप्रायकः । **एसेति** । पद्मावती चेयमधुनाऽमुना भविष्यता विवाहसम्बन्धेना त्मीयजनान्तःपातिनी सञ्जाता । भ्रातुर्विवाहसम्बन्धार्थं प्रयुक्तां दूतसम्प्रेषणरूपां वार्तां चेटीमुखतः श्रुत्वा 'पद्मावत्या साम्प्रतमात्मीयया सञ्जात'मित्येवं प्रद्योतराजकुमार्या वासवदत्तायाः सानन्दं मानसोद्गारोऽयम् ।

पूर्वोक्तं चेटीवचो निशम्य श्लाघ्यसम्बन्धघटनाकर्णनादानन्दितायास्तापस्या वचनम्—**अर्हेति** । अर्हा पूज्या, योग्येत्यर्थः । 'अर्ह पूजायाम्' इत्यतः पचाद्यचि स्त्रीत्वाट्टाप्, खल्विति निश्चये, आकृतिराकारोऽवयवसंस्थानविशेषः पद्मावतीविषयकः, अस्य वहुमानस्य विवाहसम्बन्धसङ्घटनरूपस्य पूर्वोक्तस्य सम्मानस्य । स्वरूपसौन्दर्यसमन्वितेयं पद्मावती पूर्वोक्तविवाहसम्बन्धसत्कारयोग्यैवेति भावः । उभे राजकुले दर्शकराजकुलं प्रद्योतराजकुलं चेति यावत् । महत्तरे अतिमहती, अतिशये 'तरप्', महत्त्वं चात्र प्रसिद्धिमत्त्वेन प्रशंसनीयत्वेन च बोध्यम् । श्रूयते आकर्ण्यते, श्रवणपथं गच्छति । कुलद्वयस्याप्यस्य राजकुलान्तरतो महत्त्वातिशयेन प्रसिद्धिरस्तीति भावः ।

निजोद्वाहसम्बन्धश्रवणेन सञ्जातलज्जा पद्मावती तापसीचेट्योः प्रचलितं वैवाहिकं वार्तालापमपवार्य निजागमनप्रयोजनं प्रस्तुत्याह काञ्चुकीयम्—**अय्येति** ।

**वासव०**—( स्वगत ) अच्छा अच्छा । यह तो अब आत्मीय हुई ।

**तापसी**—इसकी यह आकृति इस आदर के योग्य ही है । दोनों राजकुल बड़े हैं ऐसा सुना जाता है ।

**पद्मावती**—आर्य ! क्या आपने किसी ऐसे ऋषि मुनिको देखा है जो (कुछ लेकर) मुझे

होदुं ? अभिप्पेदप्पदाणेण तवस्सिजणो उवणिमन्तीअदु दाव को किं एत्थ इच्छदित्ति ।

काञ्चुकीयः—यदभिप्रेतं भवत्या । भो भोः आश्रमवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः, इहात्रभवती मगधराजपुत्री अनेन विस्रम्भेणोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते ।

---

नेन तपस्विजन उपनिमन्त्र्यतां तावत् कः किमत्रेच्छतीति ।

---

आत्मानं मामिति यावत् । अनुग्रहीतुम् अनुगृहीतां कर्तुं, मयि प्रसादं दर्शयितुमिति यावत् । अभिप्रेतप्रदानेन अभीष्टार्थस्य वितरणेन हेतुना, हेतौ तृतीया । उपनिमन्त्र्यतां निमन्त्र्यताम्, निमन्त्रणं च नियोगकरणम्, नियोज्यतां प्रवर्त्यतामित्यर्थः । तपस्विजनं मयि सानुग्रहं कर्तुं कोऽपि कुत्राप्यत्र तपस्विजनो विलोकितः किम् ? विलोकितश्चेत्, अहमभीष्टं तस्य पूरयितुमिच्छामीत्यतस्तं तपस्विजनं स्वस्याभीप्सितार्थकथने प्रवर्तयतु भवानिति स्पष्टोऽर्थः । मुनिजनाभिलाषपूरणादनुगृहीता भवेयमिति स्वस्वार्थकथने मुनिजनो भवता प्रवर्तनीय इति भावः । तपस्विनो यथा निजाभिलाषं प्रकटयेयुस्तथा चेष्टतां भवानिति सारांशः ।

पद्मावतीवचोऽनुसारं तत्र कर्तव्ये काञ्चुकीयस्य प्रवृत्तिं तयोर्योगं च दर्शयति कविः—**यदभिप्रेतमित्यादिना ।** भवत्या श्रीमत्या, यदभिप्रेतं यदभिलषितम् । यच्छब्दघटितवाक्यस्य तच्छब्दघटितवाक्यान्तरसाकाङ्क्षतया 'तद्विधीयते मये'-त्यत्र प्रकरणानुरोधाल्लभ्यते । भवत्या इच्छानुरूपं मया सम्पाद्यत इत्यर्थः । तदेवाह—**भो भो इति ।** शृण्वन्तु शृण्वन्तु इति वीप्सा आदरे त्वरायां च । तपोवनस्थैः श्रीमद्भिस्तपोधनैर्मया वक्ष्यमाणमिदं श्रोतव्यं श्रोतव्यमिति तेषां प्रवृत्त्युन्मुखीकरणम् । इह अस्मिन्स्थाने आश्रमेऽस्मिन्नित्यर्थः । अनेन तापस्या प्रदर्शितेनेति यावत्, विस्रम्भेण, स्वागतोपचाररूपेण विश्वासेन, 'समौ विस्रम्भविश्वासौ' इत्यमरः, उत्पादितविस्रम्भा: उत्पादित उद्भावितो विस्रम्भः शङ्काराहित्यं यस्याः तथाभूता, कृतपूर्वेण

---

अनुगृहीत करें । कौन क्या चाहते हैं ? वे अपना अभीष्ट प्राप्त करने के लिए हमारे समीप उपस्थित किये जांय ।

कञ्चुकी—जैसी आपकी इच्छा । हे आश्रमनिवासी तपस्वियो ! आप लोग अच्छी तरह सुन लें कि यहाँ यह मगधराजकुमारी आपके किये हुए स्वागत से निःशङ्क होती हुई धर्म करने के लिए दान लेने को बुला रही है ।

'कस्यार्थः कलशेन को मृगयते वासो यथानिश्चितं
दीक्षां पारितवान् किमिच्छति पुनर्देयं गुरोर्यद् भवेत् ।

---

तापस्याः सत्कारेण या किल निःशङ्काऽभवत् , सेत्यर्थः । अत्रभवती पूजनीया, मगधराजपुत्री महाराजदर्शकस्य कुमारी पद्मावतीति यावत् , धर्मार्थं धर्मायेति क्रियाविशेषणम् , धर्माचरणार्थमित्यर्थः । अर्थेन वितरणीयेन द्रव्येण हेतुना, भवदर्थ-साधनरूपेण प्रयोजनेन वा, 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः, उपनि-मन्त्रयते नियोजयति, अत्र 'भवत' इति कर्मपदमर्थादाक्षेप्यम् । आश्रमप्रवेशसमये तापस्या समाचरितपूर्वेण सत्कारेण लब्धविश्वासा श्रीमती पद्मावती भवन्मनोरथान् पूरयितुं धर्माचरणबुद्धया भवतस्तपोधनान् निजाभिलषितार्थप्रकाशनाय प्रवर्तयति । अतः स्वस्वाभिलाषं प्रकटयितुं प्रसीदन्तु भवन्त इति भावः ।

तथाहि—**कस्यार्थ** इति । कस्य तपस्विजनस्य, कलशेन कमण्डलुनेति यावत् , अर्थः प्रयोजनं विद्यते, कः कलशाभिलाषीत्यर्थः । फलस्यापि हेतुत्वोक्त्या 'अध्ययनेन वसती'तिवत् 'हेतौ' इत्यनेन 'कलशेने'ति तृतीया । कः वासो वस्त्रं, मृगयते गवेष-यति वाञ्छतीति यावत् , को वा वस्त्रान्वेषक इत्यर्थः । यथानिश्चितं निश्चय एव निश्चितं, भावे क्तः, निश्चयो निर्धारणं सङ्कल्पो वा, निश्चितमनतिक्रम्येति यथार्थेऽव्य-यीभावः । 'श्रुत्युक्तं पूर्णमध्येष्ये' इति निर्धारणानुसारं सङ्कल्पानुसारं वेत्यर्थः । दीक्षां गुरुगृहवासपूर्वकमध्ययनव्रतं, पारितवान् समापितवान्, 'पारं तीर कर्मसमाप्तौ' इति धातुपाठात् पारयतेः समापनमर्थः । एतादृशः; क इति शेषः, किं पुनरिच्छति किं तावद्वस्तु कामयते,पुनरिति वाक्यालङ्कारे । यद्वस्तु, गुरोः गुरवे इति यावत् , सम्ब-न्धसामान्यविवक्षायां षष्ठी, देयं भवेत् दातव्यं स्यात् । दृढसङ्कल्पो गुरोरधीत्य समापिताध्ययनकृत्यः कस्तपस्वी गुरवे निवेदनीयं गुरुदक्षिणारूपं कियद् द्रव्यमभि-लषतीत्यर्थः । 'उत्तरवाक्यघटितो यच्छब्दः पूर्ववाक्ये तच्छब्दोपादानं नापेक्षत' इति काव्यसिद्धान्तानुरोधात् 'किमिच्छति पुनः, देयं गुरोर्यद्भवेत्' इत्यत्र पूर्ववाक्ये इच्छतेः कर्मणः 'तत्' इति शब्दस्यानुपादानं न दोषाय । तपस्विनां याचनार्थं प्रव-

---

कौन कमण्डलु चाहता है ? किसको वस्त्र की आवश्यकता है ? ऐसा कौन है—जिसने विधिवत् अपनी शिक्षा समाप्त की है—वह क्या चाहता है ? जो उसे गुरुजी को ( दक्षिणा के रूप में ) देना है। धर्मात्माओं को माननेवाली राजकुमारी अपने ऊपर यहाँ उनका

आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया
यद् यस्यास्ति समीप्सितं वदतु तत् कस्याद्य किं दीयताम् ॥८॥

यौगन्धरायणः—हन्त ! दृष्ट उपायः । [ प्रकाशम् ] भोः ! अहमर्थी ।

---

तेनार्थमुत्तरार्धमाह—आत्मानुग्रहमिति । इह अस्मिन्नाश्रमे, धर्माभिरामप्रिया, धर्मे अभिरामोऽभिरतिः रुचिर्येषां ते धर्माभिरामाः धर्मानुरागिणः, ते प्रियाः प्रीतिपात्रं यस्याः सा धार्मिकेषु जनेषु प्रीतिं कुर्वाणेत्यर्थः । धर्माभिरामाणां प्रिया इति वा विग्रहः, एतेन धार्मिकजनस्य प्रीतिपात्रमित्यर्थः । दातृप्रतिग्रहीत्रोः परस्परप्रीतिराव-श्यकतयाऽत्रोभयविधः समासो युज्यते । नृपजा, नृपात् जाता राजकुमारी पद्मावती, आत्मानुग्रहमिच्छति भवत्कर्तृकमात्मन्यनुग्रहं वाञ्छति । अतः यस्य जनस्य, यद्वस्तु समीप्सितमस्ति प्राप्तुमिष्टं वर्तते । सन्पूर्वकात्सन्नन्तादाप्नोतेः क्तः 'मतिबुद्धि-पूजार्थेभ्यश्च' इति सूत्रेण यस्येति षष्ठी । अर्थानुरोधात्प्रकरणबलाच्च 'स' इति कर्तृ-पदमध्याहरणीयम् । स जनः, तद्वदतु स्वेप्सितं कथयतु, अभीष्टे लोट् । अद्य अद्यतने दिवसे न तु विलम्बेनेत्यर्थः, कस्य कस्मै, पूर्ववत् शेषत्वविवक्षायां षष्ठी, किं दीयताम् किं वितीर्यताम् । भवत्सु कः कं पदार्थमनया दीयमानं प्राप्तुमिच्छति ? किमनया च कस्मै देयम् ? भवन्तः स्वाभिलषितं निःशङ्कं प्रकाशयन्तु । भवदर्थ-श्रवणादेवेयमनुगृहीतामात्मानं मंस्यते इति श्लोकार्थः । शार्दूलविक्रीडितं छन्दः, पूर्वमुक्तं लक्षणम् ॥ ८ ॥

उपरिष्टात्प्रपञ्चितायाः प्रदानोद्घोषणायाः श्रवणेन लब्धहर्षस्य यौगन्धरायणस्य स्वगतोक्तिरियम्—हन्तेति । 'प्रकाश'मित्यनन्तरोक्तेर्वाक्यनिर्देशात्स्वगतत्वेनैव प्रत्युक्तमवगन्तव्यम् । हन्त हर्षे, उपायो युक्तिः मार्ग इति यावत् , दृष्टोऽवलोकितः, अर्थान्मयेति । उपस्थितोऽसौ वासवदत्तानिक्षेपयोग्योऽवसर इत्यर्थः । उपायतेऽनेने-त्युपायः, उपपूर्वाद् अयधातो 'हलश्चेति घञ् । प्रकाशं सर्वजनश्रवणीयमित्यर्थः । तथा च तल्लक्षणं दर्पणे-'सर्वश्राव्यं प्रकाशं स्यात्' इति । भोः इति काञ्चुकीय-सम्बुद्धिः, अहमर्थी अहमस्मि याचकः इत्यात्मनोऽर्थित्वाविष्करणं यौगन्धरायणस्य ।

---

अनुग्रह चाहती हैं । अतः जिसको जो अभीष्ट हो वह कहे, किसे आज क्या दिया जाय ? ॥८॥

यौग०—( मन में ) अहा ! मुझे अच्छी युक्ति सूझी ( प्रकाश ) अजी ! मैं अर्थी हूं ।

*पद्मावती*—(क) दिट्ठिआ सहलं मे तपोवणाभिगमणं।

*तापसी*—(ख) संतुट्ठतवस्सिजणं इदं अस्समपदं। आअन्तुएण इमिणा होदव्वं।

*काञ्चुकीयः*—भोः किं क्रियताम्?

*यौगन्धरायणः*—इयं मे स्वसा। प्रोषितभर्तृकामिमामिच्छाम्यत्र-

(क) दिष्ट्या सफलं मे तपोवनाभिगमनम्।
(ख) सन्तुष्टतपस्विजनमिदमाश्रमपदम्। आगन्तुकेनानेन भवितव्यम्।

सौभाग्यादुपस्थितमर्थिनं दृष्ट्वा पद्मावत्याह-**दिट्ठिएति**। दिष्ट्येत्यव्ययम्, भाग्येनेत्यर्थः। **सहलमित्यादि**। अर्थिनः प्राप्त्या तपोवनेऽस्मिन्ममागमनमिदमिदानीं सार्थकमभूदित्यर्थः।

**संतुट्ठेति**। तपोवनाश्रमेषु तापसेषु कमप्यर्थिनमनुपलभमानायास्तापस्या वचनमिदम्। इदमाश्रमपदम् एतत्तपोवनं, सन्तुष्टतपस्विजनम्, सन्तुष्टस्तपस्विजनो यत्रेत्येतादृशं, वर्तते। आश्रमस्थाः केऽपि किमपि नार्थयन्ते, अतोऽत्रत्यास्तपस्विनः सन्तुष्टाः सन्तीति भावः। अनेन याचकेन, आगन्तुकेन देशान्तरादागतेन। अर्थित्वमाविष्कुर्वाणः स्थानान्तरादागतोऽयं भवेदित्यर्थः। आगच्छतीत्यागन्तुः। आङ्पूर्वाद् गमेः 'सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन्' इत्युणादिसूत्रेण तुन्प्रत्ययः। आगन्तुरेव आगन्तुकः, स्वार्थे कः। 'तयोरेव कृत्यक्तखलर्थाः' इति नियमात् 'भवितव्यमिति भावार्थे तव्यप्रत्ययः। तदनुरोधादेव 'अनेने'ति कर्तुस्तृतीया।

**भोः इति**। किं क्रियतां 'किं विधीयताम् किं तावद्भवतोऽभिमतमस्माभिः साध्यता'मिति प्रश्नोऽयमर्थिनं यौगन्धरायणं प्रति काञ्चुकीयस्य।

स्वार्थमुपक्षिपति यौगन्धरायणः-**इयमिति**। इयं मत्समीपवर्तिनीति यावत्, 'इदमस्तु सन्निकृष्टे' इति सिद्धान्तादीदृशार्थता, इदंपदबोध्या च आवन्तिकावेषधारिणी वासवदत्तैव। मे स्वसा भगिनी मे वर्तते। **प्रोषितभर्तृकामिति**। प्रोषित-

पद्मा०—अहो भाग्य! आश्रम में मेरा आना सफल हुआ?
तापसी—इस आश्रम के तो सभी मनुष्य सन्तुष्ट हैं, यह कोई आगन्तुक होगा।
कञ्चुकी—अजी! क्या किया जाय?
यौग०—यह मेरी बहन है। इसके पति परदेश गये हुए हैं, इसलिये आपकी देख-

भवत्या कञ्चित् कालं परिपाल्यमानाम् । कुतः—

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रै-

र्नाहं काषायं वृत्तिहेतोः प्रपन्नः ।

---

भर्तृकामिनाम् अत्रभवत्या कञ्चित् कालं परिपाल्यमानामिच्छामीत्यन्वयः । अत्रभवत्या-पद्मावत्या । देशान्तरगतस्य पत्युर्वियोगमनुभवन्तीं दीनां ममैतां भगिनीं परिपालयतु साम्प्रतं किञ्चित्कालपर्यन्तं पूज्या पद्मावतीत्येष एवार्थो ममेत्यर्थः । पद्मावत्याः समीपे न्यासरूपेण स्थापयितुमेनामहमिच्छामीति भावः । प्रोषितो भर्ता यस्यास्तां प्रोषितभर्तृकाम्, 'नद्यृतश्च' इति कप्, स्त्रीत्वाट्टाप् । प्रोषितेति प्रपूर्वाद् वसधातोः कर्तरि क्ते 'वसतिक्षुधोरिट्' इतीडागमे यजादित्वात्सम्प्रसारणे च रूपम् । कञ्चित्कालमिति 'कालाध्वनो'रित्यनेन अत्यन्तसंयोगे द्वितीया । यावता कालेन पुनः प्रत्यागमिष्यामि तावत्कालपर्यन्तमिति तदर्थः । अत्र च शत्रुकृतराज्यापहारलक्षणे व्यसने पतितस्य स्वामिनोऽर्थं राज्यप्राप्तिलक्षणं साधयितुं चेष्टमानस्य कार्यगौरवमाकलयतो मन्त्रिणो यौगन्धरायणस्य राज्ञः प्रियां वासवदत्तां प्रोषितभर्तृकामात्मभगिनीं निर्दिशतस्तादृशमसत्यभाषणमपि मञ्जुच्छन्नाम न कल्पते दूषणाय । विपदि मृषाभाषणस्य शास्त्रसम्मतत्वेन भूषणास्पदत्वात्तत्र प्रत्युत सत्यभाषणस्यैव दोषावहत्वादसत्यभाषणस्य सर्वथौचित्यादपरिहेयत्वमिति । पूर्वोक्तमर्थं द्रढयति—कुत इति । यतः कारणादित्यर्थः ।

तदेवाह—कार्यमिति । ममेति औचित्यादध्याहरणीयम्, मम यौगन्धरायणस्येत्यर्थः । अर्थैर्द्रव्यैः हिरण्यप्रभृतिभिः, नैव कार्यं नैव प्रयोजनमस्ति, भोगैः कल्याादिभिर्भोग्यपदार्थैरपि न, कार्यमित्यत्रापि योज्यम्, वस्त्रैर्वसनैः परिधानयोग्यैः न, कार्यमिति यावत् । न नाम सन्ति मत्प्रयोजनविषया अर्थभोगवस्त्राणीति नाभिलाषस्तेषु ममेति भावः । फलस्यापि हेतुत्वादर्थादिषु 'हेतौ' इति तृतीया । अहं वृत्तिहेतोः जीविकार्थम्, काषायं कषायेण रक्तं वस्त्रं, 'तेन रक्तं रागात्' इत्यण्, परिव्राजकलिङ्गमिति यावत्, न प्रपन्नः नाङ्गीकृतवान् । जीविकार्थं न मया परिव्राजकवेषमङ्गीकृतमित्यर्थः । प्रपन्न इत्यत्र गत्यर्थत्वात् 'गत्यर्थाकर्मक' इत्यादिना कर्तरि

---

काल में कुछ समय के लिये इसे रखना चाहता हूं । क्योंकि—

न मुझे द्रव्य से प्रयोजन है, न भोग से और न वस्त्र से । न मैंने जीविका के वास्ते गेरुआ वस्त्र पहना है । किन्तु मगधराज की कन्या विदुषी तथा धर्मात्मा है । वे मेरी बहिन के चरित्र

धीरा कन्येयं दृष्टधर्मप्रचारा
शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥ ९ ॥

वासवदत्ता—[ आत्मगतम् ] (क) हं, इह मं णिक्खिविदु-

---

(क) हम्, इह निक्षेप्तुकाम आर्ययौगन्धरायणः ! भवतु,

---

क्तः । पूर्वोक्तार्थनिषेधेन तत्र स्वामिमतार्थसिद्धियोग्यतां दर्शयति—धीरेति । धीरा-पण्डिता, 'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः' इत्यमरः । दृष्टधर्म-प्रचारा, धर्मस्य सत्कर्मणः प्रचारः प्रख्यापनम्, 'हलश्चेति'ति घञ्, दृष्टः ज्ञातः धर्म-प्रचारो यस्याः सेति बहुव्रीहिः । यस्याश्च सत्कर्माचरणप्रवणता 'तीर्थोदकानि समि-धः' 'कस्यार्थः कलशेने'त्यादिवचनैर्बहुशो विदितास्माभिरित्यर्थः । इमे च विशेषणे पद्मावत्यां न्यासरक्षणस्य सर्वथा योग्यत्वातिशयं पुष्णीतः । सेयं पुरी दृश्यमानैषा, कन्या राज्ञः कुमारी पद्मावती, मे भगिन्याः मम स्वसुः, चारित्रं चरितं शीलमिति यावत्, रक्षितुं गोपायितुं, शक्ता समर्था वर्तते । यतःकारणादियं 'विदुषी धर्मप्रचार-बद्धादरा पद्मावती मद्भगिन्याश्चरितं रक्षितुं समर्था, तत एव कारणादहमत्रभव-त्याः पद्मावत्याः सन्निधौ निक्षेप्तुमेतामिच्छामीति स्पष्टोऽर्थः । योग्यस्थलेऽस्मिन् स्वीयां भगिनीं न्यासरूपेण स्थापयित्वा निश्चिन्तोभवितुमिच्छन्नहमर्थादिकं किमपि नाधिगन्तुं वाञ्छामीति श्लोकार्थः । 'चर्यतेऽनेन' इति विग्रहे 'अर्तिलूधूसूखनसह-चर इत्रः' इत्यनेन चरतेः इत्रप्रत्यये चरित्रशब्दः सिध्यति, ततः चरित्रमेव चारि-त्रमिति स्वार्थेऽणि चारित्रशब्दो निष्पद्यते । अथवा 'चरेर्वृत्ते' इत्यौणादिकसूत्रेण चर धातोर्णित्रन् प्रत्यये णित्त्वादादिवृद्धौ चारित्रशब्दं संसाध्य पूर्वोक्तप्रत्ययद्वय-कल्पनागौरवं परिहरणीयमिति । पद्मावत्या निक्षेपरक्षणक्षमत्वस्य समर्थनादत्रार्था-न्तरन्यासोऽलङ्कारः । वैश्वदेवीनामकं छन्दः । तल्लक्षणं च यथा—'पञ्चाश्वैश्छिन्ना वैश्वदेवीममौ यौ' इति ॥ ९ ॥

पद्मावत्याः समीपे स्वात्मनिक्षेपरूपं यौगन्धरायणोपस्थापितं प्रस्तावं श्रुतवत्या वासवदत्तायाः स्वगतं वितर्कं दर्शयति कविः—हमिति । हमित्यव्ययं प्रश्ने, आर्य-यौगन्धरायण इह मां निक्षेप्तुकामोऽस्ति ? निक्षेप्तुं कामो यस्येति विग्रहः । 'तुं काममनसोरपि' इति मलोपः । किमत्र पद्मावत्याः सन्निधावार्यो यौगन्धरायणो मां निक्षेप्तुमिच्छति ? भवतु निक्षेपोऽप्ययमस्तु तावन्ममेत्यर्थः । अविचार्य अविमृश्य,

---

की रक्षा कर सकती हैं, अत एव यह मेरी प्रार्थना है ॥ ९ ॥

वासव०—(आप ही आप) एँ, आर्य यौगन्धरायण मुझे पद्मावती को सौंपना चाहते

कासो अय्यजोगन्धरायणो ? होदु, अविआरिअ कम्मं ण करिस्सदि।

काञ्चुकीयः—भवति ! महती खल्वस्य व्यपाश्रयणा। कथं प्रति-जानीमः ? कुतः—

सुखमर्थो भवेद् दातुं सुखं प्राणाः सुखं तपः।

---

अविचार्य कर्म न करिष्यति।

---

कर्म पादविन्यासं प्रवृत्तिमिति यावत्, न करिष्यति न विधास्यति, अर्यायौगन्धरा-यणः। मदीयनिक्षेपलक्षणेऽस्मिन् विषये न कदापि यौगन्धरायणोऽविचार्य प्रवर्तिष्यते। विचारपूर्विकैव नूनं तस्येयमीदृशे कर्मणि प्रवृत्तिरिति भावः।

यौगन्धरायणोपस्थापितस्यार्थस्य सुतरां दुष्करत्वमाकलयन् काञ्चुकीयः पद्मा-वर्तीं प्रत्याह—भवतीति। भवति ! मान्ये ! पद्मावति। अस्य यौगन्धरायणस्य, व्यपाश्रयणा व्यपाश्रयः, आश्रय इत्यर्थः, आश्रयार्थितेति यावत्। व्यपाङ्पूर्वात् श्रिधातोर्बाहुलकात् स्त्रियां भावे युच् प्रत्ययः, ततष्टाप्। महती खलु निश्चयेन गुर्वी। कथं केन प्रकारेण, प्रतिजानीमः स्वीकुर्मः। यौगन्धरायणस्तावदत्र स्वभगिनीं निक्षिप्य तद्रक्षणार्थी भवत्या आश्रयं लब्धुमिच्छति। परं निक्षेपरक्षणस्य दुःसम्पाद-तया विशिष्टैतदभिलाषपूरणं दुश्शकमेव। अतः कथङ्कारमीदृशो दुष्करोऽर्थः स्वी-कर्तव्य इति भावः।

कुतः कस्मादिति तस्यार्थस्य दुष्करत्वमेवाह—सुखमिति। अर्थो धनं, सुखं सुखपूर्वकमनायासं यथा स्यात्तथा दातुं वितरीतुं, भवेत् स्यात्। भवतेरिह सम्भव-रूपार्थता। उदारेषु धनदानशौण्डत्वं बहुशः सम्भवतीत्यर्थः। दातुं भवेदिति 'शक-धृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' इति सूत्रेण अस्त्यर्थे भूधातावुपपदे दाधातोस्तुमुन्। प्राणा असवः, 'पुंसि भूम्न्यसवः प्राणाः' इति कोशात् प्राणशब्दः पुंसि बहुत्वमात्रे प्रयुज्यते, सुखमायासरहितं यथा तथा दातुं, भवेयुरिति वचन-विपरिणामेनाऽनुवर्तनीयम्। परोपकाराय स्वान् प्राणानपि सन्तस्त्यजन्तीत्यर्थः। तथा तपः तपश्चरणं तपःफलमिति यावत्, दुष्करकर्मरूपस्य स्वजनानाधिकरणस्य

---

है। अच्छा, वे बिना सोचे ऐसा कार्य न करेंगे।

कञ्चुकी—माननीये ! आश्रय की प्रार्थना इस संन्यासी की बड़ी कठिन है, कैसे प्रतिज्ञा (स्वीकार) करें। क्योंकि—

अर्थ, प्राण, तपस्या का फल तथा और सब कुछ देना सहज है, किन्तु न्यास (थाती)

सुखमन्यद् भवेत् सर्वं दुःखं न्यासस्य रक्षणम् ॥ १० ॥

*पद्मावती*—(क) अय्य ! पढमं उग्घोसिअ को किं इच्छदित्ति अजुत्तं दाणि विआरिदुं । जं एसो भणादि, तं अणुचिट्ठदु अय्यो ।

---

( क ) आर्य ! प्रथममुद्घोष्य कः किमिच्छतीत्ययुक्तमिदानीं विचारयितुम् । यदेष भणति, तदनुतिष्ठत्वार्यः ।

---

तपसो दानानुपपत्त्याऽत्र तपःशब्देन तत्फलं लक्ष्यते, सुखमनायासेन दातुं भवेदिति पूर्वोक्तानुवृत्तिः । उदारचेतसो मुनयस्तपसो दुष्करस्यापि फलं परापन्निवारणाय दातुं प्रवर्तन्ते सुखेनेत्यर्थः । अन्यत्सर्वं सकलमितरद् वस्तुजातं, सुखमक्लेशेन, दातुमिति पूर्वतोऽनुवर्तते, दातुं भवेत् । परार्थं सतां सकलवस्तुप्रदाने प्रवर्तनमक्लेशं भवत्येवेत्यर्थः । यद्वा दातुमिति नात्रानुवर्तनीयम्, सर्वमन्यत् सुखं भवेत् सकलं कार्यान्तरं सुकरं स्यादित्यर्थः । किन्तु सकलापेक्षया, न्यासस्य निक्षेपस्य, रक्षणं पालनं तु, दुःखं दुष्करम्, अस्तीति शेषः । अर्थप्रभृतीनां समस्तानां वस्तूनां वितरणं तावल्लोके सुकरं, परं निक्षेपरक्षणं नाम स्वस्मिन्नुत्तरदायित्वेन सर्वथा दुष्करमेवेत्यमुष्मिन् दुष्करे कर्मणि कथमिदानीं प्रवर्तितव्यमस्माभिरिति काञ्चुकीयवचसोऽभिप्रायः । यौगन्धरायणाभिलापस्य गरीयस्त्वं दुष्करत्वं च समर्थयितुं श्लोकोऽयमवतीर्ण इति स्फुटमत्रार्थान्तरन्यासोऽलङ्कारः । अनुष्टुप् छन्दः प्रागुक्तलक्षणम् ॥१०॥

यौगन्धरायणाभिलापपूरणं दुष्करं सम्भाव्य प्रतिज्ञातपूर्वात्तदर्थात्पराङ्मुखीभवतः काञ्चुकीयस्य विचारं परिवर्तयितुमुद्यता पद्मावत्याह—अय्येति । 'कः किमिच्छती'ति प्रथममुद्घोष्य 'कस्यार्थः कलशेन' इत्यादिना 'कस्य कीदृशोऽभिलापः ? स किल निःशङ्कं प्रकटनीयः' इत्येवं पूर्वमुद्घोषणां कृत्वा, इदानीं, तदभिलापश्रवणानन्तरमित्यर्थः, विचारयितुमयुक्तम् तत्पूरणस्य दुष्करत्वमाकलय्य किमपि तत्रार्थे विचिन्तयितुं नोचितम् । अत इति शेषः, एष यद्भणति यौगन्धरायणो यादृशमभिलापं प्रकाशयति, आर्यः तदनुतिष्ठतु तत्रभवता भवता स किल पूरयितुं स्वीकर्तव्य इति स्पष्टोऽर्थः । 'अर्थिनः सर्वोऽप्यर्थोऽवश्यं पूर्येतास्माभि'रित्यत्र प्रतिज्ञातचरे

---

की रक्षा करना कठिन है ॥ १० ॥

पद्मावती—आर्य ! कौन क्या चाहता है-ऐसी पहले घोषणा कर, अब सोचना अनुचित है । ये जो कहते हैं, आप वसे करें ।

*काञ्चुकीयः*—अनुरूपमेतद् भवत्याभिहितम्।

*चेटी*—(क) चिरं जीवदु भट्टिदारिआ एवं सच्चवादिणी।

*तापसी*—(ख) चिरं जीवदु भद्दे!।

*काञ्चुकीयः*—भवति! तथा। [उपगम्य] भो! अभ्युपगतमत्र-

---

(क) चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी।

(ख) चिरं जीवतु भद्रे!

---

विषये 'अङ्गीकृतं सुकृतिनः परिपालयन्ती'त्यविचारितं प्रवर्तितव्यम्, अत इदानीं यौगन्धरायणाभिलाषस्य पूरणं कर्तव्यमेवेति भावः। राजकुमार्या प्रयुक्तं चात्र मान्यार्थकम् 'आर्ये'ति सम्बोधनं काञ्चुकीयस्य वृद्धत्वाद्विशिष्टाधिकारित्वाच्च युक्तमेव।

**अनुरूपमिति**। अनुरूपं योग्यम्, समयधर्मकुलोचितमित्यर्थः। युक्तमुक्तं भवत्या, समयधर्मानुचितं कार्यमिदानीं कर्तव्यमेवास्माभिरिति तत्रार्ये पुनरप्यात्मनोऽनुरूपां प्रवृत्तिं प्रदर्शितवान् काञ्चुकीयः।

महतोऽप्यर्थस्य पूरणं स्वौदार्येण समर्थयन्तीं पद्मावतीमभिनन्दति चेटी—**चिरंजीवत्विति**। एवं सत्यवादिनी, ताच्छील्ये णिनिः, नान्तत्वान् ङीप्, इत्थं सत्यभाषणशीलेति यावत्, प्रतिज्ञातपूर्वाद्विषयादविचलन्तीत्यर्थः, भर्तृदारिका राज्ञः कन्या पद्मावती, चिरं जीवतु दीर्घायुर्भवतात्। आशीरचैवा प्रधानपरिचारिकायाः सखीनिर्विशेषायाः सहचारिण्याश्चेट्याः स्वामिनीं राजकुमारीं प्रत्यपि युज्यते प्रीतिप्रयुक्ता। अथवा नेयमाशीः, सानन्दमुदीरितो मानसः सोऽयमभिलाषश्चेट्या इति।

अत्रार्थे प्रसादं दधत्यास्तापस्या अपि तदुचितं वचनमाह—**चिरमिति**। भद्रे! कल्याणरूपे! पद्मावति! चिरं जीवतु, भवतीति शेषः। सामान्यतोऽर्थिकामपूरणं पूर्वं स्वीकृत्य, ततो वासवदत्तानिक्षेपरक्षणलक्षणं विशिष्टं तमर्थं श्रुत्वा तस्य दुष्करतां काञ्चुकीयोक्तामनवार्यापि तत्र स्थैर्यं दधाना त्वं दीर्घमायुर्लभस्वेति शुभाशीर्वचनगर्भं तापस्या कृतं पद्मावत्या अभिनन्दनम्।

**भवतीति**। भवति! मान्ये पद्मावति! वृद्धस्यापि काञ्चुकीयस्य राज्ञः कुमारीमुद्दिश्य सम्बोधनवचनं चेदं पद्मावतीविषयकमादरभावं सूचयति। तथा,

---

**कञ्चुकी**—यह आपने योग्य कहा।

**दासी**—इस प्रकार सत्यभाषिणी राजकुमारी चिरकाल जीवें।

**तापसी**—कल्याणी! चिरजीविनी होओ।

**कञ्चुकी**—बहुत ठीक, (पास पहुँचकर) श्रीमती राजकुमारी ने आपकी भगिनी का

भवतो भगिन्याः परिपालनमत्रभवत्या।

*यौगन्धरायणः*—अनुगृहीतोऽस्मि तत्रभवत्या। वत्से ! उपसर्पात्रभवतीम्।

*वासवदत्ता*—[ आत्मगतम् ] (क) का गई। एसा गच्छामि मन्दभाआ।

---

( क ) का गतिः। एषा गच्छामि मन्दभागा।

---

यथा भवत्याज्ञप्तं तथा सादरं स्वीकृतं मया ! भवत्या आदेशमनुसृत्य कार्यमिदं करिष्यत इति भावः। उपगम्य यौगन्धरायणस्य समीपं गत्वा, वक्ष्यमाणं वचनमिदं यौगन्धरायणमुद्दिश्येत्यर्थः। तदेवाह—**भोः** इति। सम्बोधनचिह्नमिदं यौगन्धरायणोद्देश्यकम्। अभ्युपगतम्, अत्रभवतः पूज्यस्य, अत्रभवत्या पूज्यया पद्मावत्या। न्यासरूपेणात्मभगिनीमत्र स्थापयितुमिच्छतो भवतोऽभिलाषं पूरयितुमिदानीं संनद्धा वर्तते पूज्या पद्मावतीत्यर्थः।

पद्मावत्याः सन्निधौ वासवदत्तानिक्षेपरूपं प्रस्तावमात्मनोपस्थापितं सफलमालोक्य ततः कार्यैकदेशस्य सिद्धिमवधार्य सप्रसादं यौगन्धरायणो वचनं प्रयुङ्क्ते—**अनुगृहीतोऽस्मीति**। श्रीमत्याः पद्मावत्या महाननुग्रहोऽयं मयि यन्मदीयोऽभिलाषोऽयं तया फलेग्रहितामापादयिष्यत इत्यर्थः। वासवदत्तामुद्दिशति—**वत्से** इत्यादि। वत्से ! बाले ! अत्रभवतीं माननीयां पद्मावतीमुपसर्प, कियन्तं चित् कालमत्र निवासं कर्तुं पद्मावत्याः समीपं गच्छेत्यर्थः। राज्ञः प्रियतमेन प्रधानामात्येन प्रयुक्तं 'वत्से' इति सम्बोधनपदं वासवदत्ताया युज्यत एव।

यौगन्धरायणोक्तं पद्मावतीसन्निधावुपसर्पणमात्मनः प्राप्तकालमालोक्य चेतसीत्थं चिन्तयति वासवदत्ता—**का गई इति**। का गतिः किमत्रान्यत् करणीयम्, गत्यन्तरमत्र नास्तीत्यर्थः। मन्दभागा, भाग्यपर्यायो भागशब्दोऽप्यस्ति मन्दोऽल्पो भागः भाग्यं यस्याः सैषा, अल्पभाग्या सेयमहं गच्छामि, पद्मावत्याः समीपमिति शेषः। प्रियवियोगं कथंचित्सहमानया कार्यान्तरं कर्तुं गमिष्यतो यौगन्धरायणस्यापि वियोगोऽयमिदानीं तदेकमात्रसहायया तूष्णीं मया सोढव्य एवेति कथंचि-

---

पालन ( देखभाल ) करना स्वीकृत किया।

यौग०—श्रीमती ने बड़ा ही मुझपर अनुग्रह किया। वत्से ! इनके समीप जा।

वासव०—( आपही आप ) क्या करूँ, अब मुझ मन्दभागिनी को जाना पड़ा।

पद्मावती—(क) भोदु भोदु । अत्तणीआ दाणिं संवुत्ता ।

तापसी—(ख) जा ईदिसी से आइदी, इयं वि राअदारिअत्ति तक्केमि ।

चेटी—(ग) सुट्ठु अय्या भणादि । अहं वि अणुहूदसुहत्ति पेक्खामि ।

---

( क ) भवतु भवतु । आत्मीयेदानीं संवृत्ता ।

( ख ) या ईदृश्यस्या आकृतिः, इयमपि राजदारिकेति तर्कयामि ।

( ग ) सुष्ठु आर्या भणति । अहमप्यनुभूतसुखेति प्रेक्षे ।

---

दपि गत्यन्तराभावादल्पभाग्यया मया पद्मावत्युपसर्पणरूपं पारावीन्यमिदमङ्गीकर्त्तव्यमेवेति भावः ।

उपसर्पन्तीं तां विलोक्य पद्मावत्याह—**भोद्विति** । भवतु भवतु, आदरार्थाद्विरुक्तिरेषा, यौगन्धरायणभगिन्युपसर्पणं कर्तुं, तस्यैव प्रस्तुतत्वात् । आत्मीया संवृत्ता स्वकीया सञ्जाता । उपसर्पतु मामियमादरणीया, स्वीयजननिर्विशेषं सम्प्रत्येषा परिपाल्यते मयेति भावः ।

**जा** इति । अस्याः पद्मावतीमुपगताया आर्थिभगिन्या एतस्या इत्यर्थः, या ईदृशी आकृतिः योऽयमीदृशो रमणीय आकारः, तेन इयमपि पद्मावती समागतार्थिभगिन्यपि, राजदारिका राज्ञः कुमारी, स्यादिति शेषः, इति तर्कयामि इत्थं कल्पयाम्यहम् । आकृतिसौन्दर्येण यथा पद्मावत्या राजकन्यात्वं स्फुटं प्रतीयते, तथा न्यासरूपेण स्थापिता सेयमपि नूनमाकृतिसौन्दर्यशालिनी काचिद्राजकन्यैव स्यादिति सम्भावयामीत्यर्थः ।

**सुट्ठु** इति । आर्या पूज्या तापसीति यावत्, सुष्ठु भणति समीचीनं युक्तिसङ्गतं वदति । **अहमिति** । इयमिति प्रस्तावानुरोधादध्याहर्तव्यम् । अथिनः स्वसेति तदर्थः, अनुभूतसुखा, अनुभूतमनुभवविपर्यीकृतमुपभुक्तं सुखं राजकन्यकोचितमैश्वर्यं यया तादृशी विद्यते, इति इत्यम्, पश्याम्यवगच्छामि । 'राजकन्यासुलभं वैभवमनुभूतं पूर्वमनये'त्यहमपीदमीयरमणीयाकारविलोकनतोऽवगच्छामीति पूज्याया भवत्यास्तर्कमनुमोदे इति भावः ।

योग्यस्थले वासवदत्तां निक्षिप्य लब्धनिर्वृतिर्यौगन्धरायणश्चित्ते पर्यालोचयति-

---

**पद्मा०**—अच्छा, अच्छा । अब यह आत्मीय हुई ।

**तापसी**—इसकी जैसी आकृति है, इससे यह भी राजकुमारी है ऐसा मालूम होता है।

**दासी**—आप ठीक कहती हैं। मैं समझती हूं कि इसने राजसुख का अनुभव किया होगा।

*यौगन्धरायणः*—[ आत्मगतम् ] हन्त भोः ! अर्धमवसितं भारस्य । यथा मन्त्रिभिः सह समर्थितं, तथा परिणमति । ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति । कुतः—

---

हन्तेति । हर्षसूचकं हन्तेत्यव्ययम्, भोः इति आत्मानमुद्दिश्य सम्बुद्धिः । भारस्य स्वशिरोऽधिरूढस्य विपक्षापहृतस्वामिराज्यप्रत्याहरणरूपस्येति यावत्, अर्धं समानांशः समानोऽर्धभागः, अवसितं समाप्तं सम्पन्नम् । 'अर्धं समेंऽशके' इति कोषात् समांशार्थवाचिनोऽर्धशब्दस्य क्लीबत्वम् । सम्पादितस्य वासवदत्तानिक्षेप रूपस्य कार्यस्यार्धत्वं च पद्मावतीविवाहसम्बन्धसङ्घटनप्रभृतिकरणीयकार्यान्तरापेक्षया बोद्धव्यम् । अवसीयते स्म इति विग्रहे अन्तकर्मार्थकात् अवपूर्वात् षोधातोः क्तप्रत्यये 'द्यतिस्यतिमास्थामित्ति किति' इति इत्वे च अवसितमिति रूपम् । मन्त्रिभिः रुमण्वत्प्रभृतिभिः सह, यथा समर्थितं येन प्रकारेण कार्यं कर्तुमवधारितं, तथा परिणमति तेन प्रकारेण कार्यं फलति । ततः तदनन्तरं क्रमेणेत्यर्थः, स्वामिनि उदयने, प्रतिष्ठिते पुनः स्वीयराज्यसिंहासनमधिरूढे सति, तत्रभवतीं पूज्यां वासवदत्ताम्, उपनयतः स्वामिनः सन्निधिं नयतः मे मम यौगन्धरायणस्य, इह अस्मिन् विषये वासवदत्तायाश्चारित्र्यशुद्धिरूपे, अत्रभवती मान्या मगधराजस्य पुत्री कन्या पद्मावती, विश्वासस्थानं विश्वासास्पदं साक्षिभूतेति यावत्, भविष्यति सम्पत्स्यते, इति शब्दार्थः । अत्र वासवदत्तोपनयनस्य भविष्यत्कालिकत्वेऽपि 'उपनयत' इति वर्तमानसामीप्यविवक्षया वर्तमानकालिकः प्रयोगः । तेन स्वामिनो राज्यप्राप्तेः वासवदत्तासमागमस्य च प्राप्तावसरत्वं सूच्यते । 'विपक्षापहृतं स्वामिनो राज्यम् अधिकरिष्यामी'ति कृतप्रतिज्ञस्य, तदुचितेषु कर्तव्येषु वासवदत्तानिक्षेपलक्षणं गुरुतरं कार्यं सम्पादितवतो मे शिरसोऽवतीर्णः साम्प्रतं स्वावलम्बितस्य भारस्यायमर्धभागः । रुमण्वदादिभिः सार्धं तस्य निर्णयस्याविरोधेनैव नूनमिदानीं कार्यस्य फलवत्ता दृश्यते । क्रमेण च निजं राज्यसिंहासनमधिरूढेन स्वामिनोदयनेन सह

---

**यौग०**—( आप ही आप ) अहा ! आधा भार तो उतर गया । मन्त्रियों के साथ जैसा ठीक किया था वैसा ही हो रहा है । महाराज उदयन के फिर भी राज्य पाने पर उनके पास इसको पहुँचाने वाले मुझे यहाँ पर यह मगधराज की पुत्री विश्वासपात्र ( साक्षिणी ) होगी । क्योंकि—

पद्मावती नरपतेर्महिषी भवित्री
दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा।
तत्प्रत्ययात् कृतमिदं, न हि सिद्धवाक्या-
न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ॥ ११ ॥

वियोगिनीं वासवदत्तां योजयिष्यन्नहं वासवदत्ताचरितस्य निर्दोषताविषये पद्मावती-मेव साक्षिणीं कर्तुं प्रभविष्यामीति सकलवाक्यार्थः। एतादृशाखिलकार्यसिद्धिपर्या-लोचनयैव हर्षोक्तिरियं यौगन्धरायणस्य।

कृत इति पूर्वोक्तमेवार्थं समर्थयन्नाह—**पद्मावतीति**। यैः पुष्पकभद्रप्रभृतिभिः सिद्धैः, विपत्तिः आगमिष्यन्ती विपत्, सा च विपक्षाचरितस्वामिराज्यापह-रणरूपैव, पूर्वं तदुपस्थितेः प्राक्, प्रदिष्टा सूचिता, अथानन्तरं, सैव दृष्टा प्रत्यक्ष-मनुभूता अर्थादस्माभिः। साम्प्रतं च तत्प्रत्ययात् तेषु सिद्धेषु तत्र वा सिद्धवचने प्रत्ययाद्विश्वासात्, इदमेतद् पद्मावत्याः समीपे न्यासरूपेण वासवदत्तायाः स्थापन-मिति यावत्, कृतं विहितं मयेति शेषः, अतश्च नूनं, पद्मावती सेयं मगधराज-कुमारी, नरपतेर्महाराजस्योदयनस्य, महिषी कृताभिषेका पत्नी, 'कृताभिषेका महि-षी'इत्यमरः, भवित्री कालान्तरे भाविनी, भविष्यदर्थे तृच्, ऋदन्तत्वान्ङीप्। 'उदयनस्य राज्यं परहस्तगतं भविष्यती'ति प्रथममेव सिद्धैः सूचितायाः स्वामिनो विपत्तेः प्रत्यक्षानुभवादेव, साम्प्रतं पुनस्तैः संसूचिते 'पद्मावती राजमहिषी भवि-ष्यती'त्यत्रापि भाविन्यर्थे विश्वासमवलम्ब्य पद्मावत्याः सन्निधौ स्थापिता न्यास-रूपेण मया वासवदत्ता। अतः सिद्धानां प्रथमस्यादेशस्य सत्यतयेव द्वितीयस्यापि तेषामादेशस्य सत्यत्वसम्भावनयैव मन्ये पद्मावती नूनं स्वामिनो भार्या भविष्य-तीति भावः। उक्तस्यार्थस्य युक्तत्वं समर्थयते—**न हीति**। हि तथा हि युक्तमेवे-त्यर्थः। विधिर्दैवं भवितव्यता, सुपरीक्षितानि सत्यत्वपरीक्षायां समुत्तीर्णानि अर्था-ऽविसंवादीन्यवितथानीति यावत्, सिद्धवाक्यानि ज्ञानगोचरीकृतत्रैकालिकाशेष-विषयाणां सिद्धपुरुषाणां वचनानि, उत्क्रम्योल्लङ्घ्य, न गच्छति, अनुसरत्येव ताव-

जिन ज्योतिषियों ने आनेवाली विपत्तिको पहिले ही कहा था उस विपदा को हम लोग देख चुके, अब उन्हीं के वचनों पर विश्वास करने से यह भी ( वासवदत्ता को पद्मावती के हाथ सौंपना ) हमने किया और इसी से हम जानते हैं कि समय आने पर पद्मावती महाराज की रानी होगी। क्योंकि होनहार ( भवितव्यता ) सिद्धों के सुपरीक्षित वचनों का उल्लङ्घन नहीं करती ॥ ११ ॥

[ ततः प्रविशति ब्रह्मचारी । ]

ब्रह्मचारी—[ ऊर्ध्वमवलोक्य ] स्थितो मध्याह्नः । दृढमस्मि परिश्रान्तः । अथ कस्मिन् प्रदेशे विश्रमयिष्ये ? [ परिक्रम्य ] भवतु, दृष्टम् । अभितस्तपोवनेन भवितव्यम् । तथाहि—

दवितथानि सिद्धानां वचांसि भवितव्यतेत्यर्थः । भाविनोऽर्था हि सिद्धजनसूचनानुसारमेव परिणमन्तीति पूर्वोक्तार्थे विश्वासयोग्यताऽस्तीति भावः । एतेन—राज्ञो महिष्याऽत्र पद्मावत्या सूच्यमानं वासवदत्ताचारित्र्यशुद्धिविषयकं साक्ष्यं स्वामिनः समधिकविश्वासास्पदं भविष्यतीति यौगन्धरायणस्य तदौपयिकवासवदत्तानिक्षेपलक्षणप्रधानकार्यसंसिद्ध्या कियतांशेन कृतकृत्यता सूचितेत्यलम् । अत्र च काव्यलिङ्गमलङ्कारः, वसन्ततिलका वृत्तम् ॥ ११ ॥

इदानीम् उदयनविषयकं प्रेम पद्मावत्याश्चित्ते समुत्पादयितुं विरहविधुरां दीनां च वासवदत्तां समाश्वासयितुं प्रियया वियुक्तस्योदयनस्य दशां वर्णयिष्यन् कविस्तदौपयिकं ब्रह्मचारिणः प्रवेशमाह—**ततः प्रविशतीति** ।

**ऊर्ध्वमवलोक्येति** । आकाशे दृष्टिं दत्त्वेत्यर्थः । स्थित इति कर्तरि प्रयोगोऽयम् । अह्नो मध्यं मध्याह्नः, 'अह्नोऽह्न एतेभ्यः' इत्यनेन सर्वैकदेशवाचिमध्यशब्दात्परस्याहन्शब्दस्य अह्नादेशः । दृढमित्यव्ययं क्रियाविशेषणम् । अथशब्दः प्रश्नार्थकः, 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । विश्रमयिष्ये, इति हेतुमण्णिजन्तायाः सकर्मकक्रियायाः कर्मपदम् 'आत्मान'मित्यध्याहार्यम् । स्वार्थिको वा णिच्, अत्र च पक्षे क्रियाया अकर्मकत्वात् कर्मणो नावश्यकता । परिक्रम्य इतस्ततः परिभ्रम्येति विश्रमोचितस्थलान्वेषणम् । भवतु अस्तु तावत् । स्थानोपलब्धिं सूचयति—**दृष्टमिति** । अत्र हि 'स्थान'मिति कर्मपदस्यार्थबलादाक्षेपः । अभितः समीपे, 'समीपोभयतः शीघ्रसाकल्याभिमुखेऽभित' इत्यमरः । दिनस्य मध्यभागो वर्तते, अधुनैव प्रचण्डांशुकिरणसम्पातसन्तापात् परिभ्रमणपरिश्रमो मां भृशं बाधते । कः खलु प्रदेशोऽत्र भविता मे विश्रमयोग्यः । हन्त ! विश्रमोचितं

( तब ब्रह्मचारी आता है । )

ब्रह्मचारी—( ऊपर देखकर ) दो पहर हुआ । मैं बहुत थक गया हूँ । अब किस स्थल पर विश्राम करूँ ? ( घूमकर ) अच्छा, स्थान देखा । मालूम होता है कि यहाँ चारों ओर तपोवन होगा, क्योंकि—

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।

स्यानमुपलब्धमिदम्। अनुमीयते किल समीप एव तपोवनं स्यादिति। तथा हि युक्तमेवेदमित्यर्थः।

पूर्वोक्तं तपोवनत्वानुमानं द्रढयन्नाह—विस्रब्धमिति। श्लोकेऽस्मिन् 'अत्रे'त्युपरिष्टाद्योजनीयम्। दृश्यमानेऽस्मिन् स्थाने इति तदर्थः। हरिणा मृगाः, देशागतप्रत्ययाः देशात् जनपदात् जनपदापेक्षयेत्यर्थः, अथवा देशे प्रदेशेऽस्मिन्नित्यर्थः, आगतः प्राप्तः प्रत्ययो विश्वासो येषां तथाविधाः, अत एव अचकिताः निर्भयाः सन्तः, विस्रब्धं निःशङ्कं यथा स्यात्तथा, चरन्ति सञ्चरणं कुर्वन्ति। मृगाणां निःशङ्कसञ्चरणे लब्धविश्वासत्वं निर्भयत्वं च हेतुः। सर्वे वृक्षाः समस्ताः पादपाः, दयारक्षिताः दययाऽनुकम्पया प्रेम्णा, रक्षिताः पालिताः वर्धिता इति यावत्, अत एव पुष्पफलैः पुष्पाणि च फलानि च पुष्पफलानि तैः, इतरेतरयोगो द्वन्द्वसमासः, पुष्पैश्च फलैश्चेत्यर्थः, पुष्पसहितानि फलानीति मध्यमपदलोपी समासो वा, पुष्पसहितैः फलैरिति तदर्थः, समृद्धविटपाः समृद्धाः परिपूर्णा विटपाः शाखा येषां ते तथाभूताः सन्ति। सुरक्षितानां वृक्षाणां शाखासु पुष्पफलसमृद्धिः शोभत इति भावः। सर्वे वृक्षाः पुष्पफलैः समृद्धविटपा अत एव दयारक्षिताः सन्तीति वा योजना। अत्र च पक्षे पुष्पफलसमृद्धिशालिनां शाखिनां सुरक्षितत्वं गम्यते। वृक्षाणां रक्षणं चात्र यथोचितसेचनादिमूलकं बोध्यम्। 'पुष्पफलैः समृद्धविटपा' इत्यनेन पुष्पादीनां स्वरूपशोभैकफलत्वं सर्वथा लोककार्यानुपयोगित्वं च ध्वन्येते। कपिलानि पिशङ्गानि पीतवर्णानीति यावत्, 'कडारः कपिलः पिङ्गपिशङ्गौ' इत्यमरः, गोकुलवनानि गोकुलानि गोयूथानि धनान्यर्था इवेति 'उपमितं व्याघ्रादिभि'रित्यनेनोपमितसमासः, कपिलत्वविशेषणानुगुण्येन पूर्वपदगोकुलार्थप्रधानस्य तस्यैव समासस्य युक्तत्वात्। गोकुलान्येव धनानीत्युत्तरपदार्थप्रधानमयूरव्यंसकादिसमासाश्रयणे तु कपिलत्वविशेषणमनुपपन्नं स्यादिति। भूयिष्ठं बहुतममिति क्रियाविशेषणम्, सन्तीति सामान्यक्रियाक्षेपः। अत्र च धनसादृश्यवर्णनेन गवां सर्वतः सुरक्षितत्वं गम्यते। सर्वप्रकारैः प्रयत्नैः सम्यक् संरक्षितानां गवामत्र प्राचुर्यं

तपोवन ही के कारण यहाँ पर हरिण निर्भय तथा निश्चिन्त हो घूमते हैं, प्रेमपूर्वक यत्नों से पाले पोसे पेड़ों की डालियाँ फल-फूलों से लदी हुई हैं, कपिला (कैली) गायें भी बहुत सी घूम रही हैं, आसपास की जमीन खेती में नहीं ली गई है और धूआँ भी बहुतायत से निकल

भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥ १२ ॥

---

विद्यत इत्यभिप्रायः । एतेन—गोसामान्यस्य रक्षणं प्रशस्तं, कपिलगवां तु सुतरामिति तादृशगुणवत्त्वेन पवित्रतमस्यास्य प्रदेशस्य सर्वतोऽभ्यर्हितत्वं द्योतितम् । बहुत्वातिशये द्योत्ये बहुशब्दात् 'अतिशायने तमबिष्ठनौ' इति इष्ठन्प्रत्यये 'इष्ठस्य यिट् चे'त्यनेन बहुशब्दस्य भू इत्यादेशे यिडागमे च भूयिष्ठशब्दः सिध्यति । दिशः ककुभः प्रान्तभूभागा इति यावत्, अक्षेत्रवत्यः सन्ति, क्षेत्राणि कृषिसाधनानि स्थलानि विद्यन्तेऽस्वेति क्षेत्रवत्यः, तादृशा न भवन्तीत्यक्षेत्रवत्यः । मतुबन्तान्नञ्समासः । प्रान्तभूमिषु कृषिप्रयोजनानां क्षेत्राणां नामापि नास्तीत्यर्थः । अत एतादृक्कारणसामग्रीसमवधानेन, इदं तपोवनं तापसाश्रमोऽयम्, इति निःसन्दिग्धं निश्चितम् । स्थलस्यास्य तपोवनत्वे संशयलेशोऽपि नास्तीत्यर्थः । यथात्र हरिणाः निःशङ्कं चरन्तः, शाखिनः पुष्पफलसमृद्धिशालिनः कपिला गावो भूयस्यः पर्यन्तभूमयश्च क्षेत्रवर्जिताः सन्ति तथा नूनमिदं तपोवनमेवेत्यनुमीयते । पुनरप्यसाधारणं हेत्वन्तरमाह—हि यस्मात्, बह्वाश्रयः बहूनि होमद्रव्याणि आश्रय आधारो यस्य सः हवनीयद्रव्याश्रयशाली, अयं पुरोवर्ती, धूमः हवनाधिकरणीभूतादग्नेरुद्भूतः, प्रसरतीति शेषः । द्रव्यविशेषाहुतिप्रदानोद्भूतं सौरभं वहतो धूमस्य सर्वतः प्रसरणेन नूनमिदं(?)नामाहिताग्नीनां नूनमियं निवासभूमिरिति भावः ।

नन्वत्र चरणत्रयसूचितैर्हेतुभिस्तपोवनानुमानकार्यस्य प्रतिपादनोत्तरं वाक्यस्य समाप्तौ पुनः 'अयं धूमो हि बह्वाश्रयः' इति हेत्वन्तरप्रदर्शनेन समाप्तपुनरात्तत्वं दोषः प्रसज्जत इति चेन्न, साधारणैः पूर्वोक्तहेतुभिः साधितं तपोवनानुमानं हेतुमसाधारणस्य हेतोः पुनः प्रतिपादनस्यावश्यकत्वात्, अस्य च हेतोः पूर्वा॥ वैशिष्ट्यात् । वाक्यार्थपरिसमाप्त्यनन्तरमनावश्यकं यत्र यत्किञ्चिदुच्यते समाप्तपुनरात्तत्वस्य सिद्धान्तितत्वादिति । अनुमानाकारश्च यथा—इदं, वनम्, निःशङ्कहरिणसञ्चरणशालित्वादिधर्मवत्त्वात्, यत्र तादृशधर्मवत्त्वं तत्र वनत्वम्, यन्नैवं तन्नैवमिति । इदं चानुमानं वर्णनवैचित्र्याच्चमत्कारमाविष्कुर्वत्यत्रानुमानालङ्कारः । चमत्कृतिजनकतावच्छेदकतावच्छेदकत्वस्यैवालङ्कारत्वादस्य

---

है । अत एव यह निःसन्देह तपोवन है ॥ १२ ॥

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः ।

स्थानमुपलब्धमिदम् । अनुमीयते किल समीप एव तपोवनं स्यादिति । तथा हि युक्तमेवेदमित्यर्थः ।

पूर्वोक्तं तपोवनत्वानुमानं द्रढयन्नाह—विस्रब्धमिति । श्लोकेऽस्मिन् 'अत्रे'-त्युपरिष्टाद्योजनीयम् । दृश्यमानेऽस्मिन् स्थाने इति तदर्थः । हरिणा मृगाः, देशागतप्रत्ययाः देशात् जनपदात् जनपदापेक्षयेत्यर्थः, अथवा देशे प्रदेशेऽस्मिन्नित्यर्थः, आगतः प्राप्तः प्रत्ययो विश्वासो येषां तथाविधाः, अत एव अचकिताः निर्भयाः सन्तः, विस्रब्धं निःशङ्कं यथा स्यात्तथा, चरन्ति सञ्चरणं कुर्वन्ति। मृगाणां निःशङ्कसञ्चरणे लब्धविश्वासत्वं निर्भयत्वं च हेतुः। सर्वे वृक्षाः समस्ताः पादपाः, दयारक्षिताः दयया-ऽनुकम्पया प्रेम्णा, रक्षिताः पालिताः वर्धिता इति यावत्, अत एव पुष्पफलैः पुष्पाणि च फलानि च पुष्पफलानि तैः, इतरेतरयोगो द्वन्द्वसमासः, पुष्पैश्च फलैश्चेत्यर्थः, पुष्पसहितानि फलानीति मध्यमपदलोपी समासो वा, पुष्पसहितैः फलैरिति तदर्थः, समृद्धविटपाः समृद्धाः परिपूर्णा विटपाः शाखा येषां ते तथाभूताः सन्ति । सुरक्षितानां वृक्षाणां शाखासु पुष्पफलसमृद्धिः शोभत इति भावः । सर्वे वृक्षाः पुष्पफलैः समृद्धविटपा अत एव दयारक्षिताः सन्तीति वा योजना । अत्र च पक्षे पुष्पफलसमृद्धिशालिनां शाखिनां सुरक्षितत्वं गम्यते । वृक्षाणां रक्षणं चात्र यथोचितसेचनादिमूलकं बोध्यम् । 'पुष्पफलैः समृद्धविटपा' इत्यनेन पुष्पादीनां स्वल्पशोभैकफलत्वं सर्वथा लोककार्यानुपयोगित्वं च ध्वन्येते । कपिलानि पिशङ्गानि पीतवर्णानीति यावत्, 'कडारः कपिलः पिङ्गपिशङ्गौ' इत्यमरः, गोकुलवनानि गोकुलानि गोयूथानि धनान्यर्था इवेति 'उपमितं व्याघ्रादिभि'रित्यनेनोपमितसमासः, कपिलत्वविशेषणानुगुण्येन पूर्वपदगोकुलार्थप्रधानस्य तस्यैव समासस्य युक्तत्वात्। गोकुलान्येव धनानीत्युत्तरपदार्थप्रधानमयूरव्यंसकादिसमासाश्रयणे तु कपिलत्वविशेषणमनुपपन्नं स्यादिति । भूयिष्ठं बहुतममिति क्रियाविशेषणम्, सन्तीति सामान्यक्रियाक्षेपः। अत्र च धनसादृश्यवर्णनेन गवां सर्वतः सुरक्षितत्वं गम्यते । सर्वप्रकारैः प्रयत्नैः सम्यक् संरक्षितानां गवामत्र प्राचुर्यं

तपोवन ही के कारण यहाँ पर हरिण निर्भय तथा निश्चिन्त हो घूमते हैं, प्रेमपूर्वक यत्नों से पाले पोसे पेड़ों की डालियां फल-फूलों से लदी हुई हैं, कपिला ( कैली ) गायें भी बहुत सी घूम रही हैं, आसपास की जमीन खेती में नहीं ली गई है और धूआँ भी बहुतायत से निकल

भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥ १२ ॥

---

विद्यत इत्यभिप्रायः । एतेन—गोसामान्यस्य रक्षणं प्रशस्तं, कपिलगवां तु सुतरामिति तादृशगुणवत्त्वेन पवित्रतमस्यास्य प्रदेशस्य सर्वतोऽभ्यर्हितत्वं द्योतितम् । बहुत्वातिशये द्योत्ये बहुशब्दात् 'अतिशायने तमबिष्ठनौ' इति इष्ठन्प्रत्यये 'इष्ठस्य यिट् चे'त्यनेन बहुशब्दस्य भू इत्यादेशे यिडागमे च भूयिष्ठशब्दः सिध्यति । दिशः ककुभः प्रान्तभूभागा इति यावत्, अक्षेत्रवत्यः सन्ति, क्षेत्राणि कृषिसाधनानि स्थलानि विद्यन्तेऽत्रेति क्षेत्रवत्यः, तादृशा न भवन्तीत्यक्षेत्रवत्यः । मतुबन्तान्नञ्समासः । प्रान्तभूमिषु कृषिप्रयोजनानां क्षेत्राणां नामापि नास्तीत्यर्थः । अत एतादृक्कारणसामग्रीसमवधानेन, इदं तपोवनं तापसाश्रमोऽयम्, इति निःसन्दिग्धं निश्चितम् । स्थलस्यास्य तपोवनत्वे संशयलेशोऽपि नास्तीत्यर्थः । यथात्र हरिणाः निःशङ्कं चरन्तः, शाखिनः पुष्पफलसमृद्धिशालिनः कपिला गावो भूयस्यः पर्यन्तभूमयश्च क्षेत्रवर्जिताः सन्ति तथा नूनमिदं तपोवनमेवेत्यनुमीयते । पुनरप्यसाधारणं हेत्वन्तरमाह—हि यस्मात्, बह्वाश्रयः बहूनि होमद्रव्याणि आश्रय आधारो यस्य सः हवनीयद्रव्याश्रयशाली, अयं पुरोवर्ती, धूमः हवनाधिकरणीभूतादग्नेरुद्भूतः, प्रसरतीति शेषः । द्रव्यविशेषाहुतिप्रदानोद्भूतं सौरभं वहतो धूमस्य सर्वतः प्रसरणेन तपस्विनामाहिताग्नीनां नूनमियं निवासभूमिरिति भावः ।

नन्वत्र चरणत्रयसूचितैर्हेतुभिस्तपोवनानुमानकार्यस्य प्रतिपादनोत्तरं वाक्यस्य परिसमाप्तौ पुनः 'अयं धूमो हि बह्वाश्रयः' इति हेत्वन्तरप्रदर्शनेन समाप्तपुनरात्तत्वं नाम दोषः प्रसज्यत इति चेन्न, साधारणैः पूर्वोक्तहेतुभिः साधितं तपोवनानुमानं द्रढयितुमसाधारणस्य हेतोः पुनः प्रतिपादनस्यावश्यकत्वात्, अस्य च हेतोः पूर्वापेक्षया वैशिष्ट्यात् । वाक्यार्थपरिसमाप्त्यनन्तरमनावश्यकं यत्र यत्किञ्चिदुच्यते तत्रैव समाप्तपुनरात्तत्वस्य सिद्धान्तितत्वादिति । अनुमानाकारश्च यथा—इदं, तपोवनम्, निःशङ्कहरिणसञ्चरणशालित्वादिधर्मवत्त्वात्, यत्र तादृशधर्मवत्त्वं तत्र तपोवनत्वम्, यन्नैवं तन्नैवमिति । इदं चानुमानं वर्णनवैचित्र्याच्चमत्कारमाविष्करोतीत्यत्रानुमानालङ्कारः। चमत्कृतिजनकतावच्छेदकतावच्छेदकत्वस्यैवालङ्कारत्वादस्य

---

रहा है । अत एव यह निःसन्देह तपोवन है ॥ १२ ॥

यावत प्रविशामि। [प्रविश्य] अये ! आश्रमविरुद्धः खल्वेष जनः। [अन्यतो विलोक्य] अथवा तपस्विजनोऽप्यत्र निर्दोषमुपसर्पणम्। अये ! स्त्रीजनः।

काञ्चुकीयः—स्वैरं स्वैरं प्रविशतु भवान्। सर्वजनसाधारणमाश्रमपदं नाम।

---

च यथातथात्वं तथा सहृदयसाक्षिकमेवेत्यलं बहुना। शार्दूलविक्रीडितमत्र वृत्तम्, लक्षणं चोक्तचरमेतस्य॥ १२॥

**यावत् प्रविशामीति**। यावदिति वाक्यालङ्कारे, प्रविशामि तपोवनत्वेन निश्चितेऽत्र ब्रह्मचारिणो मम प्रवेशयोग्ये स्थले प्रवेशं करोमीत्यर्थः। वर्तमानसामीप्ये वर्तमानत्वाल्लट्। प्रविश्य प्रवेशोपक्रमं नाटयित्वा। नागरिकवेषं काञ्चुकीयं दृष्ट्वा पुनः प्रवेशे शङ्कते—**अये इति**। अव्ययशब्दोऽयं शङ्कायाम्। एष जनः काञ्चुकीयलक्षणः, आश्रमविरुद्धः खलु आश्रमानुकूलो नास्ति नूनम्। आश्रमविरुद्धवेषस्यास्य सत्त्वान्नेदं तपोवनमिति नात्र मया प्रवेष्टव्यमित्याशयः। पुनः अन्यतो विलोक्य प्रदेशान्तरे दृशं दत्त्वा। आश्रमोचितवेषौ तापसीपरिव्राजकौ विलोक्य पूर्वोक्तां शङ्कां निराकुरुते—**अथवेति**। अत्र अस्मिन् प्रदेशे तपस्विजनोऽपि तापसीप्रभृतिस्तादृशलोकोऽपि वर्तते, अत उपसर्पणं प्रवेशनं, ममेति शेषः, निर्दोषं दोषरहितम्, निर्गतो दोषो यस्मात्तन्निर्दोषम्। अत्र किल तपस्विजनस्याप्युपलब्ध्या न शङ्कनीयस्तावत्प्रवेशो ममेति भावः। पुनः पद्मावतीं, वासवदत्तां चेटीं च तत्र पश्यन् प्रवेशशङ्कां नाटयति—**अये स्त्रीजन इति**। स्त्रीजनस्य पद्मावतीप्रभृतिलक्षणस्य सन्निधानेन तत्र ब्रह्मचारिणः प्रवेशे सङ्कोचो युक्त एव।

प्रवेशे सशङ्कं ब्रह्मचारिणं दृष्ट्वा काञ्चुकीयः प्राह—**स्वैरं स्वैरमिति**। वीप्सेयं प्रवेशशङ्काप्रशमनत्वराभिप्रायिका। स्वैरं स्वच्छन्दं निःशङ्कमिति यावत्। सर्वजनानां साधारणं सर्वजनसाधारणम्, नामेति प्रसिद्धौ। भवता निःशङ्कं प्रवेष्टव्यम्। अवारितप्रवेशो ह्याश्रमे सर्वेषामप्यविचारितं प्रवेशो भवति। नात्र कापि प्रवेशशङ्का कार्येति भावः।

---

तो चलें भीतर। (प्रवेश कर) अरे ! यह तो आश्रम का मनुष्य नहीं मालूम होता। (दूसरी ओर देखकर) या यहाँ तपस्वीलोग भी हैं। पास जाने में कोई दोष नहीं। अरे ! स्त्रियाँ।

कंचुकी—आप बेधड़क आइये। आश्रम तो सर्वसाधारण हुआ करता है।

*वासवदत्ता*—हं ।

*पद्मावती*—(क) अम्मो ! परपुरुसदंसणं परिहरदि अय्या । भोदु, सुपरिवालणीओ खु मण्णासो ।

*काञ्चुकीयः*—भोः । पूर्वं प्रविष्टाः स्मः । प्रतिगृह्यतामतिथिसत्कारः ।

*ब्रह्मचारी*—[ आचम्य ] भवतु भवतु । निवृत्तपरिश्रमोऽस्मि ।

---

( क ) अम्मो ! परपुरुषदर्शनं परिहरत्यार्या । भवतु, सुपरिपालनीयः खलु मन्न्यासः ।

---

काञ्चुकीयवचनान्निःशङ्कं प्रविशति ब्रह्मचारिणि, परपुरुषदर्शनाल्लज्जमाना वासवदत्ता तत्प्रवेशेऽसम्मतिं सूचयति—**हमिति** । असम्मतिसूचकश्चायमनुकरणशब्दः ।

आवन्तिकाया असम्मतिं बुद्ध्वा पद्मावत्या वितर्कमाह—**अम्मो** इति । अव्ययमिदं वितर्कार्थकम् । आर्या पूज्या आवन्तिका, परपुरुषस्य दर्शनं, परिहरति निषेधति । भवतु आस्तां तावत्, मन्न्यासः मम न्यासः मत्समीपे स्थापितो न्यास इति यावत्, सुपरिपालनीयः सुष्ठु रक्षणीयः । न्यासस्य समीचीनतया परिपालनावसरोऽयमुपस्थित इत्यर्थः ।

प्रविष्टस्य ब्रह्मचारिण आतिथ्यं कर्तुमिच्छन् काञ्चुकीयो वदति-**भोः** इति । ब्रह्मचारिणः सम्बोधनचिह्नमिदम् । प्रविष्टाः स्म इति त्वादरे बहुत्वम् । भवतामुपस्थितेः प्राग् वयमत्रोपस्थिताः । अतोऽत्रत्यैरस्माभिः क्रियमाणमतिथियोग्यं सत्कारमनन्तरोपस्थिताः प्रतिगृह्णन्तु तत्रभवन्तो भवन्तोऽभ्यागताः । एतदनन्तरं काञ्चुकीयकृतमाचमनीयजलप्रदानमर्थानुरोधाद् गम्यम् ।

**आचम्येति** । उपचारप्रदत्तमाचमनं स्वीकृत्येत्यर्थः । प्रणयानुरोधाद् गृहीतोपचारः पुनरप्युपचारप्रदर्शनतः काञ्चुकीयं निवारयितुं त्वरमाण आह—**भवतु भवत्विति** । पर्याप्तः पर्याप्तोऽयमुपचारः, नेतोऽधिकस्योपचारस्यावश्यकता वर्तते,

---

वासव०—हैं ।

पद्मावती०—हूं, आर्या ( वासवदत्ता ) परपुरुष का दर्शन नहीं चाहती । अच्छा, अब अपने धरोहर की रक्षा मुझे अच्छी तरह करनी चाहिये ।

कञ्चुकी—अजी ! हम लोग पहिले आये हुए हैं, अतः आप अतिथिसत्कार ग्रहण करें ।

ब्रह्म०—( आचमन कर ) अच्छा अच्छा । अब मेरा परिश्रम शान्त हो गया ।

*यौगन्धरायणः*—भोः ! कुत आगम्यते, क गन्तव्यं, काधिष्ठानमार्यस्य ?

*ब्रह्मचारी*—भोः ! श्रूयताम् । राजगृहतोऽस्मि । श्रुतिविशेषणार्थं वत्सभूमौ लावाणकं नाम ग्रामस्तत्रोषितवानस्मि ।

*वासवदत्ता*—[ आत्मगतम् ] (क) हा लावाणअं णाम । लावा-

(क) हा लावाणकं नाम । लावाणकसङ्कीर्तनेन पुनर्नवीकृत इव मे सन्तापः ।

निवृत्तः परिश्रमो यस्य स निवृत्तपरिश्रमः । निवृत्ता मे साम्प्रतं परिश्रान्तिरित्यर्थः ।

आतिथ्यं कृतवति काञ्चुकीये स्वागतं पृच्छति यौगन्धरायणः-भोः इति । अधिष्ठानं निवासः । भो ब्रह्मचारिन् । आर्यस्तत्रभवान् कुतः प्रदेशादागतः ? कुत्र जिगमिषति ? अलङ्कुरुते च कं वा देशमात्मनो निवासेन ? कृपया च तदेतत्कथनपरिश्रमोऽङ्गीकरणीयस्तत्रभवता ।

पूर्वोक्तप्रश्नोत्तरमाह ब्रह्मचारी—**भोः** इत्यादि । श्रूयतां निशम्यताम् । **राजगृहतोऽस्मीति** । आगत इति प्रश्नानुरोधादाक्षिप्यते । 'अपादाने चाहीयरुहोः' इत्यपादानपञ्चम्यन्ताद्राजगृहशब्दात्तसिः । राजभवनात् समागतोऽहमस्मीत्यर्थः । वत्सभूमौ लावाणकं नाम ग्रामोऽस्ति, तत्र श्रुतिविशेषणार्थम् उषितवानस्मीत्यन्वयः । वत्सो वत्सराज इति नामैकदेशग्रहणम् , तस्य भूमौ, उदयनराज्ये इति यावत् । श्रुतेर्विशेषणायेति श्रुतिविशेषणार्थम् , श्रुतेरधीतस्याम्नायस्य विशेषणमर्थानुसन्धानपूर्विका विशिष्टा ज्ञानोत्पत्तिस्तदर्थम् । उषितवानिति कर्तरि क्तवतुः, 'वसतिक्षुधोरिट्' इतीडागमो यजादित्वात्सम्प्रसारणं च । श्रुतेः शब्दज्ञानं सम्पाद्य पुनस्तदर्थज्ञानं सम्पादयितुमुदयनराज्यान्तर्गते लावाणकनाम्नि ग्रामे कञ्चित्कालं यावत् वासः कृतो मयासीदिति स्फुटोऽर्थः ।

लावाणकनामधेयं श्रुत्वा वासवदत्ता मनस्याह—**हेति** । हा कष्टम् , लावाणकं

**यौग०**—अजी ! आप कहाँ से आते हैं, कहाँ जायँगे और आपका स्थान कहाँ पर है ?

**ब्रह्म०**—सुनिये । राजगृह से आया हूँ । वत्सराज के राज्य के अन्तर्गत एक लावाणक नाम गाँव है, वहाँ मैं वेद के अर्थज्ञान के लिये कुछ काल तक रहा ।

**वासव०**—( स्वगत ) ओह ! लावाणक ! लावाणक नाम लेने से मेरा सन्ताप, फिर

णअसङ्कित्तणेण पुणो णवीकिदो विअ मे सन्दावो ।

*यौगन्धरायणः*—अथ परिसमाप्ता विद्या ?

*ब्रह्मचारी*—न खलु तावत् ।

*यौगन्धरायणः*—यद्यनवसिता विद्या, किमागमनप्रयोजनम् ?

*ब्रह्मचारी*—तत्र खल्वतिदारुणं व्यसनं संवृत्तम् ।

---

नामेति तत्रत्यानुभूतवृत्तान्तस्मृतेर्नाटनम् । **लावाणअसङ्कित्तणेणेति** । अनवोऽपि नव इव कृतः नवीकृतः, अभूततद्भावे च्विः । प्राचीनः कथञ्चित्प्रशमितोऽपि प्रियविरहजन्मा मदीयः परितापो लावाणकनामधेयग्रहणेन मन्येऽधुना भूयो नूतनोऽयं कृतः । लावाणके प्रियविश्लेषस्योपलब्धेस्तन्नामोच्चारणेन पूर्वावस्थासंस्मरणान्नवीकृतत्वं स्थाने सन्तापस्य ।

**अथेति** । अथशब्दः प्रश्ने । विद्ययाऽत्र विद्याध्ययनमुपलक्षितम् । विद्याध्ययनं परिपूर्णतां गतं किमु ? लावाणके विद्याध्ययनार्थं पुरा गतवन्तं साम्प्रतं तत आगतवन्तं ब्रह्मचारिणं प्रति प्रश्नोऽयं युज्यते यौगन्धरायणस्य ।

उत्तरयति ब्रह्मचारी—**न खल्विति** । तावदिति वाक्यालङ्कारे । अद्यापि विद्याध्ययनं पूर्णतां न प्राप्तमित्यर्थः ।

**यदीत्यादि** । पुनः प्रश्नोऽयं यौगन्धरायणस्य । अवसिता समाप्ता ततो नञ्समासे अनवसिता असमाप्तेत्यर्थः । 'षोऽन्तकर्मणि' इत्येतस्मादवपूर्वात् कर्तरि क्तः । विद्याध्ययनं चेन्न समाप्तं, तर्हीदानीं ततः प्रत्यागमने किं कारणम् ?

**तत्रेति** । तत्रेत्यादि ब्रह्मचारिण उत्तरम् । तत्र खलु लावाणकग्रामे किल, अतिदारुणमत्यन्तभीषणं, व्यसनं विपत्तिः, 'दारुणं भीषणं भीष्मं', 'व्यसनं विपदि भ्रंशे' इत्यमरौ । संवृत्तं सञ्जातम् । लावाणकग्रामेऽधुनाऽतिभीषणा विपत्तिः समुपस्थिता, अत एवाऽसमाप्तविद्याध्ययनोऽपि ततः प्रदेशादत्रागतोऽस्मीति भावः ।

---

नया सा हुआ ।

**यौग०**—क्या पढ़ना समाप्त हुआ ?

**ब्रह्म०**—अभी तक नहीं ।

**यौग०**—यदि पढ़ना समाप्त नहीं हुआ, तो फिर क्यों चले आये ?

**ब्रह्म०**—वहाँ तो भयानक आपत्ति आ पड़ी ।

*यौगन्धरायणः*—कथमिव ?

*ब्रह्मचारी*—तत्रोदयनो नाम राजा प्रतिवसति ।

*यौगन्धरायणः*—श्रूयते तत्रभवानुदयनः । किं सः ?

*ब्रह्मचारी*—तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता किल ।

*यौगन्धरायणः*—भवितव्यम् । ततस्ततः ?

*ब्रह्मचारी*—ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा ।

---

**कथमिवेति** । किंप्रकारकं तद्व्यसनमिति प्रश्नो यौगन्धरायणस्य ।

**तत्रेति** । तत्र लावाणकग्रामे । प्रतिवसतीति भूतार्थे वर्तमानता । उदयनाख्यो नरपतिर्मृगयानिर्गतः कदाचिल्लावाणके वसतिमकरोत् ।

**श्रूयते इति** । तत्रभवान् मान्यः श्रीमानिति यावत्, श्रूयते आकर्ण्यते । अस्माभिरपीति कर्ताऽऽक्षिप्यते । वयमप्याकर्णयामः श्रीमतस्तस्योदयनस्य नामधेयमित्यर्थः । स किम् ? तद्विषये किं वृत्तम् ? उदयनसम्बद्धः क्रियाविषयकोऽयं प्रश्नः । उदयनस्य लावाणकवासानन्तरकालिकी क्रिया कथनीयाऽधुनेत्यर्थः ।

तदग्रिमवृत्तान्तं सूचयति ब्रह्मचारी-**तस्येति** । दृढमभिप्रेता अत्यन्तं प्रिया । किलेति लोकप्रसिद्धौ । तस्योदयनस्य वासवदत्तानाम्नी काचित् प्रद्योतनाम्नोऽवन्तीश्वरस्य कुमारी प्रियतमा भार्याऽस्तीति लोकप्रसिद्धिर्वर्तते ।

**भवितव्यमिति** । पूर्ववाक्यार्थः कर्ता । भवदुक्तेन भवितव्यम् । सम्भवत्येतत्, युज्यते किल तदीयं प्रेम वासवदत्तायामित्यर्थः । ततस्ततः अनन्तरमनन्तरमिति प्रश्नः । अग्रिमवृत्तान्तश्रवणत्वरया द्विरुक्तिरियम् । तदनन्तरं किं जातमिति तदग्रिमं वृत्तं सत्वरं कथयन्तु भवन्त इति ।

**तत इति** । तदनन्तरं तस्मिन्नृपतौ कदाचन मृगयार्थं निर्गते सति प्रवृत्तेन

---

**यौग०**—कैसा ?

**ब्रह्म०**—वहाँ उदयन नाम राजा रहते थे ।

**यौग०**—उदयन का नाम सुना है । उनकी क्या खबर है ?

**ब्रह्म०**—अवन्तिराजपुत्री वासवदत्ता नाम की पत्नी उनकी अत्यन्त प्रिया थी ।

**यौग०**—होगी, फिर क्या ?

**ब्रह्म०**—तब शिकार के लिये उन राजा के जाने पर गाँव में आग लगने से वह जल गई ।

वासवदत्ता—[ आत्मगतम् ] (क) अलिअं अलिअं खु एदं । जीवामि मन्दभाआ ।

*यौगन्धरायणः*—ततस्ततः ?

*ब्रह्मचारी*—ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिवस्तस्मिन्नेवाग्नौ पतितः ।

---

( क ) अलीकमलीकं खल्वेतत् । जीवामि मन्दभागा ।

---

लावणकग्रामस्य दाहेन दग्धाऽभवत्सा वासवदत्ता । अत्र च–ग्रामदाहानन्तरं 'वासवदत्तायौगन्धरायणौ दग्धा'विति तत्र कारणविशेषेण प्रवृत्तं मिथ्याप्रवादनुसृत्यैव कथितो वासवदत्ताया वक्ष्यमाणश्चाग्रे यौगन्धरायणस्य दाहोऽवगन्तव्यः ।

आत्मनो दाहवृत्तान्तं श्रुत्वा रहस्यस्फोटभित्यात्मगतमाह वासवदत्ता—**अलिअमित्यादि** । एतदिदं मदीयदाहवृत्तम् , अलीकमलीकम् असत्यमसत्यम् , 'अलीकं त्वप्रियेऽनृते' इत्यमरः, भृशार्थे द्विरुक्तिः, सर्वथा मिथ्येत्यर्थः । **जीवामीति** । प्रियवियोगेऽप्यनपगतप्राणा हतभाग्याऽहमद्य यावत् प्राणान् बिभर्मि, न खलु दग्धाऽभूवमित्यर्थः ।

**ततस्तत इति** । वासवदत्तादाहानन्तरं संवृत्तं वृत्तं श्रोतुं त्वराभावगर्भः प्रश्नोऽयं पुनर्यौगन्धरायणस्य ।

**तत इति** । तत इत्यादि पुनरग्निमवृत्तान्तप्रकाशनं ब्रह्मचारिणः । अभ्यवपत्तुकामः, अभ्यवपत्तुं व्यसने साहाय्यं दातुं कामोऽभिलाषो यस्य स तादृशः, 'तुं काममनसोरपी'ति मकारलोपः । विपत्तौ साहाय्यं दित्सुरित्यर्थः । अभ्यवपत्तिश्च व्यसने साहाय्यदानम् । तथा च कौटिलीयमर्थशास्त्रम्—'व्यसनसाहाय्यमभ्यवपत्ति'रिति । तदनन्तरमग्निदाहव्यसनाद्वासवदत्तामुद्धर्तुं यौगन्धरायणनामधेयो राजमन्त्री तत्रैव वह्नावात्मानमपातयत् ।

---

वासव०—( आप ही आप ) यह सरासर झूठ है । अभागिनी मैं जीती हूँ ।

यौग०—फिर क्या हुआ ?

ब्रह्म०—तब वासवदत्ता को उस आपत्ति से बचाने के वास्ते मन्त्री यौगन्धरायण उसी आग में कूद पड़ा ।

*यौगन्धरायणः*—सत्यं पतित इति। ततस्ततः ?

*ब्रह्मचारी*—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसन्तापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः।

---

**सत्यमिति।** वासवदत्तामुद्धर्तुमिच्छोर्यौगन्धरायणस्य वह्नौ पतनमिदं सत्यं किंनु ? सत्यं चेत्। स्वामिभक्तिं दर्शयतस्तस्येदं साहसं प्रशंसनीयमस्तीत्यर्थः। रहस्योद्भेदभियाऽज्ञानमभिनयतः स्वात्मानमपह्नुवानस्य यौगन्धरायणस्यैषाऽर्थान्तरगर्भा प्रश्नकाकुः। अर्थान्तरं च-प्रियवियुक्तां वासवदत्तां स्वामिना योजयितुं कूटघटनोचितं महान्तमायासमनुभवन् दुःसहं क्लेशभारमावहन्नहं सत्यमग्नावेव पतित इति। पद्मावतीपरिणयौपयिकदुःसाधाऽनेकविधकार्यसाधनव्यग्रतेयं मे सत्यमग्निप्रवेशतुल्यैवेति भावः। अग्निप्रवेशसदृशीं व्याकुलतामनुभवाम्यहमनुध्भिन्दुष्करे कर्मणीति स्वात्मानमुद्दिश्योक्तिरियम्। अत्र केचिद्व्याख्याकृतः—पतितशब्दं नीचार्थकं मत्वा 'वासवदत्तोदयनयोर्वियोगे कारणीभूतोऽहं नीचोऽस्मी'ति सनिर्वेदं यौगन्धरायणस्योक्तिमिमामात्मगतत्वेन योजयन्ति। 'यौगन्धरायणस्तत्रैवाग्नौ पतित' इति ब्रह्मचारिणो वचनानन्तरं प्रयुक्ते 'सत्यं पतित' इति यौगन्धरायणस्य वचने पतिशब्दस्य नीचार्थकत्वं कथं नाम सङ्गतमिति सहृदयैरेवाकलनीयम्। ततस्तत इति पुनः शेषवृत्तान्तश्रवणत्वराभिनयनम्।

**तत इति।** अत्र किल 'तद्वृत्तान्त'मिति पदे 'तयोर्वृत्तान्तस्त'मिति 'स चासौ वृत्तान्तस्त'मिति वा समासः कल्पनीयः। पृथक्पदत्वे तदिति क्लीबताया दूषणास्पदत्वात्। तयोः वासवदत्तायौगन्धरायणयोः, अमात्यैः रुमण्वत्प्रभृतिभिर्मन्त्रिभिः। परित्यक्तुकाम इत्यत्र परित्यक्तुं कामो यस्येति विग्रहः। तदनन्तरं मृगयातः प्रत्यागतं, तत्तादृशं वासवदत्तायौगन्धरायणयोर्दाहविषयकं वृत्तमुपलभ्य तदुभयोर्विरहेण सन्तप्यमानं, दुःसहत्वेन शोकावेगस्य तत्रैव दहने निपत्य प्राणपरित्यागे कृतमतिं नरपतिं दहनप्रवेशतो न्यवारयन् कथमप्यतिप्रयासेन रुमण्वत्प्रभृतयो मन्त्रिणः।

---

यौग०—सचमुच में वह गिरा। बाद क्या हुआ ?

ब्रह्म०—फिर लौट कर राजा ने जब यह खबर सुनी तब उन दोनों के विरह से उत्पन्न दुःख के कारण उसी आग में कूद कर प्राण देने की इच्छा करनेवाले राजा को अन्य मन्त्रियों ने बहुत परिश्रम से निवृत्त किया।

वासवदत्ता—[ आत्मगतम् ] (क) जाणामि जाणामि अय्यउत्तस्स मइ साणुक्कोसत्तणं।

यौगन्धरायणः—ततस्ततः ?

ब्रह्मचारी—ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य राजा मोहमुपगतः।

---

( क ) जानामि जानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम्।

---

प्रियपते राज्ञः प्रियावियोगादग्निप्रवेशोद्यमं निशम्य हृदये तं प्रशंसति वासवदत्ता—**जाणामीति**। आर्यपुत्रस्य, आर्यस्य श्वशुरस्य पुत्र आर्यपुत्रस्तस्य पत्युरित्यर्थः। साक्षात् पत्युर्नामधेयं पतिशब्दं च विहाय आर्यपुत्रशब्देन तदर्थसूचनं चात्र वासवदत्तायाः कुलीनतोचितं लज्जामर्यादाऽनतिक्रमणं दर्शयति। इत्थमेव च नाटकेषु सर्वत्र पत्यावार्यपुत्रशब्दप्रयोगो दृश्यते। सानुक्रोशत्वम्, अनुक्रोशो दया, 'कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः, तेन सहितः सानुक्रोशः तस्य भावस्तत्त्वं दयालुत्वमिति यावत्। जानामि जानामीत्यनया द्विरुक्त्या परिपूर्णं ज्ञानं लक्ष्यते। तत्रभवान् प्रियतमो मद्विषये दयालुरस्तीत्यहं पूर्णतयाऽवगच्छामि। प्राणाधिकप्रियायाश्च वियोगं मे सोढुमशक्नुवतस्तस्य तादृशी चेष्टा सम्भवतीति भावः।

**ततस्तत इति**। अग्निप्रवेशान्निवारितस्य राज्ञः कीदृशी वर्तते वार्तेति जिज्ञासात्वराभिप्रायेण प्रश्नो यौगन्धरायणस्यैषः।

**तत** इति। शरीरोपभुक्तानि शरीरोपभोगसाधनीभूतानि शरीरशोभार्थमुपयुक्तानीति यावत्, दग्धशेषाणि दग्धेभ्यः शेषाणि दग्धावशिष्टानीति यावत्। मोहो-वैचित्त्यं मूर्च्छेति यावत्, तम्। तदनु वह्निप्रवेशरूपान्मरणोद्योगान्निवृत्य तत्रभवान् भूपतिः शरीरशोभार्थं धृतानि दग्धावशिष्टानि वासवदत्ताया भूषणान्यालिङ्ग्य तत्स्मरणवशात्तदानीं मूर्च्छितोऽभूत्। एतेन राज्ञो गाढतमः प्रियानुरागः सूच्यते।

---

वासव०—( स्वगत ) आर्यपुत्र की मुझ पर रहनेवाली दया को खूब अच्छी तरह मैं जानती हूँ।

यौग०—फिर क्या हुआ ?

ब्रह्म०—तब वासवदत्ता के पहने हुए और जलकर बचे-खुचे आभरणों को छाती से लगाकर राजा मूर्च्छित हो गये।

सर्वे—हा ?

वासवदत्ता—[ स्वगतम् ] (क) सकामो दाणिं अय्यजोअन्धराअणो होदु ।

चेटी—(ख) भट्टिदारिए ! रोदिदि खु इअं अय्या ।

पद्मावती—(ग) साणुक्कोसाए होदव्वं ।

(क) सकाम इदानीमार्ययौगन्धरायणो भवतु ।
(ख) भर्तृदारिके ! रोदिति खल्वियमार्या ।
(ग) सानुक्रोशया भवितव्यम् ।

राजमूर्च्छाकर्णनेन सर्वेषां विषादोदयमाह—हेति ।

स्वगतमित्यादि । यौगन्धरायणोपालम्भगर्भो वासवदत्ताया हृद्गत उद्गारोऽयम् । सकाम इति । कामेनाभिलाषेण सह समृद्ध इति सकामः । सहशब्दः समृद्ध्यर्थकः, 'कामोऽभिलापस्तर्षश्च' इत्यमरः । समृद्धाभिलाषः परिपूर्णकाम इत्यर्थः । 'तेन सहेति तुल्ययोगे' इत्यनेन तुल्ययोगस्य प्रायिकत्वात् समासः, 'वोपसर्जनस्य' इत्यनेन सहशब्दस्य स इत्यादेशः । अमुष्मिन्समये हि भवतु तावत्तत्रभवतो यौगन्धरायणस्येच्छापूर्तिः । एतदर्थमेव तु कूटकपटौपयिकं प्रियेण सह मद्वियोजनमिदं यौगन्धरायणस्यास्य पूर्वं मनसोद्दिष्टमासीत् । अथ किल तादृशेच्छानुकूलैवार्यपुत्रस्य मूर्च्छेयमुपगतेत्युपालभतेऽत्र मनसा यौगन्धरायणं वासवदत्ता । यौगन्धरायणोपालम्भानन्तरं च शोकावेशेन प्रवृत्तं वासवदत्ताया रोदनानुभावं शब्दानुपात्तमप्यर्थानुगतं प्रकल्प्य पद्मावतीमुद्दिश्य चेटीवचनं प्रयुङ्क्ते कविः—भट्टिदारिए इति । भर्तृदारिके राजकुमारीत्यर्थः । खल्विति वाक्यशोभायाम्, आर्या मान्या । आवन्तिका तावदश्रूणि मुञ्चत्यसौ । ज्ञायतामवधार्यतां च राजोदयनमूर्च्छाश्रवणोपनतेऽस्मिन् रोदने कारणमस्या इत्यर्थः ।

वासवदत्तारोदने पद्मावत्या वितर्कमाह—साणुक्कोसाए इति । अत्र च भवितव्यमिति कर्मवाच्यप्रयोगानुसारात् पूर्ववाक्यगतम् 'आर्या' इति कर्तृपदं

सभी—हाय !
वासव०—( आप ही आप ) आर्य यौगन्धरायण का मनोरथ पूर्ण हो !
दासी—राजकुमारी ! ये आवन्तिका तो रो रही हैं ।
पद्मा०—ये दयालु होंगी ।

*यौगन्धरायणः*—अथ किमथ किम् ? प्रकृत्या सानुक्रोशा मे भगिनी । ततस्ततः ?

*ब्रह्मचारी*—ततः शनैः शनैः प्रतिलब्धसंज्ञः संवृत्तः ।

*पद्मावती*—(क) दिट्ठिआ धरइ । मोहं गदो त्ति सुणिअ सुण्णं विअ मे हिअअं ।

---

( क ) दिष्ट्या ध्रियते । मोहं गत इति श्रुत्वा शून्यमिव मे हृदयम् ।

---

तृतीयायां विपरिणम्य योजनीयम् । रुदती चेयं दयावती सञ्जाता भवेदित्यर्थः । उदाराशया विशेषतः स्त्रियो हि परदुःखप्रसङ्गे दुःखयुक्ता भवन्तीत्युदारचित्तया साम्प्रतं तया रुदितं स्यादिति भावः ।

**अथ किमिति** । अन्यत् किम् अन्यत् किम्, रोदनेऽत्र कारणमेतदेव सम्भाव्यत इत्यर्थः । पद्मावत्या वितर्कितं द्रढयितुं द्विप्रयोग एषः । **प्रकृत्येत्यादि** । प्रकृत्येति तृतीया च 'प्रकृत्यादिभ्य उपसंख्यान'मित्यनेन । मदीया भगिनीयं स्वभावतो दयावती वर्तते । स्वाभाविकं दयाभावमावहन्त्या राजमूर्च्छाश्रवणादेतस्या रोदनं युज्यत इत्यर्थः । अत्रत्यः कोऽपि कीदृशीमपि शङ्कां मा कार्षीदेतद्विषयकं रहस्यं च मा ज्ञासीदित्यभिप्रायेण यौगन्धरायणस्येदं दैवोपनतं पद्मावत्युक्तमेवार्थं पोषयतो वचनं किल प्रकृतकार्ये दत्तावधानतां सूचयत् सन्मन्त्रितामाविष्करोति । पुनरग्रिमवृत्तान्तकथने त्वरयति यौगन्धरायणो ब्रह्मचारिणम्-**ततस्तत** इति ।

**तत** इत्यादि । शनैः शनैः कालक्रमेणेति यावत् ? प्रतिलब्धा प्राप्ता संज्ञा सम्यग् ज्ञानं चेतना येनेति प्रतिलब्धसंज्ञः, संवृत्तः सञ्जातः, अर्थाद्राजा । मूर्च्छां गतेन च राज्ञा कियतः कालादनन्तरं चेतना लब्धेत्यर्थः ।

**दिट्ठिआ** इति । दिष्ट्येत्यव्ययम् । ध्रियते अवतिष्ठते, दैवेन जीवतीत्यर्थः । **मोहं गत** इति । शून्यमिव, असदिव चेतनारहितमिवेति वार्थः । इवशब्दोऽयं 'देवदत्त इवाभाती'तिवत् उत्प्रेक्षायां सादृश्ये वा । राजा मूर्च्छितोऽभूदिति वाक्य-

---

यौग०—और क्या, और क्या । मेरी वहिन स्वभाव से वड़ी दयालु है । फिर क्या ?

ब्रह्म०—बाद धीरे धीरे राजा को होश आया ।

पद्मा०—सुदैव है कि वे जीते जागते हैं । 'मूर्च्छित हुए'-यह सुन मेरा हृदय तो सूना सा हो गया ।

*यौगन्धरायणः*—ततस्ततः ?

*ब्रह्मचारी*—ततः स राजा महीतलपरिसर्पणपांसुपाटलशरीरः सह-सोत्थाय हा वासवदत्ते ! हा अवन्तिराजपुत्रि ! हा प्रिये ! हा प्रियशिष्ये !

---

श्रवणानन्तरमचेतनया मया हृदयशून्ययेव सञ्जातमित्यर्थः । अवस्था चेयं पद्मावत्या मनस्युदयनविषयकप्रेमाङ्कुरोत्पत्तिं व्यनक्ति । भाविघटनानुसारं पद्मावत्या हृदये दैवादुत्पन्नोऽयमुदयनगतप्रेमाङ्कुरो भाविनो राजसम्बन्धरूपस्य कार्यस्य साधको भविष्यतीत्यनेन तादृशकार्यसिद्धेः सौकर्यं सूच्यते ।

**ततस्तत** इति । एषा च द्विरुक्तिर्यौगन्धरायणस्योत्कण्ठातिशयमाविष्करोति मूर्च्छापगमादनन्तरं राज्ञोऽवस्थाविशेषं श्रोतुम् ।

तमेव राज्ञोऽवस्थाविशेषमाह—**तत** इति । महीतलपरिसर्पणपांसुपाटलशरीरः, महीतले भूतलप्रदेशे यत्परिसर्पणं परिवर्तनं तेन ये पांसवो लग्ना धूलयस्तैः पाटलं श्वेतरक्तं धूसरमिति यावत् शरीरं वपुर्यस्य तादृशः । 'स्त्रियां धूलिः पांसुर्ना' 'श्वेतरक्तस्तु पाटलः' इत्यमरौ । 'हा वासवदत्ते' इत्यादि प्रतिसम्बोधनं 'हा' पद-प्रयोगः शोकावेगस्य भूयस्त्वं प्रतिपादयितुम् । *प्रियशिष्ये ! प्रिया चासौ शिष्येति । तत्सम्बुद्धौ । किमपि बहु इति क्रियाविशेषणे । प्रलपितवान् विलापं कृतवानिति यावत् । चेतनाप्राप्त्यनन्तरं स किल भूपतिर्भूतले परितः सर्पणेन धूलिधूसरकलेवरोऽकस्मादुत्थाय कथमप्यलब्धनिर्वृतिरन्तःशोकावेगं दुःसहमपारं रोद्धुमपारयन् 'हा अवन्तीश्वरकुमारि ! मदीयप्रीतिपात्रच्छात्रे ! वल्लभे ! वासव-दत्ते !' इत्येवं तत्तन्नामधेयग्रहणपुरःसरं कमप्यनल्पं विलापमकरोदित्यर्थः ।

---

यौग०—उसके बाद ?

ब्रह्म०—बाद वे राजा पृथ्वी पर लोटने लगे और जब उनका शरीर धूलि से भर गया तब एकाएक उठ कर 'हा ! प्यारी ! हा वासवदत्ते ! हा अवन्तिराजकुमारी ! हा प्रियशिष्ये ।

---

*कदाचिदवन्तिदेशोपकण्ठप्रदेशं मृगयावशादभ्यागतो वत्सराज उदयनः प्रद्योतनाम्नाऽवन्तिदेशाधीश्वरेणात्मनः कुमारीं वासवदत्तां तेन गुणिना सह संयोजयितुमिच्छुना तदर्थं पूर्वं बहु यतित्वाऽप्यन्ते निरर्थप्रयत्नेन सकपटं स्वभवनमानीतः । तत्र च राजानुरोधाद्वीणाशास्त्रमर्मज्ञोऽयं वीणावादनमशिक्षयद्वासवदत्ताम् । क्रमेण परिचयोपचयात्परस्परं गाढानुरागे समुत्पन्ने मन्त्रिणो यौगन्धरायणस्य नीत्या बलेन ततः प्रत्यागच्छत् प्रियया वासवदत्तया सह निजां वत्सराजधानीम् । इति कथात्राऽनुसन्धेया ।

इति किमपि बहु प्रलपितवान् । किं बहुना—

नैवेदानीं तादृशाश्चक्रवाका नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः ।
धन्या सा स्त्री यां तथा वेत्ति भर्ता भर्तृस्नेहात् सा हि दग्धाऽप्यदग्धा ॥

---

किं बहुनेति । भूयसा जल्पितेन किं तावत्फलं स्यात् ? वर्णनीयमपि कियत् ? उदयनस्य वासवदत्तावियोगजन्मदुरवस्थाविशेषविषये निवेदितमेतावदेव पर्याप्तमिदानीमित्यर्थः ।



पूर्वोक्तं राज्ञः शोकावेगमुपसंहरति—नैवेति । तादृशाः, तत्पदेन प्रक्रान्तस्योदयनस्य परामर्शः, उदयनसदृशा इति यावत्, चक्रवाकास्तदाख्याः पक्षिविशेषाः, नैव न नूनं सन्ति । प्रतिदिनं वियुज्यमाना विरहं सोढुं दृढतमा अपि चक्रवाका उदयनविरहावस्थासमानकोटितां न गच्छन्तीत्यर्थः । चक्रवाकाणां विरहावस्थातोऽभ्यधिकैवास्ति वियोगदुरवस्थोदयनस्येति भावः । तादृशा इत्यत्र तदुपपदादज्ञानार्थाद् दृशधातोः कन् प्रत्ययः । अचेतनानां सुलभमोहानां का नाम तिरश्चां वार्ता ? चेतनेष्वपि तत्साम्यं नास्तीत्याह—नैवाप्यन्ये इति । स्त्रीविशेषैः सीताशकुन्तलादमयन्तीप्रभृतिभिः प्रसिद्धाभिर्योषिद्भिः, वियुक्ता विरहिताः, अन्येऽपि इतरे रामदुष्यन्तनैषधप्रभृतयोऽपि, तादृशा नैव वासवदत्तावियुक्तोदयनेन सदृशा न सन्तीति निश्चयः । सीतादिवियुक्तरामादीनामपि प्रियावियोगजन्मा दुरवस्था तदीयविरहावस्थातो न्यूनैवेति तैरपि साम्यं नात्र सम्भवतीत्यर्थः । सकलविलक्षणैवास्य विरहवेदनाऽस्तीति भावः । प्रियप्रेम्णां पात्रं स्त्रियं प्रशंसन्नाह—धन्येति । भर्ता पतिः, यां स्त्रियं, तथा वेत्ति जानाति तादृशस्नेहदृशा पश्यतीति यावत्, सा स्त्री योषित्, धन्या धनं लब्धा, 'धनगणं लब्धे'ति यत्प्रत्ययः । स्त्रीषु विशिष्टा अभिनन्दनीयेत्यर्थः, अस्तीति शेषः । अतः, हि निश्चयेन दग्धा भस्मीकृतापि, सा वासवदत्ता, भर्तृस्नेहात् प्रियस्य प्रणयात्, अदग्धा सुरक्षिता जीवन्ती वर्तत इत्यर्थः । पत्युर्निरतिशयप्रीतिपात्रं स्त्री नूनं कृतकृत्येति प्रियप्रेमसर्वस्वभूता विशिष्टस्त्रीषु गणनीया सेयं वासवदत्ता वह्नौ पाञ्चभौतिकं शरीरं त्यक्त्वापि प्रियेण प्रदत्तं प्रेमरूपं शरीरा-

---

इत्यादि बहुत विलाप करने लगे । अधिक क्या कहा जाय ?

इस समय उन राजा के समान न कोई वैसे चकवे हैं और न कोई वैसे स्त्री के वियोगी ही हैं । वह स्त्री धन्य है, जिसे पति वैसा मानता है । पति-प्रेम के कारण जल जाने पर भी वह जली नहीं अर्थात् जीती जागती है ॥ १३ ॥

*यौगन्धरायणः*—अथ भोः ! तं तु पर्यवस्थापयितुं न कश्चिद् यत्नवानमात्यः ?

*ब्रह्मचारी*—अस्ति रुमण्वान्नामामात्यो दृढं प्रयत्नवांस्तत्रभवन्तं पर्यवस्थापयितुम् । स हि—

अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन् ।

---

न्तरं गृह्णती साम्प्रतं जीवत्येवेति भावः । अत्र पूर्वार्धे प्रसिद्धानां चक्रवाकादीनामुपमानानामुपमेयत्वप्रतिपादनात् प्रतीपं नामालङ्कारः । वृत्तं चेदं शालिनीनामधेयम् । तल्लक्षणं यथा—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति ॥ १२ ॥

विषण्णं राजानं शोचनीयावस्थं विदित्वा ब्रह्मचारिणं पृच्छति यौगन्धरायणः—**अथेति** । अथेत्यव्ययं प्रश्ने । तु इति वाक्यालङ्कारे । पर्यवस्थापयितुं परितोऽवस्थापयितुम् अर्थात् प्रकृतौ, विकृतावस्थातः प्रकृतावस्थां प्रापयितुमित्यर्थः । यत्नवान्, यत्नो विद्यतेऽस्येति मतुप् । किमहो ब्रह्मचारिन् ! राजानं प्रकृतिस्थं विधातुं केनचिन्मन्त्रिणा प्रयत्नो न कृतः ?

उत्तरं दत्ते ब्रह्मचारी—**अस्तीति** । दृढं गाढं भूयिष्ठमिति यावत्, 'गाढबाढदृढानि च' इत्यमरः । श्रीमन्तं महाराजं प्रकृतौ कर्तुं सचिवः कोऽपि नाम्ना रुमण्वान् गाढं प्रयत्नमातनुते । अस्तीति वर्तमानक्रिययाऽद्यापि तत्प्रयत्नस्यानुवृत्तिर्भूपतेः शोकावेगस्य गरीयस्त्वं च सूच्येते । 'स हि' इति तु श्लोके योजनीयम् ।

रुमण्वतः प्रयत्नमाह—**अनाहारे** इति । स हि, हिशब्दस्त्वर्थे हेत्वर्थे वा । तच्छब्देन प्रक्रान्तो रुमण्वान् गृह्यते । सः रुमण्वान्, अनाहारे आहारो भोजनं तदभावे, तुल्यः सदृशः अर्थान्नृपेण । वासवदत्ताशोकविकलेन राज्ञेव भोजनं परित्यक्तं रुमण्वतापि राजचिन्तयेत्यर्थः । प्रततरुदितक्षामवदनः, प्रततेन सन्ततेन अविच्छिन्नेनेति यावत् रुदितेन रोदनेन क्षामं क्षीणं निष्प्रभतां गतं वदनं मुखं

---

यौग०—क्या कोई मंत्री उनको प्रकृति में लाने का प्रयत्न नहीं करता है ?

ब्रह्म०—हाँ, रुमण्वान् नामक मंत्री उनको होश में लाने के लिये खूब उद्योग कर रहा है । वह तो—

राजा के न खाने से नहीं खाता, सर्वदा रोने से राजा के सदृश ही उसका मुख भी मलिन हुआ है और राजा के समान दुःख का अनुभव करता हुआ स्नान आदि भी कष्ट से

दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपः प्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः ॥ १४ ॥

*वासवदत्ता*—[ स्वगतम् ] (क) दिट्ठिआ सुणिक्खित्तो दाणीं

---

( क ) दिष्ट्या सुनिक्षिप्त इदानीमार्यपुत्रः ।

---

यस्य सः । राज्ञ इव रुमण्वतोऽपि मुखमविच्छिन्नाश्रुपातेन विच्छायतां गतमित्यर्थः । रुदितमिति भावे क्तः, क्षाममिति क्षैधातोः क्ते तस्य 'क्षायो म' इति मत्वम् । नृपतिसमदुःखं, नृपतिना राज्ञा समं तुल्यं दुःखं कष्टं यस्मिन् कर्मणि तद्यथा भवति तथेति क्रियाविशेषणम् , शरीरे देहे, संस्कारं मार्जनं स्नानादिजनितां स्वच्छतामित्यर्थः, 'संस्कारो मार्जनं मृजा' इत्यमरः, परिवहन् दधानः सन् । राजा यथा कष्टाधिक्येन कथञ्चिदत्यावश्यकं स्नानादिसंस्कारमाचरति, तथा रुमण्वानप्यावश्यकतातिशयमवेत्य कथञ्चित्कष्टभूयिष्ठं शरीरसंस्कारमङ्गीकरोतीति भावः । दिवा वा रात्रौ वा, दिवेत्यव्ययं दिनवाचि, 'दिवाऽह्नीति' इत्यमरः, वाशब्दश्चार्थे चकारार्थस्तु समुच्चयः, स च परस्परनिरपेक्षयोर्दिनरात्र्योरधिकरणयोरेकत्र परिचरणक्रियायामन्वेति, अहर्निशमित्यर्थः । यत्नैः प्रयत्नैः, नरपतिं राजानम् , परिचरति सेवते । दिवानिशं प्रयत्नपूर्वं राज्ञः शुश्रूषणान्नैष दत्तावधानो विरमतीत्यर्थः । साम्प्रतं प्राणेभ्योऽपि प्रियं तस्य राजानुवर्तनं दर्शयति—**नृप** इति । नृपो राजा, दुःसहेन वासवदत्ताशोकेन सद्यस्तत्कालं प्राणान् त्यजति यदि असून् मुञ्चति चेत् म्रियते चेदिति यावत् , तर्हि तस्य रुमण्वतोऽपि, उपरमः मृत्युः, जात इति शेषः । शोकासहिष्णुतया राजनि गतप्राणे सति रुमण्वन्तमपि नूनं गतप्राणं जानीहीत्यर्थः । सर्वात्मनैष राजानमनुसरन् राजेव कष्टमयं जीवनं बिभर्तीति भावः । उदयनसमदुःखसुखावस्थो विद्यते साम्प्रतं रुमण्वानिति सारांशः । अत्र च 'सद्यस्त्यजती'त्यनेन सुदुःसहस्य राज्ञः शोकस्य परा काष्ठा सूचिता । शिखरिणीनामकं छन्दोऽत्र । 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति च तल्लक्षणम् ॥ १४ ॥

रुमण्वतो भृशं निःसीमया परिचर्यया तादृग्दुरवस्थस्य पत्युः समुचितं रक्षणं सम्भावयन्त्या हर्षोद्गारोऽयं मानसो वासवदत्तायाः—**दिट्ठिप्पति** । दिष्ट्या

---

करता है। दिन हो या रात्रि, वह राजा की सेवा परिश्रम से कर रहा है। यदि राजा शीघ्र ही प्राणों का त्याग करें तो उसका भी प्राण गया हुआ समझा जाय ॥ १४ ॥

**वासव०**—( आप ही आप ) सौभाग्य से इस समय स्वामी की देख-भाल अच्छे

अय्यउत्तो ।

यौगन्धरायणः—[ आत्मगतम् ] अहो ! महद्भारमुद्वहति रुमण्वान् । कुतः—

**सविश्रमो ह्ययं भारः प्रसक्तस्तस्य तु श्रमः ।**

---

दैवेन, सौभाग्येनेति यावत्। सुष्ठु सम्यक् निक्षिप्तः सुनिक्षिप्तः। तत्र भवतः प्रियतमस्य रक्षाभारोऽयं समयेऽस्मिन् समुचिते स्निग्धे रुमण्वत्यारोपितोऽस्तीति सौभाग्यमस्माकम् ।

महतीं राजरक्षाधुरां दधतो रुमण्वतः प्रशंसामुखेन सविस्मयं मानसं ब्रूते यौगन्धरायणः—**अहो** इति । अहो आश्चर्यम्, महद्भारम्, महतो विशिष्टस्य कार्यस्य राजपरिपालनरूपस्येति ,यावत् भारो धूस्तमिति षष्ठीतत्पुरुषोऽत्र शरणीकरणीयः । महांश्चासौ भारश्चेति कर्मधारयस्तु न साधीयान्, तथा सति भारस्य समानाधिकरणत्वेन 'आन्महतः समानाधिकरणजातीययो'रित्यनेन आत्वप्रसङ्गान्महाभारमिति रूपापत्तेः। उद्वहति गृह्णाति उत्थापयतीत्यर्थः । राज्ञः संरक्षणं नाम गुरुतरं कार्यं सावधानमनुतिष्ठतो रुमण्वतो विस्मयकरः प्रयत्नोऽयं सर्वथा प्रशंसनीयोऽस्तीति भावः ।

कुत इति चेत् तदेवाह—**सविश्रम** इति । 'हि हेतावधारणे' इति कोपात् हिशब्दो निश्चये । अयं वासवदत्तारक्षणरूपो मदीय इति प्रत्यक्षनिर्देशः, भारः धूः, सविश्रमः, विश्रमेण विरामेण सहितो युक्तः विरतोऽभूदिति यावत् । पद्मावत्याः समीपे वासवदत्ताया निक्षेपादिदानीं भारस्यास्य मन्मूर्धानमधिरूढस्य वासवदत्तापरिपालनरूपस्य नूनं विश्रान्तिर्जातेति भारापगमान्निर्वृतोऽहमस्मीति भावः । 'विश्रम' इति विपूर्वात् श्राम्यतेर्घञ्, 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधः । 'विश्राम' इति त्वपाणिनीयं प्रकारान्तरेण यथाकथञ्चित्समर्थनीयम् । तस्य रुमण्वतस्तु, श्रमो नराधिपरक्षणलक्षणः परिश्रमः, प्रसक्तः प्रकर्षेण विशेषेण सक्तो लग्नः, विशेषरूपेण स्थितोऽस्तीति यावत् । राजसंरक्षणरूपस्य मदीयभारापेक्षया विशिष्टस्य तद्भारस्य तु सम्प्रत्यपि वर्तमानतया रुमण्वतो व्यग्रता तदवस्थैवेत्यर्थः । प्रसक्त इति अकर्मक-

---

आदमी के हाथों में है ।

यौग०—( स्वगत ) अहो ! रुमण्वान् ने बड़े का बोझा संभाला है । क्योंकि—

मेरा यह भार तो कुछ हलका हुआ है, परन्तु रुमण्वान् का और भी बढ़ गया है । क्योंकि,

**तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः ॥ १५ ॥**

[ प्रकाशम् ] अथ भोः ! पर्यवस्थापित इदानीं स राजा ?

*ब्रह्मचारी*—तदिदानीं न जाने । 'इह तया सह हसितम् , इह तया सह कथितम् , इह तया सह पर्युषितम् , इह तया सह कुपितम् , इह तया सह शयितम्' इत्येवं तं विलपन्तं राजानममात्यैर्महता यत्नेन

---

तया कर्त्र्यर्थे क्तः । तद्गुणस्य वैशिष्ट्यमेव प्रतिपादयति—**तस्मिन्निति** । हि हेतौ यस्मात्कारणादित्यर्थः, नराधिपो राजा, यत्राधीनः यस्मिन्नायत्तः, सर्वं राजसम्बन्धि समस्तं कार्यजातं, तस्मिन्नधीनं तत्रायत्तम् । 'अधीनो निघ्न आयत्त' इत्यमरः । भूपालपरिपालनाभिधाऽसाधारणकार्यकारिता यत्रावतिष्ठते, राजकीयसकलकार्यसम्बन्धिनी धूस्तस्यैव मन्त्रिणो मूर्धानमधिरोहतीति महतीं धुरं दधानो रुमण्वानभिनन्दनीय इति भावः । अत्र च उत्तरार्धप्रतिपाद्येन सामान्येन द्वितीयचरणप्रतिपाद्यो विशेषः समर्थित इति सामान्येन विशेषसमर्थनं नामाऽर्थान्तरन्यासालङ्करणम् । अनुष्टुब् वृत्तम् ॥ १५ ॥

**प्रकाशमिति** । सर्वजनं श्रावयन् ब्रूते इत्यर्थः । किं तदित्याह—**अथेति** । अथ किमित्यर्थः । भोः इति ब्रह्मचारिणं सम्बोधयति । पर्यवस्थापितः प्रकृतौ स्थापितः । समयेऽस्मिन् विकारपरिहारेण पूर्ववत् स्वस्थतां प्रापितो वा मन्त्रिभिर्भूपतिः ।

उत्तरमाह—**तदिदानीमिति** । राज्ञः स्वस्थताविषये किमपि साम्प्रतं निश्चितं नावगच्छामीत्यर्थः । जानातेः परस्मैपदिषु पाठादत्र 'जाने' इत्यात्मनेपदप्रयोगः पाणिनीयव्याकरणविरुद्ध एव । 'जाने, जानीमहे' इत्यादयः प्रयोगाः पुनर्बहुत्र बहुभिः कृता उपलभ्यन्ते । नात्र मूलं जानीमः । यथावत्प्रत्यक्षमनुभूतं तत्रस्थं वृत्तमुपसंहरति—**इहेति** । शयितमित्यन्तोऽयं राज्ञो विलापः । इहेति सर्वत्र हासाद्यधिकरणीभूतं तत्तत्स्थलं निर्दिश्यते । हसितमित्यादीनि भावे क्तान्तानि, तदनुसारं चैवात्र क्लीबत्वम् । पर्युषितं, स्थितमिति यावत् । राजानं महता यत्नेन गृहीत्वा तस्माद्

---

राजा जिसके अधीन होता है, सब उसीके अधीन रहता है ॥ १५ ॥

( प्रकाशरूप से ) क्यों जी ! राजा साहब अब प्रकृति में आये ?

ब्रह्म०—अब यह मैं नहीं जानता । 'यहाँ उसके साथ हँसा था, यहाँ उसके साथ बातचीत की थी, यहाँ उसके साथ बैठा था, यहाँ उसके साथ रूठा था, यहां उसके साथ सोया था'-इत्यादि विलपने वाले राजा को बड़े प्रयत्न से मन्त्री लोग लेकर उस गांव से बाहर

तस्माद् ग्रामाद् गृहीत्वापक्रान्तम्। ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः। ततोऽहमपि निर्गतोऽस्मि।

*तापसी*—(क) सो खु गुणवन्तो णाम राआ, जो आअन्तुएण

---

(क) स खलु गुणवान् नाम राजा, य आगन्तुकेनाप्यनेनैवं प्रशस्यते।

---

ग्रामादमात्यैरपक्रान्तमित्यन्वयः। अपक्रान्तमिति भावे क्तः, निर्गतमित्यर्थः। 'अत्रात्र प्रदेशे तया सह मया हासादिकमनुभूतम्' इत्यादिबहुप्रकाराणि परिदेविताक्षराण्युद्गिरता भूपतिना समं प्रयत्नविशेषेण मन्त्रिणोऽवसरचतुरास्ततो लावाणकग्रामान्निर्जग्मुरिति वाक्यार्थः। 'महता यत्नेन' इत्यनेन राज्ञो विलापस्यात्यधिकत्वमनिवार्यत्वं च सूचिते। तत्र तत्र प्रियया सह पूर्वानुभूतं स्मृत्वा राज्ञो विलपनं चात्रावस्थानेन तत्तत्प्रदेशवीक्षणतो वृद्धिमेवोपगच्छेत् प्रदेशान्तरप्राप्त्या च नूनं राजा विलापाद्विरमेदित्यवसरोचितं विचार्य तत्प्रदेशपरित्यागप्रयत्नोऽयं युज्यते मन्त्रिणाम्। **तत** इत्यादि। ततः तस्माद् ग्रामादिति यावत्। निष्क्रान्ते राजनि इति पूर्वक्रियानिर्देशः, लावाणकग्रामाद्राज्ञो निर्गमनानन्तरमित्यर्थः। प्रोषितनक्षत्रचन्द्रमिव, प्रोषितान्यस्तं गतानि नक्षत्राणि चन्द्रश्च यस्मात्तदिति नभसो विशेषणम्, इवेति नभसान्वेति, नभ आकाशम्, अरमणीयः सौन्दर्यशून्यः। चन्द्रमसा नक्षत्रैश्च विहीनमाकाशं यथा न शोभते तथा राज्ञा मन्त्रिभिश्च विरहितस्य लावाणकग्रामस्य शोभा तदानीं सर्वथा विनष्टाऽभूदिति भावः। ग्रामस्य राज्ञो मन्त्रिणां च यथाक्रमं नभश्चन्द्रो नक्षत्राणि चोपमानानि बोध्यानि। इत्येवं लावाणकव्यसनवृत्तान्तं सूचयित्वा, 'यद्यनवसिता विद्या, किमागमनप्रयोजनम्?' इति पूर्वं कृतस्य यौगन्धरायणप्रश्नस्योत्तरं दित्सुराह ब्रह्मचारी—**ततोऽहमिति**। राजादिनिर्गमनेन ग्रामस्य निःश्रीकतया तत्र वस्तुमनिच्छता मयापि तस्माद् ग्रामात् प्रस्थानं कृतम्। प्रस्थितश्चाहमध्वपरिश्रान्तो विश्रमाभिलाषादत्रोपस्थितोऽस्मि भवत्सन्निधिम्। नूनमिदमेव निमित्तं वर्तते विद्याध्ययनं पूर्णमकृत्वैव तत्प्रदेशपरित्यागे ममेति भावः।

**सो खु इति**। गुणवान् प्रशस्तगुणयुक्तः, प्रशंसायां मतुप्। नामेति वाक्यमलङ्करोति। आगन्तुकेन तटस्थेन पान्थेनापि, अनेन ब्रह्मचारिणा। स चायमुदयनो

---

चले गये। राजा के चले जाने पर चन्द्रमा-नक्षत्र-हीन आकाश की भाँति वह गाँव सुन्दरता से हीन हो गया। इस कारण मैं भी वहाँ से निकला हूँ।

तापसी—वे राजा बड़े ही गुणी मालूम होते हैं, जिनकी यह बटोही भी प्रशंसा करता है।

वि इमिणा एव्वं पसंसीअदि।

चेटी—(क) भट्टिदारिए ! किं णु अवरा इत्थिआ तस्स हत्थं गमिस्सदि।

*पद्मावती*—[आत्मगतम्] (ख) मम हिअएण एव्व सह मन्तिदम्।

---

(क) भर्तृदारिके ! किन्तु खल्वपरा स्त्री तस्य हस्तं गमिष्यति ?
(ख) मम हृदयेनैव सह मन्त्रितम्।

---

भूपतिर्निश्चयेन प्रशंसनीयदयादाक्षिण्याद्यनेकगुणसम्पन्नो वर्तते, यमिमं ब्रह्मचारी पथिकोऽयमपरिचितोऽपीत्थं प्रशंसतीति वाच्योऽर्थः। सर्वथाऽसौ दयार्द्रहृदयो वर. गुणसम्पन्नो राजा नूनं पद्मावतीसम्बन्धयोग्योऽस्तीति व्यङ्ग्योऽर्थः।

तापस्या अभिप्रायमवबुध्य वराभिलाषिणीं पद्मावतीं प्रति तदाशयजिज्ञासया चेट्या वचनमिदम्—**भट्टिदारिए** इति। तस्य तादृग्गुणविशिष्टस्य उदयनस्येति यावत्। राजकुमारि ! पद्मावति ! किं काचिदन्या योषित् भूपतेरुदयनस्य हस्तगता भविष्यतीति शब्दार्थः। यः किल प्राणेभ्योऽप्यधिकं प्रियां सम्भावयति, तस्य लोकोत्तरं निरतिशयं योषिति प्रेमभावं बिभ्रतो महीपतेरुदयनस्य पाणिग्रहणसौभाग्यं लप्स्यते किं काचिदन्या योषित् ? यदि हि तेन गुणिनोदयनेन सह कस्याश्चिद-न्यस्या विवाहसम्बन्धः स्यात्तर्हि साऽनुरूपवरलाभेन धन्या भवेदित्याशयः। त्वया वरणीयोऽयं श्लाघ्यगुणो राजा कथमपीति व्यङ्ग्यार्थः।

गुणलुब्धा पद्मावती गुणिनं राजानमुदयनं पतिं प्राप्तुमिच्छन्ती चेटीवचसो लक्ष्यमाणमानं बुद्ध्वा हृदयाभिमतार्थप्रस्तावोपजातहर्षा सहजलज्जावशात् स्वकीयं भावमपह्नुवाना मनस्येव चेटीमभिनन्दति—**ममेति**। एवशब्दोऽत्र सहशब्देना-ऽन्वेति। मन्त्रितं विचारितम्, अर्थाच्चेट्या। मदीयेन हृदयेन सह विचारं कृत्वेव चेट्या वितर्कोऽयं कृत इत्यर्थः। मदीयहृदयसंमतमेवेदं विचारितं चेट्येति भावः। चेटीवचनानुसारमुदयनसम्बन्धसौभाग्यमिदं मनो मे लब्धुमिच्छतीत्याशयः। उदयनविषयकमुत्पन्नपूर्वं प्रेमाङ्कुरं पुष्णाति चायं हृद्गतोऽभिलाषः पद्मावत्याः।

पद्मावत्या उदयनेऽभिलाषमुत्पादयितुमुपस्थितो ब्रह्मचारी विचारपूर्वकं तदनु-रूपमुदयनावस्थाविशेषमुपस्थाप्य चेटीवचसा च तदर्थोपक्षेपणमभिलक्ष्य कृतकार्य-

---

दासी—राजकुमारी जी ! क्या भला दूसरी स्त्री उनके हाथ जायगी ?
पद्मा०—( मन ही मन ) मेरे मन के समान ही सोचा।

ब्रह्मचारी—आ पृच्छामि भवन्तौ। गच्छामस्तावत्।

उभौ—गम्यतामर्थसिद्धये।

ब्रह्मचारी—तथास्तु।

[ निष्क्रान्तः ]

यौगन्धरायणः—साधु, अहमपि तत्रभवत्याऽभ्यनुज्ञातो गन्तुमिच्छामि।

---

स्ततो गन्तुमिच्छन्नाह—आ पृच्छामीति। 'आ पृच्छामि' इति भिन्ने पदे। एकपदत्वे च आपृच्छामीति रूपासिद्धेः, 'आङि नुप्रच्छ्योरि'त्यनेनात्मनेपदत्वस्य दुर्वारतया 'आपृच्छे' इति रूपापत्तेः। आशब्दश्च 'वाक्यस्मरणयोरङित्' इति वचनेन स्मरणार्थकः। कार्यान्तरस्मरणं नाटयन् ब्रवीतीत्यर्थः। पृच्छामि, गन्तुमिति शेषः। परिव्राजकं काञ्चुकीयं चोद्दिश्य 'भवन्तौ'विति कर्मणि द्विवचनम्। गमने परिव्राजककाञ्चुकीययोर्भवतोरनुज्ञां लब्धुमिच्छामीत्यर्थः। गमनं मे भवन्तावनुमन्येता-मिति भावः। गच्छामस्तावत् साम्प्रतं गम्यतेऽस्माभिरित्यर्थः। बहुत्वं चेदमात्मनो गौरवार्थम्। तावदिति वाक्यालङ्कारे।

वृद्धयोः परिव्राजककाञ्चुकीययोराशीर्वादगर्भां गमनाज्ञां दर्शयति कविः—गम्यतामिति। प्रक्रान्तश्चात्र भवतेति तृतीयान्तः कर्ता। विद्याध्ययनपूर्णतारूप-स्यार्थस्य सिद्धयर्थं यथेच्छं गच्छतु भवानित्यर्थः।

तथास्त्विति। तेन प्रकारेण भवतु। श्रीमत्सूचितां गमनाज्ञां स्वीकृत्य गच्छाम्यहमित्यर्थः।

निष्क्रान्तः इत्यनेन ततः प्रस्थानं सूचितं ब्रह्मचारिणः।

सम्प्रति कृतकार्यो यौगन्धरायणोऽपि ततो गन्तुमुद्यतः श्रीमत्याः पद्मावत्या अनुज्ञां गमने लब्धुमिच्छन्नाह—साध्विति। साधु समीचीनम्। मद्भगिन्या रक्षणं तत्रभवत्या स्वीकृतमिति तदर्थं श्रीमत्यभिनन्द्यतेत्यर्थः। तत्रभवत्या

---

ब्रह्म०—आप दोनों की आज्ञा चाहता हूं। अब मैं जाता हूं।

दोनों—अपनी अभीष्ट-सिद्धि के लिये जाइये।

ब्रह्म०—तथास्तु।

( चला गया )

यौग०—अच्छा, मैं भी श्रीमतीजी की आज्ञा पाकर जाना चाहता हूं।

काञ्चुकीयः—तत्रभवत्याऽभ्यनुज्ञातो गन्तुमिच्छति किल ।

पद्मावती—(क) अय्यस्स भइणिआ अय्येण विना उक्कण्ठिस्सदि ।

यौगन्धरायणः—साधुजनहस्तगतैषा नोत्कण्ठिष्यति । [ काञ्चुकीयमवलोक्य ] गच्छामस्तावत् ।

---

( क ) आर्यस्य भगिनिकाऽऽर्येण विनोत्कण्ठिष्यते ।

---

पूज्यया पद्मावत्या । पूज्यायाः श्रीमत्या अनुज्ञां लब्ध्वा साम्प्रतं ममापीतः प्रस्यातुमिच्छा वर्तते । अतः श्रीमत्या मदीयं प्रस्थानमिदानीमनुज्ञायतामित्यर्थः ।

इत्थं गमनानुमतिं लब्धुमिच्छति यौगन्धरायणे, काञ्चुकीयोऽपि तमेवार्थं पद्मावतीं प्रार्थयते—**तत्रभवत्येति** । किलेति वाक्यशोभायाम् । आर्यया भवत्या अनुमत्या गन्तुमिच्छतेऽस्मै यौगन्धरायणाय गमनानुज्ञां भवती दातुमर्हतीत्यर्थः ।

आगन्तुकस्यास्य गमनेनैतद्भगिनीं विमनायमानां सम्भाव्य तस्मै यौगन्धरायणाय गमनानुज्ञां दातुमनिच्छन्ती पद्मावत्याह—**अय्यस्स** इति । भगिनिकेत्यनुकम्पायां कन् । उत्कण्ठिष्यते उन्मना भविष्यति, खेदं प्राप्स्यतीति यावत् । अनुकम्पनीया श्रीमद्भगिनीयं श्रीमती दर्शनेन विना खिन्ना भविष्यतीत्यर्थः । गन्तुमर्हति भवान्, परं भवतीतः प्रस्थिते कदाचिदेकाकिन्यै भवतो भगिन्यै नात्र वासो रोचिष्यत इत्येतदेव चिन्तयामीति भावः ।

**साधुजनेत्यादि** । साधुश्चासौ जनश्चेति कर्मधारयः तस्य, भवादृश इति यावत्, हस्तगता हस्तं गता आश्रये स्थितेत्यर्थः, द्वितीयातत्पुरुषोऽयम्, एषा मद्भगिनी । मन्ये, सौजन्यं वहन्त्याः स्वात्मजननिर्विशेषं पालयन्त्या भवत्या आश्रये स्थितेयं मे भगिनी न तावदुद्विग्ना भविष्यतीति भावः । अनुदात्तेत्त्वादेवात्मनेपदत्वे सिद्धे पुनश्चक्षिङो ङित्करणेन अनुदात्तेत्वलक्षणात्मनेपदस्यानित्यत्वज्ञापनादत्र 'उत्कण्ठिष्यती'ति परस्मैपदप्रयोगो यथाकथञ्चित्समर्थनीयः । 'उत्कण्ठिष्यते' इति तु साम्प्रतम् । **काञ्चुकीयमिति** । तं दृष्ट्वा वदतीत्यर्थः । गच्छामस्तावत्

---

कञ्चुकी—( पद्मावती से ) आपकी आज्ञा लेकर ये भी जाना चाहते हैं ।

पद्मा०—आपकी बहिन आपके विना उदास होगी ।

यौग०—अच्छे आदमी के आश्रय में रहने से उदास न होगी । (कंचुकी को देखकर) तो मैं जाता हूँ ।

*काञ्चुकीयः*—गच्छतु भवान् पुनर्दर्शनाय ।

*यौगन्धरायणः*—तथास्तु ।

[ निष्क्रान्तः । ]

*काञ्चुकीयः*—समय इदानीमभ्यन्तरं प्रवेष्टुम् ।

*पद्मावती*—(क) अय्ये ! वन्दामि ।

*तापसी*—(ख) जादे ! तव सदिसं भत्तारं लभेहि ।

---

(क) आर्ये ! वन्दे ।

(ख) जाते ! तव सदृशं भर्तारं लभस्व ।

---

सावधामो वयमिदानीम् । आदरे बहुत्वम् , तावद्वाक्यालङ्कारे ।

**गच्छत्विति** । भूयः स्वकीयं दर्शनं दातुमितः साम्प्रतं गम्यतां भवतेत्यर्थः । गत्वा च पुनः कृपया दर्शनमस्मभ्यं दातव्यमित्यसावनुरोधोऽस्माकमङ्गीकरणीयस्तत्रभवतेत्याशयः । पद्मावत्या अनुमतिं ज्ञात्वा यौगन्धरायणगमनानुज्ञासूचकमिदं वाक्यं काञ्चुकीयस्य ।

**तथास्त्विति** । तथैव भवेत् । गच्छामि साम्प्रतमागमिष्यामि च पुनर्यथावसरं भवतो दर्शनं कर्तुमित्यर्थः ।

यौगन्धरायणस्य गमनं दर्शयति—**निष्क्रान्त** इति ।

ब्रह्मचारियौगन्धरायणयोर्गमनानन्तरं कर्तव्यशेषस्याभावे सायंसन्ध्यायां च शनैः शनैः प्रवर्तमानायां ततः प्रदेशात्प्रस्थानमुचितं मन्यमानः काञ्चुकीय आह—**समय** इति । अभ्यन्तरं पर्णशालाभ्यन्तरमित्यर्थः । पर्णशालान्तःप्रवेशयोग्यः कालोऽयमुपस्थितः । अतः साम्प्रतं गन्तव्यं मया पर्णशालां प्रतीत्यर्थः ।

**अय्ये** इति । पूज्ये ! तापसि ! प्रणमामीत्यर्थः । काञ्चुकीयवचनानुसारं गन्तुं प्रवृत्ता पद्मावती गमनानुमतिप्राप्तये प्रस्थानकालोचितममुं प्रणतिभावं तापसीं प्रति दर्शयति ।

**जादे** इति । जाते ! पुत्रि ! तव सदृशम् आत्मतुल्यमिति यावत् । अत्र च

---

कञ्चुकी—जाइये, फिर दर्शन दीजियेगा ।

यौग०—अच्छी बात है ।

( चला गया । )

कञ्चुकी—अब भीतर चलने का समय हुआ ।

पद्मा०—आर्ये ! प्रणाम करती हूं ।

तापसी—बेटी ! तुम्हारे समान योग्य पति तुम्हें मिले ।

वासवदत्ता—(क) अय्ये ! वन्दामि दाव अहं ।

तापसी—(ख) तुवं पि अइरेण भत्तारं समासादेहि ।

वासवदत्ता—(ग) अणुग्गहीदह्मि ।

काञ्चुकीयः—तदागम्यताम् । इत इतो भवति ! । सम्प्रति हि

---

( क ) आर्ये ! वन्दे तावदहम् ।
( ख ) त्वमप्यचिरेण भर्तारं समासादय ।
( ग ) अनुगृहीतास्मि ।

---

सदृशशब्दयोगे 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' इत्यनेन तृतीयाविकल्पात्पक्षे 'तवे'ति षष्ठी । पुत्रि ! पद्मावति ! आत्मानुरूपं गुणिनं पतिं प्राप्नुहीत्यर्थः । वरार्थिनीं पद्मावतीं प्रति सुताभावं वहन्त्या वृद्धायास्तापस्याः समयोचितेयमाशीः ।

पद्मावत्या गमनेन वासवदत्ताया अपि तत्समीपे न्यासीकृतायास्ततः प्रस्थानं स्यात् इति सापि गन्तुमुद्यता गमनकालोचितां तापस्याः प्रणतिं समाचरति–**अय्ये** इति । तावच्छन्दो वाक्यशोभां तनोति । अयि पूजनीये ! गन्तुमुद्यतया प्रणम्यते मया । गमनाज्ञा दीयतां मह्यं भवत्येति भावः ।

प्रणामानुकूलामाशिषं प्रयुङ्क्ते तापसी—**तुवं पीति** । त्वयापि शीघ्रं प्रोषितस्य पत्युः समागमसुखं भूयोऽनुभूयतामित्यर्थः । परदेशं गतस्ते पतिः सत्वरमेव प्रत्यागच्छत्विति भावः। अत्र किल सर्वत्र प्रणामाशीर्वचनेषु गमनेच्छा तत्प्राप्तिश्च व्यङ्ग्यमर्यादया बोद्धव्ये ।

आशिषं स्वीकरोति वासवदत्ता–**अणुग्गहीदह्मीति** । भूयाननुग्रहोऽयमार्याया मयि । आशीर्वचनमिदं शिरसा प्रतिगृह्णामीत्यर्थः। कन्याभावसुलभां लज्जां वहन्त्याः पद्मावत्यास्तु तापस्याशीःपरिग्रहोक्तिर्नोचितेति सा कविना नोपन्यस्ता ।

मार्गप्रदर्शनरूपं सेवकोचितं कर्तव्यं पूरयति काञ्चुकीयः—**तदागम्यतामिति** । तत् तस्मात्, सायंसन्ध्यासमयस्य सन्निधानादित्यर्थः । 'इत इतः' इति तु

---

वासव०—आर्ये ! मैं भी प्रणाम करती हूँ ।
तापसी—तुम्हें भी शीघ्र तुम्हारा पति मिले ।
वासव०—अनुगृहीत हूँ ।
कञ्चुकी—तो आइये । इधर से चलिये । इस समय तो—

**खगा वासोपेताः सलिलमवगाढो मुनिजनः**
**प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।**

---

श्च्चनः सूचनम् । भवतीति स्वामिनः कुमारीं पूज्यां पद्मावतीं प्रति सम्बुद्धिवचनम् । गम्यतामित्यार्यम् । आगच्छतु भवती, अनेन मया प्रदर्श्यमानेन मार्गेण गच्छतु चेत्यर्थः । सम्प्रति हीति श्लोकान्वितम् । हि यस्मात्कारणात्, सम्प्रति समयेऽस्मिन्नित्यर्थः ।

किं तावदित्याह—**खगा** इति । खगाः पक्षिणः, खे गच्छन्तीति खगाः, डप्रकरणे 'सुदुरोरधिकरणे' इति वार्तिके 'अन्यत्रापि दृश्यते' इति वचनात् खोपपदात् गम्धातोर्डप्रत्ययः, डित्त्वाट्टिलोपः, वासोपेताः, वासं वसतिस्थानं कुलायम् उपेताः प्राप्ता इति द्वितीयातत्पुरुषः, वासेन उपेता युक्ता इति तृतीयातत्पुरुषो वा, भवन्तीति शेषः । पक्षिणो नीडं प्रविशन्तीत्यर्थः । पक्षिणो ह्याहारार्थं दिनं गगने परिभ्रम्य सायं वृक्षान्तर्गतं निजावासं गच्छन्तीति स्वभावोक्तिः । उपेता इति 'गत्यर्थाकर्मक' इत्यादिना गत्यर्थादुपपूर्वादिण्धातोः कर्तरि क्तः । अत एव कर्तुरभिहितत्वात् खगा इति कर्तरि प्रातिपदिकार्थे प्रथमा । क्रियायाश्च कर्तुरधीनतया उपेता इति बहुत्वम् । तथा च—'कर्तृवाच्यप्रयोगे तु प्रथमा कर्तृकारके । द्वितीयान्तं भवेत्कर्म कर्त्रधीनं क्रियापदम् ॥' इत्यभियुक्ताः । इत्थमेवान्यत्र कर्तरि प्रयोगे सर्वत्रोह्यम् । मुनिजनस्तापसलोकः, सलिलं जलाशयजलम्, 'सलिलं कमलं जलम्' इत्यमरः, अवगाढः प्रविष्टो भवति, स्नातीति यावत् । सायं स्नानमाचरितुं मुनयो जलाशयं गत्वा जलावतरणक्रियामनुतिष्ठन्तीति भावः । अत्रापि गत्यर्थतया अवगाढ इति कर्तरि क्तः । प्रदीप्तः प्रकाशपूर्णः प्रज्वलित इति यावत् । दीप्यतेरकर्मकतया पूर्वोक्तसूत्रेण कर्त्रर्थे क्तः । अग्निः संस्कारपूर्वकं गृहीतः श्रौतः स्मार्तो वाऽग्निः, भाति प्रकाशते । अत्र प्रकाशमानस्याग्नेः पुनर्भातिक्रियायोगः प्रकाशप्रकर्षद्योतनाय । तेन समित्कुशादिभिः पूर्वं प्रदीप्तोऽप्यग्निर्होमद्रव्यप्रक्षेपेणाधिकं प्रकाशत इत्यर्थः । अथवा प्रदीप्तोऽग्निः भाति शोभते । आहुतिप्रदानेन प्रदीप्तस्याग्नेः शोभा दर्शनीयाऽस्तीति भावः । धूमः होमजन्यः, मुनिवनं, मुनीनां वनं तापसाश्रमं तपोवनमित्यर्थः, प्रविचरति व्याप्नोतीति यावत् । प्रविचरणस्य व्यापनमर्थं स्वीकृत्य 'मुनिवनम्' इति कर्मणि द्वितीयोपपत्तिः । वस्तुतस्तु प्रविचरणस्य

---

चिड़ियां घोसलों में गई, मुनिलोग नहाने लगे, होम की अग्नि प्रदीप्त मालूम हो रही

परिभ्रष्टो दूराद् रविरपि च सङ्क्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ॥ १६ ॥

[ निष्क्रान्ताः सर्वे । ]

प्रथमोऽङ्कः ।

---

प्रसरणार्थकतया अधिकरणत्वाविवक्षायां कर्मणि प्रयोगोऽयम्। अपि च किञ्च, असौ अस्तं गमिष्यन्, दूरात् दूरप्रदेशात् दूरवर्तिनो गगनतलादित्यर्थः, परिभ्रष्टः पतितः अस्ताचलसमीपं गत इति यावत्, रविः सूर्यः, सङ्क्षिप्तकिरणः, सङ्क्षिप्ता उपसंहृताः सङ्कोचिताः किरणा मरीचयो येन सः मन्दीकृतकरः सन्नित्यर्थः। कर-सङ्कोचनक्रियायाः सूरसूते सम्भवेऽपि रवौ तदुक्तिरत्रोपचारात्। रथं व्यावर्त्य, वेग-वर्ती रथस्य गतिं निरुध्येत्यर्थः। व्यावर्तनस्याश्ववृत्तित्वेऽपि रथे तदभिधानमौप-चारिकम्। व्यावर्तनं चारुणकर्तृकमपि सूर्यकर्तृकमत्र तथैवोपचारमूलकम्। शनैः क्रमेण, अस्तशिखरम् अस्ताचलस्य चूडां, प्रविशति गाहते। चरमाचलनितम्बे लम्बते मरीचिमालिनः सूर्यस्य विम्बमित्यर्थः। सायंसन्ध्या शनैः शनैः समुपसर्पतीति श्लोकार्थः। यतश्च लक्षणैरमीभिः सायंसन्ध्या सन्निधौ वर्तते, तत एव मत्प्रदर्शितं पन्थानमवलम्ब्य गम्यतां भवत्या। नेदानीमत्रावस्थातुमुचितमित्यतः पर्णशालाभ्य-न्तरं गन्तव्यमिति काञ्चुकीयवचसोऽभिप्रायः। अत्र च श्लोके पक्षिणां नीडप्रवेश-नादिभिर्हेतुभिः सन्ध्यासमयस्यानुमानात्तस्य च सहृदयहृदयाकर्षकत्वेन अनुमाना-लङ्कारः। स चात्र शब्दानुपात्ततया व्यञ्जनावृत्त्या वेदितव्यः। शिखरिणीवृत्तमिदम्, लक्षणमुक्तं प्राक् ॥ १६ ॥

**निष्क्रान्ताः सर्वे** इत्यनेन सर्वेषां निर्गमनमङ्कसमाप्तिप्रसङ्गेऽत्र सूचितम्।

प्रथमाङ्कस्य समाप्तिं दर्शयति-**प्रथमोऽङ्क** इति। अङ्कश्च रसभावादिभिरर्थस्य पोषको वहुविधकार्यसामग्रीसम्पन्नो दृश्यकाव्यस्य कश्चन भागविशेषः। तन्निरुक्ति-र्यथा **नाट्यशास्त्रे**-'अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान्। नानाविधान-युक्तो यस्मात्तस्माद् भवेदङ्कः ॥' इति।

**इति श्रीस्वप्नवासवदत्तव्याख्यायां प्रबोधिन्यां प्रथमोऽङ्कः ।**

---

है। तपोवन में धूआं फैल रहा है और बहुत ऊंचे से गिरे हुए सूर्य भी अपनी किरणों को समेटते हुए रथ लौटा कर धीरे-धीरे अस्ताचल को जा रहे हैं॥ १६॥

( सब चले गये। )

प्रथम अङ्क समाप्त।

# अथ द्वितीयोऽङ्कः

[ ततः प्रविशति चेटी । ]

चेटी—(क) कुञ्जरिए ! कुञ्जरिए ! कहिं कहिं भट्टिदारिआ पदुमावदी ? किं भणासि, एसा भट्टिदारिआ माहवीलदामण्डवस्स पस्सदो

---

( क ) कुञ्जरिके ! कुञ्जरिके ! कुत्र कुत्र भर्तृदारिका पद्मावती ? किं भणसि, एषा भर्तृदारिका माधवीलतामण्डपस्य पार्श्वतः कन्दुकेन

---

अङ्कान्तरस्य प्रारम्भं सूचयति—**अथ** इत्यादिना । अथ अनन्तरम्, एकाङ्कपरिसमापनजन्यपरिश्रमापनोदनपुरःसरं भाव्यङ्कक्रियोपयुक्तपात्रादीनां सन्निधिकरणानन्तरमित्यर्थः, द्वितीयः प्रथमानन्तरं क्रमोपस्थितः अङ्कः, प्रारभ्यत इति शेषः । अङ्कस्य लक्षणं प्रथमाङ्कपरिसमाप्तावुक्तम् ।

इदानीं कन्दुकक्रीडापरायाः पद्मावत्याश्चेतसि सञ्जातं प्रथमाङ्कसूचितोदयनविषयाभिलाषस्य परिपोषं कविः सुन्दरतमसखीसंलापभङ्ग्या प्रकाशयिष्यंस्तदनुरूपं, चेट्याः प्रवेशं दर्शयति—**तत** इत्यादिना । ततः द्वितीयाङ्कप्रारम्भे, सप्तम्यास्तसिल् । चेटी दासी, प्रविशति रङ्गमध्यं समागच्छतीत्यर्थः ।

प्रविष्टा चेयं चेटी स्वसजातीयाया अपरस्याश्चेट्या नामोल्लेखपुरःसरं प्रसङ्गानुकूलं वचनमुपन्यस्यति—**कुञ्जरिए** इति । वीप्सा चेयं त्वरायामामन्त्रणस्य । **कहिं कहिमिति** । एषापि द्विरुक्तिस्त्वराभिप्रायिका पद्मावतीदर्शनविषयकमुत्कण्ठाविशेषं व्यनक्ति चेट्याः । श्रीमती पद्मावती नाम राजकन्या कस्मिन्प्रदेशेऽधुना वर्तते, तत्कथयेति वाक्यतात्पर्यम् । **किं भणासीति** । प्रश्नोऽयं प्राप्तोत्तरसूचकः । अनुक्तमप्युत्तरं प्राप्तमिवेति दर्शयन्ती **एसा** इत्यारभ्य **किलदित्ति** इत्यन्तेन वाक्येन प्रकटयति चेटी । एवं किल पात्रान्तरं विना यत्र तदुक्तिश्रवणमभिनीय प्रश्नस्योत्तरं स्वयमेव सम्पाद्यते तत्तावत् आकाशभाषितं नाम कथ्यते नाटकेषु । तथा हि **विश्वनाथः साहित्यदर्पणे**—'किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते । श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥' इति । किं तदेतदित्याह—**एसेति** । माधवीलतामण्डपस्य, माधवीलताया वासन्त्याः, 'वासन्ती माधवी

---

( दासी आती है । )

दासी—अरी कुञ्जरिका! कहाँ, राजकुमारी पद्मावती कहाँ हैं? क्या कहती हो कि यह राजकुमारी माधवी-कुञ्ज की बगल में गेंद खेलती है । अच्छा, राजकुमारी के पास जाऊं ।

कन्दुएण कीलदित्ति। जाव भट्टिदारिअं उवसप्पामि। [ परिक्रम्याव-लोक्य ] अम्मो ! इअं भट्टिदारिआ उक्करिदकण्णचुलिएण वाआमसञ्जादसेदविन्दुविइत्तिदेण परिस्सन्तरमणीअदंसणेण मुहेण कन्दुएण कीलन्दी

---

क्रीडतीति। यावद् भर्तृदारिकामुपसर्पामि। अम्मो ! इयं भर्तृदारिका उत्कृतकर्णचूलिकेन व्यायामसञ्जातस्वेदविन्दुविचित्रितेन परिश्रान्तरम-

---

लता' इत्यमरः, मण्डपं स्थानं निकुञ्जमिति यावत् तस्य, पार्श्वतः समीप एव, कन्दुकेन गेन्दुकेन क्रीडनीयकविशेषेण, करणे तृतीया, क्रीडति खेलति। सेयं तत्र-भवती राजकन्या पद्मावती माधवीलतानिर्मितमण्डपसमीपे कन्दुकक्रीडां कुर्वाणा वर्तत इत्यर्थः। एतेन राजदुहितुः पद्मावत्याः स्थितिस्थानमवस्था च प्रदर्शिते। इत्थं प्राप्तोत्तरा च सा चेटी स्वकीयमनन्तरकरणीयं कार्यं दर्शयति—**जाव** इति। यावदित्यस्य अत इत्यर्थः। आर्या पद्मावत्यस्मिन्प्रदेशे क्रीडन्ती वर्तते, अतो हेतो-रहमधुना तस्याः समीपं गच्छामीति चेट्यास्तत्कालोचितो विचारः। परितस्तदन्वे-षणपुरःसरं तत्प्राप्तेः सूचनं नाटयति—**परिक्रम्येत्यादिना**। परिक्रम्य इतस्ततो गत्वाऽन्विष्य अवलोक्य दृष्टिपथं नीत्वा, अर्थात्पद्मावतीम्। **अम्मो** इति। विस्म-यानन्दार्थप्रकाशनगर्भम् अम्मो इत्यव्ययम्। उत्कृतकर्णचूलिकेन, उत्कृते ऊर्ध्वं कृते कन्दुकक्रीडावसरे लम्बनपतनभयात्कर्णयोरुपरिष्टात्कृते कर्णचूलिके कर्णाभरणविशेषौ यत्र मुखे तथाभूतेन, व्यायामसञ्जातस्वेदविन्दुविचित्रितेन, व्यायामात् कन्दुकादान-प्रदानविधौ धावनादिसमुत्थितादायासात् सञ्जाताः समुत्पन्ना ये स्वेदस्य घर्मोदकस्य विन्दवः पृषताः, 'घर्मो निदाघः स्वेदः स्यात्', 'पृषन्ति विन्दुपृषताः' इत्यमरौ, तैः विचित्रितेन सुषमावैचित्र्यं प्रापितेन, परिश्रान्तरमणीयदर्शनेन, परिश्रान्तं परिश्रान्तिः, भावे क्तः, 'तस्मिन् सत्यपि' इत्यपिशब्दार्थोऽत्र समासान्तर्भूतः, रमणीयं सुन्दरं दर्श-नमवलोकनं यस्य तादृशेन। परिश्रमे मालिन्यस्य सम्भवेऽपि मुखे रमणीयदर्शन-त्वस्य वर्णनेनात्र स्वाभाविकं सौन्दर्यं व्यज्यते पद्मावत्याः। मुखेन वदनेन, उप-लक्षितेति शेषः, 'इत्थंभूतलक्षणे' इति तृतीया। पद्मावत्या विशेषणमिदम्। कन्दुकेन क्रीडन्ती कन्दुकक्रीडाभिर्मनो विनोदयन्तीति यावत्, इत एवागच्छति पुरो दृश्य-

---

( टहल कर और देखकर ) ओहो ! इस समय यह राजकुमारी तो अपने कानों की बालियों को ऊपर उठाकर खेल की मेहनत से पसीने की बूँदों से अपने मुख को मानों मोतियों से

इदो एव्व आअच्छदि । जाव उवसप्पिस्सं ।

[ निष्क्रान्ता । ]

**प्रवेशकः ।**

[ ततः प्रविशति कन्दुकेन क्रीडन्ती पद्मावती सपरिवारा वासवदत्तया सह । ]

---

णीयदर्शनेन मुखेन कन्दुकेन क्रीडन्तीत एवागच्छति । यावदुपसर्प्स्यामि ।

---

मानममुमेव प्रदेशमायाति । पूर्वोक्तविशेषणविशिष्टा तत्रभवती पद्मावती कन्दुक-क्रीडापराऽत्रैव समागच्छतीत्यर्थः । सैषा हि पूर्वं बहु क्रीडित्वाऽऽत्मानमायासितव-तीति मुखविशेषणैः स्पष्टमेव । अनेन च वाक्येन तादृश्यामवस्थायां विद्यमानाया राजकन्यायाः पद्मावत्यास्तत्रैव स्थानेऽनुपदमेव भाविनं प्रवेशं सूचयित्वा कवि-र्वाक्यान्तरेण तत्कालोचितां चेट्यास्तत्समीपगमनेच्छां दर्शयति—**जाव** इत्यादिना। यावदिति वाक्यालङ्कारार्थमुपसर्पणे त्वराप्रदर्शनार्थं वा । उपसर्प्स्यामि समीपं गमि-ष्यामीति वर्तमानकालाव्यवहितोत्तरक्षणे करिष्यमाणस्य निजोपसर्पणस्याभिप्रायेणायं भविष्यत्कालिकः प्रयोगः । इयमधुना तत्समीपमहं गच्छाम्येवेति तदर्थः ।

**निष्क्रान्ता** इति । एतेन ततः स्थानाच्चेट्या अपगमनं दर्शितम् ।

**प्रवेशक** इति । अनया खलु पूर्वोक्तविधया चेटीमुखेन भाविपद्मावतीरूप-पात्रप्रवेशसूचनादिदमत्र प्रवेशकनाम्ना व्यवह्रियते । एष च प्रथमाङ्कातिरिक्ताङ्क-द्वयान्तः प्रयुक्तो नीचपात्रद्वारा पात्रप्रवेशसूचकः पञ्चविधोपक्षेपकान्यतमः । तथा च तत्स्वरूपमुपवर्णितं **विश्वनाथेन**—'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥' इति । विष्कम्भकस्वरूपमपि तत्रैव । यथा—'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । सङ्क्षिप्तार्थस्तु विष्कम्भ आदा-वङ्कस्य दर्शितः ॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यात्स तु सङ्कीर्णो नीचमध्यमकल्पितः ॥' इति ।

पूर्वोक्तचेटीकृतसूचनानुसारमधुना वासवदत्तया समं कन्दुकेन क्रीडन्त्याः पद्मा-वत्याः प्रवेशमाह—**ततः प्रविशतीति** । सपरिवारा, परिवारश्चेटीरूपस्तेन सहिता । इयञ्चागतप्रत्यागता पद्मावतीमुपगन्तुमनास्तत्समीपं गतैव चेटी बोद्धव्या ।

---

सजाती हुई थकने पर भी सुन्दर मालूम पड़ती हुई गेंद से खेलते-खेलते इधर ही आ रही है । तो मैं भी पास पहुँचूँ ।

( तब गेंद से खेलती हुई पद्मावती अपने परिवार और वासवदत्ता के साथ आती है । )

वासवदत्ता—(क) हला ! एसो दे कन्दुओ ।

पद्मावती—(ख) अय्ये ! भोदु दाणिं एत्तअं ।

वासवदत्ता—(ग) हला ! अदिचिरं कन्दुएण कीलिअ अहिअ-

---

( क ) हला ! एष ते कन्दुकः ।
( ख ) आर्ये ! भवत्विदानीमेतावत् ।
( ग ) हला ! अतिचिरं कन्दुकेन क्रीडित्वाधिकसञ्जातरागौ पर-

---

प्रमादेन भूमौ पतितमपश्यन्त्या इव पद्मावत्याः पुरस्तात् कन्दुकं कुर्वती वासवदत्ताह—**हला** इति। हलेति सम्बोधनसूचकम्, हे सखीत्यर्थः। सखीं प्रत्याह्वाने हलेति पदं प्रयुज्यते। तथा च—'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः। इदञ्च वासवदत्ताकर्तृकमाह्वानं तस्याः पद्मावत्यां सखीनिर्विशेषभावं द्योतयति। अयमस्ति तावकीनो गेन्दुकः, गृह्यतां क्रीड्यतां च पुनर्यथारुचीति भावः।

चिरविरचितक्रीडाविशेषोपजातपरिश्रमा पुनः पद्मावतीयं तत्र स्वीयामरुचिं दर्शयति—**अय्ये** इति। आर्ये इति आवन्तिका-( वासवदत्ता-)-मुद्दिश्य सम्बुद्धिपदप्रयोगः पद्मावत्यास्तत्र विनयभावसहकृतमादरभावं प्रकाशयति। वाक्येऽत्र पूर्वप्रक्रान्तं क्रीडनमिति कर्तृपदमार्थम्। भवतु अस्तु, पर्याप्तमिति यावत्। सुचिरं क्रीडित्वा परिश्रान्तिं गताहमितोऽधिकं नेच्छामि क्रीडितुमित्यतः कालेऽस्मिन्नियदेव खेलनमास्तामित्यर्थः। यावत्क्रीडितमावाभ्यां तावदेवास्ति पर्याप्तमित्यतः खेलनमधुनाऽऽवयोः समापनीयमिति भावः।

अत्रार्थे स्वीयानुमतिं दर्शयन्ती सपरिहासं ब्रूते वासवदत्ता—**हला** इति। अतिचिरम् अत्यधिकम्, कन्दुकेनेति साधकतमे तृतीया क्रीडित्वेति हेत्वर्थे क्त्वाप्रत्ययः, कन्दुकेन क्रीडनाद्धेतोरित्यर्थः। अत्र च हेतौ क्त्वाप्रत्ययस्य कुत्राप्यविहितत्वात्समानकर्तृकस्य क्रियाद्वयस्य चासद्भावात् क्रीडित्वेति पदप्रयोगश्चिन्त्यः। अथवा क्रीडित्वेत्यनन्तरं 'परिश्रान्ताया' इत्यस्य पदस्याक्षेपात् 'समानकर्तृकयोः क्रीडनपरिश्रान्तिरूपयोर्धात्वर्थयोः कल्पनया क्त्वाप्रत्ययोऽयमुपपादनीयः। अधिक-

---

वासव०—बहन ! यह तुम्हारी गेंद है ?

पद्मा०—आर्ये ! बस, इस समय इतना ही।

वासव०—बहन ! गेंद से बड़ी देर तक खेलने के कारण ललाई के बढ़ने से तुम्हारे

सञ्जादराआ परकेरआ विअ दे हत्था संवुत्ता ।

चेटी—(क) कीलदु कीलदु दाव भट्टिदारिआ । णिव्वत्तीअदु

---

कीयाविव ते हस्तौ संवृत्तौ ।

(क) क्रीडतु क्रीडतु तावद् भर्तृदारिका । निर्वर्त्यतां तावद् अयं

---

सञ्जातरागौ, अधिकमत्यन्तम्, विशेषणञ्चेदं सञ्जननक्रियायाः, सञ्जात उत्पन्नो रागो रक्तिमा ययोस्ताविति हस्तयोर्विशेषणम्। एतेन करयोः कोमलत्वं तेन च पद्मावत्या अद्वितीयं सौकुमार्यं व्यज्यते। सहजं रागं वहन्तौ करौ पद्मावत्याश्चिरतरं कन्दुकक्रीडयाऽतितरां सरागौ सञ्जाताविल्यर्थः। परकीयाविव परकीयवद्वशावित्युत्प्रेक्षा-पराधीनाविति यावत्, खेलनपरिश्रान्तिवशात्कन्दुकक्रीडायामन्यदीयसाहायकं विना स्वयमप्रभवन्ताविल्यर्थः। संवृत्तौ सञ्जातौ। बहुलं खेलित्वा परिक्लान्तायास्तवैतत्पाणिद्वयं किल खेलनायासेन सहजारुण्यतोऽप्यतितरामारुण्यं सम्प्राप्तमिति खेलनाद्विरतिरेव साम्प्रतं ते साम्प्रतमिति वाच्योऽर्थः। परिहासमूलको व्यङ्ग्योऽर्थस्तु—अरुणिमातिशयशालिनौ ते कराविदानीं 'स्वकीयौ न स्तः अपि तु परकीयौ परस्य हस्तं गतावन्यदीयावेवेति। परेण वरेण कृतं ग्रहणं प्राप्तवतोः करयोः परकीयत्वं स्फुटमेव। पद्मावतीविवाहसमयस्यासन्नतामालक्ष्य 'सखि! मन्येऽहं सञ्जातपाणिग्रहणाऽभवस्त्वम्, अतएव ते परकृतपाणिपीडनात्पाणी अरुणिमानं गृहीतवन्ताविति परिहासपूर्वकं पद्मावतीं प्रति वचनं वासवदत्तायाः सखीभावं वहन्त्या युज्यत एव। रागपदेन प्रेमापि ध्वन्यते। परकर्तृकस्वकीयग्रहणविषयिणी वाञ्छा हस्तयोरपि ते समुत्पन्नेति मन्ये प्रत्यासन्नविवाहायास्तेऽधुना पाणिग्रहणं जातमेवेत्यतो हेतोरयं खेलनयोग्यः कालो नास्तीति गूढं तात्पर्यं वासवदत्तोक्तेः।

परिश्रान्तां पद्मावतीं क्रीडितुमनिच्छन्तीम्, आवन्तिकां च तत्रैवार्थमनुमोदमानामवलोक्य चेटी प्रत्यासन्नविवाहसमयां विवाहानन्तरं च परावत्तामनुचितक्रीडनां क्रीडितुमपारयिष्यन्तीं पद्मावतीं पुनः कन्दुकक्रीडायां प्रवर्तयन्त्याह—**कीलदु** इति। पौनःपुन्ये 'क्रीडतु क्रीडतु' इति द्विःप्रयोगः। न यावत्पाणिपीडनं जातं तावद्राजकन्यया पद्मावत्या पुनः पुनः क्रीडनीयमित्यर्थः। तावत्पदे वाक्यालङ्कृतौ प्रयुक्ते। 'अयं कालः कन्याभावरमणीयो निर्वर्त्यता'मित्यन्वयः। अत्र च 'भट्टि-

---

हाथ मानों दूसरे के हो रहे हैं।

**दासी**—राजकुमारी और भी खेलें। कुँवारीपन के इस काल को खेल के आनन्द से

दाव अअं कण्णाभावरमणीओ कालो ।

*पद्मावती*—(क) अय्ये ! किं दाणिं मं ओहसिदुं विअ णिज्झाअसि ?

*वासवदत्ता*—(ख) णहि णहि । हला ! अधिअं अज्ज सोहदि ।

---

कन्याभावरमणीयः कालः ।

(क) आर्ये ! किमिदानीं मामपहसितुमिव निध्यायसि ?

(ख) नहि नहि । हला ! अधिकमद्य शोभते । अभित इव तेऽद्य

---

दारिका' इति पूर्ववाक्यगतं कर्तृपदं तृतीयया विपरिणम्य योजनीयम् । कन्याभावरमणीयः, कन्याभावेन बाल्येन बालोचितलीलयेति यावत्, रमणीयः सुन्दरः, निर्वर्त्यतां क्रियताम् । नूतनं वयो वहन्त्या भवत्या कन्दुकक्रीडनरूपया बालोचितया लीलया समग्रोऽयं सुन्दरतां नेय इत्यर्थः । नूतने वयसि क्रीडैव शोभत इति भावः । अस्मिन्नर्थे 'कन्याभावेन रमणीय' इति व्यस्तं पदं युज्यते । 'कन्याभावरमणीयः कालोऽयं निर्वर्त्यता'मिति वा समन्वयः । कालो वयस उपलक्षणम्, निर्वर्त्यतां समाप्यताम् । कन्यात्वेन सुन्दरमिदं वयः खेलनेन पूर्णतां नेयमित्यर्थः । विवाहसम्बन्धानन्तरं खेलनावसरस्यानुपलप्स्यमानत्वान्नाधुना बालोचितं खेलनमवक्षेपणीयं भवत्येति भावः ।

चिरखेलनपरिक्लान्ताया अपि सौकुमार्यमलौकिकं वहन्त्याः सहजसौन्दर्यशालिन्याः पद्मावत्या लोचनासेचनकमाननं साकूतमालोकयन्तीम् आवन्तिकामुद्दिश्य पद्मावतीवचः प्रयुङ्क्ते कविः—**अय्ये** इति । मामपहसितुमिव ममोपहासं कर्तुमिवेति सम्भावना । निध्यायसि पश्यसि, 'निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । मन्ये ममोपहासार्थमेव ते मन्निरीक्षणमिदमित्यर्थः । पुनः कमपि मदीयमुपहासं कर्तुकामेव त्वमिदानीं पश्यसि मां साभिप्रायमिति भावः । अमुना हि पद्मावत्या वचनेन शब्दानुपात्तमपि तस्याः साकूतमालोकनं वासवदत्ताकर्तृकं गम्यते, अन्यथाऽस्य पद्मावतीवाक्यस्यानवसरत्वापत्तेः ।

पद्मावत्याः शङ्कितं निषेधन्त्यावन्तिका ब्रूते—**णहि णहीति** । द्विःप्रयोगश्चार्थ

---

सफल करें ।

पद्मा०—आर्ये ! इस समय क्या तुम मेरी हँसी करने के लिये ही मुझे देख रही हो ।

वासव०—नहीं नहीं । आज (मुख) अधिक अच्छा लगता है । अब तुम्हारा

अभिदो विअ दे अज्ज वरमुहं पेक्खामि ।

*पद्मावती*—( क ) अवेहि । मा दाणिं मं ओहस ।

---

वरमुखं पश्यामि ।

( क ) अपेहि । मेदानीं मामपहस ।

---

निषेधं द्रढयितुम् । अत्र हि पूर्ववाक्यार्थो निषिध्यते । न किल त्वदुपहासार्थं मे त्वद्दर्शनोपक्रमः, नास्ति मे मनसि सर्वथा परिहासकामनया त्वद्दर्शनाभिलाषोऽय-मित्यर्थः । इत्येवं परिहासस्य हेतुतां निषिध्य तद्दर्शने कारणं दर्शयति—**हलेति** । उत्तरवाक्यार्थानुसारेण वाक्येऽस्मिन् मुखं कर्तृ । शोभते प्रकाशते । एतद्वाक्यानन्तरं वाक्यान्तरारम्भे 'अतः' इति योजनीयम् । 'अद्य ते वरमुखम् अभित इव पश्या-मी'त्यन्वयः । वरमुखम्, 'वरं च तन्मुख'मिति कर्मधारयः । अत्र च समासा-त्किञ्चिदर्थे गौणत्वमापतितं, तथाप्यर्थान्तरध्वननाभिप्रायेण समासः कृतोऽत्र कविना । सति च समासाभावेऽर्थान्तरप्रतीत्युच्छेदापत्तेः । अभितः सर्वतः, इवेति वाक्यालङ्-कृतौ । सखि ! पद्मावति ! त्वन्मुखमिदानीमतीव सौन्दर्यं दर्शयति, नूनमवर्णनीयैषा त्वन्मुखचन्द्रमसः सुष्मा । अत एव चक्षुःप्रीतये समयेऽस्मिन् सुन्दरं ते मुखं सर्वावच्छेदेनाहमवलोक्ये । अहो ! सर्वतः सौन्दर्यं ते मुखस्येति स्फुटोऽर्थः । 'परि-हासं न करोमी'ति स्फुटं प्रतिज्ञायापि वासवदत्ता 'वरस्य मुखं वरमुख'मित्यर्था-न्तरगर्भं श्लिष्टं पदं प्रयुज्य गूढं पुनः सखीभावोचितं परिहासमातनुते । अत्र चार्थे 'अधिकमद्य शोभते' इत्यत्र वाक्ये भवती कर्त्री । अयमर्थः—इदानीं सखि ! भव-त्याः शोभाऽतिमहती वर्तते, अमुष्मिन्काले भवत्या वरस्य परिणेतुर्मुखं सर्वतोऽहं साक्षात्करोमीवेति । मन्ये भवत्याः पतिः समीप एव वर्तते, अत इदानीं समासन्न-प्रियसमागमसौभाग्या भवती भृशं शोभास्पदं जातेति भावः । 'पद्मावत्याः परिणेतु-स्तदानीमभावेऽपि तदीयविवाहसम्बन्धसङ्घटनस्याऽतिसन्निकृष्टतयोत्प्रेक्षाविषया 'वरस्य मुखं सर्वतः पश्यामीवे'ति सपरिहासं वचनं प्रायुज्यत सख्या वासवदत्तया ।

परिहासगर्भामिमामुक्तिमाकर्ण्य सविलासं प्रणयरोषाञ्चितं च प्रियसखीनिर्विशेषं वचनमाहावन्तिकां प्रति पद्मावती—**अवेहि** इति । अपेहि दूरमपसर, 'ओहस' इति विध्यर्थे लोट्, 'मा' इति निषेधार्थकमव्ययम्, 'माङि लुङ्' इति माङ्योगे

---

वरमुख आसन्न सी समझती हूं।

पद्मा०—हट जा, अब मेरी हँसी मत करना।

वासवदत्ता—(क) एसह्मि तुह्णीआ भविस्सम्महासेणवहू ! ।

पद्मावती—(ख) को एसो महासेणो णाम ?

वासवदत्ता—(ग) अत्थि उज्जइणीओ राआ पज्जोदो णाम ।

---

(क) एषास्मि तूष्णीका भविष्यन्महासेनवधु ! ।

(ख) क एष महासेनो नाम ?

(ग) अस्त्युज्जयिनीयो राजा प्रद्योतो नाम । तस्य बल-

---

लुङो विधानाभात्र लुङ् । सपरिहासं वचो वदन्ती ममान्तिकाद् दूरं गच्छ नाहमिदं वचस्ते श्रोतुमिच्छामि । ममोपहासो न विधेयः सखि ! न स मह्यं रोचत इत्यर्थः ।

इदानीं भाविश्वशुरकुलनिर्देशेन पद्मावत्या हृद्गतं दयितं वरं जिज्ञासमानाऽऽवन्तिका सपरिहासचातुर्यं स्ववचनोपसंहारं प्रतिजानीते–**एसह्मि** इति । हे भविष्यन्महासेनवधु ! महासेन इति राज्ञः प्रद्योतस्य नामान्तरम् , तस्य वधूः स्नुषा, 'वधूर्जाया स्नुषा स्त्री च' इत्यमरः। भविष्यन्ती चासौ महासेनवधूश्च तथा तत्सम्बुद्धौ हे भविष्यन्महासेनवधु ! महासेनस्य स्नुषाभावं गमिष्यन्ति । हे पद्मावतीत्यर्थः । 'स्त्रियाः पुंवद्भाषितपुंस्का' दित्यादिना 'भविष्यन्ती'ति पूर्वपदे पुंवद्भावः । 'ङिति ह्रस्वश्चे'ति नदीसंज्ञायाम् 'अम्बार्थनद्योर्ह्रस्व' इति ह्रस्वे 'एङ्ह्रस्वात्सम्बुद्धे'रित्यनेन सोर्लुप् । एषा कृतोपहासेति यावत्, अस्मीत्यनेन अहंपदाक्षेपः। तूष्णीका तूष्णींशीला, 'तूष्णींशीलस्तु तूष्णीकः' इत्यमरः । तूष्णीमित्यव्ययम्, ततः 'शीले कों मलोपश्चे'ति कप्रत्यये मकारलोपे च तूष्णीकशब्दः सिध्यति, ततः स्त्रीत्वे टापि तूष्णीकेति । अस्मि भवामि । अयि पद्मावति ! यदि मद्वचनं परिहासं मन्यसे, न रोचते च तत्तुभ्यं, तर्हि त्वदीयं परिहासं कृतवतीयमहं 'राज्ञो महासेनस्य स्नुषा त्वं भविष्यसि, अर्थात्तत्पुत्रस्ते पतिर्भविष्यति' इत्येव केवलं निगद्याऽद्य मौनमालम्बे । नातः परं स्वेच्छया कश्चिदभिधास्ये ।

महासेन इति नवीनमश्रुतपूर्वं नाम श्रुत्वा तद्विषये पृच्छत्यावन्तिकां पद्मावती–**को** इति । कोऽयं महासेनः ? यमिदानीं त्वमुदाहृतवत्यसि । तत्परिचयं ब्रूहीत्यर्थः ।

महासेनपरिचयप्रदानं प्रस्तौति पद्मावतीप्रश्नानुसारं वासवदत्ता—**अत्थीति** ।

---

वासव०—महासेन की बहू होनेवाली ! बस अब मैं चुप हुई ।

पद्मा०—यह महासेन कौन है ?

वासव०—उज्जयिनी का राजा प्रद्योत नामक है । सेना के परिमाण से उसका

तस्स परिमाणणिव्वुत्तं णामहेअं महासेणोत्ति ।

चेटी—(क) भट्टिदारिआ तेण रञ्ञा सह सम्बन्धं णेच्छदि ।

*वासवदत्ता*—(ख) अह केण खु दाणिं अभिलसदि ?

---

परिमाणनिर्वृत्तं नामधेयं महासेन इति ।

( क ) भर्तृदारिका तेन राज्ञा सह सम्बन्धं नेच्छति ।

( ख ) अथ केन खल्विदानीमभिलषति ?

---

उज्जयिनीयः, उज्जयिन्या अयम् उज्जयिनीसम्बन्धीत्यर्थः । सम्बन्धश्च स्वस्वामिभावरूपः । 'तस्येदम्' इत्यधिकारे 'वा नामधेयस्ये'ति वृद्धसंज्ञायां 'वृद्धाच्छः' इत्यनेन छप्रत्ययः, तस्य च 'आयनेयीनीयियः' इत्यादिना ईयादेशः । 'बलपरिमाणनिर्वृत्तम्', बलस्य सेनायाः परिमाणेन महत्त्वरूपेण निर्वृत्तं कृतम् । नामधेयं नाम, 'नामधेयं च नाम च' इत्यमरः । विजयते राजा कश्चिदुज्जयिन्याः ,प्रद्योतनामधेयः, तस्य च राज्ञः सेनायाः परममहत्त्वपरिमाणेन कारणेन 'महती सेना यस्य' इत्यन्वर्थं 'महासेन' इति नामधेयं कृतं वर्तत इत्यर्थः ।

इदानीं विनयवत्या राजकुमार्याः पद्मावत्याः स्वसम्बन्धविषये स्वयं वक्तुमयुक्तत्वेन तस्या मनोगतमाकूतं जानत्याः परिचारिकायाश्चेट्या मुखेन पूर्वोक्तविवाहसम्बन्धेऽरुचिं दर्शयति कविः—**भट्टिदारिआ** इति। तेन राज्ञा प्रद्योतनाम्ना नृपेण, सम्बन्धं तत्पुत्रवरणरूपं योगम् । श्रीमत्या राजकुमार्या पद्मावत्या प्रद्योतराजकुलसम्बन्धो नेष्यते कर्तुम् । तद्राजकुमारमियं राजकुमारी वरीतुं नेच्छतीति भावः ।

कर्णगोचरीकृतचेटीवचना पृच्छति चेटीं पुनरावन्तिका—**अहेति** । अथ पक्षान्तरे, केन किन्नामधेयेन राज्ञा, सहेति शेषः, खलु वाक्यालङ्कारे, सम्बन्धरूपं कर्म पूर्वतोऽनुवर्तते, अभिलषति वाञ्छति । यदि नाम ते राजकुमारी प्रद्योतराजसम्बन्धं नेच्छति, तर्हि केन पुना राज्ञा सह सम्बन्धोऽस्यै रोचते ?

प्रियसख्यास्ततो गोपनं न युक्तमिति पद्मावत्या हृदयप्रियं प्रियं प्रकाशं नयन्ती

---

महासेन ऐसा नाम हो गया है ।

दासी०—राजकुमारी उस राजा के साथ सम्बन्ध नहीं चाहतीं ।

*वासव०—तो अब किसके साथ अपना सम्बन्ध चाहती हैं ?*

चेटी—(क) अत्थि वच्छराओ उअअणो णाम । तस्स गुणाणि भट्टिदारिआ अभिलसदि ।

वासवदत्ता—[ आत्मगतम् ] (ख) अय्यउत्तं भत्तारं अभिलसदि । [ प्रकाशम् ] केण कारणेण ?

चेटी—(ग) साणुक्कोसो त्ति ।

---

(क) अस्ति वत्सराज उदयनो नाम। तस्य गुणान् भर्तृदारिकाभिलषति।

(ख) आर्यपुत्रं भर्तारमभिलषति । केन कारणेन ?

(ग) सानुक्रोश इति ।

---

आवन्तिकायाः प्रश्नस्योत्तरं दत्ते चेटी—अत्थीति । वत्सराजः वत्सानां राजा, 'राजाऽहःसखिभ्यष्टच्' इति टच्, वत्सनामकदेशस्याधिपतिरित्यर्थः । तस्य उदयनस्येति यावत्, गुणान् सौन्दर्यदयादाक्षिण्यादीन् । 'उदयन' इति सुगृहीत-नामधेयस्य वत्सदेशाधिपतेर्गुणेषु लुब्धाऽस्माकं राजकुमारी तमेव भर्तारं कामयते । सद्गुणरत्नाकरं श्रीमन्तमुदयनं वरीतुमिच्छन्तीं पद्मावतीं चेटीमुखान्निशम्य चिन्तां नाटयति चित्ते वासवदत्ता—अय्यउत्तं इति । आर्यपुत्रं मत्पतिं, भर्तारं पतिं, प्राप्तुमिति शेषः, अभिलषति इच्छति, अर्थात्पद्मावती । किमियं पद्मावती मम प्रियं प्रणयिनमुदयनं स्वपतिं कर्तुमिच्छतीत्यर्थः । अत्रेदं बोद्धव्यम्—'चिन्ता चेयं वासवदत्तायाः केवलं सपत्नीप्राप्तिरूपा, न किल पद्मावत्यां सापत्न्यद्वेषमूलिका । भर्तुर्विजयलाभलक्षणप्रधानकार्यस्य संसिद्धौ—'पद्मावत्येव कारणं भविष्यतीति वासवदत्तायाः कार्यगौरवमाकलयन्त्याश्चेतसि तद्विषये सापत्न्यद्वेषस्य लेशतोऽप्यनुदयात् ।' मानसमेवेदं पूर्वोक्तं गूढं विचिन्त्य स्वात्मस्वरूपगोपनं कुर्वती प्रच्छन्न-रूपा वासवदत्ता तदभिलाषकारणं ज्ञातुमिच्छन्ती प्रकटं पृच्छति चेटीम्—केण इति । केन कारणेन तस्य गुणानभिलषतीति प्रश्नः । को नाम तत्रोदयने विशिष्टो गुणो वर्तते, यः खलु पद्मावत्यास्तत्राभिलाषे कारणं जातः । 'केन गुणेन पुनराकृष्ट-चेता इयं राजानमुदयनं कामयत' इति प्रश्नाभिप्रायः ।

तमेवोदयनस्य पद्मावत्यभिलषणीयं गुणमाह चेटी—साणुक्कोसो इति ।

---

दासी—उदयन नामक वत्सदेश का राजा है । राजकुमारी उसके गुणों को चाहती है ।

वासव०—( स्वगत ) आर्यपुत्र को पति बनाना चाहती है ! (प्रकाश) किस कारण से ?

दासी—इस लिए कि वे दयालु हैं ।

वासवदत्ता—[ आत्मगतम् ] ( क ) जाणामि जाणामि । अअं वि जणो एव्वं उम्मादिदो ।

चेटी—( ख ) भट्टिदारिए ! जदि सो राआ विरूवो भवे ?

---

( क ) जानामि जानामि । अयमपि जन एवमुन्मादितः ।

( ख ) भर्तृदारिके ! यदि स राजा विरूपो भवेत् ?

---

अनुक्रोशो दया, 'कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः, तेन सहितः दयालुरित्यर्थः, अर्थादुदयनः । उदयनो नाम राजा दयालुरस्तीत्येतदेव कारणं तत्र विद्यते प्रधानं पद्मावत्याः प्रेमोत्पत्तौ । पत्यौ हि दयालुत्वं पत्नीप्रेमसम्पादकम्, तस्य च राज्ञो दयालुत्वेन प्रसिद्धिरस्तीति स एव पद्मावत्योचितं काम्यते वर इत्यर्थः ।

स्वानुभवगोचरं दयालुत्वलक्षणं पत्युर्गुणमभिनन्दन्ती मनस्याह वासवदत्ता—**जाणामि** इति । भृशार्थे द्विरुक्तिरियम् । पूर्ववाक्यार्थः कर्म । स किलार्यपुत्रो दयालुरस्तीति भृशमहं जानामीत्यर्थः । तस्य दयालुत्वं मया बहुशोऽनुभूतमिति भावः । **अयमपि** । अयं जनोऽपि, मल्लक्षणः अहमपीति यावत्, एवं तस्य सानुक्रोशत्वेन कारणेन, उन्मादित उन्मत्ततां प्रापितः, उत्पूर्वाण्णिजन्तान्मदेः क्तः । सत्यमिदमनयोच्यते चेट्या । आत्मनो दयालुत्वगुणेनोन्माद्य मामहमपि तेनार्यपुत्रेण सरभसं प्रणयविवशीकृताऽस्मीति भावः ।

अथ किलोदयनविषयाभिलापदार्ढ्यं परीक्षितुं पद्मावतीं प्रति चेट्याः प्रश्नः—**भट्टिदारिए** इति । विरूपः, विगतं विकृतं वा रूपं यस्य स रूपहीनः कुरूपो वा अदर्शनीय इति यावत् । एतद्वाक्यानन्तरं 'तर्हि किं करिष्यते' इति योजनीयम् । अयि राजकुमारि ! स भवत्याः प्रेमपात्रं राजा रूपहीनः कुरूपो वा चेत्स्यात्तर्हि भवत्या वरिष्यते न वा ? अत्र च दयालुतागुणवत् वरगतं सौन्दर्यमप्यपेक्षणीयं भवति कन्यकाजनस्येति पद्मावत्या वरणीयत्वेन निश्चितस्योदयनस्य स्वरूपविषयेऽपि जिज्ञासितमासीद् गूढं चेट्या । राजकुमार्याः पद्मावत्यास्तत्र किलोदयने हार्दिकाभिलापदृढतायाः परीक्षणीयत्वाच्चतुरतमायाश्चेट्याः पद्मावतीं प्रत्यनुयोगोऽयं युज्यत एव ।

---

वासव०—( मन ही मन ) हाँ, जानता हूँ । यह भी मनुष्य इस तरह उन्मत्त बनाया गया था ।

दासी—राजकुमारी ! यदि वे राजा कुरूप हों, तो !

वासवदत्ता—( क ) णहि णहि । दंसणीओ एव्व ।

पद्मावती—( ख ) अय्ये ! कहं तुवं जाणासि ?

वासवदत्ता—[ आत्मगतम् ] ( ग ) अय्यउत्तपक्खवादेण अदि-

( क ) नहि नहि । दर्शनीय एव ।

( ख ) आर्ये ! कथं त्वं जानासि ?

( ग ) आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः । किमिदानीं करि-

चेट्या कृतं प्रश्नममुं निशम्य सौन्दर्यै रतिपतेः पत्युरुदयनस्य स्वरूपसम्पदा पूर्णं परिचिता तत्सौन्दर्यगुणाकृष्टेव वासवदत्ता तदीयं सौन्दर्यातिशयं निह्नोतुं तद्विपर्ययवचनावेगं च रोद्धुमपारयन्ती सुस्पष्टमाचष्टे—णहि णहीति । निषेधे दार्ढ्यं दर्शयितुं 'नहि नहीं'ति द्विःप्रयोगः । अत्र च 'विरूप' इत्यार्थः कर्ता, राजा तु प्रकृत एव । स खलु राजा विरूपो नास्ति, तत्र तु वैरूप्यशङ्का स्वप्नेऽपि न सम्भवतीत्यर्थः । विरूपता न चेत्साधारणरूपवत्ता स्यादित्याशङ्कायामाह—दंसणीओ इति । एवकारोऽत्रायोगव्यवच्छेदाय । नास्त्यत्र सौन्दर्यस्यायोगः, प्रत्युत सर्वथा तस्य योगः (सत्ता) विद्यत इत्यर्थः । वैरूप्याऽभाववान् स पुनर्दर्शनीयः सुन्दरो नूनमिति भावः ।

आवन्तिकासूचितं तत्सौन्दर्यं श्रवणाभ्यां निपीय तृप्यन्त्यापि प्रियजनगदित-सरसवाक्यजातादतृप्तिमत्येव पद्मावत्या भूयः प्रियविषयकं किमपि प्रियं श्रवणगोचरतां नेतुमुत्कण्ठितयाऽऽवन्तिकामुद्दिश्य विधीयते प्रश्नः—अय्ये इति । आर्ये माननीये इति यावत्, पूर्ववाक्यीयार्थः कर्म । अयि मान्ये ! श्रीमानुदयनः सर्वथा दर्शनीय एवेति कथमवगम्यते भवत्या ? अत्र किल भवत्या वचने सत्यतासूचकं प्रमाणं वर्तते ? उत किमप्येवमेवेदमुच्यते तत्प्रशंसायामिति पद्मावत्युक्तेराशयः ।

श्रुत्वा च पद्मावत्या वचनमिदम्, आर्यपुत्रस्वरूपपरिचयप्रदानेनात्मस्वरूपाविष्करणं शङ्कमाना, चिन्तयत्येवं मनसि वासवदत्ता—अय्यउत्तेत्यादि । आर्यपुत्रस्य पत्युरुदयनस्येति यावत्, पक्षपातः प्रेमा तेन कारणीभूतेन, समुदाचारः कर्तव्यमिति यावत् । अतिक्रान्त उल्लंघितः । अहो ! आर्यपुत्रप्रेम्णो महिम्ना मयाद्य

वासव०—नहीं, नहीं । वे तो सुन्दर ही हैं ।

दासी—आर्ये ! तुम कैसे जानती हो ?

वासव०—(स्वगत) आर्यपुत्र के पक्षपात से मैं अपना कर्तव्य भूल गई । अब क्या करूँ ?

क्कन्दो समुदाआरो। किं दाणिं करिस्सं? होदु, दिट्ठं। [प्रकाशम्] हला! एव्वं उज्जइणीओ जणो मन्तेदि।

*पद्मावती*—(क) जुज्जइ। ण खु एसो उज्जइणीदुल्लहो।

---

ष्यामि? भवतु, दृष्टम्। हला! एवमुज्जयिनीयो जनो मन्त्रयते।

(क) युज्यते। न खल्वेष उज्जयिनीदुर्लभः। सर्वजनमनोऽभिरामं

---

स्वीयं कर्तव्यं विस्मृतम्, यत्किलैतत्स्वरूपसौन्दर्यं प्रतिपाद्य तत्परिज्ञानमात्मनो दर्शितम्। आर्यपुत्रपरिज्ञानशङ्कोत्थापनयाऽनया च नूनं प्रकाशतां नीतमप्रकाशनीयमप्यात्मस्वरूपम्। किमधुना विधेयम्? कथं किन्तु वा प्रदेयं प्रश्नस्यैतस्योत्तरं पद्मावत्यै? महदनुचितं मयैतत्कृतमार्यपुत्रस्वरूपपरिचयप्रदानं नमिति। इत्थं किञ्चिद्विचारानन्तरं प्रश्नस्योत्तरमुपलभ्याह—होदु इति। भवतु अस्तु, अर्थादार्यपुत्रपरिचयप्रदानम्, दृष्टं ज्ञातम्। उत्तरमिति शेषः। आस्तां तावदिदं मया कृतमार्यपुत्रपरिचयप्रदानम्, न तत्र किमपि शङ्कनीयं मया। उत्तरं दास्यमानमिदानीमुपलब्धम्। इत्येवं मानसं विचार्य तदेव प्रकाशमुत्तरं ब्रूते—हलेति। उज्जयिनीयो जन उज्जयिनीनिवासी लोकः, एवं पूर्वोक्तम्, मन्त्रयते विचारयति, कथयतीति यावत्। 'मत्रि गुप्तभाषणे' इति चौरादिकणिजन्तादात्मनेपदे रूपमिदम्। सखि पद्मावति! यन्मयोक्तं राज्ञ उदयनस्य दर्शनीयत्वं, तत्किलोज्जयिनीवासिनो जनाः कथयन्ति। श्रुत्वैवेदं मया निगदितम्। सत्यं चेदं त्वया मन्तव्यम्, यतो 'न ह्यमूला प्रसिद्धि'रिति भावः। 'उज्जयिनीवासिनो जना दर्शनसौभाग्यं प्राप्नुवन्त उदयनस्य राज्ञो दर्शनीयत्वं प्रख्यापयन्तीत्यहमपि तत्रत्या तद्दर्शनसौभाग्यं प्राप्तवती तस्य सौन्दर्यं वचसा प्रकाशयामीत्यत्र किं नामाश्चर्यं सख्याः' इत्येवं गूढमत्र ध्वनितं चतुरिम्णा वासवदत्तयाऽऽवन्तिकया।

आवन्तिकयोक्तमनुमर्थं समर्थयन्ती पद्मावत्याह—जुज्जइ इति। युज्यते सम्भाव्यते, त्वदुक्तं कर्तृ। उज्जयिनीवासिनामुक्तिरियं सङ्गच्छत इत्यर्थः। तत्रापि पुनः कारणमाह—ण खु इति। 'एष उज्जयिनीदुर्लभो न खलु' इत्यन्वयः। एष उदयनलक्षणः, उज्जयिन्या दुर्लभ उज्जयिनीदुर्लभः न खलु अर्थात्सुलभः। उज्ज-

---

अच्छा, उत्तर ध्यान में आ गया। (प्रकाश) ऐसा उज्जयिनी के लोग कहते हैं।

पद्मा०—हो सकता है। यह उज्जैन के लिये असम्भव नहीं। सुन्दरता सब लोगों के

सव्वजणमणोभिरामं खु सोभग्गं णाम ।

[ ततः प्रविशति धात्री । ]

धात्री—(क) जेदु भट्टिदारिआ । भट्टिदारिए ! दिण्णासि ।

---

खलु सौभाग्यं नाम ।

(क) जयतु भर्तृदारिका । भर्तृदारिके ! दत्तासि ।

---

यिनीपदेनात्र तद्वासिनो जना लक्ष्यन्ते । 'सौभाग्यं नाम सर्वजनमनोऽभिरामं खलु' इति सम्बन्धः । सौभाग्यं सौन्दर्यम्, नामेति प्रसिद्धौ, सर्वेषां जनानां मनसोऽभिरामं सुन्दरमाकर्षकम्, खलु वाक्यालङ्कारे । श्रीमानुदयनो नाम दयालू राजा श्वशुरालयं गतः सर्वैरुज्जयिनीवासिभिर्दर्शनमार्गं नीयत इत्यतस्तद्दर्शनसौभाग्यं प्राप्य तथा तस्य सौन्दर्यं शक्यते वर्णयितुम् । प्रसिद्धं चैतत्, यत्–सौन्दर्यं बलादाकर्षतीव चेतः सर्वेषाम् । अतो राजानमुदयनं दृष्ट्वा तत्सौन्दर्याकृष्टचेतनः सर्व एव तत्रत्यास्तदीयं कामनीयकमलौकिकं सर्वतः प्रशंसन्तीति सम्भवत्येतत् । अत्र च–'आवन्तिकया त्वया कदाचिदवलोकितचरैतदीयरामणीयकगुणावर्जितस्वान्तया कथ्यते चेदिदं तदपि नातीवाश्चर्यकर'मिति गूढमाकूतं पद्मावत्याः ।

इत्थं तावदनया मिथः सखीसंलापभङ्गया पद्मावत्याश्चेतस्युदयनविषयाभिलाषविशेषमनिवार्यं गाढमुत्पाद्य साम्प्रतं तदीयवाग्दानपरिसमाप्तिसूचनाभिप्रायेण धात्रीं प्रवेशयति कविः–तत इति । ततः उदयनप्राप्तिप्रवणपद्मावतीहृदयस्थैर्यपरीक्षणानन्तरम्, धात्री उपमाता, मातृवत्पालनं कुर्वती सेविकेत्यर्थः, 'धात्री जनन्यामलकी वसुमत्युपमातृषु' इति कोषः । इयं चात्र पद्मावत्या एवोपमाता बोद्धव्या ।

प्रविष्टा च धात्रीयं प्रस्तुतां तामेव पद्मावतीविवाहसम्बन्धनिष्पत्तिं सूचयति—**जेदु** इति । भर्तृदारिका पद्मावती, जयतु सर्वोत्कर्षेण वर्ततामित्याशीः । एषा च वृद्धया धात्र्या प्रयुक्ता युज्यत एव । चिरं जीवतु सौभाग्यवती नः स्वामिनः कन्या पद्मावतीत्यर्थः । तदेव जयस्य कारणं प्रकृतमाह—**भट्टिदारिए** इति । दत्ताऽसि दानविषयीकृताऽसि, परस्वं जाताऽसीत्यर्थः । दानं चात्र वाचैव सम्भवति । वाग्दानं हि दातृप्रतिग्रहीत्रोः परस्परैकवाक्यतापूर्वको वाङ्निश्चयः । राजकुमारि ! वाग्दानं

---

मन को हरने वाली होती है ।

( तब धाई प्रवेश करती है ।)

धाई—राजकुमारी की जय हो । हे राजकुमारी ! तुम दी गई ।

वासवदत्ता—(क) अय्ये ! कस्स ?

धात्री—(ख) वच्छराअस्स उदअणस्स ।

वासवदत्ता—(ग) अह कुसली सो राआ ?

---

(क) आर्ये ! कस्मै ?

(ख) वत्सराजायोदयनाय ।

(ग) अथ कुशली स राजा ?

---

ते निर्वृत्तम्, सञ्जातपाणिग्रहणेवाधुना त्वं परकीया संवृत्तेति भावः ।

अथैतर्हि तद्विषयकमेव कञ्चन मिथः संलापप्रकारं धात्रीवासवदत्तयोर्दर्शयति कविः । तत्र च धात्रीमुखान्निशम्य पद्मावत्या दानं, पूर्वतो विदितार्थाऽप्यविदितेव वासवदत्ता स्वभर्तुरात्मनि तादृशं दृढमनुरागं विचिन्त्य तदीयभार्यान्तरस्वीकरण-विषये भृशं शङ्कमाना पृच्छति साकूतं धात्रीम्—अय्ये इति । 'आर्ये' इत्येषा च सम्बुद्धिः स्थान एव वासवदत्ताया वृद्धां मातृनिर्विशेषां धात्रीं प्रति । दत्तेति पूर्वतोऽनुवर्तते, कस्मै किन्नामधेयाय पुरुषाय । अयि ! मान्ये ! पुरुषाय कस्मै इयं प्रतिपादिता पद्मावती, कस्तावदस्याः परिग्रहीता वरः । पत्युरस्याः नाम निर्देष्टव्यं भवत्या सुस्पष्टमिति प्रश्नार्थः ।

उत्तरमाह धात्री—**वच्छराअस्स** इति । 'वत्सराजाये'त्युदयनस्य विशेषण-मुदयनान्तरप्रतीतिव्यवच्छेदाय । वत्सदेशाधिपतये उदयनाय प्रतिपादितेयमिति तमेवोदयनमस्याः पतिं जानीहीत्यर्थः ।

पद्मावतीपतीभूतमुदयनं श्रुत्वा तत्कुशलं पृच्छति वासवदत्ता—**अहेति** । अथशब्दः प्रश्नार्थः, 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । कुशली कुशलयुक्तः, 'अत इनिठनौ' इतीन् । 'सः' इत्यनेन प्रक्रान्तः प्रसिद्धश्च उदयनो गृह्यते । अपि कुशलं वर्तते राज्ञ उदयनस्य ? तत्कुशलवृत्तान्तं जिज्ञासमानायै मह्यं तदिदं सुविशदं भवत्या निवेदनीयमिति भावः । अत्र किल—'वत्सराजाय पद्मावती दत्तेति विषयस्यावगतौ वासवदत्तायास्तत्कुशलप्रश्नस्य को वाऽवसरः ?' इत्येवं न शङ्कनीयम्, असह्यतमां नूतनां विरहवेदनामनुभवतो भर्तुरस्वस्थभावस्य

---

वासव०—आर्ये ! किसे ?

धाई—वत्सराज उदयन को ।

वासव०—वे राजा कुशल से तो हैं ?

धात्री—(क) कुसली सो आअदो। तस्स भट्टिदारिआ पडिच्छिदा अ।

वासवदत्ता—(ख) अच्चाहिदं।

धात्री—(ग) किं एत्थ अच्चाहिदं ?

---

(क) कुशली स आगतः। तस्य भर्तृदारिका प्रतीष्टा च।

(ख) अत्याहितम्।

(ग) किमत्रात्याहितम् ?

---

भृशं सम्भावनया विरहावस्थायां तदीयं कुशलमसम्भावयन्त्यास्तादृशप्रश्नविधानस्य लब्धावसरस्य प्रियतमाया वासवदत्तायास्तदानीमत्यन्तं युज्यमानत्वात्।

वासवदत्ताप्रश्नोत्तरगर्भं तदग्रिमवृत्तान्तं निवेदयति धात्री—**कुसलीति**। आगत उपस्थितः, अर्थाद्राजभवनम्। 'तस्ये'ति च सम्बन्धसामान्ये कर्त्रर्थाविवक्षायां षष्ठी, तेनेत्यर्थः। प्रतीष्टा स्वीकृता, अर्थाद्वाचैव। सकुशलावस्थायां विद्यमान उदयनो राजा समयेऽस्मिन् राजभवनं समायातः। आगत्य च सोऽयं वाचा दत्तां राजकुमारीं पद्मावतीं वाचा स्वीकृतवानित्यर्थः। कुशलिनाऽऽगतेन राज्ञोदयनेन वाग्दत्तायाः पद्मावत्याः परिग्रहं कर्तुकामेन तत्स्वीकृतेर्वचनं दत्तमिति भावः।

प्रियतमेनोदयनेन कृतं पत्न्यन्तरपरिग्रहं निशम्य चित्ते समुद्भूतं प्रणयभावसुलभं शोकावेगं निरोद्धुमसमर्था, स्वविषये तदीयनिःस्नेहत्वसम्भावनया महद् भयमुपस्थितं शङ्कमाना सहसा वचनमुद्गिरति वासवदत्ता—**अच्चाहिदं** इति। अत्याहितं महद् भयम्, 'अत्याहितं महाभीति'रिति कोषः। महतो भयस्य स्थानमिदं यत्किलोदयनस्य पद्मावतीपरिग्रहोऽयम्। सम्भावये, तदिदं महान्तमनर्थं जनयिष्यतीति भावः।

कीदृशं महाभयमिति तत्स्वरूपं पृच्छति धात्री—**किं** इति। अत्र उदयनकृते पद्मावतीपरिग्रहे। उदयनेन यदियं पद्मावती परिगृहीता, किं नामात्र विषये महद्-

---

धाई—वे सकुशल आये। उन्होंने राजकुमारी को स्वीकार भी कर लिया।

वासव०—महान् अनर्थ।

धाई—इसमें क्या अनर्थ हुआ ?

वासवदत्ता—(क) ण हु किञ्चि। तह णाम सन्तप्पिअ उदासीणो होदि त्ति।

धात्री—(ख) अय्ये! आअमप्पहाणाणि सुलहपय्यवत्थाणाणि महापुरुसहिअआणि होन्ति।

---

(क) न खलु किञ्चित्। तथा नाम सन्तप्योदासीनो भवतीति।

(ख) आर्ये! आगमप्रधानानि सुलभपर्यवस्थानानि महापुरुषहृदयानि भवन्ति।

---

भयं सम्भाव्यते भवत्या तदेतदधुना स्पष्टीकरणीयमिति धात्रीवचनस्याभिप्रायः।

प्रणयरभसादुक्तस्य वचसः सङ्गतिं दर्शयति चातुर्येण रहस्यगोपनं कर्तुकामा वासवदत्ता—ण हु इति। खल्विति वाक्यालङ्कारे, अन्यदिति शेषः, अत्याहितं कर्तुं। तथा तेन प्रकारेण ब्रह्मचारिसूचितेन पूर्वोक्तेन 'हा! प्रिये! वासवदत्ते' इत्यादिरूपेणेति यावत्, नामेति वाक्यालङ्कृतौ, सन्तप्य सन्तापं कृत्वा विलप्येत्यर्थः, उदासीनो विरक्तः स्नेहशून्यः अर्थाद्वासवदत्तायाम्, भवति अभूत्, भूतार्थे लट्। अत्रोदयनः कर्ता। अन्यत्तु महद्भयं किमपि नास्ति, एतदेव किल तद्वर्तते यद्राज्ञोदयनेन वासवदत्तया वियुक्तेन तदर्थं 'हा प्रिये' इत्यादि पूर्वं बहु विलप्येदानीं पुनस्तत्सर्वं विस्मृत्य नूतनां पत्नीं प्रतिगृह्णता वासवदत्तायां नूनं स्नेहरहितेन सञ्जातमिति विचार्य तथोक्तं मयेति भावः।

वासवदत्तया सम्भावितमत्याहितं निषेधन्ती वचनं प्रयुङ्क्ते धात्री-अय्ये इति। 'आगमप्रधानानि महापुरुषहृदयानि सुलभपर्यवस्थानानि भवन्ती'त्यन्वयः। आगमः प्रधानं मुख्यो येषु तान्यागमप्रधानानि, आगमपदेनात्राऽऽगमोपदेशो गृह्यते, आगमश्च शास्त्रम्। महापुरुषहृदयानि महात्मनामुदारप्रकृतीनां चेतांसि, सुलभं सुसम्भवं सुकरमिति यावत्, पर्यवस्थानं विकारपरित्यागद्वारा स्वरूपेणावस्थितिर्येषां तानि सुलभपर्यवस्थानानि, भवन्ति जायन्ते। अयि! मान्ये! आवन्तिके! महात्मनां चेतःसु शास्त्रोपदेशः स्थानं लभते, अतः समयमहिम्ना विकृतमानसा यत्

---

वासव०—और कुछ नहीं। वैसे दुखी होकर (वासवदत्ता में) उदासीन हो गये।

धाई—बड़े लोगों के हृदय शास्त्रों के (उपदेशों) की ओर झुके होने से सहज ही अपनी प्रकृति पर आजाते हैं।

वासवदत्ता—(क) अय्ये ! सअं एव्व तेण वरिदा ?

धात्री—(ख) णहि णहि । अण्णप्पओअणेण इह आअदस्स अभिजणविज्ञाणवओरूवं पेक्खिअ सअं एव्व महाराएण दिण्णा ।

---

(क) आर्ये ! स्वयमेव तेन वरिता ?

(ख) नहि नहि । अन्यप्रयोजनेनेहागतस्याभिजनविज्ञानवयोरूपं दृष्ट्वा स्वयमेव महाराजेन दत्ता ।

---

किञ्चित्कुर्वन्तोऽपि ते शास्त्रोपदिष्टमानसिकविवेकबलेन स्वीयां पूर्वां प्रकृतिं न कदापि त्यजन्तीति वाक्यार्थः । अयमाशयः—महानुभावः श्रीमानुदयनः कार्यविशेषेण पद्मावत्याः प्रतिग्रहं कृतवानपि वासवदत्तायाः स्नेहमहिमानं न नाम जातु विस्मरिष्यति । अङ्गीकृतपरिपालनं हि महात्मनां प्रकृतिरेव । अतो नूतनोऽयमारोपितः पद्मावतीविषयकः स्नेहभावस्तस्य राज्ञो हृदयेऽनुस्यूतचरं वासवदत्ताविषयकं रतिभावं कथमप्यपाकर्तुं न तावत्प्रभविष्यतीति ।

इत्थं धात्र्या वचनेन भर्तुर्निःस्नेहत्वसम्भावनायां शिथिलितायामपि स्वविषये पुनस्तदीयप्रेमदार्ढ्यं परीक्षितुकामा पृच्छति धात्रीं वासवदत्ता—अय्ये इति । वरिता प्राप्तुमिष्टा, ईप्सार्थकाच्चौरादिकाद् वरधातोः क्तप्रत्यये स्त्रीत्वाट्टाप् । अयि ! पूज्ये ! श्रीमानुदयनः स्वत एव तां पद्मावतीं प्राप्तुमैच्छत्किमिति प्रश्नार्थः । पद्मावतीगतचेता यदि स मत्प्रियो राजा न तां प्रार्थितवांस्तर्हि पूर्वोक्ता मम तद्विषयिणी शङ्का नूनं तदवस्थैवेति मनोगतमाकूतं प्रश्नेऽस्मिन् वासवदत्तायाः ।

उत्तरयति वासवदत्तायाः प्रश्नं धात्री—**णहीति** । अत्र च पूर्वोक्तं निषिध्यते, द्वौ नञौ पूर्वोक्तार्थस्य सर्वथाऽभावं द्योतयतः । उदयनः स्वयं पद्मावतीं प्राप्तुं नैवैच्छदित्यर्थः । तर्हि कथं तस्य तत्प्राप्तिरित्याशङ्क्य 'तस्य तत्प्राप्तीच्छा न स्वतः, किन्तु परत' इत्याह—**अण्णप्पओअणेणेति** । अन्यप्रयोजनेन कारणान्तरेण, इह राजभवने, अभिजनविज्ञानवयोरूपम् , अभिजनश्च विज्ञानं च वयश्च रूपं चेति समाहारद्वन्द्वे क्लीबत्वमेकत्वं च, अभिजनः कुलम् , 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इति कोषः, विज्ञानं वीणावादनादिविषयकं विशिष्टं ज्ञानम् ,

---

वासव०—आर्ये ! क्या स्वयं ही उन्होंने वरण किया ?

धाई—नहीं नहीं । दूसरे काम से यहाँ आये हुए उनके कुल, ज्ञान, वय और रूप को देखकर महाराज ने स्वयं ही इन्हें दे दिया ।

*वासवदत्ता*—[ आत्मगतम् ] (क) एव्वं ! अणवरद्धो दाणिं एत्थ अय्यउत्तो ।

[ प्रविश्यापरा ]

---

(क) एवम् ! अनपराद्ध इदानीमत्रार्यपुत्रः ।

---

वयो नूतनं युवावस्थेति यावत्, रूपं सौन्दर्यम् । महाराजेन दर्शकनामधेयेन राज्ञा । केनापि कारणेन सम्प्रति राजभवनं प्राप्तस्य राज्ञ उदयनस्य कुलीनतां कलाकौशलं यौवनं सुन्दरतां च प्रत्यक्षं निरूप्य महाराजो दर्शकः किल स्वभगिनीं पद्मावतीं तेनाप्रार्थितामपि तस्मा उदयनाय वरगुणसम्पन्नाय वराय स्वयं सादरं प्रतिपादितवानिति भावः ।

धात्र्या प्रतिपादितमेतादृशं स्वभर्तुः पद्मावतीप्राप्तेः प्रकारमवगत्य तां तद्विषयिणीं मानसीं शङ्कामपाकुर्वाणा चित्तेऽभिवृत्ते ससन्तोषं वासवदत्ता—**एव्वं** इति । एवम् इत्थम्, एतादृशः पद्मावतीपरिग्रहप्रकार इति यावत् । अत्र पद्मावतीपरिग्रहविषये, अनपराद्धः अकृतापराधो निर्दोष इत्यर्थः, कर्तरि क्तः । भर्तुः किल पद्मावत्याः प्राप्तेर्विषये वृत्तमेतादृशं वर्त्तते । इत्थं सति समयेऽस्मिन्नप्रार्थनयैव स्वयमुपगतां साक्षाल्लक्ष्मीमिव पद्मावतीं प्रतिगृह्णन्नार्यपुत्रो मत्प्रियोऽयं दोषभाजनं नास्तीति न मया तत्र नृपा स्वविषयकं निःस्नेहत्वंदयं शङ्कनीयमिति भावः । 'कार्यविशेषापेक्षितया हि महत्तमार्थसाधिकां पद्मावतीं पर्यग्रहीदार्यपुत्रो न किल कामनया । न च सम्भावनीयं मयाऽदो, यदेष तां प्रतिगृह्णन् सहजं मयि स्नेहानुबन्धं लघयिष्यति । सर्वथेदं कार्यं प्रशंसनीयं प्रियतमाभ्युदयाभिलाषिण्या मये'ति वासवदत्तात्मगतोक्ते रहस्यम् ।

इत्यनेतावता प्रबन्धेन वाच्यार्थमहिम्ना पद्मावत्या उदयनगतं सविशेषं रतिभावं प्रतिपाद्य व्यङ्ग्यमर्यादयोदयनस्यापि हृद्गतं पद्मावतीविषयकानुरागविशेषं संसूच्य परस्परं दम्पत्योरनयोश्चेतस्यलौकिकप्रेमबीजारोपणं कविना कृतम् । एतेन प्रकृतकार्यसिद्धेः सूचनापि संवृत्ता ।

इदानीं किलैतस्मिन्महनीयतमे वासवदत्तयाऽनुमते विवाहे पद्मावत्याः कौतुकमङ्गलाचरणस्य लब्धावसरत्वं सूचयितुं तदर्थं च धात्रीं त्वरयितुमपरस्याश्चेट्याः प्रवेशमाह कविः—**प्रविश्येति** । अपरा चेटीत्यर्थः ।

---

वासव०—( स्वगत ) ऐसा ! तो इस विषय में आर्यपुत्र अब दोषी नहीं ।

( दूसरी दासी आकर )

चेटी—(क) तुवरदु तुवरदु दाव अय्या। अज्ज एव्व किल सोभणं णक्खत्तं। अज्ज एव्व कोदुअमङ्गलं कादव्वं त्ति अह्माणं भट्टिणी भणादि।

वासवदत्ता—[आत्मगतम्] (ख) जह जह तुवरदि, तह तह अन्धीकरेदि मे हिअअं।

---

(क) त्वरतां त्वरतां तावदार्या। अद्यैव किल शोभनं नक्षत्रम्। अद्यैव कौतुकमङ्गलं कर्तव्यमित्यस्माकं भट्टिनी भणति।

(ख) यथा यथा त्वरते, तथा तथान्धीकरोति मे हृदयम्।

---

कृतप्रवेशा चेयं चेटी ब्रूते—**तुवरदु** इति। 'त्वरतां त्वरता'मिति त्वराऽतिशयद्योतनार्था द्विरुक्तिः। तावद्वाक्यालङ्कृतौ, आर्या धात्री। सम्प्रतीतः प्रस्थातुं धात्र्या त्वराविशेषोऽवलम्ब्यतामित्यर्थः। तदेव त्वराकरणस्य कारणमाह—**अज्ज एव्वेति**। किलेति निश्चये, कौतुकमङ्गलं विवाहमङ्गलसूत्रबन्धनरूपं शुभकार्यम्, भट्टिनी अकृताभिषेका दर्शकस्य राज्ञः पत्नी, 'देवी कृताभिषेकायामितरासु तु भट्टिनी'त्यमरः। भणति कथयति, आज्ञापयतीति यावत्। नूनमद्यतन एव दिवसे मङ्गलकार्यानुकूलं सुन्दरं नक्षत्रं वर्तते। अस्मिन्नेव दिने पद्मावत्याः करे वैवाहिकमङ्गलोचितं मङ्गलसूत्रं बन्धनीयमित्यतस्तदर्थं तत्र कौतुकागारे (मङ्गलगृहे) शीघ्रं प्रवेशनीया पद्मावतीत्यस्मदीयस्वामिन्या आदेश इत्यर्थः। 'शुभं शीघ्रं विधातव्यम्, श्रेयांसि च बहुविघ्नानि भवन्तीति नयानुसारेण पद्मावतीविवाहमङ्गलकार्यमिदानीं शीघ्रमनुष्ठातव्यम्, अद्यैव दिनशुद्धिरिति मङ्गलकार्यानुकूलं दिनान्तरं नान्वेषणीयम्, एष एव च मङ्गलसूत्रबन्धनौपयिकः समीचीनोऽवसर इति लग्नवेला यथा न विचलेत्तथा त्वरयैतत्सम्पादनीयम्, अतः श्रीमत्या पद्मावत्या सह विवाहमङ्गलागारे शीघ्रमुपस्थातव्यं भवत्ये'ति राज्ञ्या आज्ञां सूचयन्त्याश्चेट्या वचनस्याभिप्रायः।

अनुना हि चेटीवचनेन पद्मावतीविवाहसमयस्यासन्नतमत्वं विचार्य पुनरप्यविवेकवशादिव सपत्नीभावसमुचितं महामोहं नाटयति चित्ते वासवदत्ता—**जह जहेति**। अत्र चेटी कर्त्री। अन्धीकरोति, अनन्धमन्धं करोतीत्यर्थे 'कृभ्वस्तियोगे

---

दासी—बस आप शीघ्रता करें। आज ही अच्छा नक्षत्र (दिन) है, आज ही मङ्गल कार्य (सगुन) करना होगा—ऐसा हमलोगों की स्वामिनी रानी कहती हैं।

वासव—(स्वगत) जैसे जैसे यह त्वरा कर रही है, वैसे वैसे मेरे हृदय को अन्धा (किंकर्तव्यमूढ) बना रही है।

धात्री—(क) एदु एदु भट्टिदारिआ।

[ निष्क्रान्ताः सर्वे। ]

द्वितीयोऽङ्कः।

---

# अथ तृतीयोऽङ्कः।

[ ततः प्रविशति विचिन्तयन्ती वासवदत्ता। ]

---

( क ) एत्वेतु भर्तृदारिका।

---

सम्पद्यकर्तरि च्वि'रिति च्विप्रत्ययः, 'अस्य च्वा'वितीत्वम्। हृदयं कर्म। हृदयस्यान्ध्यं च अज्ञानरूपम्, तेन च तत्र विवेकदर्शितायाः प्रतिरोधः सुलभ एव। यावद्यावदियं त्वरयति धात्री चेटी, तावत्तावन्मदीयं हृदयमिदमज्ञानमयीं विचारशून्यतादशां नयतीत्यर्थः। त्वरयन्त्याश्चेट्या वचनान्मूढं मनो मेऽधुना प्रतिपत्तिशून्यतां गाहत इति भावः। पूर्वं किल वासवदत्तया धात्रीवचनेन प्रियतमोदयनविवाहसम्बन्धान्तरसम्भवं मानसं शङ्काकलङ्कमपनयन्त्या कथमपि हृदयं समाहितमासीद्विवेकमहिम्ना। इदानीं तु पुनरसावपरस्याश्चेट्या इदं पद्मावतीविवाहमङ्गलाचारणत्वरासम्पादकं वचनं निशम्य महामोहमयीं विवेकाभावकृतां विषण्णावस्थां प्रत्यपद्यतेत्यहो! सहजस्नेहस्य महिमा।

चेटीवचनात्पद्मावतीं तत्र गन्तुं प्रवर्तयन्ती धात्री वचनमाह—**एदु एदु इति**। द्विरुक्तिरियं गमनत्वरायामादरे च। आगम्यतामागम्यतां राजकुमार्या मन्निर्दिष्टेनाध्वना गम्यतां कौतुकागारमित्यर्थः।

इत्थं पद्मावत्याः कौतुकागारगमनं प्रस्तुत्य तदनुसारं द्वितीयाङ्कसमाप्तिसूचकं रङ्गमञ्चात्सकलानां निर्गमनं दर्शयति कविः—**निष्क्रान्ता** इति।

अङ्कसमाप्तिं सूचयति—**द्वितीयोऽङ्क** इति।

**इति श्रीस्वप्नवासवदत्तव्याख्यायां प्रबोधिन्यां द्वितीयोऽङ्कः।**

तृतीयाङ्कोपक्रमं प्रतिजानीते—**अथेति**। अथ द्वितीयाङ्कसमाप्तेरनन्तरम्, तृतीयाङ्कः उपक्रम्यत इति शेषः।

ततः **प्रविशतीति**। इत्थमधुना सुन्दरतरसखीसंलापभङ्ग्या द्वितीयाङ्के सूचितं

---

धाई—आओ, राजकुमारी! आओ।

( सब लोगों का प्रस्थान )

दूसरा अङ्क समाप्त।

---

( सोचती हुई वासवदत्ता आती है। )

*वासवदत्ता*—(क) विवाहामोदसङ्कुले अन्तेउरचउस्साले परित्तिजिअ पदुमावदिं इह आअदह्मि पमदवणं। जाव दाणिं भाअधेअणिव्वुत्तं दुःखं विणोदेमि। [ परिक्रम्य ] अहो! अच्चाहिदं। अय्यउत्तो

( क ) विवाहामोदसङ्कुले अन्तःपुरचतुश्शाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवनम्। यावदिदानीं भागधेयनिर्वृत्तं दुःखं विनोदयामि। अहो! अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः। यावद्

प्रियतमोदयनस्य विवाहसम्बन्धं पद्मावत्या समं निश्चितमवगत्य तद्धेतुकं चिन्तानुभावं नाटयन्त्याः पद्मावतीकौतुकमालिकागुम्फने नियोक्ष्यमाणाया वासवदत्तायाः समुचितं प्रवेशमाह कविः।

वासवदत्ताया मनोगतं वितर्कमाह—**विवाहामोदेत्यादि**। विवाहस्य पद्मावतीपरिणयस्य आमोद आनन्दो येषां तादृशैर्बान्धवजनैरिति यावत्, सङ्कुले परिपूर्णे, अथवा विवाहामोदेन वान्धवजनाभिनीतेन पद्मावतीपरिणयानन्देन सङ्कुले विवाहमहोत्सवशालिनीत्यर्थः। विवाहोत्सवानन्दसन्दोहमग्नैर्बान्धवजनैः परिपूर्णस्यान्तःपुरचतुःशालस्येयमानन्दपूर्णत्वोक्तिरौपचारिकी वा बोद्धव्या। अत्र च पक्षे तत्रत्यानन्दोत्सवस्य सर्वतो व्याप्तत्वं भूयस्त्वं च द्योत्येते। विशेषणं चेदमन्तःपुरचतुःशालस्य। चतुःशालं हि परस्पराभिमुखीनां शालानां चतुष्टयेन संयुक्तं सदनमुच्यते। प्रमदवनञ्च अन्तःपुरविहारोचितमुद्यानम्। अन्तःपुरे पद्मावत्या अवस्थानं तु वरागमनप्रतीक्षामूलकम्। तत्र च बहुजनाकीर्णे वासवदत्तायाः प्रच्छन्नरूपाया अवस्थातुमनौचित्येन प्रमदवनप्रस्थानं युज्यते। भागधेयनिर्वृत्तम् स्वीयदुर्दैवलब्धम्, दुःखम् आर्यपुत्रानवाप्तिरूपम्, विनोदयामि यावत्, अपनेष्यामीत्यर्थः। 'यावत्पुरानिपातयोर्लट्' इति भविष्यदर्थे लट्। विजने दुःखस्य लब्धप्रसरत्वात्तदुत्कण्ठाविनोदैरिवात्मानं विनोदयिष्यामीत्यर्थः। तामेव चिन्तां नाटयति—**परिक्रम्येति**। कतिचित्पदानि गत्वेत्यर्थः। अहो इत्याश्चर्ये। अत्याहितं महाभीतिः महत्कष्टमिदम्। तदेवाह—**अय्यउत्तो** इति। नामेति स्मरणे। परकीयः अन्यस्याः

वासव०—ब्याह की खुशी से भरे हुए राजमहल के कोहबरमें पद्मावती को छोड़कर मैं यहाँ आराम-बाग में आई हूँ। तो अब मेरे दुर्भाग्य से उपस्थित दुःख को कुछ शान्त करूँ।

वि णाम परकेरओ संवुत्तो । जा उवविसामि । [ उपविश्य ] धण्णा खु चक्कवाअवहू, जा अण्णोण्णविरहिदा ण जीवइ । ण खु अहं पाणाणि परित्तजामि । अय्यउत्तं पेक्खामि त्ति एदिणा मणोरहेण जीवामि मन्दभाआ ।

---

उपविशामि । धन्या खलु चक्रवाकवधूः, याऽन्योन्यविरहिता न जीवति । न खल्वहं प्राणान् परित्यजामि । आर्यपुत्रं पश्यामीत्येतेन मनोरथेन जीवामि मन्दभागा ।

---

पद्मावत्याः सम्बन्धी पतिरिति यावत्, संवृत्तः सञ्जातः । मय्यनुरागबाहुल्यं वहतोऽप्यार्यपुत्रस्य पद्मावतीप्रियतमभावो मे महते विस्मयाय कष्टाय चेति भावः । पुनरपि चिन्तावैकल्यमेव दर्शयति—**उपविश्येति** । क्वचित्प्रदेशे स्थितिं कृत्वेत्यर्थः । परिक्रमोपवेशौ वासवदत्ताया एकत्रानवस्थानेच्छामूलकं चिन्ताविशेषं सूचयतः । प्रियवियोगिनीं जीवन्तीमात्मानं निन्दति—**धण्णेति** । धन्या अभिनन्दनीया, खलु निश्चये, अन्योन्यविरहिता परस्परं वियुक्ता प्रियेण विनाकृतेत्यर्थः, न जीवति प्राणांस्त्यक्तुं चेष्टत इति यावत् । खलुस्त्वर्थे अहन्तु इत्यर्थः । 'एकाकिनी चक्रवाकी जीवितुं नोत्सहमाना नूनं प्रशंसनीया, अहन्तु प्रियवियुक्तापि जीवन्ती निन्दनीयास्मी'ति तिर्यग्जातितोऽपि हीनमात्मानं मन्यते वासवदत्ता । जीवने कारणमाह—**अय्य उत्तं** इति । पश्यामीति वर्तमानसामीप्ये भविष्यदर्थे लट् । एतेनार्यपुत्रदर्शनस्य सम्प्रति प्राप्तावसरत्वं सूच्यते । मनोरथेन आशया । पद्मावतीविवाहप्रसङ्गेन समागत आर्यपुत्रो नूनं नयनगोचरतां गच्छेदित्याशातन्तुरेव प्रियवियोगदशायां वासवदत्ताया मम जीवनेऽवलम्बनमस्तीति भावः । वियोगे किल प्राणिनां प्रियजनसमागमप्रत्याशयैव किमपि समाश्वासनं भवति । तथा च **मेघदूते**—'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां, सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धि' इति ।

पद्मावतीपरिणयौपयिकीं मङ्गलस्रजं वासवदत्तया ( आवन्तिकया ) निर्मापयितु-

---

( घूम कर ) हाय ? अनर्थ ( गजब ) हुआ । आर्यपुत्र भी मला पराये होगये अच्छा, बैठूँ । ( बैठ कर ) चकई धन्य है, जो एक दूसरे ( चकवा ) से बिछुड़ते ही जीती नहीं रहती । मैं तो प्राणों को नहीं छोड़ती । मैं अभागिन पति को फिर देखूँगी, इस इच्छा से जीती जागती हूँ

[ ततः प्रविशति पुष्पाणि गृहीत्वा चेटी । ]

चेटी—(क) कहिं णु खु गदा अय्या आवन्तिआ ? [ परिक्रम्यावलोक्य ] अम्मो ! इअं चिन्तासुण्णहिअआ णीहारपडिहदचन्दलेहा विअ अमण्डिदभद्दअं वेसं धारअन्दी पिअङ्गुसिलापट्टए उवविट्ठा ।

---

( क ) क्व नु खलु गता आर्यावन्तिका ? अम्मो ! इयं चिन्ताशून्यहृदया नीहारप्रतिहतचन्द्रलेखेवामण्डितभद्रकं वेषं धारयन्ती प्रियङ्गुशिलापट्टके उपविष्टा । यावदुपसर्पामि । आर्ये ! आवन्तिके !

---

मीहमानायाश्चिरं तन्मार्गणं कुर्वत्या गृहीतपुष्पायाश्चेट्याः प्रवेशमाह—**ततः प्रविशतीति** ।

वासवदत्तान्वेषणपरायणायाश्चेट्या मानसिकं वितर्कमाह—**कहिं णु** इति । आवन्तिका अवन्त्यां भवेत्यर्थः । 'तत्र भवः' इत्यधिकारे 'काश्यादिभ्यष्ठञ्ञिठौ' इत्यनेन काश्यादेराकृतिगणत्वकल्पनया ञिठप्रत्ययः, तस्येकादेशे स्त्रीत्वाट्टाप् । पूज्या आवन्तिका साम्प्रतं क्वास्तीति चेट्या वितर्कः । परिक्रम्यावलोक्य, किञ्चिद् गत्वा प्रमदवनस्थां तां दृष्ट्वाह—**अम्मो** इति । विस्मयानन्दसूचकमव्ययमिदम् । तां सचिन्तावस्थां दृष्ट्वा विस्मयस्तत्प्राप्त्या च हर्षः । चिन्ताशून्यहृदया, चिन्तया प्रियचिन्तनेन हेतुना शून्यं ज्ञानशून्यं किङ्कर्तव्यमूढं हृदयं मनो यस्यास्तादृशी, नीहारप्रतिहतचन्द्रलेखा, नीहारेण हिमेन प्रतिहता ताडिता आवृता या चन्द्रलेखा चन्द्रकला तादृशी, अमण्डितभद्रकम् अलङ्काररहीनमपि सुन्दरम् , भद्रकमिति स्वार्थे कः, स्वभावसुन्दरमिति यावत् , वेषं स्वरूपं धारयन्ती बिभ्राणा । उभयत्रोपमानोपमेययोरिदं विशेषणं योज्यम् । प्रियङ्गुशिलापट्टके, प्रियङ्गोः फलिनीवृक्षस्य तत्सम्बन्धिनि तदधःस्थे तत्समीपस्थे वा शिलापट्टके विशालपाषाणखण्डे, उपविष्टा स्थिता, वर्तत इति शेषः । सेयमावन्तिका विचारमग्ना तुहिनच्छन्नेन्दुकलेव स्वाभाविकं सौन्दर्यं वहन्ती फलिनीवृक्षसम्बन्धिनि विशालपाषाणखण्डे स्थिता दृश्यत इति

---

( दासी फूलों को लेकर आती है । )

दासी—आर्या अवन्ति—देशवाली भला कहाँ चली गई ? ( घूमकर और देखकर ) अहो ! ये तो मारे चिन्ता के अपने आपको भी भूलकर कुहरे के पड़ने से चन्द्रमा की कला की भाँति फीकी मालूम पड़ती हुई प्रियङ्गुलता के नीचे पत्थर की चौकी पर बिना बनाये ही सुन्दर मालूम होनेवाले वेश को धारण किये हुए बैठी हैं । अच्छा, पास जाऊं । ( पास

चेटी—(क) अय्ये ! मा दाणिं अण्णं चिन्तिअ। एसो जामादुओ मणिभूमीए ह्लाअदि। सिग्घं दाव गुह्लदु अय्या।

वासवदत्ता—[ आत्मगतम् ] (ख) ण सक्कुणोमि अण्णं चिन्तेदुं। [ प्रकाशम् ] हला ! किं दिट्ठो जामादुओ ?

( क ) आर्ये ! मेदानीमन्यच्चिन्तयित्वा। एष जामाता मणिभूम्यां स्नायति। शीघ्रं तावद् गुम्फत्वार्या।

( ख ) न शक्नोम्यन्यच्चिन्तयितुम। हला ! किं दृष्टो जामाता ?

ऽनभिलषणीयमिदं वस्तु मत्करेण सम्पादयितुं समर्था देवास्तदधिकारिणो नरा वा मयि नूनं निर्दयतां दर्शयन्ति, समर्थानां कृते किमशक्यम् ? सर्वं ते कर्तुमर्हन्तीति भावः।

आवन्तिकां किमायन्तश्चिन्तयन्तीमभिलक्ष्य चेटी ब्रूते—अय्ये इति। इदानीं समुपस्थितेऽस्मिन् विवाहावसरे अन्यत् मा चिन्तयित्वा विषयान्तरं न विचारणीयम्। मङ्गलकार्यावसरे विचारान्तरमकृत्वा तदेव शीघ्रं निष्पादनीयमिदानीं भवत्येत्यर्थः। 'मा चिन्तयित्वा' इत्यत्र मायोगे क्त्वाप्रत्ययस्तु 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति सूत्रे अलंखल्वोरुपलक्षणार्थकत्वकल्पनया कथञ्चित्साध्यः। वस्तुतस्तु महाकवयः कुत्रचित्किमपि यथेच्छं प्रयुञ्जानाः प्रयोगविषये स्वतन्त्रतामात्मनः ख्यापयन्तो निरङ्कुशत्वं स्वकीयं व्यञ्जयन्तितमाम्। एष समीपस्थः, जामाता वरः, मणिभूम्यां मणिमयगृहे मणिमयवेदिकायां वा, स्नायति स्नानं करोति, 'ष्णै शौचे' इति भौवादिकस्येदं रूपम्। तावद्वाक्यालङ्कारे। विचारान्तरानुष्ठानस्य नाद्य समयः। मङ्गलस्नानमाचरत्यधुना जामाता। स्नानानन्तरमेव हि मङ्गलमालिका धारणीया वरेण। अतः सत्वरमेव सा ग्रथ्यतां भवत्येति तात्पर्यार्थः।

आत्मगतमित्यादिना 'दुर्दैवादवसराभावाच्चेदानीं विचारान्तरं कर्तुं न पारयाम्यहं तपस्विनी'त्यात्मनि गूढार्थं विचार्य पुनः स्वभर्तृविषयकं वृत्तं श्रोतुमुत्कण्ठमाना प्रकटार्थं ब्रूते वासवदत्ता—हलेति। चेट्या समं विस्रम्भालापं कर्तुकामया प्रियप्रवृत्ति जिज्ञासमानया वासवदत्तया चेटीयं सखीबुद्धया हलेति सम्बोध्यते। किं इति। अपि नाम जामातुर्दर्शनं ते जातम् ?

दासी—आर्ये ! इस समय दूसरा न सोचें, ये दामाद मणिमय चौकी पर नहा रहे हैं। इसलिये आप जल्दी गूँथ दें।

वासव०—(स्वगत) दूसरा नहीं सोच सकती हूं। (प्रकाश) अरी ! क्या दामाद को देखा ?

*चेटी*—(क) आम, दिट्ठो भट्टिदारिआए सिणेहेण अह्माअं कोदूहलेण अ ।

*वासवदत्ता*—(ख) कीदिसो जामादुओ ?

*चेटी*—(ग) अय्ये ! भणामि दाव, ण ईरिसो दिट्ठपुरुवो ।

*वासवदत्ता*—(घ) हला ! भणाहि भणाहि, किं दंसणीओ ?

---

(क) आम, दृष्टो भर्तृदारिकायाः स्नेहेनास्माकं कौतूहलेन च ।
(ख) कीदृशो जामाता ?
(ग) आर्ये ! भणामि तावद्, नेदृशो दृष्टपूर्वः ।
(घ) हला ! भण भण, किं दर्शनीयः ?

---

**आमेति** । आमेत्यव्ययं स्वीकृतौ । अन्यत्किम् ? राजकुमार्याः पद्मावत्याः स्नेहादस्मदीयकौतूहलाच्च जामातुर्दर्शनसौभाग्यं लब्धं मयेति चेट्युक्तिः । तद्दर्शने राजकुमार्यामस्माकं स्नेहोऽस्मदीयतद्दर्शनोत्कटाभिलापश्चेत्युभय कारणमित्यर्थः ।

प्रियतमस्वरूपं पूर्णं जानत्यपि चेटीमुखेन तद्वर्णनं श्रोतुमिच्छन्त्युत्कण्ठातिशयेन चेटीं तत्स्वरूपं पृच्छति वासवदत्ता—**कीदिसो** इति । सुरूपः कुरूपो वा सः ? कथय, तत्स्वरूपं कीदृशम् ?

आवन्तिकाकुतूहलोद्धर्षनायोभयथापि सङ्गच्छमानमस्पष्टमाचष्टे चेटी—**अय्ये** इति । अत्र वाक्यार्थः कर्म, तावच्छब्दो वाक्यालङ्कारे । दृष्टपूर्वः पूर्वं दृष्टः, मयूरव्यंसकादित्वात्समासः । कथयाम्यहम्, एतज्जामातृसदृशः पुरुषो न कुत्रापि पूर्वं दृष्टोऽभूत् । अपूर्वदर्शनः स नूनं जामाता वर्तत इत्यभिप्रायः ।

औत्सुक्यमात्मनो दर्शयन्ती ततोऽभिधत्ते वासवदत्ता—**हलेति** । 'भण भण' इति श्रवणत्वरया द्विरुक्तिः । दर्शनीयः द्रष्टुं योग्यम्, अर्थात्सुरूपः ? गूढमुक्तं त्वया । सुरूपः स कुरूपो वेत्यत्र न किमपि ते स्फुटीकरोति वचनम् । स्फुटं कथय शीघ्रम्, स किं सुन्दरः ?

---

दासी—हाँ, राजकुमारी के स्नेह और अपने कौतूहल से देखा ।
वासव०—दामाद कैसे हैं ?
दासी—आर्ये ! कहती हूँ कि ऐसे दामाद कभी पहिले देखे ही नहीं ।
वासव०—अरी ! कहो कहो, क्या सुन्दर हैं ?

चेटी—(क) सक्कं भणिदुं सरचावहीणो खामदेवो त्ति ।

वासवदत्ता—(ख) होदु एत्तअं ।

चेटी—(ग) किण्णिमित्तं वारेसि ?

वासवदत्ता—(घ) अजुत्तं परपुरुससङ्कित्तणं सोदुम् ।

---

( क ) शक्यं भणितुं शरचापहीनः कामदेव इति ।
( ख ) भवत्वेतावत् ।
( ग ) किन्निमित्तं वारयसि ?
( घ ) अयुक्तं परपुरुषसङ्कीर्त्तनं श्रोतुम् ।

---

आवन्तिकाप्रश्ने चेट्युत्तरं ददाति—**सक्कं** इति । जामाता पूर्वतोऽनुवर्तते । स किल जामाता पुष्पमयाभ्यां बाणकार्मुकाभ्यां विरहितः साक्षात्कामदेव इति कथयितुं शक्यते । कामदेवः किल बाणकार्मुकाभ्यां समन्वितः श्रूयते, अयन्तु ताभ्यां विहीनोऽपि सौन्दर्यातिरेकात्तयात्वेनोपलक्ष्यत इति भावः । स्वरूपेणावतीर्णः कामो बाणकार्मुकौ धत्ते, एतद्रूपेणावतीर्णस्तु न तथेति तात्पर्यम् । भेदेऽपि न्यूनताद्रूप्यरूपकालङ्कृतिरत्र ।

चेट्या वचनमिदं निशम्य प्रियतमस्वरूपं मूर्तमिव पश्यन्ती वियोगविकला तदुद्दीपकमधिकं श्रोतुमनिच्छन्ती प्रियप्रेम्णात्मानं विस्मृत्य वासवदत्ता ब्रूते—**होदु** इति । भवतु अलमिति यावत्, एतावत् इयत्, वर्णनमिति शेषः । पर्याप्तमियत् तत्स्वरूपवर्णनम्, नेतोऽधिकं किमपि वर्णय ।

इत्थं निषेधन्तीमावन्तिकां पृच्छति चेटी—**किण्णिमित्तं** इति । किं निमित्तं यस्यां वारणक्रियायामिति किन्निमित्तम् । क्रियाविशेषणमिदम् । जामातृविषयकं वर्णनं कुर्वतीं मां किमर्थं निषेधसि ? किं तात्पर्यं तन्निवारणस्य ते ?

रभसादुक्तचरमात्मनोऽवस्थाविचारेण समर्थयन्ती चेट्या वचनमुत्तरयति वासवदत्ता—**अजुत्तं** इति । सङ्कीर्तनम् वर्णनम् । परपुरुषवर्णनं पतिव्रताभिर्नाकर्ण-

---

दासी—बिना धनुष और बाण के कामदेव हैं—ऐसा कहा जा सकता है ।

वासव०—इतना ही बस ।

दासी—क्यों मना करती हैं ।

वासव०—पराये पुरुष का वर्णन सुनना ठीक नहीं ।

*चेटी*—(क) तेण हि गुह्मदु अय्या सिग्घं।

*वासवदत्ता*—(ख) इअं गुह्मामि। आणेहि दाव।

*चेटी*—(ग) गह्णदु अय्या।

*वासवदत्ता*—[वर्जयित्वा विलोक्य] (घ) इमं दाव ओसहं कि णाम ?

---

( क ) तेन हि गुम्फत्वार्या शीघ्रम्।
( ख ) इयं गुम्फामि। आनय तावत्।
( ग ) गृह्णात्वार्या।
( घ ) इदं तावदौषधं किं नाम ?

---

नीयमित्यतो यावच्छ्रुतं तावदेव पर्याप्तम्, नाधिकमन्यदहं किमपि श्रोतुमीहे। अत एव त्वां निवारयामि। नान्यथा किमपि सम्भावयेति भावः।

**तेण हीति**। तेन हि नूनं तेन कारणेन, एवं चेत्तर्हीत्यर्थः। मालिकारूपं कर्म पूर्वतोऽनुसृतम्। यद्येवं तर्हि वाढम्, न वदिष्यामि। मङ्गलमालिका परं भवत्या सत्वरं गुम्फनीयेत्येवं किल वदिष्याम्येवेत्यभिप्रायश्चेटीवचनस्य।

तत्कार्यं कर्तुमुद्यता वासवदत्ताह—**इअमिति**। 'इयं गुम्फामी'त्यनेन गुम्फितुमहमुद्यतास्मीति सूचितम्। 'आनये'त्यानयनक्रियायाः कर्म च पुष्पाद्युपकरणरूपं प्रसङ्गानुरोधादूह्यम्। तावत्पदं वाक्यमलङ्करोति। एषाहं मङ्गलस्रजं गुम्फितुमुद्यतास्मि। आनीयतां तदर्थं त्वया पुष्पाद्युपकरणमित्यर्थः।

इत्थं पुष्पाद्यानयने नियुक्ता चेटी पुष्पादिसामग्रीमुपनयन्ती ब्रवीत्यावन्तिकाम्—**गह्णदु** इति। पुष्पादिसामग्रीयं गृह्यतां भवत्येत्यर्थः। गृह्णातु इत्युक्त्या तत्समर्पणमार्यम्।

चेट्या दत्तेषु पुष्पेषु पुष्पातिरिक्तं किमपि वस्तु पश्यन्ती पृच्छति चेटीमावन्तिका—**वर्जयित्वेत्यादि**। अत्रापि पुष्पोपकरग्रहणं वासवदत्ताकर्तृकमर्याद्

---

दासी—ऐसा है, तो आप जल्दी गूँथें।

वासव—अच्छा, गूँथती हूँ। लाओ तो सही।

दासी—आप लें।

वासव०—( कुछ हटाकर और देखकर ) यह औषधि कौन सी है ?

*चेटी*—(क) अविहवाकरणं णाम ।

*वासवदत्ता*—[ आत्मगतम् ] (ख) इदं बहुसो गुह्मिदव्वं मम अ पदुमावदीए अ । [ प्रकाशम् ] इमं दाव ओसहं किं णाम ?

---

( क ) अविधवाकरणं नाम ।

( ख ) इदं बहुशो गुम्फितव्यं मह्यं च पद्मावत्यै च । इदं तावदौषधं कि नाम ?

---

गम्यम् । वर्जयित्वा पृथक् कृत्वा अर्थात्पुष्पातिरिक्तं वस्तु । विलोक्य तन्निरीक्ष्य । **इमं दाव** इति । तावन्नामपदे वाक्यालङ्कारौ । पुष्पेषु निवेशितः कोऽयमोषधि-विशेष इति वाक्यार्थः । अत्र केचन 'वर्जयित्वे'त्येतस्य 'पुष्पभाजनात्पुष्पाणि बहिर्निःसार्ये'त्यर्थं कुर्वन्ति । अत्र किल वर्जनं विलोकनं च तस्यैवास्ति वस्तुनः, यस्य विषयेऽग्रिमः प्रश्नः । एवं सति कैश्चित्प्रदर्शितोऽर्थः स कथं नाम सङ्गतो भवेदिति विज्ञैरेव निरूपणीयम् ।

आवन्तिकाप्रश्नेऽस्मिन्नुत्तरमाह चेटी—**अविहवाकरणं णामेति** । नाम-शब्दः प्रसिद्धौ । अविधवाकरणम् , न विधवा अविधवेति नञ्समासः, ततः अविधवा क्रियतेऽनेनेति करणे ल्युट् । औषधमिदं स्त्रीणां सौभाग्यं सम्पादयतीति प्रसिद्धिः । अतः सौभाग्यसम्पादनमिदं गुम्फनीयमत्रेत्यर्थः । आत्मनः सौभाग्य-रक्षायै पत्युः प्रीतेः सम्पादनाय च मङ्गलमाल्ये वनस्पत्यादिकं किमपि गुम्फ-नीयमिति स्त्रीणामाचारः ।

ईदृशोपयोगिनस्तस्य वस्तुनो गुम्फन चित्ते प्रशंसन्त्यावन्तिकाह—**आत्म-गतमिति** । बहुशः अवश्यमित्यर्थः । मह्यम् आत्मार्थम् । यत इदं वस्तु सौभा-ग्यसम्पत्त्या आवश्यकम् , ततः स्वार्थं पद्मावत्यर्थं च मयैतद्गुम्फनमवश्यं करणीय-मत्रेति तात्पर्यम् । सौभाग्यमूलकस्य प्रियतमजीवनस्य तावदात्मनोऽप्यभीष्टतया तद्गुम्फनावश्यकत्वोक्तिरुचिता वासवदत्तायाः । मानसमिदं विचार्य तद् गुम्फित्वा तादृशं वस्त्वन्तरं च दृष्ट्वा प्रकटस्वरेण पुनस्तद्विषये 'किमिदमौषध'मिति पुनः पृच्छति वासवदत्ता—**इमं दाव** इति । प्रागुक्तोऽर्थः ।

---

दासी०—यह सोहाग बढ़ानेवाली है ।

वासव०—( मन में ) मेरे और पद्मावती के लिये यह अवश्य गूँथनी चाहिये । ( प्रकाश ) यह दूसरी कौन सी ओषधि है ?

चेटी—(क) सवत्तिमद्दणं णाम ।

वासवदत्ता—(ख) इदं ण गुह्मिदव्वं ।

चेटी—(ग) कीस ?

वासवदत्ता—(घ) उवरदा तस्य भय्या, तं णिप्पओअणं त्ति ।

---

(क) सपत्नीमर्दनं नाम ।
(ख) इदं न गुम्फितव्यम् ।
(ग) कस्मात् ?
(घ) उपरता तस्य भार्या, तन्निष्प्रयोजनमिति ।

---

उत्तरं चेट्याः—**सवत्तिमद्दणं** इति । अत्रापि नामशब्दः प्रसिद्ध्यर्थः । सपत्नीमर्दनम्, सपत्नी मर्द्यतेऽनेनेति पूर्ववत्करणे ल्युट् । औषधमिदं सपत्नीं मर्दयति । सपत्नीमदमर्दनेऽस्मिन्नौषधे सन्निवेशिते सति तद्धारयित्र्याः सम्भविष्यन्नपि सपत्नीद्वेषः किमपि कर्तुं न प्रभवतीत्याशयः ।

पद्मावतीसपत्नीभविष्यन्त्या ममैतेन वस्तुना मर्दनं भविष्यतीति तद्गुम्फनं सहसा निषेधति वासवदत्ता—**इदं णेति** । सपत्नीमदमर्दनमिदमौषधं नात्र मया गुम्फितुं युज्यते ।

तदनन्तरं चेट्याः प्रश्नः—**कीस** इति । कस्मात्कारणादिदम् ? एतस्याऽगुम्फने किं कारणम् ?

सहसोक्तेनैतेन वचसाऽऽत्मनः स्वरूपं प्रकटीकृतमिवाभिलक्ष्य पुनः स्वोक्तिसमर्थयन्त्या वासवदत्ताया उत्तरम्—**उवरदेति** । उपरता मृता, तस्य उदयनस्य राज्ञः, भार्या वासवदत्ता, तदिति हेत्वर्थमव्ययम्, निर्गतं प्रयोजनं यस्मा त्तन्निष्प्रयोजनमिति बहुव्रीहिः । इदमौषधं कर्तृ पूर्वतोऽनुवृत्तम् । उदयनभूपतेः पत्न्या वासवदत्ताया मृत्युः सञ्जात इति सपत्न्या अभावादस्यौषधस्यात्र गुम्फने प्रयोजनं किमपि नास्तीति शब्दार्थः । 'वासवदत्ताग्नौ दग्धे'ति प्रथमाङ्कक्या-

---

दासी—सौत के मद को चूर करनेवाली ।

वासव०—यह न गूँथी जायगी ।

दासी—क्यों ?

वासव०—उनकी स्त्री मर गई, इसलिये यह व्यर्थ है ।

[ प्रविश्यापरा ]

चेटी—(क) तुवरदु तुवरदु अय्या। एसो जामादुओ अविहवाहि अब्भन्तरचउस्सालं पवेसीअदि।

वासवदत्ता—(ख) अइ ! वदामि, गह एदं।

---

( क ) त्वरतां त्वरतामार्या। एष जामाता अविधवाभिरभ्यन्तरचतुश्शालं प्रवेश्यते।

( ख ) अयि ! वदामि, गृहाणैतत्।

---

सम्बद्धां कार्यविशेषसम्भावितां लोकप्रसिद्धिमनुसृत्योक्तिरियं वासवदत्तायाः। एतदौषधस्याऽगुम्फने वासवदत्ताया मानसं तात्पर्यं त्वेतदेव–यदिदमौषधमत्र गुम्फितं मां मर्दयेत्, तेनाहं हतप्रभा भवेयम्।

मङ्गलस्रङ्निष्पत्तये गतां प्रथमां चेटीं विलम्बं कुर्वतीं विचार्य तां त्वरयितुं द्वितीयस्याश्चेट्याः प्रवेशमाह—**प्रविश्यापरेति**।

तदुक्तिमाह—**तुवरदु** इति। 'त्वरतां त्वरताम्' इति भृशार्थे द्विरुक्तिः। आर्यया भवत्या विवाहमङ्गलस्रजो गुम्फनेऽत्यन्तं शीघ्रता कर्तव्या। कथमिति चेदाह—**एसो** इति। अविधवाभिः सौभाग्यवतीभिः, अभ्यन्तरचतुःशालम्, अभ्यन्तरेऽन्तःपुरे चतुःशालम्, अन्तःपुरस्थं विवाहगृहमिति यावत्। सुवासिन्यो जामातरमेनं विवाहगृहं प्रवेशयन्ति। अस्याः स्रजः साम्प्रतमेवावश्यकता वर्तते। अत एषा सत्वरमेव पूर्यतामिति भावः।

त्वरमाणाया द्वितीयचेट्या वचनमिदं निशम्य स्रग्गुम्फनं पूरितवत्या वासवदत्ताया उक्तिरियम्—**अइ** इति। अयीति कोमलामन्त्रणे, द्वितीयचेट्याः सम्बोधनमिदम्। वदामि कथयामि, ग्रहीतुमिति शेषः। एतदिति सामान्ये नपुंसकम्, कौतुकस्रजमित्यर्थः। कथयाम्यहं ग्रहीतुमिमाम्, गृह्यतामियं स्रक्। मत्कार्यं पूर्णम्, मत्कर्तृको विलम्बो नास्तीत्यर्थः। एतदनन्तरं चेटीहस्ते तस्याः स्रजः समर्पणं वासवदत्ताकर्तृकमर्थाद् गम्यम्।

---

( दूसरी दासी का आना। )

दासी—जल्दी करें, जल्दी। ये दामाद सुहागिनों द्वारा कोहबर में लाये जा रहे हैं।

वासव०—अरी ! कहती हूँ कि यह ले।

*चेटी*—(क) सोहणं । अय्ये ! गच्छामि दाव अहं ।

[ उभे निष्क्रान्ते । ]

*वासवदत्ता*—(ख) गदा एसा । अहो ! अच्चाहिदं । अय्यउत्तो वि णाम परकेरओ संवुत्तो । अविदा ! सय्याए मम दुक्खं विणोदेमि, जदि णिद्दं लभामि ।

---

( क ) शोभनम् । आर्ये ! गच्छामि तावदहम् ।

( ख ) गतैषा । अहो ! अत्याहितम् । आर्यपुत्रोऽपि नाम परकीयः संवृत्तः । अविदा ! शय्यायां मम दुःखं विनोदयामि, यदि निद्रां लभे ।

---

तां मङ्गलस्रजं गृहीत्वा तत्सुन्दरतां प्रशंसन्ती ततो जिगमिषन्ती द्वितीयचेट्याह—**सोहणं** इति । गुम्फनं मङ्गलस्रजं वोद्दिश्य सामान्यतः 'शोभन'मिति नपुंसकपदप्रयोगः । तावदिति वाक्यसौन्दर्ये । सुन्दरमिदम्, भवत्या गुम्फितेयं स्रङ् मनोहारिणी । साम्प्रतं गम्यते मया । इत्युक्त्वा प्रथमया चेट्या सह निर्गता ।

**'उभे निष्क्रान्ते'** इत्यनेन द्वयोश्चेट्योर्निर्गमनं सूचितम् । वासवदत्तायास्तु प्रच्छन्नरूपायास्तत्र विवाहोत्सवे जनसंमर्दे गन्तुमनौचित्यात्तन्नोक्तम् ।

द्वयोश्चेटयोर्गमनानन्तरं वासवदत्ता मनसा समं भाषते—**गदा** इति । एषा चेटी अथवा माला । 'अहो ! अत्याहितम्, आर्यपुत्रोऽपि नाम परकीयः संवृत्त' इत्यस्यार्थः प्रागुक्तः । 'अविदा' इति विषादसूचकमव्ययम् । मम, स्वीयमित्यर्थः । 'विनोदयामि लभे' इति वर्तमानसामीप्ये भविष्यति लटौ । विनोदनं दूरीकरणम् । 'विवाहमङ्गलस्रजं गृहीत्वा चेटी गतवती । अधुना पद्मावत्या विवाहो भविष्यति । हन्त ! कष्टम्, आर्यपुत्रो मयि प्रीतिमानपि साम्प्रतं पद्मावतीप्रियः सञ्जातः । कथं नाम कष्टमिदं सहिष्ये ? शय्यामधिशय्य स्वकीयं कष्टमिदमपनेष्यामि, यदि देवा-

---

**दासी**—आर्ये ! यह तो बहुत सुन्दर गूँथी गयी । अब मैं जाती हूँ ।

( दोनों दासियां चली गईं । )

**वासव०**—यह गई । क्या ही अनर्थ है । आर्यपुत्र ( पति ) भी पराये हुए । हाय !

[ निष्क्रान्ता । ]

तृतीयोऽङ्कः ।

## अथ चतुर्थोऽङ्कः ।

[ ततः प्रविशति विदूषकः । ]

*विदूषकः*—[ सहर्षम् ] (क) भो ! दिट्ठिआ तत्तहोदो वच्छ-

---

( क ) भोः ! दिष्ट्या तत्रभवतो वत्सराजस्याभिप्रेतविवाहमङ्गलरम-

---

निद्रामधिगमिष्यामि । दुःखापहन्त्री निद्रैव मे शरणम् । परन्तु मन्ये सापि मत्कृते दुर्लभा' इति प्रलपन्ती वासवदत्ता निर्गता ।

पूर्वोक्तं चिन्तयन्त्या वासवदत्ताया निर्गमनमाह—**निष्क्रान्ता** इति ।

अङ्कसमाप्तिं दर्शयति—**तृतीयोऽङ्कः** इति ।

**इति श्रीस्वप्नवासवदत्तव्याख्यायां प्रबोधिन्यां तृतीयोऽङ्कः ।**

---

चतुर्थाङ्कप्रारम्भं प्रतिजानीते—**अथ चतुर्थोऽङ्कः** इति ।

तृतीयेऽङ्के वत्सराजस्योदयनस्य पद्मावतीविवाहसम्बन्धान्तरनिष्पत्तिं सूचयित्वा चतुर्थेऽस्मिन्नङ्के परस्परं तयो रतिभावपरिपोषं वासवदत्ताविषयकं प्रणयमप्यनुस्यूतमुदयनस्य दर्शयिष्यंस्तदनुरूपां संवादभङ्गीं घटयितुं सपरिवारपद्मावत्युदयनप्रवेशं च सूचयितुमङ्कारम्भे विदूषकचेटीप्रयोद्यमाणप्रवेशकमुखेन पूर्वं विदूषकस्य प्रवेशं दर्शयति कविः—**ततः प्रविशतीति** ।

विदूषको हि विचित्रवाग् वसन्तादिपदव्यपदेश्यो हास्यरसप्रधानः पात्रविशेषः । अयं च भोजनप्रियो ब्राह्मणो राज्ञः सुहृत्त्वेनैव सर्वत्र नाटकेषूपवर्ण्यते । तथा च तल्लक्षणं **दर्पणे**—'कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः' । निष्पन्ने च राज्ञो विवाहमङ्गले तत्सुहृदो विदूषकस्यास्य हर्षो युज्यते । तमेव साम्प्रतमदसीयं मानसोद्गारमाह—**भो** इति ।

---

यदि नींद आजाती तो सेज ( पलंग ) पर मेरा दुःख दूर हो जाता ।

( जाती है । )

तीसरा अङ्क समाप्त

---

( तब विदूषक आता है । )

विदू०—(हर्ष से) अजी महाराज उदयन के मनचाहे मङ्गलमय विवाह का शुभ समय

राअस्स अभिप्पेदविवाहमङ्गलरमणिज्जो कालो दिट्ठो । भो ! को णाम एदं जाणादि—तादिसे वयं अणत्थसलिलावत्ते पक्खित्ता उण

णीयः कालो दृष्टः । भो ! को नामैतज्जानाति—तादृशे वयमनर्थसलिला-

दिष्टया दैवेन, तत्रभवतो मान्यस्य, राजत्वात्पूज्यत्वोक्तिरियम्, वत्सराजस्योदयनस्य, इदं च पदमभिप्रेतपदेन सह सम्बध्यते । अभिप्रेतविवाहमङ्गलरमणीयः, अभिप्रेतमभीष्टं यद् विवाहमङ्गलं पद्मावतीपरिग्रहमहोत्सवस्तेन रमणीयः सुन्दरः, कालः अतीतः समयः, दृष्टः साक्षात्कृतः, अस्माभिरिति शेषः । यत्र च सुहृदो राज्ञ उदयनस्याऽभिमतो विवाहोत्सवः समं पद्मावत्या संवृत्तः, स किल सुन्दरः समयोऽस्माकं पुरो विधिवशादिदानीमुपस्थितोऽभूदित्यर्थः । पुरुषप्रयत्नाऽसाध्यस्य मङ्गलकार्यस्यैतस्य संसिद्धौ नियतमतर्किताऽघटितघटनापटुतमं दैवमेव कारणं जातमिति भावः । तदेवास्य दैवघटितत्वं स्फुटीकरोति—**भो** इति । नामेति वाक्यालङ्कारे । एतद् वक्ष्यमाणम्, जानातीति भूतार्थे लट् । क एवं चिन्तितवानिदम् ? न कोऽपीत्यर्थः । किमिदमित्याह—**तादिसे** इति । तादृशे महत्तमेऽतिभयङ्करे, अनर्थसलिलावर्ते, अनर्थो राज्यापहारलक्षणं वत्सराजेनाऽनुभूयमानमनाहारदेहाऽसंस्कारादिलक्षणं च दुःखं स एव सलिलावर्तः अम्भोभ्रमः तत्र । आवर्तशब्देनैव सलिलभ्रमरूपार्थेऽवगते पुनरत्र प्रयुक्तः सलिलशब्दः स्पष्टार्थः । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । यत्र च मध्ये गर्तरूपे पतितो जनश्चक्राकारजलौघगतिविशेषाद्वाहितः परिभ्रमन्नन्तर्नीयमानोऽतिकष्टाद् बहिरुपैति, स तावज्जलान्तःस्थानविशेष आवर्तपदेनोच्यते । प्रक्षिप्ता निपातिताः, वयं राज्ञा समन्विताः सर्व एव राजकीया इति यावत्, उन्मङ्क्ष्यामः ततो बहिर्भविष्यामः । 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इत्यनेन असम्भावनार्थायामनवक्लृप्तौ लृटः प्रयोगोऽयम् । अपहृतराज्येन वासवदत्तावियोगविकलेन राज्ञा तत्समसुखदुःखैरस्माभिश्च साक्षात्परम्परया वा यन्नाम तादृशं महत्कष्टमनुभूतं दैवबलात्तस्मादुन्मुक्ता वयं भूयः पद्मावतीपरिग्रहैकहेतुकवर्णयिष्यमाणप्रासादवासादिसम्भवाऽनिर्वचनीयसुखविशेषानुभूतिभाजनं भविष्याम इतीदं केन सम्भावितमासीत् ? नियतमेतदचिन्तितोपनतं सर्वथेत्यर्थः ।

हमलोगों को बड़े ही सौभाग्य से देखने को मिला । कहो जी, कौन भला यह जानता था कि हमलोग वैसे (भयानक राज्यापहरणरूप) अनर्थकारी चक्कर में गिराये हुए भी फिर बाहर

उम्मज्जिस्सामो त्ति। इदाणिं पासादेसु वसीअदि, अन्देउरदिग्घिआसु ह्णाईअदि, पकिदिमडरसुउमाराणि मोदअखज्जआणि खज्जीअन्ति त्ति अणच्छरसंवासो उत्तरकुरुवासो मए अणुभवीअदि। एक्को खु महन्तो

---

वर्ते प्रक्षिप्ताः पुनरुन्मङ्क्ष्याम इति। इदानीं प्रासादेषूष्यते, अन्तःपुरदीर्घिकासु स्नायते, प्रकृतिमधुरसुकुमाराणि मोदकखाद्यानि खाद्यन्त इत्यनप्सरस्संवास उत्तरकुरुवासो मयानुभूयते। एकः खलु महान् दोषः,

---

दैवमेवास्मान् कष्टमयीं तादृशीं दशामनुभाव्य पुनः प्रमदमयीं तामिदानीमारोपयामासेति भावार्थः। राज्ञा सममनुभूयमानं तदेव सुखं वर्णयति—**इदाणिम्** इति। प्रासादेषु राजभवनेषु, 'हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम्' इत्यमरः, उष्यते निवासः क्रियते, वसतेः कर्मणि यकि किंत्वात्सम्प्रसारणम्। अन्तःपुरदीर्घिकासु, अन्तःपुरं स्त्रीणां निवासस्थानं तस्य दीर्घिकासु वापीषु, 'वापी तु दीर्घिका' इति कोषः, स्नायते स्नानं क्रियते। एतेनास्य राज्ञः सुहृदः सर्वत्राऽप्रतिहतगतित्वमतिविश्वासास्पदत्वं च व्यक्तीकृतम्। प्रकृतिमधुरसुकुमाराणि, प्रकृत्या स्वभावेन न तु कृत्या मधुराणि मिष्टानि सुकुमाराणि मृदुलानि च, स्वभावतो मिष्टैर्मृदुभिश्च पदार्थैर्निर्मितानीति यावत्। मृदुतया च चर्वण आयासो न भवतीति खाद्यपदार्थानां सौकुमार्यस्य वर्णनम्। मोदकखाद्यानि, मोदका लड्डुकादयस्तद्रूपाणि खाद्यानि भोज्यवस्तूनि, खाद्यन्ते भुज्यन्ते। इति अतो हेतोः, अनप्सरःसंवासः, नास्ति अप्सरसां स्वर्वेश्यानां संवासः सहवासो यत्रेत्येतादृशः, उत्तरकुरुवासः, उत्तराः कुरवो नाम काचिद् देवभूमिः तत्र वासोऽवस्थानम्, मयेति स्वात्मनो निर्देशः, अनुभूयतेऽनुभवगोचरीक्रियते। स्वर्गीयाणि सुखान्यत्रोपलभ्यन्ते मया। किन्तु स्वर्गेऽप्सरसो वसन्ति, अत्र च तासामभाव इत्येव ततो वैलक्षण्यमिति व्यतिरेकः। अहं किलास्मिन् समये प्रियसुहृद्वत्सराजीयनूतनविवाहमङ्गलमहिम्ना प्रासादवासान्तःपुरविहारमधुरभोजनोपचितप्रभूतदिव्यसुखसौभाग्यशाली नूनमिमां भूमिं स्वर्गमेव मन्ये किन्तु खिद्ये यदप्सरसामत्र साहचर्यं नास्तीत्यर्थः। एतादृक्सुखविशेषानुभवेऽप्यतिमात्रभोजनवशादात्मनो दुःखं दर्शयति **एक्को** इति। दोषो

---

निकल आवेंगे। इस समय तो राजमहलों में रहते हैं, जनानखाने (अन्तःपुर) की बावड़ियों में नहाते हैं, स्वभावतः मीठा और मुलायम लड्डुवा आदि खाने की चीजों को खा रहे हैं, इससे यही जान पड़ता है कि हम स्वर्गसुख का अनुभव कर रहे हैं। केवल यहाँ अप्सराओं

दोसो, मम आहारो सुट्ठु ण परिणमदि, सुप्पच्छदणाए सय्याए णिद्दं ण लभामि। जह वादसोणिदं अभिदो विअ वत्तदि त्ति पेक्खामि! भो! सुहं णामअपरिभूदं अकल्लवत्तं च।

---

ममाहारः सुष्ठु न परिणमति, सुप्रच्छदनायां शय्यायां निद्रां न लभे। यथा वातशोणितमभित इव वर्तत इति पश्यामि। भोः! सुखं नामअपरिभूतमकल्यवर्तं च।

---

विकारः, समुत्पन्न इति शेषः सुष्ठु सम्यक्, परिणमति परिपाकं गच्छति। सुप्रच्छदनायाम्, अपीत्युपरिष्टाद्योजनीयमत्र, सु सुन्दरं कोमलं प्रच्छदनमास्तरणं यत्र तस्याम्। प्रकर्षेण छद्यत आस्तीर्यतेऽनेनेति प्रच्छदनम्, 'आधृषाद्वे'ति णिजभावपक्षे 'छदि अपवारणे' इत्यतः करणे ल्युट्। यथा येनेति यावत्, पूर्वोक्तेन हेतुनेत्यर्थः, वातशोणितम्, वातरक्तनामा रोगविशेष इति यावत्। यत्र हि वातरक्ते दूषिते सती अस्वप्नाहाराऽपरिपाकप्रभृतीन् विकारानुद्भावयतः, स खलु वातरक्ताख्यो निगद्यते रोगः। अभितः समन्तत इव, इवशब्दो वाक्यसौन्दर्ये, देहमभिव्याप्येत्यर्थः, वर्तते उपस्थितोऽस्ति। पश्यामि जानामि, दृशिरत्र ज्ञानार्थः। इह तावदेतर्हि मधुमनोहराऽऽहारसौभाग्यसमन्वितस्यापि गुरुतर एकोऽयं विकारः समुद्भूतो वर्तते, यत्किल—'जीर्णं न जायतेऽन्नं कोमलशयनेऽपि नैति निद्रा मे'। अतोऽहं मन्येऽधुना वातरक्तव्याधिना समाक्रान्तोऽस्मीति। ईदृशावस्थाविशेषस्य पुनर्दुःखात्मकत्वमेव द्रढयति—भो इति। आमयपरिभूतम्, आमयेन रोगेण परिभूतमाक्रान्तं संस्पृष्टमिति यावत्, अकल्यवर्तम्, कल्यवर्तः प्रातराशः 'कलेवा' इत्यपभ्रंशेन भाषायां प्रसिद्धं प्रातःकालिकं भोजनं, तन्नास्ति यत्रेत्येवम्भूतम्, एतादृशविशेषणद्वयविशिष्टं सुखं, न, सुखमिति शेषः। सुखमपि व्याधिसम्बन्धेन समन्वितमाहारपरिपाकाभावात्प्रातराशयोगविरहितं सत् सुखपदेन व्यवहार्यं नैव भवतीति भावः। युज्यते तावदजीर्णामयग्रस्तता यथेच्छमत्यधिकं भुञ्जानस्य भोजनभट्टस्य विदूषकस्येषा।

---

का ही अभाव है। किन्तु एक बड़ा भारी दोष है कि मुझे खाना अच्छीतरह नहीं पचता और कोमल गद्दी की सेज पर नींद भी नहीं आती। मानों वातरक्त की बीमारी मुझ में चारों ओर से आ समाई है। जो रोग से आक्रान्त हो और जिसमें कलेवा (प्रातर्भोजन) न मिलता हो वह सुख, सुख नहीं माना जाता।

[ ततः प्रविशति चेटी । ]

चेटी—(क) कहिं णु खु गदो अय्यवसन्तओ ? [ परिक्रम्यावलोक्य ] अह्मो ! एसो अय्यवसन्तओ । [ उपगम्य ] अय्य ! वसन्तअ ! को कालो, तुमं अण्णेसामि ।

विदूषकः—[ दृष्ट्वा ] (ख) किंणिमित्तं भद्दे ! मं अण्णेससि ?

---

(क) कुत्र नु खलु गत आर्यवसन्तकः ? अहो ! एष आर्यवसन्तकः । आर्य वसन्तक ! कः कालः, त्वामन्विष्यामि ।

(ख) किन्निमित्तं भद्रे मामन्विष्यसि ?

---

स्वामिन्या महाराजदर्शकपत्न्या आज्ञया नूतनजामातू राज्ञः प्रवृत्तिमधिगन्तुमिच्छन्त्यास्तदर्थं च राज्ञो मित्रं विदूषकमन्विष्यन्त्याः साम्प्रतं चेट्याः प्रवेशमनुरूपं दर्शयति कविः—**ततः प्रविशतीति** ।

विदूषकदर्शनोत्सुकतामात्मनः प्रकटीकरोति चेटी—**कहिं णु खु** इति । नु खलु इति वाक्यपूरणाय । वसन्तक इति विदूषकस्याभिधानम्, आर्येति तद्विशेषणं च पूजनीयजामातृमित्रस्य तस्यापि पूज्यत्वं द्योतयितुम् । श्रीमता विदूषकेण क्व गतं स्यात् ? कथं कुत्र वा तस्योपलब्धिर्भवेदिदानीम् ? तदन्वेषणार्थमितस्ततः परिभ्रम्य कुत्रचन स्थाने च तं दृष्ट्वा हर्षोक्तिं दर्शयति—**अह्मो** इति । अयमत्र मान्यो वसन्तको वर्तते । समीपं गत्वा ब्रूते—**अय्येति** । कः कालः कियान् समयः, व्यतीत इति शेषः । चिरादहं तत्रभवतोऽन्वेषणे लग्नास्मीत्यर्थः ।

आत्मानमन्विष्यन्तीं विलोक्य चेटीं तत्कारणं पृच्छति विदूषकः—**किंणिमित्तम्** इति । किं निमित्तमस्यां क्रियायामिति किन्निमित्तम्, क्रियाविशेषणमिदम् । 'श्वः श्रेयसं शिवं भद्रं कल्याण'मिति कोषाद्भद्रशब्दः कल्याणवचनः, स चोपचारात्तद्वत्यपि प्रयुज्यते, विशेष्यानुसारेण चात्र स्त्रीत्वम् । 'भद्रमस्या' इत्यर्थे 'अर्शआदिभ्योऽच्' इत्यनेनाऽर्शआदेराकृतिगणत्वेनाच्प्रत्यये वा स्त्रियां भद्राशब्दः सिद्ध्यति ।

---

( तब दासी आती है । )

दासी—आर्य वसन्तक ( विदूषक ) कहाँ गये ? ( घूमकर ) अच्छा माननीय वसन्तक ये हैं । ( पास पहुँच कर ) आर्य वसन्तक ! आपको ढूँढ़ते हुए मुझे कितनी देर हुई ।

विदू०—( देख कर ) भद्रे ! मुझे क्यों खोज रही हो ?

चेटी—(क) अह्माणं भट्टिणी भणादि—अवि ह्णादो जामादुओ त्ति।
विदूषकः—(ख) किंणिमित्तं भोदि! पुच्छदि।
चेटी—(ग) किमण्णं। सुमणोवण्णअं आणेमि त्ति।

---

( क ) अस्माकं भट्टिनी भणति—अपि स्नातो जामातेति।
( ख ) किन्निमित्तं भवति! पृच्छति?
( ग ) किमन्यत् सुमनोवर्णकमानयामीति।

---

तत्सम्बुद्धौ भद्रे इति। कल्याणशीले! इति तदर्थः। अथवा भद्रे! सभ्ये!, भद्रशब्दः सभ्यार्थः। अयि! कथय, किमर्थमेतन्ममान्वेषणं ते? किं वा मत्कार्यमिति वाक्यार्थः।

तदन्वेषणकारणमाह चेटी—**अह्माणं** इति। भट्टिनी अनभिषिक्ता राज्ञः स्वामिनी, महाराजदर्शकस्य पत्नीति यावत्, भणति पृच्छतीत्यर्थः। अपिशब्दः प्रश्नवचनः, अयं च वाक्यारम्भे प्रायः प्रयुज्यतेऽस्मिन्नर्थे। 'स्नात' इति गत्यर्थाकर्मके'त्यादिना कर्तरि क्तः, जामाता वत्सराजः उदयनः। अस्मत्स्वामिन्या मन्मुखेन पृच्छ्यते, यत्किल जामातू राज्ञः स्नानं जातं न वा? इदं च त्वत्तो ज्ञातुं शक्यते, अतस्त्वामहमन्विष्यामीत्यर्थः। 'अस्माकं भट्टिनी'त्युक्त्या स्वामिन्यां गौरवभाव आत्मनः प्रकटीकृतश्चेट्या।

विदित्वापि निजान्वेषणकारणं चेट्याः पुनस्तत्कृतं जामातृस्नानप्रश्नमुद्दिश्य विदूषकः प्रश्नयति ताम्-**किण्णिमित्तम्** इति। भवति! शोभने! दीप्त्यर्थकाद् भाधातोर्डवतुप्रत्यये कृते स्त्रियां ङीपि सम्बुद्धौ रूपमिदम्। किन्निमित्तं किमर्थम्। अयि! किं प्रयोजनमुद्दिश्य ते स्वामिन्या कृतोऽयं प्रश्नः।

उत्तरयति चेटी—**किमण्णम्** इति। अन्यत्किम्, वक्ष्यमाणमिदमेव निमित्तमित्यर्थः। सुमनसश्च वर्णकं चेत्यनयोः समाहारः सुमनोवर्णकम्, समाहारद्वन्द्वोऽयम्, तेनैव क्लीवत्वमेकत्वं च। 'स्त्रियः सुमनसः पुष्पम्' इति कोषात् स्त्रियां बहुत्वे च प्रयुज्यमानः सुमनःशब्दः पुष्पमभिधत्ते। अत्र हि सुमनःशब्देन

---

दासी—हमारी स्वामिनी पूछती हैं कि क्या जामाता नहा चुके?
विदू०—अरी! (तुम्हारी मालकिन) क्यों पूछती हैं?
दासी—दूसरा क्या? चन्दन, फूल, माला आदि लाऊँ—इसलिये।

विदूषकः—(क) ह्लादो तत्तभवं। सव्वं आणेदु भोदी वज्जिअ भोअणं।

चेटी—(ख) किंणिमित्तं वारेसि भोअणं?

विदूषकः—(ग) अधण्णस्स मम कोइलाणं अक्खिपरिवट्टो विअ

---

(क) स्नातस्तत्रभवान्। सर्वमानयतु भवती वर्जयित्वा भोजनम्।
(ख) किंनिमित्तं वारयसि भोजनम्?
(ग) अधन्यस्य मम कोकिलानामक्षिपरिवर्त इव कुक्षिपरिवर्तःसंवृत्तः।

---

पुष्पस्रक्, वर्णकशब्देन च चन्दनं गृह्यते 'आनयामी'ति विध्यर्थे लट्, 'आनयेय'मिति तदर्थः। किमत्रेतत्कारणम्? क्रियमाणेऽस्मिञ्जामातुः स्नानविषयके प्रश्ने कारणमेतदेव खलु, यन्मया पुष्पस्रक् चन्दनं चानेतव्ये। स्नानानन्तरं पुष्पस्रक् धारणीया चन्दनं च लेपनीयं शरीरे जामात्रा। यदि नाम तदीयं स्नानं सम्पन्नं, तर्हि साम्प्रतमानयाम्यहं पुष्पस्रजं चन्दनं च तत्कृते। तत्कथ्यतामिदं याथातथ्येन त्वया।

निशम्येदं चेटीवचो वचनं प्रवृत्ते विदूषकः—**ह्लादो** इति। तत्रभवान् उदयनो भूपतिः, वर्जयित्वा त्यक्त्वा। सस्नातः स्नानविधिर्भूपतेरुदयनस्य। अतस्तदर्थं त्वया भोजनं विनेदानीं सर्वमानेतव्यमित्यर्थः। अत्रेदं तात्पर्यम्—समुपस्थिते सति भूपतेः कृते भोजने यत्सुहृदा विदूषकेणापि तद्भोक्तुं लभ्येत। किन्तु स्वभावतो भोजनप्रियोऽपि सूचितपूर्वोऽजीर्णरोगग्रस्तोऽयं न तावदिदानीं भोजनाय स्पृहयति सः। 'आनीतं च भोजनं चेतो बलादाकर्षे'दित्यतस्तन्निषेधं चाकार्षीत्। इत्यहङ्कारमस्वारस्यं प्रकटय्यापि भोजनानयने विदूषकोऽप्रस्तुतभोज्यपदार्थानयननिषेधमुखेन स्वात्मनो भोजनप्रियतामाविष्कृतवानिति।

इत्थं किल भोजनानयनं निषेधन्तं विदूषकं प्रति चेटी तन्निराकरणे कारणं जिज्ञासमाना 'किमर्थं तन्निषिध्यत' इत्येवं पुनरात्मनः पृच्छां दर्शयति—**किंणिमित्तम्** इति। भोजनं भोजनानयनमित्यर्थः।

स्वकर्तृकेऽस्मिन्भोज्यपदार्थोपस्थापनप्रतिषेधे हासकारणं कारणं प्रकटयति विदूषकः—**अधण्णस्सेति**। अधन्यस्य भाग्यहीनस्येत्यर्थः। अक्षिपरिवर्त इव, परिवर्तः परिवर्तनं परितो भ्रमणमिति यावत्, अक्ष्णोः परिवर्तोऽक्षिपरिवर्तः स यथा।

---

विदू०—वे नहा चुके। भोजन-सामग्री छोड़ तुम सब पदार्थ ला सकती हो।
दासी—खाने की चीज लाने को क्यों मना कर रहे हैं?
विदू०—मैं बड़ा अभागा हूँ, क्योंकि-कोइलों की आँख जिस भाँति उलट पड़ती है या

कुक्खिपरिवट्टो संवुत्तो ।

चेटी—(क) ईदिसो एव्व होहि ।

विदूषकः—(ख) गच्छदु भोदी । जाव अहं वि तत्तहोदो सआसं गच्छामि ।

[ निष्क्रान्तौ । ]

---

( क ) ईदृश एव भव ।

( ख ) गच्छतु भवती । यावदहमपि तत्र भवतः सकाशं गच्छामि ।

---

परिपूर्वाद् वृतधातोर्भावे घञि परिवर्तशब्दः सिध्यति । कुक्षिपरिवर्तः उदरविकारः, संवृतः सञ्जातः । अयं भावः—'नेत्रपरिवर्तनं कोकिलानामिव मन्दभाग्यस्य ममोदरविकारो भुक्ताऽपरिपाकरूपः साम्प्रतं वरीवर्तीत्यत एवाहं भोजनमानेतुं निषेधामि त्वाम् । राजा तु मां विहाय नैकाकी भोजनं कुर्यात्कदापि, अहं च भोजनमुपस्थितं कथमपि त्यक्तुं कर्तुं च न शक्नुयाम् । यथेच्छं भोक्तुमददानोऽयमुदरविकारो हन्ताऽतितरां कष्टायते । अतो हि भोक्तुमसमर्थोऽधुना ध्रुवमहं मन्दभाग्योऽस्मी'ति ।

विदूषकस्योक्तिमिमां निशम्य चेटी सहासं वितनुते प्रेम्णा शुभाऽऽशंसनं तत्र—**ईदिसो** इति । वाक्येऽस्मिन्नौचित्यात् 'सदा' इति पदमध्याहरणीयम् । ईदृशः उदरविकारवान् । उदरविकारेणाक्रान्त एव त्वं सर्वदा वर्तस्व, आस्तां च तावत्ते शाश्वतं साहचर्यममुना विकारेणेत्यर्थः ।

इदमीदृशं चेट्या समं संलप्य साम्प्रतं पद्मावत्युपसर्पणाय चेटीं विसृष्टुमिच्छन् कार्यान्तरकरणाभिप्रायेण स्वयमपि सुहृदः श्रीमतो नरपतेः समीपं जिगमिषन् विदूषकः प्राह—**गच्छदु** इति । गच्छतु अर्थात्पद्मावत्याः समीपम् । यावदित्यस्य अधुनेत्यर्थः ।

विदूषकप्रस्तावानुसारं तयोश्चेटीविदूषकयोस्ततः प्रस्थानं दर्शयति कविः—**निष्क्रान्ताविति** ।

---

रोग-पूर्ण लाल लाल हो जाती है, उसी तरह मेरे पेट में भी उलट फेर हो गया है कि खाया हुआ समय पर ठीक पचता नहीं ।

**दासी**—ऐसे ही आप ( सदा ) बने रहें ।

**विदू०**—तुम जाओ । अब मैं भी राजासाहब के पास जाता हूँ ।

( दोनों चले गये । )

## प्रवेशकः

[ ततः प्रविशति सपरिवारा पद्मावती आवन्तिकावेषधारिणी वासवदत्ता च । ]

चेटी—(क) किण्णिमित्तं भट्टिदारिआ पमदवणं आअदा ?

पद्मावती—(ख) हला ! ताणि दाव सेहालिआगुह्मआणि पेक्खामि कुसुमिदाणि वा ण वेत्ति ।

---

(क) किन्निमित्तं भर्तृदारिका प्रमदवनमागता ?

(ख) हला ! ते तावत् शेफालिकागुल्मकाः पश्यामि कुसुमिता वा न वेति ।

---

**प्रवेशक** इति । तत्पूर्वमेतस्य लक्षणं विष्कम्भकलक्षणप्रदर्शनप्रसङ्गे द्वितीयाङ्कारम्भे, तत्रैव द्रष्टव्यम् । अयं च चेटीविदूषकाभ्यामनुदात्तभाषितेन प्रयोजितः सन् वृत्तं वत्सराजोदयनविवाहसम्बन्धलक्षणं वर्तिष्यमाणं च पुष्पहरणादिरूपं कथांशं निदर्शितवानिति ।

कविरिदानीं भाविघटनानुरूपप्रसङ्गानुरोधेन सपरिवारां पद्मावतीं सनं वासवदत्तया प्रमदवनं प्रवेशयति—**तत** इत्यादिना ।

सुमनोवर्णकग्रहणादिकार्यार्थं गते सत्यन्तःपुरं भर्तरि तत्रानुपस्थाय प्रमदवनमागतां पद्मावतीं तत्प्रदेशागमनकारणं पृच्छति चेटी—**किण्णिमित्तम्** इति । अयि ! राजकन्ये । भवत्याः पतिरिदानीमन्तःपुरे वर्तते तदुपसर्पणमुपेक्ष्य भवती किं प्रयोजनमुद्दिश्य प्रमदवनमेतदागता ।

चेटीप्रश्नानुसारं प्रमदवनागमनप्रयोजनं स्वं दर्शयति पद्मावती—**हला** इति । हलेति चेट्याः सम्बोधनम् । अत्र यद्यपि 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इति कोषप्रामाण्येन चेटीं प्रति 'हञ्जे' इति प्रयोक्तुमुचितं, तथापि चेटीमिमां सखीनिर्विशेषं पश्यन्त्यास्तामुद्दिश्य पद्मावत्या 'हला' इत्याह्वानं नाऽसङ्गतम् । एवमेवाग्रेऽपि सर्वत्राकलनीयम् । ते प्रसिद्धाः प्रयत्नसंवर्धिता अदूरतो दृश्यमाना इति यावत्—तावत्पदं वाक्यालङ्कृतौ । शेफालिकागुल्मकाः, शेफालिकाख्या वृक्षविशेषाः । शेफालिका च 'हरसिंगार, पारिजात' इत्येवं लोके प्रसिद्धा । गुल्मा एव

---

( प्रवेशक )

( परिजन-सहित पद्मावती तथा उज्जैन-निवासिनी के वेश में वासवदत्ता आती है । )

दासी—राजकुमारी नजरबाग में किस लिये आई ?

पद्मा०—अरी ! वे हरसिंगार ( पारिजात ) के गुच्छे खिले या नहीं यह मैं देखती हूँ ।

चेटी—(क) भट्टिदारिए ! ताणि कुसुमिदाणि णाम, पवालन्तरिदेहिं विअ मौतिआलम्वएहिं आइदाणि कुसुमेहिं।

*पद्मावती*—(ख) हला ! जदि एव्वं, किं दाणिं विलम्बेसि ?

---

(क) भर्तृदारिके ! ते कुसुमिता नाम, प्रवालान्तरितैरिव मौक्तिकलम्वकैराचिताः कुसुमैः।

(ख) हला ! यद्येवं, किमिदानीं विलम्बसे ?

---

गुल्मकाः, स्वार्थे कः। मूलादारभ्य शाखावधिको वृक्षस्य भागः 'प्रकाण्ड' उच्यते, तद्रहिता वृक्षा हि 'गुल्म'नाम्ना व्यवह्रियन्ते। तथा च 'अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः' 'अप्रकाण्डे स्तम्वगुल्मौ' इत्यमरौ। कुसुमिताः, कुसुमानि पुष्पाणि सञ्जातानि येषां तादृशाः, 'तदस्य सञ्जात'मित्यादिना इतच् प्रत्ययः। 'पश्यामी'ति क्रियापदं च वाक्यसमाप्तिसूचकात् 'इति'शब्दादनन्तरं योज्यम्, इति पूर्वप्रदर्शितो वाक्यार्थः कर्मरूपः। अयि ! सखि ! तेषु शेफालिकावृक्षेषु पुष्पाण्युद्गतानि न वेत्येवावलोकयाम्यहम्। अत एतद्दिदृक्षयैव साम्प्रतमत्रागतास्मीति भावः।

प्रमदवनागमनप्रयोजनं निशम्यैवं पद्मावत्याः शेफालिकाकुसुमोद्गमसम्वन्धिनि प्रश्ने प्रतिपादयत्युत्तरं चेटी—**भट्टिदारिए** इति। ते इत्यनेन पूर्वप्रकान्ताः शेफालिकागुल्मका गृह्यन्ते, 'नामे'त्यत्र निश्चयार्थकम्। प्रवालान्तरितैः, प्रवालैर्विद्रुममणिभिरन्तरितानि व्यवहितानि युक्तानीति यावत् तैः, मौक्तिकलम्वकैरिव, मुक्ता एव मौक्तिकानि तेषां लम्वकानि ललन्तिकाभिधाः कण्ठभूषणविशेषाः तत्सदृशैः, कुसुमैरित्यस्योपमानमिदम्, 'लम्वकं तु ललन्तिका' इति कोषः। आचिताः व्याप्ताः परिपूर्णा इति यावत्, दृश्यन्ते इति शेषः। शेफालिका ध्रुवं विकसिताः सन्ति। पश्य, मूलेऽरुणानि तदूर्ध्वं च धवलान्येतानि पुष्पाणि खलु प्रवालमिश्रमुक्तामणिनिर्मितकण्ठभूषणसदृक्षाणि लक्ष्यन्ते। इतस्ततो लग्नानि कुसुमानि लम्वमानकण्ठाभरणानीव प्रतीयन्त इति कुसुमानां ललन्तिकासाम्यं प्रतिपादितमत्र।

शेफालिकाविकासमाकलय्य पद्मावती चेटीं तत्कुसुमावचयनक्रियायां नियोक्तुमिच्छन्ती ब्रूते—**हला** इति। एवं, शेफालिकाः कुसुमिता इति यावत्। विलम्बसे

---

**दासी**—राजकुमारी ! वे तो खिल गये, बीच-बीच में मूँगों से मिले हुए मोतियों के हारों की भाँति फूलों से परिपूर्ण हैं।

**पद्मा०**—यदि ऐसा है, तो क्यों देर कर रही हो ?

*चेटी*—(क) तेण हि इमस्सिं सिलावट्टए मुहुत्तअं उपविसदु भट्टिदारिआ। जाव अहं वि कुसुमावचअं करेमि।

*पद्मावती*—(ख) अय्ये! किं एत्थ उपविसामो?

*वासवदत्ता*—(ग) एव्वं होदु।

---

(क) तेन हि अस्मिन् शिलापट्टके मुहूर्तकमुपविशतु भवती। यावदहमपि कुसुमावचयं करोमि।

(ख) आर्ये! किमत्रोपविशावः?

(ग) एवं भवतु।

---

विलम्बं करोषि, अर्थात्कुसुमावचये। यदि सखि! शेफालिका विकसितास्तर्हि साम्प्रतं तत्कुसुमावचये किमिति त्वया विलम्बः क्रियते? अतिशीघ्रं तानि कुसुमान्यवचीयन्तामित्यर्थः।

इत्थं पद्मावतीवचनमाकर्ण्य कुसुमावचयं प्रतिजानीते चेटी—**तेण हीति**। तेन हि अतो हेतोः, पुष्पावचयस्येदानीं मया करणीयत्वादित्यर्थः। अस्मिन् समीपस्थे शिलापट्टके बृहत्पाषाणफलके, मुहूर्तकं क्षणमिति क्रियाविशेषणम्। यावता कालेन मया कुसुमावचयं कृत्वागम्यते, तावत्कालपर्यन्तं भवत्या राजकुमार्या विशाले दृषत्फलकेऽस्मिन्नुपविश्य विश्रम्यताम्। अत्र 'मुहूर्तकमुपविशतु' इत्यनेन 'कार्येऽस्मिन् मत्कर्तृके विलम्बो न स्यात्, सत्वरमेवाहमवचितकुसुमा समागमिष्यामि भवत्याः समीप'मिति चेट्या सूचितम्।

चेटीवचनानुरोधाद् दृषत्फलके समुपवेष्टुमुद्यता पद्मावती स्थानमात्मोपवेशनयोग्यं निर्दिशन्ती तत्रोपवेशने आवन्तिकाया अनुमतिं प्रार्थयते—**अय्ये** इति। अयि माननीये। स्थानेऽस्मिन्नावाभ्यामुपवेष्टव्यं किमु? अत्रोपवेशनमिदानीमस्मदीयं भवत्यै रोचते?

आत्मनोऽनुमतिं तत्रोपवेशने दर्शयत्यावन्तिका—**एव्वम्** इति। बाढम्, अत्रोपविश्यतामावाभ्यामित्यर्थः।

---

दासी—तब तो इस पत्थरकी चट्टान पर राजकुमारी घड़ी भर बैठें। तबतक मैं भी फूलों को बटोरती हूँ।

पद्मा०—(आवन्तिका से) आर्ये! क्या हम दोनों यहाँ बैठें?

वासव०—हाँ, ऐसा ही हो।

[ उभे उपविशतः । ]

चेटी—[ तथा कृत्वा ] (क) पेक्खदु पेक्खदु भट्टिदारिआ अद्ध-मणसिलावट्टएहिं विअ सेहालिआकुसुमेहिं पूरिओ मे अञ्जलिं ।

पद्मावती—( दृष्ट्वा ) (ख) अहो । विइत्तदा कुसुमाणं । पेक्खदु

---

( क ) पश्यतु पश्यतु भर्तृदारिका अर्धमनःशिलापट्टकैरिव शेफालिकाकुसुमैः पूरितं मेऽञ्जलिम् ।

( ख ) अहो ! विचित्रता कुसुमानाम् । पश्यतु पश्यत्वार्या ।

---

**'उभे उपविशतः'** इत्यनेन द्वयोर्वासवदत्तापद्मावत्योरुपवेशनं दर्शितम् ।

अवचितपुष्पा चेटी पद्मावतीमुपगम्य ब्रूते—**पेक्खदु** इति । तथा कृत्वा पुष्पाण्यवचित्य तैर्हस्तद्वयमापूर्य । 'पश्यतु पश्यतु' इति पौनःपुन्ये द्विःप्रयोगः, तेन च सौन्दर्यममीषां कुसुमानां लोचनासेचनकं सूचितम् । अर्धमनःशिलापट्टकैरिव, अर्थानुकूल्यसामर्थ्याभावादत्रार्धपदं व्यस्तं युज्यते, अर्धे मूलभागे मनःशिलायाः 'मैनसिल' इति लोके प्रसिद्धस्य गिरिप्रभवरक्तवर्णधातुविशेषस्य पट्टकैः खण्डैरिव, स्थितैरिति शेषः । 'धातुर्मनःशिलाद्रेः' 'मनःशिला मनोगुप्ता' इत्यमरौ । पूरितं पूर्णम् , रयतेः क्तः । अञ्जलिं कनिष्ठिकाप्रदेशतः संयोजितौ पुटरूपतां प्रापितौ हस्तौ, 'तौ युतावञ्जलिः पुमान्' इत्यमरः । 'कुसुमैः परिपूर्णमञ्जलि'मित्यस्य 'अञ्जलिस्थानि पुष्पाणी'ति तात्पर्यम् । अयि ! राजकुमारि ! ममेदं पाणिद्वयमिदानीं शेफालिकाप्रसूनैः परिपूर्णं वर्तते । अमूनि किल कुसुमानि कथं नाम सुन्दरतां वहन्ति ? मुहुरालोचनीयमेतदमीषां सौन्दर्यं भवत्येति भावः । इदमित्थं निगद्य चेट्यास्तत्समर्पणं पद्मावत्यै व्यङ्ग्यमर्यादया बोद्धव्यम् । इह किल शेफालिकापुष्पाणामारुण्येन मूलप्रदेशे मनःशिलाशकलसादृश्यं दर्शितं कविना । तानि च शकलानि लम्बमानान्येवात्र कवेः शेफालिकाकुसुमोपमानत्वेनाभिमतानीति ।

चेट्या दत्तानि तानि पुष्पाण्यादाय दृष्ट्वा च पद्मावती तत्सौन्दर्यं प्रशंसन्त्याह—**अहो** इति । विचित्रता श्वेतरक्तेत्युभयविधवर्णसौन्दर्यशालिता । प्रायः

---

( दोनों बैठती हैं। )

**दासी**—( फूलों को बटोर कर ) देखिये, राजकुमारी ! देखिये, आधे भाग में मैनसिल के टुकड़ों की तरह हरसिङ्गार के फूलों से मेरी अँजुली भर गई ।

**पद्मा०**—( देखकर ) वाह ! क्या ही विचित्र ये फूल हैं । आप देखें तो सही ।

पेक्खदु अय्या।

वासवदत्ता—(क) अहो! दस्सणीअदा कुसुमाणं।

चेटी—(ख) भट्टिदारिए! किं भूयो अवइणुस्सं?

पद्मावती—(ग) हला! मा मा भूयो अवइणिअ।

---

(क) अहो! दर्शनीयता कुसुमानाम्।

(ख) भर्तृदारिके! किं भूयोऽवचेष्यामि?

(ग) हला! मा मा भूयोऽवचित्य।

---

कुसुमान्येकवर्णानि भवन्ति, एतानि तु वर्णद्वयवन्तीति नूनं विस्मयकरत्वमेतेषाम्। को नाम तान्येतान्यवलोक्य विस्मयविकस्वरस्वान्तो न स्यात्? इत्येवमुक्त्वा तानि पुष्पाण्यावन्तिकां दर्शयन्ती ब्रूते-पेक्खदु इति। अत्राप्रीयं वीप्सा पौनःपुन्ये, अर्थाक्षिप्तमत्र पुष्परूपं तत्सौन्दर्यरूपं वा कर्म। अयि! मान्ये! वारंवारमवलोकनीयं तत्रभवत्या भवत्या 'कुसुमानि कथं तावदेतानि सौन्दर्यं दर्शयन्ती'ति।

तेषां पुष्पाणाममन्दं सौन्दर्यमभिनन्दन्ती ब्रूते वासवदत्ता—अहो इति। दर्शनीयता सुन्दरता। अयि! अमूनि किल पुष्पाणि विचित्रं सौन्दर्यं दर्शयन्ति।

उभाभ्यां पद्मावत्यावन्तिकाभ्यां कृतं प्रसूनप्रशंसनं श्रुत्वा पुनः प्रसूनानयनप्रस्तावमुपस्थापयन्ती पृच्छति चेटी पद्मावतीम्—भट्टिदारिए इति। अवचेष्यामीति विध्यर्थे लृट्, अवचिनुयामिति तदर्थः। अयि! राजकन्ये! किमिदानीं पुनः प्रसूनान्यवचेतव्यानि मया?

चेट्याश्चिकीर्षितं प्रसूनावचयनं निषेधति पद्मावती—हला इति। हलेति चेट्याः सम्बोधनम्, 'मा मे'ति द्विरुक्तिर्निषेधं द्रढयति। अयि! सखि! न तावदिदानीं प्रसूनावचयस्ते कार्यः। नास्ति तत्प्रयोजनं किमपि। अत्र मायोगे 'अवचित्ये'ति क्त्वाप्रत्ययः पाणिनीयशासनविरुद्धो महाकवीनां निरङ्कुशत्वात्कृतो वेदितव्यः।

कृते च पद्मावत्या तन्निषेधे तत्र कारणजिज्ञासां दर्शयत्यावन्तिका—

---

वासव०—ये फूल तो बड़े ही दर्शनीय हैं।

दासी—राजकुमारी! क्या फिर और चुनूँ?

पद्मा०—अरी! नहीं, और मत चुनना।

*वासवदत्ता*—(क) हला ! किंणिमित्तं वारेसि ?

*पद्मावती*—(ख) अय्यउत्तो इह आअच्छिअ इमं कुसुमसमिद्धिं पेक्खिअ सम्माणिदा भवेअं ।

*वासवदत्ता*—(ग) हला ! पिओ दे भत्ता ?

---

( क ) हला ! किंनिमित्तं वारयसि ?
( ख ) आर्यपुत्र इहागत्येमां कुसुमसमृद्धिं दृष्ट्वा सम्मानिता भवेयम् ।
( ग ) हला ! प्रियस्ते भर्ता ?

---

**हला** इति । आवन्तिका चेयं वासवदत्ता कार्यगौरवं कलयन्ती सपत्नीमपि तां पद्मावतीं प्रियसखीसमानभावेन सम्भावयतीति पूर्वं भूयः प्रतिपादितम् । अतश्च 'हला' इति सम्बुद्धिः पद्मावतीं प्रति युज्यते तस्याः । सखि ! पद्मावति ! वैचित्र्यममीषां कुसुमानां पूर्वं प्रशंसितवत्यसि । साम्प्रतं रुचिराण्यपि तानि पुनराहर्तुं किमिति चेटीं निषेधसि ?

तन्निषेधकारणं प्रकटीकरोति पद्मावती—**अय्यउत्तो** इति । कुसुमानां समृद्धिराधिक्यं परिपूर्णतेति यावत्, ताम् । सम्मानिता आदृता, 'भवेय'मिति सम्भावनायां लिङ् । अत्र 'सम्माणिदा ( सम्मानिता )' इति कर्मवाच्यप्रयोगानुरोधाद् 'अय्यउत्तेण ( आर्यपुत्रेण )' इति तृतीयान्तः प्रयोक्तुं युज्यते कर्ता । 'अय्यउत्तो ( आर्यपुत्रः )' इत्ययं प्रथमान्तकर्तृपदप्रयोगस्तु चिन्त्यः । 'पेक्खिअ ( दृष्ट्वा )' इत्यनन्तरं 'पसीदे, तेण च ( प्रसीदेत् तेन च )' इति मध्ये मुद्रणप्रमादात् त्रुटितं वा योजनीयम् । इत्थं सति कल्पिते 'प्रसीदे'दित्यनेन सम्बद्धः प्रथमान्तः कर्ता सङ्गच्छेत । सम्भावयेऽहमत्रागतो मत्प्रियः समन्तात् पुष्पितं प्रमदवनं पश्यन् प्रसन्नो ममादरं कुर्यादित्यर्थः । अयमाशयः—'मत्प्रयत्नविशेषसम्पादितप्रसूनसुषमासम्भारवीक्षणोत्फुल्लमानसो मदीयकार्यसन्तुष्टो मम स्वामी गौरवं दर्शयन् मयि परां प्रीतिं कलयंस्तैर्मामलङ्कुर्यात् । कुसुमैर्हीनता च प्रमदवनस्य तन्मानसं दुःखाकुर्यात्ततश्च मयि प्रीतिरपि तदीया नूनं न्यूनतां दध्यात् । अतो हेतोरहं नेतोऽधिकं पुष्पावचयं रोचयामी'ति । अथवा 'अय्यउत्तो'इति प्रथमान्तपाठे 'सम्माणिदो भवे' इति पाठः कल्पनीयः ।

पतिप्रीतिविषयकं ध्वनिमार्गेण प्रस्तावमुपक्षिप्तं पद्मावत्या अवगत्य तत्प्रीतेरियत्तां तत्र परिच्छेत्तुमिच्छन्ती पृच्छति पद्मावतीं वासवदत्ता—**हला** इति ।

---

वासव०—हे सखि ! क्यों मना करती हो ?

पद्मा०—आर्यपुत्र यहाँ आकर फूलों की यह बहार ( देख प्रसन्न होंगे, उससे ) मैं सम्मानित होऊँगी ।

वासव०—सखि ! तुम्हें पति प्यारे हैं ?

*पद्मावती*—(क) अय्ये ! ण जाणामि, अय्यउत्तेण विरहिदा उक्कण्ठिदा होमि ।

*वासवदत्ता*—[ आत्मगतम् ] (ख) दुक्खरं खु अहं करेमि । इअं वि णाम एव्वं मन्तेदि ।

( क ) आर्ये ! न जानामि, आर्यपुत्रेण विरहितोत्कण्ठिता भवामि ।
( ख ) दुष्करं खल्वहं करोमि । इयमपि नामैवं मन्त्रयते ।

-सखि ! पतिमेतं प्रेमदृष्टया पश्यसि त्वम् ? अपि नाम ते वर्तते सहजं प्रेम पत्यौ ?

नवोढानुरूपलज्जाभावगोपितामुत्कण्ठाविशेषप्रकाशितां पतिविषयिणीमात्मनः प्रीतिं ध्वनयति पद्मावती—**अय्ये** इति । 'राजमन्त्रिणो यौगन्धरायणस्य स्वसारमिमां स्वसमीपे न्यासरूपेण स्थापितामावन्तिकामादरदृष्ट्या पश्यति पद्मावती'ति तामुद्दिश्य पद्मावतीप्रयुक्तम् 'आर्ये' इति सम्बोधनपदं युज्यते । 'न जानामी'त्यत्र पूर्वप्रश्नार्थः कर्म, विरहिता वियुक्ता । 'अयि ! मान्ये ! आर्यपुत्रो मम प्रीतिपात्रं वर्तते न वे'त्येवं किमपि न ज्ञायते, किन्तु तद्वियुक्तया पर्युत्सुकया भूयते मयेत्यर्थः । आर्यपुत्रेण विना विमनायमानाहं तद्वियोगं न सोढुं शक्नोमीति तात्पर्यम् । अत्र 'न जानामी'ति नवोढाभावसुलभलज्जाभावाच्छन्नं प्रेम पद्मावत्या प्रियवियोगकालिकोत्कण्ठाभावप्रदर्शनाद् ध्वनिमर्यादया स्फुटं व्यक्ततां नीतम् । एतेन 'पतिर्मे प्रियो वर्तत' इत्येवमावन्तिकाप्रश्नोत्तरमशाब्दं चतुरया पद्मावत्या स्फुटं प्रतिपादितम् ।

श्रुतैतत्पद्मावतीवचसो वासवदत्ताया मानसं वितर्कं दर्शयति कविः—**दुक्खरम्** इति । दुष्करं दुःखेन कर्तुं शक्यम् , असम्भाव्यमिति यावत् , 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनेन खल् । अत्रार्थे प्रेमेति कर्म, खलु निश्चये । 'अहो ! यत्र सहजं निःसामान्यमनन्यगोचरं प्रेमाहं बिभर्मि, तत्रैव पद्मावत्यसौ प्रीतिमती वर्तते । स नूनमुभयाकृष्टचलचित्तो नैकत्र विशिष्टं स्थिरं प्रेम कर्तुं शक्नोति, येन किल द्वयोः प्रियतमेन भूयते । न ज्ञायते मदीयं तद्विषयकं प्रेमेदं तत्प्रीतिमत्तां सम्पाद्य कथङ्कारं साफल्यमधिगच्छेदित्यतो नूनमिदमसम्भाव्यमेवाहं कर्तुं प्रवृत्तास्मि, यत्किल तत्प्रीतिमत्त्वसम्भावनया तमार्यपुत्रं प्रेमदृशा पश्यामी'ति गूढमाकूतं वासवदत्तायाः । तदेव दुष्करत्वं दर्शयते—**इअं वि** इति । अत्र नामेत्यलङ्कारो वाक्यस्य ।

**पद्मा०**—आर्ये ! यह मैं नहीं जानती, पर उनके बिना जी नहीं लगता ।

**वासव०**—( स्वगत ) मैं बड़ा ही कठिन करती हूँ । यह भी तो इसी प्रकार कहती है ।

*चेटी*—(क) अभिजादं खु भट्टिदारिआए मन्तिदं—पिओ मे भत्तेति ।

*पद्मावती*—(ख) एक्को खु मे सन्देहो ।

*वासवदत्ता*—(ग) किं किं ?

---

(क) अभिजातं खलु भर्तृदारिकया मन्त्रितं-प्रियो मे भर्तेति ।
(ख) एकः खलु मे सन्देहः ।
(ग) किं किम् ?

---

मन्त्रयते गूढं भाषते । अनया पद्मावत्यापि यदा पूर्वोक्तमिदं निगद्यते, तदा निःसन्देहमेव मे तत्रानुरागस्तदनुरागसम्पादनविषये चिरात्साफल्यं तदभावं वा कलयेदित्यर्थः । एतेन—'साम्प्रतमहं सर्वथा सङ्कटे पतितास्मी'ति वासवदत्तायाश्चित्तानुवर्ती विषादोदयो व्यङ्ग्यः । अस्त्ययं प्रेम्ण एव महिमा, येन किल मध्ये मध्ये स्थिरभावपरिवर्तनं कृत्वा चित्ते भावान्तरमुत्थाप्यत इत्यलम् ।

पद्मावत्या गूढोक्तेरभिप्रायं प्रकाशयति प्रशंसनपुरःसरं चेटी—**अभिजादम्** इति । अभिजातं कुलीनतोचितम् , खलु निश्चये, मन्त्रितं गूढमुक्तम् । राजकुमार्या श्रीमत्या 'पत्यौ मम प्रेम वर्तते' इतीदृशं नूनं कुलीनतासदृशं त्रपावशाद् गूढं ध्वनिमार्गेणोक्तम् । इत्थमेव कुलीनया वक्तव्यमित्यर्थः । अथवा मन्त्रितं कथितम् । अत्र च पक्षे—आत्मनः प्रेम पत्यौ यत्प्रकाशितं वचसा राजकुमार्या, तत्तु कुलीनतासदृशमेव कृतम् । युज्यत एव कुलीनायाः प्रेम पत्याविति भावः ।

सम्प्रति पद्मावती वासवदत्ताया आत्मनश्च प्रियविषयां प्रीतिं परिच्छेत्तुकामाऽऽवन्तिकां वक्ति—**एक्को** इति । खल्विति वाक्यसौन्दर्ये । वक्ष्यमाण एकोऽयं संशयो वर्तते मे, स चायमपनोद्यस्त्वया यथोचितमुत्तरं दत्त्वेत्याशयः ।

कीदृशस्ते संशय इति तं तन्मुखाच्छ्रोतुमिच्छन्ती वासवदत्ताह—**किं किम्** इति । द्विरुक्तिरियं तत्सूचने त्वरयति पद्मावतीम् ।

---

**दासी**—'पति मुझे प्रिय हैं' यह राजकुमारी ने अपनी कुलीनता के अनुकूल ही कहा ।
**पद्मा०**—मुझे एक सन्देह है ।
**वासव०**—क्या ? क्या ?

*पद्मावती*—(क) जह मम अय्यउत्तो, तह एव्व अय्याए वासवदत्ताए त्ति ?

*वासवदत्ता*—(ख) अदो वि अहिअं !

*पद्मावती*—(ग) कहं तुवं जाणासि ?

*वासवदत्ता*—[ आत्मगतम् ] (घ) हं, अय्यउत्तपक्खवादेण

---

( क ) यथा ममार्यपुत्रस्तथैवार्याया वासवदत्ताया इति ।
( ख ) अतोऽप्यधिकम् ।
( ग ) कथं त्वं जानासि ?
( घ ) हम्, आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः । एवं तावद्

---

तदेव संशयविषयकं प्रष्टव्यमुपक्षिपति पद्मावती—**जह इति** । अत्र प्रसङ्गानुरोधात् 'प्रिय' इति योज्यम् । यादृशं यत्परिमाणमार्यपुत्रे मम प्रेम, तादृशं तत्परिमाणमेव तद्वर्तते वा पूज्यायास्तत्र वासवदत्तायाः ? संशयश्चैष एवास्ति ममेत्यर्थः । उज्जयिनीवासिनीयं सूचितपूर्वं पत्युर्दर्शनसौभाग्यमिव पत्यौ वासवदत्ताप्रीतेरियत्तामपि कलयितुमर्हतीति स्थाने प्रश्नोऽयमावन्तिकां प्रति पद्मावत्याः ।

तत्रोत्तरमावन्तिका ब्रूते—**अदो वीति** । अत्रापि 'प्रिय' इत्यार्यम् । अतोऽपि त्वदपेक्षयापि, अधिकमिति क्रियाविशेषणम्, अस्तीति सामान्यक्रियाक्षेपः । यावत्प्रेम ते पत्यौ वर्तते, ततोऽप्यधिकरूपेण तस्या इत्यर्थः ।

'कथमिदं त्वया ज्ञायते, यत्किल तस्यास्तत्र मत्तोऽधिकं प्रेमे'त्याशयकं पुनः प्रश्नं करोति पद्मावती—**कहम्** इति ।

पद्मावतीप्रश्नाकर्णनेनात्मस्वरूपप्रकाशनभिया स्वकीयोक्तौ सानुतापं मानसं वितर्कमाचरति वासवदत्ता—**हम्** इति । हमिति शङ्कावितर्कानुतापसूचकमव्ययम् । आर्यपुत्रस्य पत्युः पक्षपातेन प्रेम्णा तन्महिम्नेति यावत्, समुदाचार आचारो मर्यादा, स चाऽत्र स्वरूपगोपनरूपः, अतिक्रान्त उल्लङ्घितः । अहो ! पत्युः

---

पद्मा०—जैसे मुझे आर्यपुत्र ( प्रिय ) हैं, वैसे ही आर्या वासवदत्ता को भी हैं ?
वासव०—इससे भी अधिक ।
पद्मा०—तुम कैसे जानती हो ?
वासव०—( स्वगत ) हुँ ! आर्यपुत्र की तरफदारी ( पक्षपात ) से मैं व्यवहार को भू

अदिक्कन्दो समुदाआरो । एव्वं दाव भणिस्सं [ प्रकाशम् ] जइ अप्पो सिणेहो, सा सजणं ण परिच्चजदि ।

*पद्मावती*—(क) होदव्वं ।

*चेटी*—(ख) भट्टिदारिए ! साहु भत्तारं भणाहि—अहं पि वीणं सिक्खिस्सामि त्ति ।

---

भणिष्यामि । यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति ।

( क ) भवितव्यम् ।

( ख ) भर्तृदारिके ! साधु भर्तारं भण—अहमपि वीणां शिक्षिष्य इति ।

---

प्रेम्णो महिम्ना मुग्धयाऽत्यन्तमनुचितं कृतमेतन्मया यन्नाम यत्नेन गोपनीयमप्यात्मनो रूपं तादृशेन वचसा प्रकाशितम् । इत्येवमनुतप्य तत्रोत्तरमुपलभ्याह—एव्वम् इति । तावद्वाक्यसौन्दर्ये । वक्ष्यमाणमीदृशं वचोऽत्र प्रयोक्तव्यं मयेत्यर्थः । तदेव प्रकटं ब्रूते—जइ इति । स्वजनं स्वात्मीयवर्गम् । 'परित्यजती'त्ययं वर्तमानत्वाविवक्षया सम्भावनार्थे लट् । परित्यजेदिति तदर्थः । न्यूनश्चेदभविष्यत्प्रेमा पत्यौ वासवदत्तायास्तर्हि सा स्वजनपरित्यागं कदापि नाकरिष्यत* । न हि स्वल्पे सति प्रेम्णि सम्भवत्येतत् । अतो निश्चितमनुमातुं शक्यते तस्याः समधिकं प्रेम पत्याविति भावः ।

स्वजनपरित्यागेन हेतुना प्रेमाधिक्यं कल्पयितुं युज्यत इत्याह पद्मावती—होदव्वं इति । अनेनेति कर्तुराक्षेपः । एतत्त्वदुक्तं सम्भवतीत्यर्थः ।

'भर्तुर्वीणा वादनकौशलं शिक्षित्वा यथा वासवदत्ता भर्तृवल्लभा सञ्जाता, तथा त्वमपि तत्कौशलशिक्षणेन भर्तुः प्रीतिपात्रतामधिगन्तुं चेष्टस्वे'त्याशयेन वचनं प्रयुङ्क्ते पद्मावतीमुद्दिश्य चेटी—भट्टिदारिए ! इति । साधु सम्यक्, सादरमित्यर्थः । 'अहमपी'त्यपिशब्दो 'वासवदत्ता वे'त्यर्थं बोधयति । वीणां वीणावादनम् ।

---

गई या मेरा सदाचार सीमा से बाहर हुआ । अच्छा तो इस तरह कहूँगी । (प्रकाश) यदि उसका प्रेम थोड़ा होता तो वह कभी आत्मीय लोगों को न छोड़ती ।

पद्मा०—हो सकता है ।

दासी—राजकुमारी ! पति से अच्छे ढंग से कहना कि मैं वीन सीखूँगी ।

---

* भर्तुरनुसरणं कर्तुकामया वासवदत्तया कृतः स्वजनपरित्यागस्तु प्रतिज्ञानादिकायां द्रष्टव्यः।

*पद्मावती*—(क) उत्तो मए अय्यउत्तो ।

*वासवदत्ता*—(ख) तदो किं भणिदं ?

*पद्मावती*—(ग) अभणिअ किञ्चि दिग्घं णिस्ससिअ तुह्णीओ संवुत्तो ।

*वासवदत्ता*—(घ) तदो तुवं किं विअ तक्केसि ?

---

( क ) उक्तो मयार्यपुत्रः ।
( ख ) ततः किं भणितम् ?
( ग ) अभणित्वा किञ्चिद् दीर्घं निःश्वस्य तूष्णीकः संवृत्तः ।
( घ ) ततस्त्वं किमिव तर्कयसि ?

---

'वासवदत्ता यथा वीणावादनं शिक्षिता भवता, तथाऽहमपि तदिदं शिक्षणीयास्मी'ति राजकन्यया श्रीमत्या सादरं प्रार्थनीयस्तत्रभवान् भर्ता ।

स्वकृतां तद्विषये तत्प्रार्थनां सूचयति पद्मावती—**उत्तो** इति । आर्यपुत्रमहं तदर्थं प्रार्थितवतीत्यर्थः ।

ततः स त्वां तदुत्तरं किमाचष्टेत्याहावन्तिका—**तदो** इति । अत्र 'तेने'त्यार्थः कर्ता । प्रश्नोऽयं वासवदत्तायाः स्वविषयकप्रियप्रेमपरीक्षाभिलाषिण्यास्तदुत्तरवचनश्रवणकौतूहलमाविष्कुरुते ।

आवन्तिकाप्रश्नमेनं निशम्य पद्मावती ब्रूते—**अभणिअ** इति । तूष्णीकस्तूष्णींशीलः, मौनीति यावत् । आर्यपुत्रेण तु मदीयं तत्प्रार्थनावचनमाकर्ण्य तदुत्तरं किमप्यनुक्त्वा दीर्घं निःश्वसता केवलं मौनमेवाऽवलम्बितम् । एतेन च तात्कालिकतदवस्थाप्रदर्शने वासवदत्तागतशिष्यजनोचितगुणगणस्मरणमहिम्ना स्नेहमग्ने वत्सराजचित्ते दत्तपदो विषादभावः सुगूढं ध्वनितः कविना ।

तत्र किल पद्मावत्या मानसं तर्कं जिज्ञासुर्वासवदत्ता पुनराह—**तदो** इति । ततः तत्र, सप्तम्यां तसिः । इवेति पदप्रयोगो वाक्यसौन्दर्यं दर्शयितुम् , तर्कयसि अनुमानं करोषि । तत्र तावद्भर्तृकृते दीर्घनिःश्वासे मौनधारणे च कीदृशं तवानुमानम् ? किमत्र कारणं सम्भावयसि त्वम् ?

---

पद्मा०—मैंने आर्यपुत्र से कहा था ।
वासव०—तब उन्होंने क्या कहा ?
पद्मा०—बिना कुछ कहे ही ऊँची साँस लेकर चुप हो गये ।
वासव०—उसपर तुम क्या अनुमान करती हो ?

*पद्मावती*—(क) तक्केमि अय्याए वासवदत्ताए गुणाणि सुमरिअ दक्खिणदाए मम अग्गदो ण रोदिदि त्ति ।

*वासवदत्ता*—[ आत्मगतम् ] (ख) धण्णा खु ह्मि, जदि एव्वं सच्चं भवे ।

[ ततः प्रविशति राजा विदूषकश्च । ]

*विदूषकः*—(ग) ही ! ही ! पचिअपडिअबन्धुजीवकुसुमविरलवाद-

---

( क ) तर्कयाम्यार्याया वासवदत्ताया गुणान् स्मृत्वा दक्षिणताया ममाग्रतो न रोदितीति ।

( ख ) धन्या खल्वस्मि, यद्येवं सत्यं भवेत् ।

( ग ) ही ही ! प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयं प्रमद-

---

तद्विषये स्वकीयं तर्कं दर्शयति पद्मावती-**तक्केमि** इति । दक्षिणतायाः औदार्यात्, रोदितीति लङ् भूतार्थे । एतदेवात्रानुमिनोम्यहं यदेतं मत्कृतं वीणावादनशिक्षणप्रस्तावमुपलभ्य तदानीं तत्र विषये पूर्वं दत्तशिक्षणाया वासवदत्तायाः श्लाघनीयगुणानां स्मरणात्तस्य तादृगवस्थया भवितुं युज्यते । उदारतया च मत्पुरो नारोदीत्सः । अन्येन च केनापि तादृश्यां दशायां शोकावेगवशात्सम्भवन्तमश्रुपातं निरोद्धुं न कदापि प्रभूयेतेति भावः ।

पद्मावत्या वितर्कमेनमाकर्ण्य धन्यंमन्या वासवदत्ता स्वगतं भाषते-**धण्णा** इति । एवं पद्मावतीवितर्कितम् । पद्मावत्या अनुमानमिदं वास्तवरूपतां चेत्कलयेत्तर्हि निःसन्देहमधुना धन्यास्मि संवृत्ता । अन्यूनानुस्यूतनिःसामान्यपतिप्रेमसम्भावनयाऽनया नूनं मे जीवनमिदानीं सफलमित्याशयः ।

अथेदानीं पद्मावतीं प्रेयसीमन्विष्यतो वत्सराजस्य राज्ञः सुहृदा विदूषकेण सह प्रमदवनप्रवेशं दर्शयति कविः—**ततः प्रविशतीति** ।

समयोचितं तत्र विदूषको वचनमुद्गिरति—**ही ही** इति । 'हीही'त्ययमत्रा-

---

पद्मा०—आर्या वासवदत्ता के गुणों का स्मरण कर उदारता के कारण मेरे आगे नहीं रोए—ऐसा मैं समझती हूँ ।

वासव०—( स्वगत ) यदि यह सत्य है, तो मैं धन्य हूँ ।

( तब राजा और विदूषक आते हैं । )

विदू०—अहाहा ! बटोरने पर भी थोड़े-थोड़े गिरे हुए दुपहरिया के फूलों से यह नजर-

रमणिज्जं पमदवणं। इदो दाव भवं।

राजा—वयस्य ! वसन्तक ! अयमयमागच्छामि।

कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः।

---

वनम्। इतस्तावद् भवान्।

---

ऽऽनन्दसूचको ध्वनिविशेषः। प्रचितपतितबन्धुजीवकुसुमविरलपातरमणीयं, प्रचितान्यवचितानि पतितानि च यानि बन्धुजीवकुसुमानि 'दुपहरिया'इत्याख्याप्रसिद्धबन्धूकपुष्पाणि तेषां विरलेनेतस्ततः पातेन पतनेन हेतुना रमणीयं सुन्दरम्, अस्तीति शेषः। अवचयावशिष्टानि बन्धूककुसुमान्यत्रेतस्ततः पतितानि वर्तन्ते। तेन प्रमदवनस्यैतस्य सौन्दर्यं चित्तमाह्लादयतीत्यर्थः। मार्गं दर्शयन् राजानमाह—इदो इति। इतः दृश्यमानादस्मात्प्रदेशात्, तावद्वाक्यसौन्दर्ये। 'आगच्छतु' इति शेषः। अनुना मत्सूचितेन मार्गेण भवताऽऽगन्तव्यमनुनेत्यर्थः।

तदनु राजाऽभिधत्ते—**वयस्येति**। अत्र 'अयमय'मिति द्विरुक्तिरियमुद्दीपनसाधनप्रमदवनकमनीयताविलोकनसम्भवोत्कलिकाकुलस्य राज्ञो वासवदत्तावियोगवैकल्यं पद्मावतीदर्शनस्पृहयालुतां च द्योतयति। अयि ! मित्र ! वसन्तक ! एषोऽहं त्वत्सूचितं पन्थानमनुसरामीत्यर्थः।

तदेवात्मनो मदनज्वरवैकल्यमभिधावृत्त्या बोधयति विदूषकं राजा—**कामेनेति**। तदा प्रद्योतनृपतेः सचिवेन कृतस्य मे निग्रहस्य*समये, उज्जयिनीम् अवन्तिराजनगरीं, गते प्रयाते, अवन्तिराजतनयां वासवदत्तां, स्वैरमिच्छानुसारं, दृष्ट्वा नयनपदवीं नीत्वा, कामप्यनिर्वाच्याम्, अवस्थां मोहमयीं दशां, गते प्राप्ते, मयि मदन्तरिति यावत्, कामेन मन्मथेन, पञ्च तत्सङ्ख्याकाः, इषवो बाणाः पातिताः प्रतिरोपिताः निखाता इत्यर्थः। 'पञ्चबाणेन प्राप्तवासवदत्तादर्शने राजनि पञ्चापि

---

बाग सुन्दर दिखाई दे रहा है। आप इधर से (आइये)।

**राजा**—मित्र ! वसन्तक ! यह, यह मैं आया।

उस समय जब मैं उज्जैन में गया और अवन्तिराज-तनया वासवदत्ता को पूरी तरह से

---

* स्पष्टं चेदं प्रतिज्ञायौगन्धरायणे।

तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ? ॥ १ ॥

*विदूषकः*—(क) कहिं णु खु गदा तत्तहोदी पदुमावदी, लदा-

---

(क) कुत्र नु खलु गता तत्रभवती पद्मावती, लतामण्डपं गता भवेत्,

---

बाणाः प्रयुक्ता' इत्यनेन राज्ञो मनसि तदा वासवदत्ताविषयप्रेमोत्पत्तेः परा काष्ठा सूचिता । अद्यापि ततश्चिरतिथे समयेऽतिगतेऽपि, हृदयं मदीयं मनः, तैः कामप्रयुक्तैर्घातकैः पञ्चभिर्बाणैः, सशल्यं कीलितमेव वर्तते, भूयश्च पुनरपि पद्मावतीं विषयीकृत्य, वयं विद्धाः अहं ताडितोऽस्मि, 'अस्मदो द्वयोश्चे'ति बहुत्वम् । पञ्चापि ते बाणा अद्यावधि मद्धृदये लग्ना एव सन्ति, हा! हन्त! ततोऽप्यपरितुष्यता निष्करुणेन कामेन पुनरिदानीं मयि वेधनमारब्धमिति भावः । किन्तु, यदा यदि, मदनः कामः, पञ्चेषुः पञ्चेषवो बाणा यस्येत्येतादृशः प्रसिद्धः, तर्हि तेन षष्ठः पञ्चातिरिक्तः षष्ठसङ्ख्याकः, अयं व्यथयन्निति यावत्, शरो बाणः, कथं कुतः, पातितः प्रक्षिप्तः, अर्थान्मयि । पञ्चबाणेन पञ्चापि बाणान्निपात्य निःशेषितबाणेन सता मयि पातयितुमिदानीं पुनरयं षष्ठो बाणः कुत आनीतः ? शरैरसङ्ख्यैर्विध्यतस्तस्य पञ्चबाणता विस्मयं जनयतीति भावः । वस्तुतस्तु—पञ्चबाणपदे पञ्चशब्दो विस्तारवचनः । पञ्च विस्तृता असङ्ख्या इति यावत्, बाणा यस्येति विग्रहः एवं च न कोऽप्यत्र विरोधः । 'परप्रेमास्पदवासवदत्तावियोगवैश्वानरोऽद्यापि ज्वलयत्येव माम् । पुनरियमपरापि पद्मावतीविषयिण्युत्कटोत्कण्ठा सम्प्रत्यतीव व्याकुलीकरोति मे मानसम् । अहो दुर्दैवान्महति सङ्कटे सम्पतितोऽस्मी'ति चिन्ताभावमन्तर्नाटयति राजा । अत्र वृत्तं शार्दूलविक्रीडितम्, लक्षणं चास्य दर्शितचरम् ॥

प्रियतमादर्शनोत्कण्ठितं सुहृदं राजानमभिलक्ष्य पद्मावतीविषये विविधान् वितर्कानुपक्षिपति विदूषकः—**कहिं णु खु** इति । लतामण्डपं समन्ततो लताभिराच्छन्नं स्थलं कुञ्जमिति यावत् । क तावत्पूज्या पद्मावती प्रस्थिता भवेत् ? कुञ्जं

---

देखकर जब कि मेरी विचित्र दशा हो रही थी, कामदेव ने अपने पांचों बाण मेरे ऊपर गिराये। उनसे मेरा हृदय अभी तक निष्कण्टक नहीं ही हुआ कि फिर भी हम वेधे गये। जब कि कामदेव के पाँच ही बाण हैं, तब यह छठा बाण उसने कहाँ से फेंका ॥ १ ॥

विदू०—माननीया पद्मावती कहां चला गई, कुञ्ज में गई हों, अथवा बाव की खाल से

मण्डवं गदा भवे, उदाहो असणकुसुमसञ्चिदं वग्घचम्मावगुण्ठिदं विअ पव्वदतिलअं णाम सिलापट्टअं गदा भवे, आदु अधिअकडुअगन्धसत्तच्छदवणं पविट्ठा भवे, अहव आलिहिदमिअपक्खिसङ्कुलं दारुपव्वदअं

---

उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितमिव पर्वततिलकं नाम शिलापट्टकं गता भवेत्, अथवा अधिककटुकगन्धसप्तच्छदवनं प्रविष्टा भवेत्, अथवा आलिखितमृगपक्षिसङ्कुलं दारुपर्वतकं गता भवेत्। ही!

---

गता स्यादित्येको वितर्कः। वितर्कान्तरमाह—**उदाहो** इति। उताहो अथवा, 'आहो उताहो किमुत' इत्यमरः, असनकुसुमसञ्चितम्, असनानां सर्जकवृक्षाणां, 'सर्जकाऽसनबन्धूके'त्यमरः, कुसुमैः पुष्पैः सञ्चितं व्याप्तम्, अत एव व्याघ्रचर्मावगुण्ठितं शार्दूलचर्माच्छादितमिव, तद्वत्प्रतीयमानमिति यावत्, पर्वततिलकं नामतन्नामधेयं पर्वतशिखरं, तिलकस्योर्ध्वस्थानीयत्वादत्र तत्पदेन शिखरं गृह्यते, शिलापट्टकम् उपवेशनयोग्यं चतुष्कोणं शिलाखण्डम्। व्याघ्रचर्माणीव प्रतीयमानानि सर्जकपुष्पाणि यत्र भूयः समन्तात्प्रसृतानि वर्तन्ते, तादृशं शैलशिखरस्थं पर्वततिलकनामकं शिलाशकलमुपवेष्टुं प्रयाता स्यात्किमु? पुनस्तृतीयं वितर्कं दर्शयति—**आदु** इति। अधिककटुकगन्धसप्तच्छदवनम्, अधिकं कटुकोऽतिकटुर्गन्ध आमोदो येषां तादृशां सप्तच्छदानां सप्तपर्णवृक्षाणां वनं तत्प्रचुरं स्थलमिति यावत्, प्रविष्टा तदन्तर्गता। पुष्पसुगन्धिसप्तपर्णपादपव्राताऽऽवृतं स्थलविशेषमाश्रिता वा स्यात्? चतुर्थमन्यं वितर्कं कलयति—**अहव** इति। आलिखितमृगपक्षिसङ्कुलम्, आलिखितैश्चित्ररूपेण विन्यस्तैः मृगैः पशुभिः पक्षिभिश्च सङ्कुलं, पूर्णम्, दारुपर्वतकं काष्ठनिर्मितं पर्वतप्रतिकृतिम्, 'इवे प्रतिकृता'विति कन्। चित्रलिखिता यत्र भूयांसः पशुपक्षिणो विलसन्ति, तं कृत्रिमकाष्ठमयपर्वतं प्रस्थिता भवेत्स्विद्वा? एतादृशो विकल्पानुद्भाव्य सुहृन्मनोविनोदाय विषयान्तरमाश्रयन्

---

मढ़े हुए की भाँति रंग-बिरंगी असन के फूलों से लदे हुए पर्वततिलक नामक पत्थर की चौकी पर गई हों, या उत्कट—गन्धवाली छतिवन (सप्तपर्ण) के वन में गई हों, किंवा जहाँ पशु और पक्षियों के चित्र लिखे हैं, उस लकड़ी के पहाड़ पर गई हों। (ऊपर देखकर) अहा हा!

गदा भवे । [ ऊर्ध्वमवलोक्य ] ही ! ही ! सरअकालणिम्मले अन्तरिक्खे पसारिअबलदेवबाहुदंसणीअं सारसपन्ति जाव समाहिदं गच्छन्तिं पेक्खदु दाव भवं ।

राजा—वयस्य ! पश्याम्येनाम् ,

ऋज्वायतां च विरलां च नतोन्नतां च सप्तर्षिवंशकुटिलां च निवर्तनेषु ।

---

ही ! शरत्कालनिर्मलेऽन्तरिक्षे प्रसारितबलदेवबाहुदर्शनीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीं पश्यतु तावद् भवान् ।

---

दत्तोर्ध्वदृष्टिः सन् वदति—**ही ही** इति । ही हीति प्रसन्नतासूचकम् । अत्र वाक्ये यावत्तावत्पदे वाक्यालङ्कृतये प्रयुक्ते । अन्तरिक्षे आकाशे, प्रसारितबलदेवबाहुदर्शनीयाम् , प्रसारितौ विस्तारितौ बलदेवस्य बलरामस्य बाहू भुजाविव दर्शनीयां मनोहराम् , 'पसादिअ' इति पाठे प्रसादितौ प्रसादं नैर्मल्यं प्रापिताविव्यर्थः, समाहितं सावधानं सम्यग्रूपेण सुन्दरं यथा स्यात्तथा, गच्छन्तीं चलन्तीं सारसपङ्क्तिं सारसाख्यपक्षिविशेषश्रेणिम् । शरत्समयनिर्मलाकाशप्रदेशशालिनीं पङ्क्तिबन्धेन सुन्दरं गच्छतां बलदेवबाहुसदृक्षाणां सारसपक्षिणां यूथं दृश्यतामिदानीं भवता । कथमेतन्मनोहरं दृश्यते । तदिदमक्ष्णोर्लक्ष्यतामानीय क्षणं मनो विनोदनीयं नेत्रे च सफलयितव्ये इति भावः ।

ततो राजा ब्रूते—**वयस्येति** । विदूषकदर्शितां सारसश्रेणिमुद्दिश्य 'एना, मिति निर्देशः । अन्वादेश इदम एनादेशः । मित्र ! विलोकयेऽहं त्वत्सूचितां सारसपङ्क्तिमिमां गगनाङ्गणे ।

निगद्येदं तामेव सारसपङ्क्तिं विवर्णयिषुर्विशिनष्टि पद्येन—**ऋज्वायतामिति** । अत्र पूर्वार्धे चत्वारश्चकाराश्चत्वारि विशेषणानि समुच्चिन्वन्ति । ऋज्वायताम् , ऋजुः सरला आयता दीर्घा च तां घनामिति यावत् , विरलां क्वचन मध्ये

---

शरद् ऋतु के कारण निर्मल आकाश में फैलाई हुई बलरामजी की भुजाओं की तरह सुन्दर सारस-पक्षियों की इस पंक्ति को आप देखें कि वह कैसी सुन्दरता से जा रही है ।

**राजा**—मित्र ! इसे देखता हूँ ।

यह कहीं सीधी है, कहीं फैली है, कहीं विरल है और कहीं ऊँची नीची है । जब कहीं

निर्मुच्यमानभुजगोदरनिर्मलस्य सीमामिवाम्बरतलस्य विभज्यमानाम्॥२॥

चेटी—(क) पेक्खदु पेक्खदु भट्टिदारिआ एदं कोकणदमाला-

(क) पश्यतु पश्यतु भर्तृदारिका एतां कोकनदमालापाण्डररमणीयां

मध्ये स्थितां, नता च उन्नता च तां नतोन्नतां बन्धुरां नीचोच्चप्रदेशेषु विद्यमानां, निवर्तनेषु वामदक्षिणयोस्तिर्यग् विवलनेषु, सप्तर्षिवंशकुटिलां सप्तर्षिवंशस्तदाख्यतारकामण्डलं तद्वत्कुटिलां वक्राकारेण स्थिताम्। पुनस्तामेवोत्प्रेक्षते-**निर्मुच्यमानेति**। निर्मुच्यमानो मुच्यमानकञ्चुकः कञ्चुकहीन इति यावत्, यो भुजगः सर्पः तदुदरवन्निर्मलस्य स्वच्छस्य, अम्बरतलस्य गगनाङ्गणस्य विभज्यमानां क्रियमाणविभागां घनविरलत्वादिरूपेण पार्थक्यं दर्शयन्तीं, सीमां मर्यादां विभागसूचिकां रेखामिव, तदाकारतया प्रतिभान्तीम्, 'एनां पूर्वोक्तां गगनस्थां सारसपङ्क्तिमहं पश्यामी'ति पूर्वेणान्वयः। सारसपङ्क्तिरियं गगनभागे गतिविशेषकौशलं दर्शयन्ती क्वचिद् घना क्वचिद्विरला क्वचनोन्नता क्वचिच्चावनता दृश्यते। यदा च कुत्रचित्पार्श्वतो विवलनं कुर्वती कुटिलां गतिमालम्बते, तदा तु वक्रसन्निवेशेन सप्तर्षितारकामण्डलेन सादृश्यं लभते। शङ्के, गगनस्य मानसूचिका विभागप्रदर्शिका रेयं सीमेव समुद्भासत इति। कविनात्र शरत्समागमान्निर्मलं मेघनिर्मुक्तमाततं चाकाशं निर्मुक्तसर्पोदरेणानुमितम्। वसन्ततिलका नाम वृत्तम्, लक्षणमुक्तं प्राक्॥ २॥

इतो राजा विदूषकसूचनानुसारं सारसावलिमित्थं वर्णयति। ततश्च पूर्वतः प्रविष्टा चेट्या सनं सवासवदत्ता पद्मावती प्रमदवनैकदेशे यथासुखं पर्यटन्ती वर्तते। तत्र तावच्चेटी तामेव सारसपङ्क्तिं गगनाङ्गणभूपायमाणामुद्वीक्ष्य राजकुमारीं पद्मावतीं प्रतीत्य तन्निरीक्षणमुद्दिश्य वचोऽभिधत्ते-**पेक्खदु** इति। अत्र पेक्खदु पेक्खदु इत्यसौ द्विरुक्तिरादरार्था। कोकनदमालापाण्डररमणीयाम्, कोकनदानां श्वेतकमलानां माला पङ्क्तिः स्रग् वा सेव पाण्डरा श्वेता रमणीया मनोहरा च ताम्, 'विशदश्वेतपाण्डराः' इत्यमरः। इदं च सारसपङ्क्तेर्विशेषणम्। यद्यपि 'रक्तोत्पलं कोकनद'मिति कोषानुरोधात्कोकनदशब्दो रक्तकमलार्थस्य वाचको विद्यते,

मुड़ती है तो ठीक सप्तर्षियों के मण्डल की भाँति टेढ़ी-मेढ़ी भी हो जाती है। अत एव तत्काल ही केंचुली छोड़ने वाले साँप के पेट की तरह स्वच्छ आकाश के-पृथग् विभाग के रूप से स्पष्ट होने वाली-सीमा की भाँति प्रतीत होती है॥ २॥

दासी—राजकुमारी! देखिये, श्वेतकमल की माला के समान धवल और सुन्दर तथा

पण्डररमणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं । अम्मो ! भट्टा ।

*पद्मावती*—(क) हं ! अय्यउत्तो । अय्ये ! तव कारणादो अय्यउत्तदंसणं परिहरामि । ता इमं दाव माहवीलदामण्डवं पविसामो ।

---

सारसपङ्क्तिं यावत् समाहितं गच्छन्तीम् । अहो ! भर्ता ।

( क ) हम् ! आर्यपुत्रः । आर्ये ! तव कारणादार्यपुत्रदर्शनं परिहरामि । तदिमं तावन्माधवीलतामण्डपं प्रविशामः ।

---

तथापि प्रसङ्गानुरोधादौचित्याच्च सोऽयं श्वेतकमलरूपमर्थं बोधयत्यत्र । यावत्पदं वाक्यालङ्कृतौ । 'समाहितं गच्छन्ती'मित्यस्यार्थः प्रागुक्तः । श्वेतकमलमालेव श्वेततां सुन्दरतां च बिभ्राणा सारसश्रेणिरियं गतिविषये सौष्ठवं प्रकटयन्ती दर्शनपथं नेतव्या सादरमिदानीं श्रीमत्या राजकुमार्येत्यर्थः । इतस्ततोऽक्षिणी निक्षिपन्ती तदनु सहसा तत्रैव समीपे भर्तृदारिकायाः पद्मावत्याः प्रियतमं नायकमवलोक्य तां दर्शयन्ती साश्चर्यमाह—**अम्मो** इति । भर्ता पतिः, अर्थात्पद्मावत्याः । अत्रोपगत इति शेषः । अयं तावद्भर्तृदारिकायाः प्राणप्रियः प्रियः प्रदेशेऽस्मिन् समागतः । किमधुना प्रतिपत्तव्यमस्माभिरिति भावः ।

प्रियदर्शनाल्लज्जमानां ससङ्कोचं वदति पद्मावती—**हम्** इति । हमिति सङ्कोचमन्तर्गतं ध्वनयति । अहो ! श्रीमान् पतिदेवोऽयमत्रैवोपगत इत्यर्थः । ततस्तदानीं करणीयं निवेदयत्यावन्तिकाम् । **अय्ये** इति । तव कारणात् त्वदर्थम् , आर्यपुत्रदर्शनम् , आर्यपुत्रकर्तृकमस्मत्कर्मकं दर्शनम् परिहरामि वर्जयामि । अयि ! मान्ये ! त्वं तावत्परपुरुषं द्रष्टुं नेहसे, भर्ता च मे समीप एव सम्प्रति वर्तते । दैववशादुपस्थितस्यैतस्य दर्शनं तु परं स्पृहयाम्यहम् । परमस्माकं तत्सांमुख्ये सति सञ्जाते ते नियमो भज्येत । अतस्तदर्थं कमप्युपायमाचरामि, येन सोऽयमस्मान् विलोकयितुं न पारयेदित्याशयः । तमेव चिन्तितमुपायं दर्शयति—**ता** इति । तत् तस्मात्कारणात् , तावच्छब्द एवार्थकः । इमं समीपतो दृश्यमानम् । आर्यपुत्रदर्शनं परिहर्तुं वासन्तीलताकुञ्जमेव समीपवर्तीदं प्रविश्यतामस्माभिः ।

---

सावधानी से जाती हुई इस सारसों की पंक्ति को देखिये । अरे ! स्वामी ( आ पहुँचे ) ।

पद्मा०—हे, आर्यपुत्र ! आर्ये ! तुम्हारे लिये ( आर्यपुत्र हमलोगों को न देख सकें इसलिये ) आर्यपुत्र के दर्शन को त्यागती हूँ । तो इस माधवीलता के मण्डप में जाँय ।

वासवदत्ता—(क) एव्वं होदु ।

[ तथा कुर्वन्ति । ]

विदूषकः—(ख) तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे ।

राजा—कथं भवान् जानाति ?

---

( क ) एवं भवतु ।

( ख ) तत्रभवती पद्मावतीहागत्य निर्गता भवेत् ।

---

कुञ्जेऽस्मिन् प्रविष्टा वयं प्रच्छन्नरूपेण स्थितास्तद्विलोचनपदस्य नैवातिथीभविष्याम इत्यतस्तदेव कुञ्जं सत्वरं शरणीयकरणीयमिति भावः । एवं किल करणे पद्मावत्या मानसं तात्पर्यमेतदप्यासीद्, यदत्र गूढस्थितया मया निर्बाधं विलम्भमापितं भर्तुः श्रोतुं लभ्येत ।

सम्मतिमत्रार्थे दर्शयत्यात्मन आवन्तिका—**एव्वम्** इति । एवं कुञ्जेऽत्र प्रवेश इति यावत् । सुष्ठूक्तं त्वया, समयोचितं वासन्तीकुञ्जं गच्छामेत्यर्थः ।

तत्र तासां सर्वासां प्रवेशमाह—**तथा कुर्वन्तीति** ।

पद्मावतीप्रभृतीनामित्थं लताकुञ्जप्रवेशं प्रदर्श्य प्रियाविरहकातरस्य राज्ञो वृत्तं वर्णयिष्यन्विदूषकोक्तिमवतारयति कविः—**तत्तहोदी** इति । अयि ! मित्र ! प्रदेशमिममालक्ष्य समयेऽस्मिन्ननुमानमेवं भवति मे, यदत्र पद्मावत्या श्रीमत्या समागत्य किञ्चिरं भवत्प्रतीक्षया स्थित्वा ततो निराशया प्रस्थितं स्यादित्यर्थः । राज्ञः कृते चिरात्पद्मावत्या मार्गणे लग्नो विदूषकः क्वापि तामपश्यन्नत्र तदागमनचिह्नं किञ्चिदुपलभ्यं तदौपयिकं सतर्कं वचनमिदं प्रायुङ्क्त ।

निशम्येदं वचो राजा तं पृच्छति—**कथमिति** । कथं केन लक्षणेनेति यावत् । पद्मावत्या इहागमनमितो निर्गमनं च पुनः केन लक्षणेन ज्ञायते त्वया ? पूर्वोक्तानुमानसाधकोऽत्र कस्तावत्तवानुकूलस्तर्कः ?

---

वासव०—ऐसा ही हो ।

( लतामण्डप में प्रवेश करती है । )

विदू०—माननीया पद्मावती यहाँ आकर चली गई होंगी ।

राजा—तुम कैसे जानते हो ?

*विदूषकः*—(क) इमाणि अवइदकुसुमाणि सेफालिआगुच्छआणि पेक्खदु दाव भवं ।

*राजा*—अहो ! विचित्रता कुसुमस्य वसन्तक ! ।

*वासवदत्ता*—[ आत्मगतम् ] (ख) वसन्तअसङ्कित्तणेण अहं पुण जाणामि उज्जइणीए वत्तामि त्ति ।

---

(क) इमानपचितकुसुमान् शेफालिकागुच्छान् प्रेक्षतां तावद् भवान् ।
(ख) वसन्तकसङ्कीर्तनेनाहं पुनर्जानामि उज्जयिन्यां वर्त इति ।

---

तदेव स्वकीयानुमानकारणं प्रकाश्यते विदूषकेण—**इमाणि** इति । अत्र शेफालिकागुच्छकानुद्दिश्य तत्रापचितकुसुमत्वं विधेयम् । अपचितकुसुमान् , अपचितानि विध्वंसितानि त्रोटितानीति यावत् , कुसुमानि येभ्यस्तान् , गुच्छः स्तवकः, स्वार्थे कः, 'स्याद् गुच्छकस्तु स्तवकः' इत्यमरः । तावदिति वाक्यालङ्कारे । इदमिदानीं निरूपयतु श्रीमान् , यदमीभ्यः शेफालिकाप्रसूनस्तवकेभ्यः प्रसूनान्यपगतानि सन्ति । श्रीमतीं पद्मावतीं विना प्रमदवनादस्मात्पुष्पाणि केनापि न शक्यन्ते ग्रहीतुम् । अतस्तदागमनमत्राहं तर्कयामीति भावः ।

विदूषकस्य तर्केऽस्मिन् किमप्यनुक्त्वा मनसैव तत्रानुमतिं कलयंस्तत्प्रसूनसौन्दर्यं प्रशंसति राजा—**अहो** इति । विचित्रता अनेकवर्णता सुन्दरतेति यावत् , अस्तीति शेषः । कुसुमस्येति जातावेकवचनम् । अयि ! सखे ! वसन्तक ! कथमेतानि पुष्पाणि विचित्राणि मनोहारीणि दृश्यन्ते ?

विदूषकमुद्दिश्य राज्ञा प्रयुक्तं 'वसन्तके'ति सम्बुद्धिपदमुज्जयिन्यां स्थितिसमये बहुशः श्रुतमासीद्वासवदत्तया । अथ किल चिरात्तदेव पदं तं प्रति प्रियेण प्रयुक्तं निशम्य तया पुरातनसमयस्मरणं कुर्वत्या विमोहेन स्वगतं चिन्त्यते—**वसन्तअ** इत्यादि । सङ्कीर्तनं नामग्रहणम् , पुनःपदं वाक्यशोभायाम् , जानामि मन्ये सम्भावय इति यावत् । प्रियतमेन विहितं वसन्तकनामग्रहणमिदं पूर्वकालिकमुज्जयिनी-

---

**विदू०**—आप इन हरसिंगार के गुच्छों को देखें, जिनमें से फूल चुन लिये गये हैं ।

**राजा**—वसन्तक ! क्या ही रङ्ग-विरंगे फूल हैं ।

**वासव०**—( स्वगत ) वसन्तक का नाम लेने से तो मुझे मालूम पड़ता है कि मैं उज्जयिनी में ही हूँ ।

*राजा*—वसन्तक ! अस्मिन्नेवासीनौ शिलातले पद्मावतीं प्रतीक्षिष्यावहे ।

*विदूषकः*—(क) भो ! तह । [ उपविश्योत्थाय ] ही ! ही ! सरअकालतिक्खो दुस्सहो आदवो । ता इमं दाव माहवीमण्डवं पविसामो ।

---

( क ) भोस्तथा । ही ! ही ! शरत्कालतीक्ष्णो दुस्सह आतपः ! तदिमं तावन्माधवीमण्डपं प्रविशावः ।

---

चासमस्मिन्काले स्मारयति माम्, तदानीं बहुशस्तथानुभवादिति भावः ।

पुना राजा विदूषकमाह—**वसन्तकेति** । अस्मिन् समीपवर्तिनि, शिलातले उपलफलके । आसीनावुपविशन्तौ, 'आस उपवेशने' इत्यतः शानचि 'ईदासः' इत्यनेन तस्य ईत्वम् । 'प्रतीक्षिष्यावहे' इति विध्यर्थे लृट्, 'प्रतीक्षावहै' इति तदर्थः । एतदेव समीपस्थं उपलफलकमुपविश्यावाभ्यां पद्मावती प्रतीक्षणीया । तदागमनमत्र सम्भाव्यते पुनः । अतस्तावत्कालपर्यन्तमत्रैवावस्थितिरावयोः साम्प्रतमित्याशयः ।

मित्रवरेण राज्ञा चिकीर्षितं शिलातलोपवेशं प्रति स्वीयामनुमतिं प्रदर्शयन् ब्रूते विदूषकः—**भो इति** । तथा साधु । राजन् ! भवत्प्रस्तावोऽयमनुमोद्यते मया, शिलातलेऽस्मिन्नुपवेष्टव्यमावाभ्यामित्यर्थः । ततस्तत्र शिलातले क्षणमुपविश्य शरदातपसन्तापमनुभवन्नुत्थाय पुनराह—**ही ही** इति । ही हीति दुःखसूचकम् । शरत्कालतीक्ष्णः शरत्समयसम्बन्धात्तीव्रः, अत एव दुःसहः दुःखेन सोढुं शक्यः, 'ईषद्दुःसुषु' इत्यादिना खल् । तदित्यव्ययं हेत्वर्थे, तावदिति वाक्यालङ्कृतौ । 'प्रविशाम' इति लटः प्रयुक्तिर्विध्यर्थे । हन्त ! बाधन्ते भृशं तीव्रतराः शारदविभाकरांशवः सम्प्रति । अत्र किलातपतापान्न स्थातुं शक्यते किञ्चित् । अतः सन्निकृष्टतद्वासन्तीलताकुञ्जाभ्यन्तरमेव गन्तव्यमिति भावः । अत्र वर्षापगमादनन्तरमुल्लसतः शारदोष्मणस्तापकारित्वं त्वनुभवसंवेद्यम् । अस्य च ग्रीष्मोष्मण इवातीव दुःसहत्वं नास्ति, परं तदपेक्षया किञ्चिन्न्यूनदुःसहत्वं तावन्नापरोक्षम् ।

---

राजा—वसन्तक ! इसी पत्थर की चौकी पर बैठ पद्मावती को हम लोग प्रतीक्षा करें ।

विदू०—जी ! ठीक है ( बैठ और फिर उठकर ) हो ! हो !! शरद्-ऋतु का कड़ा घाम असह्नीय है । इसलिये इस माधवी-कुञ्ज के मण्डप में चलें ।

राजा—बाढम्, गच्छाग्रतः ।

---

केचिदत्र महानुभावाः—प्रमदवने च्छायाबहुले ऊष्मण उपलम्भविषये सम्भवत्कारणान्तरमूहितुमशक्नुवता विदूषकेण तत्रोष्मणि कृते दुःसहातपजनितत्ववर्णनेऽस्मिन्नसङ्गतत्वं भण्डतानुरूपतया कल्पितत्वं स्वव्याख्यायामुल्लिखन्ति । तत्र तावद्विचारणीयं सहृदयैः—यदि नाम शिलातले दुःसहोष्णतासद्भावमुद्दिश्य राज्ञा ततः प्रदेशान्तरगमनप्रस्तावोऽकरिष्यत, विदूषकेण पुनस्तत्र वियोगजनितत्वादि कारणान्तरं तर्कयितुमपारयता मन्दबुद्धिना सौरातपजनितत्वमकल्पयिष्यत; ततो जातु विदूषकोक्तौ तस्यामसङ्गतत्वेन भण्डतानुरूपकल्पनारोपेण च पूर्वोक्तेन सङ्गतेनाऽभाविष्यत । अत्र तु नैतादृक् प्रसङ्गः । विदूषकेण किल शिलातले समुपविष्टेन शारदातपस्य दुःसहत्वं वर्णयित्वा ततोऽन्यत्र गमनप्रस्तावो राज्ञः पुरस्तादुपस्थापितोऽत्र । इत्थं सति, न ज्ञायते, विदूषकेण सूचितमनुभवगोचरीकृतमूष्मणि दुःसहातपजनितत्वं नाम कारणमसङ्गतं मत्वा महानुभावैस्तत्र तैः कारणान्तरकल्पनायाः का वाऽऽवश्यकता सम्भाविता ? प्रत्युत सम्भावितं किमपि कारणान्तरमेवासङ्गतं प्रतिभायात्प्रत्यक्षापलापेन । प्रच्छायशीतलप्रमदवनसमीपवर्तिन्यसुष्मिन् शिलातले तादृशातपोपलम्भसम्भवो न्यून एवेति ततः स्थानान्तरप्रस्थानविधौ कारणत्वेन कल्पितामूष्मोपलब्धिमन्तरेण कारणान्तरस्य कल्पना तु करणीया स्यात्, किन्तु साऽप्यापातरमणीयैव नूनम् । नात्रोपलभ्यते पद्मावती, माधवीमण्डपे पुनस्तदवाप्तिः सम्भवतीत्यभिप्रायेण विदूषकेण पद्मावतीवियोगविकलं तत्र स्थले विमनायमानं राजानं सखायमुद्दिश्य ततः स्थानान्तरगमने तदीयवियोगवैकल्यादिकारणप्रदर्शनमनुचितं दुःसाहसं च मन्यमानेन बुद्धया तदेव दुःसहातपसन्तापरूपं कारणमुपन्यस्तं पर्यायोक्तविधया । विचित्रवचसो विदूषकस्य दोषबहुलेऽपि वचने क्वचित्कोऽपि कदाचिद् गुणोऽपि सम्भवति । अत्र चेदं व्यङ्ग्यार्थसुन्दरं वचो विदूषकस्य समयोचितकारितां बुद्धिमत्तां च भूयसीमाविष्करोतीत्यलमधुनाऽप्रसक्तानुप्रसक्त्या ।

**बाढमिति** । बाढं शोभनं स्वीकृतमिति यावत्, अर्थात्त्वदुक्तम् । अग्रतो गच्छेति मार्गप्रदर्शनाभिप्रायकम् । अयि ! सखे ! माधवीमण्डपप्रवेशप्रस्तावस्त्वया समीचीनः कृतः, अनुमतोऽयं मे । मार्गप्रदर्शनार्थं पुनस्त्वमग्रतो गच्छेः, अहन्तु त्वामनुगन्तुमुद्यतोऽस्मीत्यर्थः । मण्डपे तत्र पद्मावत्या दर्शनं सम्भवतीति राज्ञा विदूषकोक्तमनुमोदितम् ।

---

राजा—अच्छा, आगे चलो ।

*विदूषकः*—(क) एव्वं होदु ।

[ उभौ परिक्रामतः । ]

*पद्मावती*—(ख) सव्वं आउलं कत्तुकामो अय्यवसन्तओ । किं दाणिं करेह्म ?

---

( क ) एवं भवतु ।

( ख ) सर्वमाकुलं कर्तुकाम आर्यवसन्तकः । किमिदानीं कुर्मः ।

---

**एव्वम्** इति । 'अग्रतो भूयते मया, त्वया च सखे ! मन्मार्गोऽनुगन्तव्य' इत्येवं विदूषकवचसोऽभिप्रायः ।

**'उभौ परिक्रामतः'** इत्यनेन द्वयो राजविदूषकयोर्माधवीलतामण्डपमुद्दिश्य गमनं सूचितम् ।

प्रमदवनमागतं प्रियतमं प्रेक्ष्य पुरा पद्मावती परपुरुषदर्शनं परिहरन्त्या आवन्तिकायाः कृते स्वरूपगोपनक्षमं सह तया माधवीमण्डपं प्रविशति स्मेति पूर्वं प्रतिपादितम् । परं यदैव राजदर्शनं परिहर्तुं तदानीं तया शरणीकृतमासीत्कुञ्जम् , तत्रापि तदिदानीं दैववशादुपस्थितं भवतीति तत्र स्वकीयप्रयत्नवैफल्यं दर्शयन्ती चिन्तां नाटयति पद्मावती—**सव्वम्** इति । सर्वम् आवन्तिकारक्षणौपयिकं मत्कृतं सकलं प्रयत्नमिति यावत् , आकुलं कर्तुकामः विघातयितुं विफलतां नेतुमुद्यतः । मत्समीपे न्यासरूपेण स्थापितायाः श्रीमत्या आवन्तिकायाः प्रच्छन्नरूपाया राजदर्शनपरिहारार्थमद्यया-वन्मया यो यः प्रयत्न आचरितः, स किल सकलो हन्त । वैफल्यं नीयते सम्प्रति कुञ्जेऽस्मिन् राजानं प्रवेशयितुमिच्छता श्रीमद्विदूषकेण । किमधुना विधेयम् ? सहसोपनतमिदं पुना राजदर्शनं परिहर्तुं कस्तावदुपायः समाश्रयणीयः ? अहो ! किङ्कर्तव्यमूढा बुद्धिर्मे, किमपि समयेऽस्मिन्न स्फुरतीति भावः । सर्वथाऽभीष्टमपि प्रियदर्शनं भविष्यदुपेक्ष्य पुनस्तत्परिहारे किमप्युपायान्तरमन्विष्यन्त्याऽत्र पद्मावत्या सर्वतः स्वात्मनो निक्षेपरक्षणक्षमत्वं स्वीकृतपरिपालनकौशलं च सुस्पष्टं प्रकटीकृतम् ।

---

विदू०—ऐसा ही हो ।

( दोनों परिक्रमा करते हैं । )

पद्मावती—आर्य वसन्तक सभी ( बना-बनाया खेल ) बिगाड़ना चाहते हैं । अब हम लोग क्या करें ?

चेटी—(क) भट्टिदारिए ! एदं महुअरपरिणिलीणं ओलम्बलदं ओधूय भट्टारं वारइस्सं।

*पद्मावती*—(ख) एव्वं करेहि।

[ चेटी तथा करोति। ]

---

( क ) भर्तृदारिके ! एतां मधुकरपरिनिलीनामवलम्बलतामवधूय भर्तारं वारयिष्यामि।

( ख ) एवं कुरु।

---

तदानीं करणीयं राजदर्शनपरिहारोपायं निरूपयति चेटी—**भट्टिदारिए** इति। मधुकरपरिनिलीनाम्, मधुकरा भ्रमराः परिनिलीनाः पुष्परसपानार्थं निश्चलतया समन्ततोऽवस्थिता यत्र ताम्। क्तान्तस्य पूर्वनिपाते युक्तेऽपि परिनिलीनशब्दस्य परनिपातोऽत्र कथञ्चिदग्न्याहितादिवत् समाधेयः। परिनिलीनमधुकरामिति युक्तं पठितुम्। अथवा—मधुकरैः परिनिलीनां व्याप्तामित्यर्थः करणीयः। अवलम्बलताम्, पद्मावत्या इतरासां वा लतानामाश्रयभूतां वल्लीम्। यस्या अधस्तात्पद्मावत्युपविष्टा, यां वावलम्ब्येतरा लता अवस्थिताः सन्ति, तां लतामित्यर्थः। अवधूय कम्पयित्वा, भर्तारं भवत्याः प्रियं पतिं राजानं, वारयिष्यामि अर्थात्कुञ्जान्तःप्रवेशात्। अयि ! राजकन्ये ! न किल कोऽपि चिन्ताया अवसरः। मधुपाननिश्चलभ्रमरपूर्णा येयमाश्रयभूता लता वर्तते तामहं कम्पयामि। एतेन तावत्—एकत्रावस्थिता भ्रमराः सर्वतः प्रसरिष्यन्ति, त एव भवदीयं पतिं कुञ्जान्तःप्रवेशोद्यमान्निवारयिष्यन्तीत्यर्थः। परिचालितायां चैतस्यां लतायां तत्र परितः प्रसृत्य प्रवेशमार्गावरोधं करिष्यद्भ्यो भ्रमरेभ्यस्त्रासादेव नूनं भवत्याः पत्या नात्र प्रवेक्ष्यते। तत्तमेवैनमुपायं करोमीति भावः।

अत्रार्थे सम्मतिमाह स्वीयां पद्मावती—**एव्वम्** इति। त्वत्सूचितोऽयमुपायः सुन्दरो मयाऽनुमन्यते। एतदेव करणीयं त्वया करणीयमिदानीमित्यर्थः।

**चेटी तथा करोतीति** पूर्वोक्तं लताकम्पनं सूचितम्।

---

दासी—राजकुमारी ? भौरों से लदी इस शाखा को, जिसका सहारा आपने वा लताओं ने लिया है, हिलाकर मालिक को ( आने से ) रोकती हूँ।

पद्मा०—ऐसा ही करो।

( दासी वैसा ही करती है। )

विदूषकः—(क) अविहा अविहा, चिट्ठदु, चिट्ठदु दाव भवं।

राजा—किमर्थम् ?

विदूषकः—(ख) दासीएपुत्तेहि महुअरेहि पीडिदो ह्मि।

राजा—मा मा भवानेवम्। मधुकरसन्त्रासः परिहार्यः।

---

( क ) अविह अविह, तिष्ठतु तिष्ठतु तावद् भवान्।

( ख ) दास्याः पुत्रैर्मधुकरैः पीडितोऽस्मि।

---

पूर्वसूचितानुसारं माधवीलताकुञ्जाभ्यन्तरं प्रवेष्टुमुद्यतस्तत्र प्रवेशद्वारे भ्रमरबाधामनुभवन् विदूषको राज्ञो गतिं निवारयन् ब्रूते—**अविहा** इति। अविहेत्यव्ययं विषादसूचकम्, भृशार्थे च तस्यात्र द्विरुक्तिः। 'तिष्ठतु तिष्ठत्वि'ति द्विःप्रयोगः सम्भ्रमं व्यनक्ति, तावद्वाक्यालङ्कृतौ। अहह! महत्कष्टं समुपस्थितम्। स्वीयां गतिं निरुध्य स्थीयतामत्रैव भवता। न तावदितोऽग्रे समागन्तव्यम्।

**किमर्थमिति**। किमिति नाग्रे समागन्तव्यं मया? 'मद्गतिनिवृत्तौ किं तावदन्तर्गतं/ते कारणमि'ति तत्कारणं ज्ञातुमिच्छतो विदूषकं प्रति प्रश्नोऽयं राज्ञो निवर्तितगतेः।

उत्तरं विदूषकस्य तदुपरि—**दासीएपुत्तेहिं** इति। दास्याः पुत्रैरिति निन्दायाम्, नीचैरिति तदर्थः। 'षष्ठ्या आक्रोशे' इत्यनेन चात्र षष्ठीविभक्तेर्न लुक्। अत्र किल परितो भ्रमन्ति भ्रमराः! एते च नीचास्त्रासयन्ति मामित्यर्थः। अत्र दास्याः पुत्रैरित्युक्त्या भ्रमरेषु कोपः सूचितो भवति विदूषकस्य। तेन च—'गतिमस्मदीयां निरुन्धतो बाधमानान्दुष्टानेतान्निवार्यैव शक्यतेऽन्तर्गन्तुम्। अतस्तावदत्रैव तिष्ठतु भवान्, यावदहमेतान्नीचान्निवारयामी'ति विदूषकोक्तेस्तात्पर्यमवगन्तव्यम्।

भ्रमरोद्भूतां बाधामनुभूय ततो निवारणेन तान् भ्रमरान् बाधितुमिच्छन्तं विदूषकं तदुद्योगान्निवर्तयन् राजा ब्रूते—**मा मेति**। ब्रवीत्विति शेषः, मा मेति

---

विदू०—हाय! हाय! ठहरिये, जरा आप ठहरिये।

राजा—क्यों?

विदू०—इन दुष्ट भौंरों से सताया जा रहा हूं।

राजा—नहीं नहीं, तुम ऐसा न करो। भौंरों को दुःख नहीं देना चाहिये।

पश्य,

**मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः ।**
**पादन्यासविषण्णा वयमिव कान्तावियुक्ताः स्युः ॥ ३ ॥**

---

द्विरुक्तिर्निषेधं द्रढयति । एवं कोपयुक्तं वचनमिति यावत् । मधुकराणां सन्त्रासो मधुकरसन्त्रासः, अस्मत्कर्तृको मधुकरकर्मकत्रासविशेषः परिहार्यः दूरीकार्यः, न कार्य इति यावत् । भ्रमरेष्वेवं सरोपं वचो न प्रयोक्तव्यं भवता । इतो निवार्य न चैतेऽस्माभिस्त्रासयितव्या इति भावः । तत्र कारणं दर्शयन्नाह–**पश्येति** । भ्रमर पीडायाः परिहारे वक्ष्यमाणं कारणं जानीहीत्यर्थः । तथाहि—

**मधुमदकला** इति । मधुमदकलाः, मधुनः पुष्परसस्य, 'मधु मद्ये पुष्परसे' इत्यमरः, मदः पुष्परसपानजन्मा मानसो विकारविशेषः, तेन कला अव्यक्तमधुराः, अव्यक्तमधुरं यथा तथा कूजन्त इति यावत्, तथा मदनार्ताभिः कामाकुलाभिः, प्रियाभिर्भ्रमरीभिः, उपगूढाः आश्लिष्टाः । विशेषणद्वयेन चैतेन भ्रमराणां परमानन्दमग्नानां वियोजने कारणीभविष्यतो निवारणस्यात्यन्ताऽनुचितत्वं दर्शितम् । पूर्वोक्तविशेषणविशिष्टा मधुकरा भ्रमराः, पादन्यासविषण्णाः, पादयोर्न्यासेन अस्मत्कृतेन लतामण्डपाभ्यन्तरे चरणयोर्निक्षेपेण करणेन विषण्णा विषादं प्राप्ताः पीडिताः सन्तः, वयमिव अहमिवेति यावत्, कान्तावियुक्ताः प्रियाविरहिताः, स्युर्भवेयुः सम्भावनायां लिङ् । भ्रमरैस्तावत्सम्प्रति प्रियासहचरैर्मकरन्दास्वादमग्नैरमन्दानन्दसन्दोहः समनुभूयते मञ्जु गुञ्जद्भिः । कुञ्जे च करिष्यमाणः प्रवेशोऽस्मदीयोऽयं नूनं ततः सम्भ्रमादितस्ततो भविष्यतो भ्रमरान्प्रियाभिर्वियोजयेत् । इत्थं सति अहमिव ते वियोगवैकल्यं प्राप्स्यन्ति । न चैतत्कर्तुमुत्सहे पुनर्वियोगमहिमानं पूर्णतया जानन्निति भावः । अत्र च 'वयमिवे'त्यनेन विरहस्य दुःसहत्वं सूचयतो वत्सराजस्य वासवदत्ताविषयो हृद्गतः परतरो विषादभावः सुविशदं व्यक्ततां नीतः । एतेन–कार्यगौरवात् प्रियां नूतनां परिणीतवतोऽपि राज्ञः प्रेम वासवदत्तायां पद्मावत्यपेक्षया विशिष्टं दर्शितम् । पद्येऽस्मिन्नार्यावृत्तम् । तथा च तल्लक्षणम् 'यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या' इति ॥ ३ ॥

---

मकरन्द-पान से मत्त भौंरे काम-पीडित प्रियाओं से आलिङ्गित होते हुए, पैर की आहट से दुःखी हो हम लोगों की भांति कान्ताओं से वियुक्त हो जायँगे ॥ ३ ॥

तस्मादिहैवासिष्यावहे ।

विदूषकः—(क) एव्वं होदु ।

[ उभावुपविशतः । ]

---

( क ) एवं भवतु ।

---

इत्यनिदं कुञ्जान्तःप्रवेशानौचित्यं प्रदर्श्य तत्रैव शिलातलेऽवस्थिति रोचयति राजा—**तस्मादिति**। तस्मात् पूर्वोक्तान्मधुकरत्रासपरिहाररूपात्कारणादिति यावत्, इहैव लतामण्डपाद् बहिः शिलातल एव, आसिष्यावहे उपवेक्ष्यावः। मधुकरत्रास-भिया कुञ्जान्तः प्रवेष्टुं नोचितमित्यतोऽत्रैव शिलातलेऽवस्थितिं कृत्वा पद्मावत्या आगमनं प्रतीक्षणीयमावाभ्यामिति भावः।

अत्रार्थे सम्मतिमाह स्वीयां विदूषकः—**एव्वमिति**। नूनमिमं कुञ्जान्तःप्रवेशा-भिलापं त्यक्त्वा शिलातल एवावस्थितिरिदानीं करणीयेत्यर्थः।

द्वयोस्तत्रोपवेशं दर्शयति—**उभावुपविशत** इति। एतदनन्तरं त० गण-पतिशास्त्रिकृतव्याख्याने स्वप्नवासवदत्तेऽस्मिन् **'राजा—[ अवलोक्य ] पादाक्रान्तानि पुष्पाणि सोष्म चेदं शिलातलम्। नूनं काचिदिहासीना मां दृष्ट्वा सहसा गता'**॥ इत्यधिकः पाठो दृश्यते। तत्र च **रामचन्द्रकृते नाट्यदर्पणे**ऽनुमानोदाहरणप्रदर्शनप्रसङ्गे 'पादाक्रान्तानी'ति पद्यस्योपलब्धेः पूर्वोक्तः पाठः सुचिरं प्रचाराभावादिदानीं भ्रंशं प्राप्तोऽनुमीयत इत्युक्तम्। यत्किमप्यास्ताम्, पाठोऽयं पूर्वमासीत् प्रचाराभावेन च चिराद् भ्रष्टः केनापि मध्ये प्रक्षिप्तो वेत्यत्र नेदानीं निर्णेतुं पार्यते। अत्रैतन्निवेशनमन्तरेणापि पूर्वापरग्रन्थसङ्गतिरविच्छिन्नैवास्तीति न काप्येतस्यावश्यकता प्रतीयते। समुचितप्रमाणोपलम्भाभावाच्च मूले तन्निवेशनं नोचितमिति केवलं सङ्ग्रहाभिलापाल्लोकलोचनपदवीमानेतुं च पाठोऽयं व्याख्यायां प्रदर्श्यते। स्फुटमर्थावगतये च तद्व्याख्यानं यथा—तत्र च शिलातले समन्ततो दत्त-दृष्टी राजा विदूषकेण सूचितचरं शिलातलगतमूष्माणमनुभवंस्तत्र स्वीयमनुमान-

---

इसलिये हम दोनों यहीं बैठें।

विदू०—अच्छा, यही सही।

(दोनों बैठते हैं)

*चेटी*—(क) भट्टिदारिए ! रुद्धा खु म्ह वयं ।
*पद्मावती*—(ख) दिट्ठिआ उवविट्ठो अय्यउत्तो ।
*वासवदत्ता*—[ आत्मगतम् ] (ग) दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो।

---

( क ) भर्तृदारिके ! रुद्धाः खलु स्मो वयम् ।
( ख ) दिष्ट्योपविष्ट आर्यपुत्रः ।
( ग ) दिष्ट्या प्रकृतिस्थशरीर आर्यपुत्रः ।

---

माह—**अवलोक्येत्यादि** । अवलोक्य समन्ततो दृष्टिं दत्त्वाऽनुभवोचितं विचार्ये त्यर्थः । वदतीति शेषः । तदेवाह—**पदाक्रान्तानीति** । पुष्पाणि भूमौ पतितानि शेफालिकाप्रसूनानि, पादाक्रान्तानि पददलितानि चरणन्यासेन मृदितानि सन्ति, इदम् अस्मदाश्रयीभूतं शिलातलं च, सोष्म ऊष्मणा सहितम् उष्णमिति यावत्, वर्तते । अतो हेतोर्नूनं निःसंशयं, काचिदबला, इहात्र शिलातले, आसीनोपविष्टा- सीत्पूर्वम् । एवं चेत्सेयमधुना कुतो नोपलभ्यत इत्याशङ्क्याह-**मामिति** । मां दृष्ट्वा अत्रागच्छतो मे दूराद्दर्शनं कृत्वा, सहसाऽकस्मादितः प्रदेशात्क्वापि गता पला- यिता । अत्र च पुष्पाणां पददलितत्वेन समन्ततः प्रान्तेऽस्मिन्सञ्चरणं, शिलातल ऊष्मोपलब्ध्या च पूर्वमत्रोपविश्याऽचिरादित उत्थानं च कस्याश्चिदबलाया अनु- मीयते । सम्भाव्यते च मद्दर्शनपरिहाराय तया कुत्रापि पलायितं स्यादिति भावः ।

तत्र द्वारान्तिक एव तयोर्द्वयोरुपवेशान्निर्गमनप्रतिरोधं स्वीयं साम्भावयन्त्वाह चेटी पद्मावतीम्-**भट्टिदारिए** इति । खलु निश्चये, स्मेति वाक्यपूरकम् । अयि ! राजकन्ये ! एतयोः श्रीमद्राजविदूषकयोरत्र शिलातले सम्प्रत्युपवेशेन सर्वा वयं कुञ्जे ऽस्मिन् प्रतिरुद्धाः सञ्जाताः । तद्दृष्टिपरिहारेण नेतो निर्गन्तुं शक्यतेऽस्माभिरिति।

अत्रावरुद्धभावेऽप्यात्मन आनुकूल्यं दर्शयति पद्मावती—**दिट्ठिआ** इति । दिष्ट्या दैवेन । आर्यपुत्रः श्रीमान् मे प्रियतमस्तावदत्रैव शिलातले समुपविष्टो न किलान्तः प्रविष्ट इत्येतदस्माकं सौभाग्यम् । संवृत्ते च कुञ्जान्तःप्रवेशे तस्य दर्शनं नूनमनिवार्यम्, तत्तु नापतितमित्येतन्नियतं सुदैवेन सञ्जातमिति भावः ।

प्रियदर्शनसौभाग्यं सहसेदं लब्ध्वा सानन्दं मानसं वचनमुद्गिरति वासवदत्ता- **दिट्ठिआ** इति । प्रकृतिस्थशरीरः, प्रकृतिस्थं स्वस्थं नीरोगं शरीरं वपुर्यस्य सः ।

---

दासी—राजकुमारी ! हम लोग यहाँ पर रोकी गई ।
पद्मा०—भाग्य से आर्यपुत्र ( वहीं ) बैठ गये ।
वासव०—( स्वगत ) बड़ा ही सौभाग्य है कि स्वामी शरीर से स्वस्थ हैं ।

चेटी—(क)भट्टिदारिए ! सस्सुपादा खु अय्याए दिट्ठी !

वासवदत्ता—(ख) एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा पडिदेण सोदआ मे दिट्ठी ।

---

(क) भर्तृदारिके ! साश्रुपाता खल्वार्याया दृष्टिः ।

(ख) एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः ।

---

अस्तीति शेषः । अतिचिराद् दृष्टिगोचरतां गच्छतः श्रीमतः प्रियतमस्य शरीरमद्येदं दैवात्स्वस्थं दृश्यते । विरहावस्थायामस्वस्थता भृशं सुलभापि प्रेयांसमेनं न सा समाक्रान्तवतीति महत्सौभाग्यं ममेत्यर्थः ।

उपलभ्य भर्तुः शरीरस्वास्थ्यं वासवदत्ता पूर्वं मोदाश्रूणि पुनः स्वास्थ्येनैव हेतुना सूचितां भार्यान्तरगतचेतसः प्रेयसः स्वविषये स्नेहस्य न्यूनतां सम्भाव्य दुःखाश्रूणि तदानीं मुञ्चति स्म । चेटी च तामश्रूणि मुञ्चन्तीमवेक्ष्य तत्कारणजिज्ञासया पद्मावतीं प्रत्याह—**भट्टिदारिए** इति । साश्रुपाता अश्रुपातेन सहिता वाष्पकलुषेति यावत् । खलु वाक्यसौन्दर्ये, आर्याया आवन्तिकायाः । दृष्टिरित्येकत्वं जातौ । अयि ! राजकुमारि ! श्रीमत्या आवन्तिकाया नयनाभ्यामिदानीमश्रूणि पतन्ति । किं कारणमेतस्य ?

आत्मनोऽश्रुपातं चेट्याऽवगतं विभाव्य तत्र पद्मावतीचेट्योरन्यथाशङ्कनं परिहर्तुकामा नायकदर्शनादुद्गतं सात्त्विकभावमश्रूद्गमनहेतुभूतं निह्नुवाना स्वकीयाश्रुपाते सम्भवत्कारणान्तरं दर्शयति वासवदत्ता—**एसा** इति । खल्विति निश्चयार्थकम् । अविनयात् शासनाभावात् स्वच्छन्दमेतस्ततो भ्रमणादिति यावत्, सोदका अश्रुपूर्णा, सञ्जातेति शेषः । अत्र किल प्रदेशे भ्रमराः स्वैरं सर्वतो भ्रमन्ति, तेन काशपुष्पाणां परागः परिपतति, स चेदानीं मच्चक्षुषोरन्तर्गतः । नूनमनेनैव हेतुना तत्रैतान्यश्रूण्युद्गतानि सन्ति । एतदेवाश्रुपाते कारणं ममेत्यर्थः ।

---

दासी—राजकुमारी ! आर्या वासवदत्ता की आँखों से आँसू गिरते हैं ।

वासव०—भौंरों की गड़बड़ से कास के फूलों की धूलि पड़ने के कारण मेरी आँखों में पानी आ गया ।

*पद्मावती*—(क) जुज्जइ ।

*विदूषकः*—(ख) भो ! सुण्णं खु इदं पमदवणं । पुच्छिदव्वं किञ्चि अत्थि । पुच्छामि भवन्तं ।

*राजा*—छन्दतः ।

*विदूषकः*—(ग) का भवदो पिआ ? तदाणिं तत्तहोदी वासव-

---

(क) युज्यते ।

(ख) भोः ! शून्यं खल्विदं प्रमदवनम् । प्रष्टव्यं किञ्चिदस्ति । पृच्छामि भवन्तम् ।

(ग) का भवतः प्रिया ? तदानीं तत्र भवती वासवदत्ता, इदानीं

---

तदेतत्कारणमत्र सम्भवतीति पद्मावत्याह—**जुज्जइ** इति । भ्रमरपरिभ्रमणवशादुत्पततां काशप्रसूनपरागाणां साम्पातान्नेत्रयोरस्रोद्गमोऽयं भवितुमर्हतीत्यर्थः ।

अथास्मिन्समये 'तत्र स्थले तृतीयः कोऽपि नास्ती'ति रहस्यार्थप्रकाशनयोग्यमवसरं पश्यन् सुहृदं राजानं प्रति 'प्रीतिपात्रं ते पद्मावती वासवदत्ता वे'त्येवं प्रश्नमुपक्षेप्तुकामस्तदुचितं वचः प्रस्तौति विदूषकः—**भो** इति । खल्विति वाक्यालङ्कारे । प्रमदवनस्य शून्यत्वकथनादेव तत्र स्थाने रहस्यार्थप्रकाशनं स्थान इति सूचितम् । अयि ! राजन् ! प्रमदवनेऽस्मिन्नधुना नौ विहाय कोऽप्यन्यो नास्ति । पृच्छा च ममास्ति काचित् । अतोऽहं किमपि भवन्तं प्रष्टुमुद्यतोऽस्मीत्यर्थः । इह किल भवत्कथितं मद्विना कोऽपि न जानीयात्, अहं च भवतो नर्मसचिवः सखा, मत्तो गोपयितुं किमपि नोचितमित्यतो मदीयः प्रश्नोऽयं यथोचितमुत्तरणीयो निःशङ्कं भवतेति विदूषकोक्तेराशयः ।

तत्राह राजा—**छन्दत** इति । छन्दोऽभिप्रायः, 'अभिप्रायश्छन्द आशयः' इत्यमरः, अभिप्रायानुसारमित्यर्थः । पृच्छेति शेषः । यदभीष्टं ते, तत्प्रष्टुमर्हसि । नात्र किमपि शङ्कनीयमिति भावः ।

तमेव प्रश्नमात्मनो राज्ञः सन्निधौ समुपस्थापयति विदूषकः—**का** इति ।

---

पद्मा०—ठीक है, हो सकता है ।

विदू०—महाराज ! यह नजर-बाग सूना है । कुछ पूछना है । आपसे पूछता हूँ ।

राजा—इच्छानुसार ( निःसंकोच ) पूछो ।

विदू०—उस समय की वासवदत्ता या इस समय की पद्मावती, कौन आपको प्यारी है ?

दत्ता, इदाणिं पदुमावदी वा ।

*राजा*—किमिदानीं भवान् महति बहुमानसङ्कटे मां न्यस्यति ?

*पद्मावती*—(क) हला ! जादिसे सङ्कटे निक्खित्तो अय्यउत्तो ।

---

पद्मावती वा ।

( क ) हला ! यादृशे सङ्कटे निक्षिप्त आर्यपुत्रः ।

---

प्रिया प्रीतिपात्रम्, अधिकमिति शेषः, प्रियतरेति यावत् । तदानीं तस्मिन्नतीते समये स्थिता, इदानीं समयेऽस्मिन्वर्तमाना । श्रीमन्मान्या वासवदत्ता भवतोऽधिकमासीत्प्रेमास्पदं, पद्मावती वा वर्तते ? कुत्राधिको भवतः स्नेहो वासवदत्तायां पद्मावत्यां वा ? उभयोः प्रीतितारतम्यं कथनीयं भवतेत्यर्थः ।

प्रश्नमेनं निशम्य तदुत्तरणस्य दुष्करत्वमेवाह राजा—**किमिदानीमिति** । कि किमर्थम् । बहुमानसङ्कटे बहुमानकथनरूपे क्लेशे, 'उभयोः का नाम बहुमते' त्येतदुत्तरप्रदानरूपे दुष्करे कर्मणीति यावत् । न्यस्यति निपातयति । सखे ! वासवदत्ता तदा बहुमन्यत मया, पद्मावती वा साम्प्रतं बहु मन्यते ? उभयोः कतरस्यामधिकं मम प्रेम ? इत्येतत्कथनं तु मे दुष्करम् । एतत्कथनरूपेऽस्मिन् विषमे कर्मणि किमिति निपातितोऽस्मि समयेऽस्मिन्भवता ? अत्र च 'अवर्णनीयस्तावन्मे वासवदत्ताविषयकः प्रणयविशेषः । इदानीं तस्या अभावात्तत्प्रकाशनं तु व्यर्थम् । तदपेक्षया च न्यूनं प्रेम मे पद्मावत्याम्—इत्येवं पुनः कथिते, विदूषकस्य मौखर्यात्कदाचित्ततस्तदवगत्य पद्मावत्या कुपितया भूयेत । अत एतत्प्रेमतारतम्यकथनं नैवोचितम्'—इत्येवं तावन्मानसाकूतं राज्ञः । 'विदूषकस्य च मानसेऽन्यथा शङ्का मा भू'दिति चातुर्येण यथार्थमनुक्त्वा केवलं तत्प्रश्नोत्तरणस्य दुष्करत्वं प्रश्नस्य च वैयर्थ्यमित्थं प्रतिपादितं राज्ञेति ।

विदूषकप्रश्नानन्तरं पतिदेवोक्तमित्थं वचनमाकर्ण्य पद्मावती कुञ्जान्तर्गतासखीं चेटीं प्रति ब्रूते—**हला** इति । अत्र वाक्यसमाप्तौ 'तत्तु स एव जानाति' इत्येवमध्याहरणीयम् । 'उभयत्र प्रेयस्योः का नाम ते प्रियतरे'त्येतादृशं पृच्छता विदूषकेण तदुत्तरप्रदानरूपे यादृशेऽतिदुष्करे कर्मणि नियुक्तोऽधुना प्रियतमः, तत्तु तं

---

राजा—क्यों तुम इस समय मुझे इस बड़े बहुत आदररूपी संकट में गिराते हो ?

पद्मा०—सखी ! ( वसन्तक से ) आर्यपुत्र जैसे संकट में गिराये गये ।

वासवदत्ता—[ आत्मगतम् ] (क) अहं अ मन्दभाआ।

*विदूषकः*—(ख) सेरं सेरं भणादु भवं। एक्का उवरदा, अवरा असण्णिहिदा।

---

( क ) अहं च मन्दभागा।

( ख ) स्वैरं स्वैरं भणतु भवान्। एकोपरता, अपरा असन्निहिता।

---

विहाय कोऽन्यो जानीयात्? नूनं तत्स्वसंवेद्यमेव। स्वापतितकार्यदुष्करत्वानुभवः स्वेनैव करणीय इत्यर्थः। 'आर्यपुत्रकर्तृकमेकस्यां बहुमानसूचनं त्वपरस्याश्चेतसि बहुलमीर्ष्याभावं जनये'दित्यनया सङ्कया प्रीतितारतम्यकथनमिदानीं तस्य नूनं दुष्करमेवेति भावः।

पद्मावत्या भाषितं श्रुतवती वासवदत्ता स्वात्मनोऽपि तामेव दशां दर्शयन्ती मानसं वितर्कमाह—अहं अ इति। अत्र चकारः पूर्वोक्तं समुच्चिनोति। तच्च 'यादृशे सङ्कटे निक्षिप्ता तत्तु अहमेव जानामी' त्येवंरूपम्। मन्दोऽल्पो भागो भाग्यं यस्याः सा मन्दभागा, पतिवियोगवैक्लव्यरूपां दुर्दैवदशामनुभवन्तीति यावत्। विदूषकेण ध्रुवं प्रश्नमेनमुपस्थाप्य प्रियतमेन सार्धमहमपि सर्वथा स्वसंवेद्ये सङ्कटे निपातितास्मीति शब्दार्थः। 'चिरविरहेऽपि भर्तुरुपलभ्यमानं शरीरस्वास्थ्यमिदं स्फुटमित्थं प्रत्याययत्यधुना—यन्मदीयोऽयं विरहो नूतनपरिणीतपद्मावतीसमागमेन विस्मृतातीतमत्प्रणयानुभावं कथमपि प्रियमेनं न नाम व्यथयतीति। अतो निःसंशयमार्यपुत्रेण पद्मावत्यामेव प्रणयविशेष आत्मनो निरूपणीयः। स च मया मन्दभाग्यया समयेऽत्र श्रवणीय इत्येवं महत्कष्टमापतितम्। एतच्च नूनमवर्णनीयं स्वसंवेदनीयमेवे'ति वासवदत्तोक्तेर्गूढोऽभिप्रायः।

प्रश्नोत्तरं दातुमनिच्छन्तं राजानवलोक्य विदूषकः पुनस्तदेव प्रस्तौति—**सेरमिति**। स्वैरं निःशङ्कम्, द्विरुक्तिश्च निःशङ्कतातिशयद्योतिका। उपरता नष्टा, असन्निहिता दूरे स्थिता। भवतः प्रणयिन्योरेका पुरातनी प्रिया वासवदत्ता तु नोपलभ्यतेऽधुना, अन्या च नूतना पद्मावती समीपे न वर्तते। इत्थं सति 'भवदुक्तमेकत्र प्रणयविशेषं निशम्य तयोः कापि कुपिता भवे'दित्येतादृशः शङ्काया नाव-

---

वासव०—( स्वगत ) मैं भी मंदभागिनी जिस संकट में गिराई गई।

विदू०—निःसंकोच आप कहिये। एक तो मर गई और दूसरी पास नहीं है।

राजा—वयस्य ! न खलु न खलु ब्रूयाम् । भवांस्तु मुखरः ।

*पद्मावती*—(क) एत्तएण भणिदं अय्यउत्तेण ।

---

( क ) एतावता भणितमार्यपुत्रेण ।

---

खरः । अतः स्वच्छन्दं 'का नाम प्रियतरे'ति भवता यथार्थं कथनीयमिति भावः ।

विदूषकप्रश्नस्योत्तरं प्रदातुमनिच्छन्नाह राजा—**वयस्येति** । खल्विति वाक्याऽलङ्कृतौ । 'न खल्वि'ति वीप्सा च निषेधस्य दार्ढ्यं गमयति । 'ब्रूया' मित्यौचित्ये लिङ् । 'भवत्प्रश्नोत्तर'मित्यार्थं कर्म । मुखरः वावदूकः, रहस्यार्थं गोपयितुमसमर्थ इति यावत् । मित्रवर ! प्रीतितारतम्यविषये यत्तावत्पृष्टं भवता, तदुत्तरं नैव मया वक्तव्यम् । भवता तु प्रकृत्या वावदूकेन मदुक्तोऽयमर्थो न गोपयितुं शक्यते । अवश्यं यत्र कुत्रापि प्रकाश्येत । अतस्तत्प्रकाशनं नोचितं ममेति भावः ।

श्रुत्वैतद्वचनं राज्ञो हृद्गतं भावमवबुध्य कुड्यान्तःस्था पद्मावत्याह—**एत्तएणेति** । एतावता पूर्वोक्तेन वचसा । श्रीमता प्रियतमेन विदूषकानुयुक्तेऽस्मिन्विषये तदासीद्वक्तव्यं, तत्तु समनन्तरोक्तेन वचसा निषेधमुखेन सूचितम् । तदुत्तरप्रदानप्रतिषेधमभिधाय तदुभयोरेकतरा निजप्रीतिविशेषास्पदं तेन ध्वनितेत्यर्थः । अत्रेदमवगन्तव्यम्—विदूषकस्य मुखरता हि राज्ञस्तदुत्तरप्रदानविधौ मनसि शङ्कां जनयति । 'पद्मावती प्रियतरे'त्येवं सति राजकीयगूढार्थाभिप्राये कल्पिते—वासवदत्ताया अभावात्तदीर्ष्यादेरनवसरेण तादृशार्थप्रकाशनान्न कोऽपि शङ्कावकाशः । 'वासवदत्ता प्रियतरे'त्येवं पुनस्तत्कल्पनायाम्—श्रुत्वैतत्पद्मावती सपत्नीभावसहजं द्वेषमवलम्बमाना न चैतत्सोढुं शक्नुयादिति शङ्का तत्र नूनं लब्धावकाशा । अतश्च वावदूकाद्विदूषकात्तादृशार्थप्रकाशनं शङ्कमानस्य राज्ञस्तदुत्तरप्रदानप्रतिषेधभाषितमिदं वासवदत्तायामेव प्रणयविशेषं गूढमाविष्करोति । अयमर्थो राज्ञा गोपितो न प्रकाशनीय इति तत्प्रकाशनमकृत्वा केवलं ज्ञानमात्मनस्तदीयं वचसानेन सूचितं पद्मावत्येति ।

रहस्यार्थप्रकाशनरूपामात्मविषयिणीं शङ्कां विदूषक इदानीं निराकरोति राज्ञः-

---

राजा—मित्र ! मैं कहूंगा ही नहीं । तुम तो मुखर ( बकवादी मुँहफट ) हो ।

पद्मा०—आर्यपुत्र ने तो इतने से कह दिया ।

*विदूषकः*—(क) भो ! सच्चेण सवामि, कस्स वि ण आचक्खिस्सं । एसा सन्दट्ठा मे जीहा ।

*राजा*—नोत्सहे सखे ? वक्तुम् ।

*पद्मावती*—(ख) अहो ! इमस्स पुरोभाइदा । एत्तिएण हिअअं ण जाणादि ।

---

(क) भोः ! सत्येन शपे, कस्मा अपि नाख्यास्ये । एषा सन्दष्टा मे जिह्वा ।

(ख) अहो ! अस्य पुरोभागिता । एतावता हृदय न जानाति ।

---

भो इति । सत्येन धर्मेण, एषा रहस्यप्रकाशनात्मना सम्भविष्यद्दोषेणोपलक्षितेति यावत्, मे मयेत्यर्थः । अये ! मित्र ! सत्यस्य धर्मस्य शपथं कृत्वा ब्रवीमि, भवदुक्तं कुत्रापि न प्रकाशयिष्ये । प्रकाशिते च तत्राऽधर्मरूपं पातकं मे स्यात् । भवता किमपि तादृशं न शङ्कनीयं मयि, नाहं रहस्यमिदमुद्घाटयिष्ये । शङ्कितं च भवदीयं निराकर्तुं जिह्वामिमां सम्भावितदोषां दशनसन्दंशमध्ये । कृत्वा निरुणध्मि दृढम्, यतश्चाहं किमपि वक्तुं न पारयिष्ये ।

तत्रापि तत्कथनाऽनुत्साहं दर्शयत्यात्मनो राजा—नोत्सहे इति । मित्र ! शपथं कृतवतोऽपि ते तद्विषयाऽप्रकाशनविषये विश्वासाभावात्किमपि तादृशं सूचयितुं नोत्साहो भवति मे । अतो वक्तुं तमर्थमसमर्थोऽस्मीत्यर्थः ।

अत्रापि राज्ञो हृद्गतमज्ञातवतो विदूषकस्य मौर्ख्ये विस्मयमाविष्करोति पद्मावती—अहो इति । अस्य विदूषकस्य, पुरोभागिता दोषैकदर्शिता, 'दोषैकदृक् पुरोभागी' इति कोषः । एतावता इदमित्थं ध्वनिमार्गेण पुनः सूचनेनापीति यावत्, हृदयं हृद्गतमाशयम्, अर्थाद्राज्ञः । राजनि गूढवचने तादृशाऽतिगूढविषयाऽप्रकाशनरूपदोषारोपणं नाम साहसमिदानीं विदूषकस्येदं मूर्खतातिशयं द्योतयत्परमं मे मनसि विस्मयं जनयति । रहस्यविषयोद्घाटनरूपां भीतिं विदूषकात्सम्भावयता हि राज्ञा मुहुर्वासवदत्तायाः प्रीतिविशेषास्पदत्वं तावद् गूढमाविष्कृतम् । तदेतदपु

---

विदू०—राजन् ! सत्य की सौगन्ध, किसी से भी न कहूँगा । यह देखो मैंने जीभ काट खाई ।

राजा—मित्र ! कहने का उत्साह नहीं होता ।

पद्मा०—हाय ! इनकी दोषदृष्टि ( हठ ) । इतने से भी हृदय ( की बात ) नहीं जानते ।

*विदूषकः*—(क) किं ण भणादि मम ? अणाचक्खिअ इमादो सिलावट्टआदो ण सक्कं एक्कपदं वि गमिदुं। एसो रुद्धो अत्त भवं।

*राजा*—किं बलात्कारेण ?

*विदूषकः*—(ख) आम, बलक्कारेण।

*राजा*—तेन हि पश्यामस्तावत्।

---

( क ) किं न भणति मम ? अनाख्यायाऽस्माच्छिलापट्टकान्न शक्यमेकपदमपि गन्तुम्। एष रुद्धोऽत्र भवान्।

( ख ) आम्, बलात्कारेण।

---

नापि विदूषकस्य बुद्धेः पन्थानं नारोहतीत्यस्य मूर्खतायाः परा काष्ठेयमिति भावः।

सौहार्दभावसुलभं तत्रार्थे सनिर्बन्धं वचः प्रयुङ्क्ते विदूषकः—**किं णेति**। मम मदग्रे। 'शिलापट्टका'दित्यत्र ल्यब्लोपे कर्मण्यधिकरणे च' इत्यनेन पञ्चमी, शिलापट्टकं विहाय ततोऽन्यत्रेत्यर्थः। एषः अकथयन्। अयि ! सखे ! मत्प्रश्नविषयीकृतं प्रीतितारतम्यं न प्रकाश्यते किम् ? अप्रकाशिते च तस्मिन्नितः पदमेकमप्यन्यत्र गन्तुं न शक्यते भवता। अनिशम्योत्तरं भवदीयमस्माच्छिलातलादुत्थानं भवतो नानुमंस्ये। एषोऽहमधुना रुणध्मि भवन्तं तदेतदप्रकाशयन्तम्। पश्यामि, कथं नोच्यत इति।

विदूषकमित्थं बलात्कर्तुमुद्यतं पृच्छति राजा—**किमिति**। श्रोतुमिच्छसीति शेषः। बलपूर्वकं किमिदं मत्तो ज्ञातुमिच्छसि त्वम् ?

तदेतत्प्रश्नं ह्येव श्रवणं प्रतिजानीते विदूषकः—**आमेति**। आमिति पूर्वोक्तस्वीकारः। एवम्, अत्र कः सन्देहः ? मित्र ! बलात्कारेणैव नूनमिदं भवतः श्रोष्यामि।

**तेन हीति**। तेन हि एवं सति, पश्याम इत्यादरे बहुत्वम्, तावदिति वाक्यसौन्दर्ये। इत्यमिदं बलात्कारेण श्रोतुमिष्यते चेत्त्वया, मयापि दृश्यते कथमेत-

---

विदू०—क्या मुझे नहीं कहते ? बिना कहे इस पत्थर की चौकी को छोड़कर एक पैर भी नहीं जा सकते। यह आप यहाँ रोके गये।

राजा—क्या जबर्दस्ती से ( जानना चाहते हो ) !

विदू०—हाँ जबर्दस्ती से।

राजा—तब तो देखते हैं।

*विदूषकः*—(क) पसीददु पसीददु भवं। वअस्सभावेण साविदो सि. जइ सच्चं ण भणासि।

*राजा*—का गतिः। श्रूयताम्—

**पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।**

---

(क) प्रसीदतु प्रसीदतु भवान्। वयस्यभावेन शापितोऽसि, यदि सत्यं न भणसि।

---

च्छ्रूयत इति। पश्यामि, बलपूर्वकश्रवणप्रतिज्ञेयं ते सफला भवति मम वा तद्विषयाऽकथनप्रतिज्ञेति राज्ञो वचनस्याशयः।

दृढप्रतिज्ञे राज्ञि बलात्कारमात्मनोऽकिञ्चित्करं मत्वोपायान्तरं प्रस्तुवन्नाह विदूषकः—**पसीददु** इति। प्रसीदतु प्रसीदतु इत्येषा द्विरुक्तिः प्रसादातिशये। वयस्यभावेन शापितोऽसि मित्रतायाः शपथं ते दापयिष्यामि। 'प्रसद्यतां प्रसद्यता'-मिति वदन् मदीयबलात्करणकुपितं भवन्तमहं ऽसादयाम्यधुना। क्षम्यतां मे बलात्कारजनितोऽपराधः। किन्तु तत्रार्थे निजाग्रहं नैव त्यक्ष्यामि पुनरपि यथार्थं मत्पृष्टप्रतिवचनं न दीयते चेद् भवता, तर्हि सत्यमिदमवगन्तव्यम्-यद् विहन्येत मित्रताऽऽवयोरिति। अतो मित्रतासम्बन्धरक्षणाय भवता पुनर्न पृष्टं प्रत्युत्तरणीयमेवेति भावः।

'उत्तरमश्रुत्वा हठी विदूषको न मंस्यते कथमपी'ति तदुत्तरप्रदानप्रवणतामात्मनो दर्शयन्नाह राजा—**का गतिरिति**। मित्रतासम्बन्धरक्षणाय सखे! तदेतद्वक्तुमेवापतितम्। किं करवाणि, सन्तोषार्थं ते तत्प्रीतितारतम्यं निवेदयितुमुद्यतोऽस्मि। सावधानमिदमाकर्णनीयं त्वया।

पूर्वोक्तं तदिदं वचनं प्रयुज्य राजा, विदूषकस्य तस्मिन् 'का नाम प्रियतरे'ति पूर्वप्रदर्शिते प्रश्ने चातुर्यपूर्णमुत्तरं प्रतिपादयति—**पद्मावतीति**। रूपं सौन्दर्यं शीलं सच्चरितं माधुर्यं प्रियभाषिता चेत्येतैः कारणीभूतैर्गुणैः, इतरेतरयोगो नाम द्वन्द्वसमासः, यद्यपि, पद्मावती तन्नाम्नी नवोढा नायिका, मम मे, बहुमता बहुमानास्पदं वर्तते। 'मतिबुद्धिपूजार्थेभ्यश्च' इत्यनेन 'ममे'ति षष्ठी। तथापि बहुमाना-

---

विदू०—मान जाइये, मान जाइये। मित्रता की शपथ, यदि सच नहीं कहते हैं!

राजा—क्या उपाय? (लाचारी है,) सुनो—

वासवदत्तावद्धं न तु तावन्मे मनो हरति ॥ ४ ॥

वासवदत्ता—[ आत्मगतम् ] (क) भोदु भोदु । दिण्णं वेदणं इमस्स परिखेदस्स । अहो ! अञ्ञादवासं पि एत्थ बहुगुणं सम्पज्जइ ।

---

( क ) भवतु भवतु । दत्तं वेतनमस्य परिखेदस्य । अहो ! अज्ञातवासोऽप्यत्र बहुगुणः सम्पद्यते ।

---

रुपदत्वेऽपि, सा वासवदत्तावद्धं वासवदत्तयाऽतीतया प्रणयिन्या बद्धं स्वगुणैराकृष्टं, मे मनो मदीयं मानसं तु, न तावत् हरति नैव चोरयति, स्वोन्मुखं न करोतीति यावत् । पद्मावत्याः सौन्दर्यादिगुणेषु लुब्धोऽहं तत्र सखे ! बहुमानं वहामि, परं वासवदत्ताप्रीतिपाशविवशं मे मनस्तया हर्तुं न शक्यते कथमपीत्यर्थः । अत्र पद्मावत्यां बहुमानं वासवदत्तायां च मनोबन्धमात्मनो निरूपतया सहृदयहृदयङ्गमा तथेयं चातुरी दर्शिता राज्ञा, यथेदं कदापि श्रुत्वापि पद्मावती तात्पर्यमेतदीयमित्थमवधार्य सन्तोषं वक्ष्यति स्वान्ते—'यदद्य सौभाग्यात्पत्युर्बहुमानास्पदमहं वर्ते, नवोढाहमिदानीं प्रौढवासवदत्ताप्रीतिबद्धं प्रियमनो न हर्तुं शक्नोमि, परं कालान्तरे परिचयातिरेकात्तन्नूनमेव हर्तुं शक्ष्यामी'ति । आर्या वृत्तम्, तल्लक्षणमुक्तं प्राक् ॥ ४ ॥

इत्थमिदमात्मनि प्रीतिविशेषं पत्याविष्कृतमवगत्य वासवदत्ता सप्रसादमात्मगतं वचो वक्ति भोदु इति । 'भवतु भवत्वि'ति भृशार्थे द्विर्भावः, कर्ता चात्र परिखेदस्य उत्तरवाक्याद् गम्यः । अस्य विरहरूपस्य, परिखेदस्य क्लेशविशेषस्य, वेतनं दत्तं पुरस्कारो वितीर्णः, अर्थात्प्रियेण । अत्र पद्मावत्याः समीपे, अज्ञातवासः अज्ञातः केनाप्यविदितश्चासौ वासः स्थितिश्चेति कर्मधारयः, बहुर्गुणो यत्रेति बहुगुणः । प्रियवियोगविक्लवाया मम क्लेशाधिक्यमभितो वर्ततां नाम, तत्तूपेक्षणीयं मया । निशम्य चात्मनि भर्तुः प्रीतिविशेषं वियोगस्यैतस्य पुरस्कारं प्राप्तवत्यस्मि । श्रीमत्याः पद्मावत्याः सन्निधानेऽधुना प्रच्छन्नरूपेण क्लेशकारिणी स्थितिरपि

---

यद्यपि पद्मावती अपने रूप शील और माधुर्य से मुझे प्यारी है, फिर भी वासवदत्ता में लगे हुए मेरे मन को नहीं हरती ॥ ४ ॥

वासव०—( स्वगत ) बस, बस । इस दुःख का पुरस्कार दे दिया, अर्थात् जो मैंने इतना दुःख उठाया उसका इनाम पा लिया । हाँ, यहाँ छिपकर पद्मावती के पास रहना भी अत्यन्त लाभदायक हो रहा है ।

*चेटी*—(क) भट्टिदारिए ! अदक्खिण्णो खु भट्टा ।

*पद्मावती*—(ख) हला ! मा मा एव्वं । सदक्खिण्णो एव्व अय्यउत्तो, जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि सुमरदि ।

---

(क) भर्तृदारिके ! अदाक्षिण्यः खलु भर्ता ।

(ख) हला ! मा मैवम् । सदाक्षिण्य एवार्यपुत्रः, य इदानीमप्यार्याया वासवदत्ताया गुणान् स्मरति ।

---

मे न तावद् दूषणास्पदम्, प्रत्युतैषा प्रियप्रेमातिरेकपरिचयप्रदायिनी गुणविशेषशालिनी सञ्जायत इति भावः ।

पूर्वोक्तेन वचसा वासवदत्तायां राज्ञः प्रीतिविशेषं तन्न्यूनतां च पद्मावत्यामवगत्य चेटी तदयुक्तं मन्वाना पद्मावतीं प्रत्याह—**भट्टिदारिए** इति । नास्ति दाक्षिण्यं यत्र सोऽदाक्षिण्यः । दाक्षिण्यं च सर्वासु नायिकासु समानप्रीतिमत्त्वम् । तथा च **साहित्यदर्पणे**—'अनेकमहिलासमरागो दक्षिणः कथित' इति । खलु निश्चये । भर्ता भवत्याः पतिः । अयि ! राजकुमारि ! वासवदत्तायां प्रणयविशेषं प्रकटयन्नूनं भवत्याः प्रियः सर्वत्र समानस्नेहशालित्वलक्षणेन दाक्षिण्यलक्षणेन शून्यो वर्तते । नेदं तस्य दाक्षिण्यम्, यदुभयोरेकत्र प्रीतिविशेषसन्धारणम् । युज्यते हि समानं प्रेम तस्योभयत्रेत्यर्थः ।

चेटयुक्तं निषेधन्ती भर्तारं च वासवदत्तागतचित्तं प्रशंसन्ती ब्रवीति पद्मावती—**हलेति** । 'मा मे'ति द्विरुक्तिर्निषेधं द्रढयति, एवं पूर्वोक्तम्, 'वादी'रिति शेषः । सखि ! एकत्र प्रीतिविशेषं वहत्यार्यपुत्रे 'दाक्षिण्यं नास्ती'ति नैव त्वया वक्तव्यम् । तदेव तत्र दाक्षिण्यं दर्शयति—**सदक्खिण्णो** इति । सदाक्षिण्यो दाक्षिण्यसहितः, दक्षिण इत्यर्थः । निःसन्देहं सर्वथा दाक्षिण्यभावं वहत्येव श्रीमानार्यपुत्रः, यो हि श्रीमत्या वासवदत्ताया अभावेऽपि तस्याः श्लाघनीयगुणानां स्मरन्नद्यापि तत्र प्रीतिभावं बिभर्ति भूयांसम् । दाक्षिण्यं नाम कृतस्य निर्वहणम् । कृतपूर्वं प्रेमाणं निर्वहन्नेष न वाच्यो भवतीत्याशयः । इदं च सापत्न्यसुलभं द्वेषमनावहन्त्या ध्रुवं कुलीनत्वानुरूपमुक्तं पद्मावत्या ।

---

दासी—राजकुमारी जी ! राजा उदार नहीं है । (क्योंकि सबका समान प्यार नहीं करते।)

पद्मा०—अरी ! नहीं, ऐसा नहीं । आर्यपुत्र समानानुरागी ही हैं, जो कि अब भी आर्या वासवदत्ता के गुणों की याद करते हैं ।

*वासवदत्ता*—(क) भद्दे ! अभिजणस्स सदिसं मन्तिदं ।

*राजा*—उक्तं मया । भवानिदानीं कथयतु । का भवतः प्रिया ? तदा वासवदत्ता, इदानीं पद्मावती वा ।

*पद्मावती*—(ख) अय्यउत्तो वि वसन्तओ संवुत्तो ।

---

(क) भद्रे ! अभिजनस्य सदृशं मन्त्रितम् ।

(ख) आर्यपुत्रोऽपि वसन्तकः संवृत्तः ।

---

भर्तुः प्रशंसायामुदारभावानुरूपं तथा वदन्तीं प्रशंसति पद्मावतीं वासवदत्ता—**भद्दे** इति । अभिजनस्य कुलस्य, 'कुलान्यभिजनान्वयौ' इत्यमरः । सदृशं योग्यमिति यावत् । 'तुल्यार्थैरतुलोपमाभ्या'मित्यनेन 'तृतीयाविकल्पात्पक्षेऽभिजनस्ये'ति षष्ठी । मन्त्रितं कथितम् । अयि ! सभ्ये ! सुन्दरि ! वासवदत्तागुणानुरक्तं प्रियं प्रशंसन्ती पुनः सापत्न्यसहजमीर्ष्याभावमनावहन्ती त्वं सत्कुलोचितं तदेतदुक्तवत्यसि । श्लाघनीयकुलायास्ते वचनमेतदुदारं सर्वथा श्लाघनीयमेव । भर्तुरन्यासङ्गेऽपि तत्र कुलीनया खण्डिताभावो नावलम्बनीय एवेति भावः ।

विदूषकप्रश्नानुसारं प्रिययोरेकत्र प्रीतिविशेषमात्मनः संसूच्य गूढं राजा मुखरे विदूषके तद्रहस्योद्घाटनं सम्भाव्य तमपि तादृशार्थप्रकाशनापराधभाजनं चिकीर्षुस्तन्मुखादपि तदर्थप्रचिकाशयिषया स्वयमपि तत्र तादृशं प्रश्नमुपन्यस्यति—**उक्तं मयेति** । प्रिया बहुमता । मित्र ! भवद्वचनाऽनुरोधेन 'का मे प्रियतरे'ति तथ्यं कथितवानहम् । समयेऽस्मिन्भवतापि तदेतत्कथनीयम् । उभयोर्मध्ये का नाम भवतो बहुमता ? वासवदत्तां बहुमानदृष्ट्याऽपश्यद्भवान् पश्यति वा पद्मावतीम् ? सुस्पष्टमेतदधुनाऽभिधीयतां भवतेति भावः ।

सुहृदं विदूषकं प्रति प्रीतितारतम्यविषयकं पत्युः प्रश्नमेनं निशम्य पद्मावती ब्रूते—**अय्यउत्तो वीति** । वसन्तकस्तन्नामधेयो विदूषक इवेति यावत् । विदू-

---

वासव०—भद्रे ! तुमने अपने कुल के अनुरूप कहा ।

राजा—मैंने कहा । अब तुम कहो—उस समय वासवदत्ता या इस समय पद्मावती, कौन तुम्हें अच्छी मालूम होती है ?

पद्मा०—आर्यपुत्र भी वसन्तक हो गए ।

विदूषकः—(क) किं मे विप्पलविदेण। उभओ वि तत्तहोदीओ मे वहुमदाओ।

राजा—वैधेय! मामेवं बलाच्छ्रुत्वा किमिदानीं नाभिभाषसे?

विदूषकः—(ख) किं मं पि वलक्कारेण?

---

(क) किं मे विप्रलपितेन। उभे अपि तत्रभवत्यौ मे वहुमते।

(ख) किं मामपि बलात्कारेण?

---

षको यथा प्रियतमं पूर्वं द्वयोः प्रीतितारतम्यं पृष्टवान्, साम्प्रतं तदेव प्रियतमो विदूषकं पृच्छतीति प्रियतमेनापि विदूषकेणेव सञ्जातमित्यर्थः।

राज्ञः प्रश्नस्योत्तरं दातुमनिच्छन् विदूषक आह—**किं मे** इति। विप्रलपितेन अनर्थकेन वचसा, भावे क्तः। 'प्रलापोऽनर्थकं वचः' इत्यमरः। तत्रभवत्यौ पूज्ये। ममैतत्कथनेन मित्र! कोऽर्थः? एकत्र नास्ति मे बहुमानः कुत्रापि। उभयोरपि मे समानैव दृष्टिः। मम तु वहुमानास्पदं श्रीमती वासवदत्ता पद्मावती चेत्युभयं वर्तते।

तदिदं विदूषकस्योक्तिचातुर्यमाकलय्य पुनः प्राह तं राजा—**वैधेयेति**। वैधेयो मूर्खः, ? 'मूर्खवैधेयवालिशाः' इत्यमरः, 'माम्' इति कर्मपदं तावद् 'अभिभाषसे' इति क्रियापदेनान्वेति। एवं प्रीतितारतम्यम्, बलाच्छ्रुत्वा बलात्कारपूर्वकं निशम्य, अर्थान्मत्तः। अयि! मूर्ख! बलात्कारपूर्वकं तदानीमुभयोर्वहुमानविषयकप्रश्नस्योत्तरं मन्मुखान्निष्कास्य त्वया मम प्रश्नेऽस्मिन्न तावदुत्तरं दीयतेऽधुना? अदत्ते सत्युत्तरे, जानीहि, त्वयेव मया बलात्कारः प्रयोक्ष्यते। अतो हि मित्र! त्वया वक्तव्यमेवेत्यर्थः।

उपालम्भपूर्णं राज्ञो वचनमाकर्ण्य तत्कर्तृकं बलात्कारं शङ्कमानो विदूषकः पृच्छति राजानम्—**किं मं पीति**। अर्थानुरोधादत्र 'पृच्छसी'ति क्रियापदमध्याहरणीयम्। आत्मनः प्रश्नस्य मन्मुखादुत्तरमाकर्णयितुं हठप्रयोगः करिष्यते किं भवता?

---

विदू०—मेरे निरर्थक कहने से क्या लाभ? मुझे तो दोनों आर्याएँ माननीय हैं।
राजा०—मूर्ख! मुझसे जबर्दस्ती सुन कर अब तुम मुझसे क्यों नहीं कहते?
विदू०—क्या मुझसे आप भी जबर्दस्ती (सुनना चाहते हैं)?

*राजा*—अथ किम्, बालात्कारेण।

*विदूषकः*—(क) तेण हि ण सक्कं सोदुं।

*राजा*—प्रसीदतु प्रसीदतु महाब्राह्मणः। स्वैरं स्वैरमभिधीयताम्।

*विदूषकः*—(ख) इदाणिं सुणादु भवं। तत्तहोदी वासवदत्ता मे

---

( क ) तेन हि न शक्यं श्रोतुम्।

( ख ) इदानीं शृणोतु भवान्। तत्रभवती वासवदत्ता मे बहुमता।

---

तदेव करणीयं सूचयति राजा—**अथ किमिति**। अथ किम् किमन्यत्? अत्र कः सन्देह इत्यर्थः। पृच्छामीति शेषः। नूनं सखे! बलात्करिष्यामि त्वामहमत्र विषये। त्वन्मुखादिदं बलाच्छ्रोष्यामीति भावः।

बलात्कारस्य स्वविषये नैष्फल्यं दर्शयति विदूषकः—**तेण हीति**। तेन बलात्कारेण, हि निश्चये। मित्र! बलात्कारश्चेद्विधीयते मयि, तन्नूनं नाभिधास्ये। न शक्यते च भवता तदुत्तरमधिगन्तुं कुर्वता हठप्रयोगम्।

तत्र तावदात्मनो बलात्करणं निरर्थकमाकलय्य तत्प्रयोगेण च कुपितं विदूषकं प्रति सामोपायं प्रस्तुवन्नाह राजा—**प्रसीदत्विति**। क्रियापदद्विरुक्तिरेषा प्रसादनस्य शैघ्र्येऽतिशये च। 'महाब्राह्मण' इति परिहासवचनम्, तयोक्तिश्चैषा विदूषकस्य भोजनप्रियतामूढताद्यभिप्रायेण। विदूषको हि मूढो 'महाब्राह्मण' शब्दस्य 'अधमब्राह्मण' रूपमर्थविशेषं बोद्धुमपारयन् सामान्यतो 'विशिष्ट उदारो ब्राह्मण' इत्येवमर्थमवगच्छन्नात्मसंमानसम्भावनया प्रसीदेदिति राज्ञा तत्कृते तत्पदं युक्तं प्रयुक्तम्। स्वैरं स्वच्छन्दं निःशङ्कं च, द्विःप्रयोगस्तु स्वाच्छन्द्यस्य निःशङ्कतायाश्चातिशयं द्योतयति। पूर्ववाक्यगतं कर्तृपदमुत्तरवाक्ये तृतीयान्तेन विपरिणमय्य योजनीयम्। मित्रेण मदीयबलात्करणभीतिमसम्भाव्य शीघ्रं भृशं प्रसद्य निःशङ्कं स्वेच्छया वक्तव्यमुत्तरं मत्प्रश्नस्येत्यर्थः।

पूर्वोक्तसामवचनेन प्रसीदन् राज्ञः प्रश्नस्योत्तरं दित्सुराह विदूषकः—**इदाणिम्**

---

राजा—और क्या जबर्दस्ती से।

विदू०—तब तो सुना नहीं जा सकता।

राजा—कृपा करिये, महाराज! मान जाइये। इच्छानुसार बेधड़क कहिये।

विदू०—अब आप सुनें—पूजनीया वासवदत्ता मुझे अधिक सम्मत हैं। माननीया

बहुमदा । तत्तहोदी पदुमावदी तरुणी दस्सणीआ अकोवणा अणहङ्कारा महुरवाआ सदक्खिण्णा । अअं च अवरो महन्तो गुणो, सिणिद्धेण भोअणेण मं पच्चुग्गच्छइ वासवदत्ता–कहिं णु खु गदो अय्यवसन्तओ त्ति ।

वासवदत्ता—(क) भोदु भोदु, वसन्तअ ! सुमरेहि दाणिं एदं ।

---

तत्रभवती पद्मावती तरुणी दर्शनीया अकोपना अनहङ्कारा मधुरवाक् सदाक्षिण्या । अयं चापरो महान् गुणः, स्निग्धेन भोजनेन मां प्रत्युद्गच्छति वासवदत्ता—कुत्र नु खलु गत आर्यवसन्तक इति ।

( क ) भवतु भवतु, वसन्तक ! स्मरेदानीमेताम् ।

---

इति । मित्रवर ! मन्मुखादुत्तरं श्रोतुमुत्सुकेन भवता श्रूयतां तदिदमिदानीं मया निगद्यमानम् । बहुमानदृष्ट्या पश्याम्यहं श्रीमतीं वासवदत्ताम् । इत्थमात्मनो वासवदत्तायां बहुमानं संसूच्य 'कदाचिदेतदवगत्य पद्मावत्या मह्यं कुप्येते'ति तद्गुणानपि विवर्णयिषुः, सममेव वासवदत्तागतमात्मनो बहुमानस्य कारणीभूतमनुभूतचरं गुणविशेषं दिदर्शयिषन् वक्तुमुपक्रमते भोजनभट्टो विदूषकः—**तत्तहोदी** । इति । अकोपना शान्तस्वभावा, सदाक्षिण्या उदारा । 'अयं चापर' इत्यनेन पद्मावत्यां प्रदर्शितास्त एते गुणा वासवदत्तायामपि यथासम्भवमुपलभ्यन्त एवेति ध्वनितम् । स्निग्धेन सरसेन । प्रत्युद्गच्छतीति भूतार्थे वर्तमानता । अन्वेषणपुरःसरं संमुखमागत्य सम्भावयति स्मेति यावत् । अयि ! सखे ! माननीया श्रीमती पद्मावती यौवनं कामनीयकं शान्तस्वभावतमभिमानशून्यत्वं प्रियभाषितामौदार्यं चेत्यार्यगुणगणं वहन्ती नूनं प्रशंसनीया । सत्स्वप्येतेषु गुणेषु तत्र वासवदत्तायां गुणविशेषोऽयमन्योऽनन्यसामान्यः समुपलब्धो मया—यदसौ 'श्रीमान् विदूषकः क्वास्ती'ति मामितस्ततोऽन्विष्योपलभ्य सरसं भोजनं मत्पुरस्तादुपस्थापयन्ती मदीयं महीयांसमादरं करोति स्मेति तस्यां वासवदत्तायां मे बहुमान उचित एवास्तीति भावः ।

विदूषकमुखेन स्वां बहुमतां पद्मावतीं च गुणवतीं निशम्य स्वगतं वासवदत्ताह–**भोदु भोदु** इति । आभीक्ष्ण्ये ( पौनःपुन्ये ) भवतु भवत्विति द्विर्भावः ।

---

पद्मावती युवती, सुन्दर, क्रोधहीन, अभिमानरहित, मिष्टभाषिणी तथा सभी लोगों पर समान अनुराग करने वाली है । यह भी दूसरा बड़ा भारी गुण है कि 'आर्य वसन्तक कहाँ गये' इस प्रकार खोजती हुई वासवदत्ता स्वादिष्ट भोजन से मेरा आदर करती थीं ।

वासव०—अच्छा, अच्छा । वसन्तक ! अब इन्हीं को याद करिये ।

राजा—भवतु भवतु वसन्तक ! सर्वमेतत् कथयिष्ये दे वासवदत्तायै ।

विदूषकः—(क) अविहा वासवदत्ता ? कहिं वासवदत्ता ? चि खु उवरदा वासवदत्ता ।

---

(क) अविहा, वासवदत्ता ? कुत्र वासवदत्ता ? चिरात् खलूप वासवदत्ता ।

---

पूर्वोक्तं वासवदत्तागुणवर्णनं कर्तृ, एतां बहुमतात्वेनाभिमतां वासवदत्ताम् । अां वसन्तक ! त्वत्कर्तृकमिदं मदीयगुणवर्णनं पुनः पर्याप्तमिदानीम्, न तस्यावश्यक जानाम्यहं ते मानसं भावम् । समयेऽस्मिन्ममाऽनुपलब्ध्या मम स्मरणमेव के कुर्वंस्तेनैवात्मानं विनोदयेति भावः । अथवा एतां पद्मावतीम् । अनुपलभ्यमान मयि मदीयस्मरणं दुःखदायकतया व्यर्थमेवास्तीत्यधुना पद्मावत्याः स्मरणं कुरु सैव त्वां साम्प्रतं सम्भावयिष्यतीत्यर्थः । 'एदं' इति प्राकृतस्य 'एतत्' इति संस्कृतम् । एतत् प्रत्युद्गमनम् । अयमर्थः—सरसेन भोजनेन मत्कर्तृकं ते प्रत्युद्ग मिदानीं त्वया स्मरणीयमेव । न ज्ञायते पुनरिदं कदा लभ्येतेति ।

'श्रीमती वासवदत्ता बहुमता मम'त्येवं वदन्तं विदूषकं प्रशंसन्नाह राजा—भ भवत्विति । एषाऽप्याभीक्ष्ण्ये द्विरुक्तिः । वासवदत्तायां बहुमानस्य वर्णनं पर मिदानीमित्यर्थः । 'देव्यै वासवदत्तायै' इति सम्प्रदाने चतुर्थी कथञ्चित्साध्या । व तस्तु सम्प्रदानत्वाविवक्षया 'अकथितं च'त्यनेन कर्मसंज्ञायां द्वितीया विभक्तिः प्रयो सुचिता । साधु मित्र ! साधूक्तं त्वया, वासवदत्तागुणवर्णनं पुनः पर्याप्तम् । सकल ते वचनजातं देवीं वासवदत्तां सूचयिष्यामि । तथाप्यस्मदीयो भावो वेदितव 'अहं बहुमताऽस्मी'ति श्रुत्वा च मोदमाना बहुमानमात्मन्येषा कलयिष्यतीति भा

राजा किल वासवदत्ताप्रेममग्नः पूर्वोक्तं प्रलपितवान् । विदूषकस्तु वास त्ताया उपरमं तं स्मारयन्नाह—अविहेति । अविहेत्यव्ययं विषादे, वासवद

---

राजा—बस, जी वसन्तक ! बस ठीक है, देवी वासवदत्ता से यह सब मैं कह दूँगा

विदू०—हाय ! वासवदत्ता । वासवदत्ता कहाँ ? वासवदत्ता को मरे बहुत दिन ह

*राजा*—[ सविषादम् ] एवम् ? उपरता ।

**अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया ।**
**ततो वाणी तथैवेयं पूर्वाभ्यासेन निःसृता ॥ ५ ॥**

*पद्मावती*—(क) रमणीओ खु कहाजोओ णिसंसेण विसंवादिओ ।

---

( क ) रमणीयः खलु कथायोगो नृशंसेन विसंवादितः ।

---

काकुः कथयिष्यत इति शेषः । चिरात् बहोः समयात् खल्विति वाक्यालङ्कारे । हा हन्त ! सखे ! अद्यापि वासवदत्ता ? भवानिदं प्रीतितारतम्यं तां कथयिष्यति ? क्वेदानीं सा ? सा तु विनष्टा । विनष्टायां च तस्यां भूयान्समयोऽतीतः ।

ततो राजा विषीदन् ब्रूते—**एवमिति** । सखे ! सत्यं ते वचः । वासवदत्ता हि परलोकं प्रस्थिता, न साम्प्रतं सोपलब्धव्या ।

**अनेनेति** । अनेन पूर्वोक्तेन 'वासवदत्ता पद्मावती वा प्रिये'त्येवंरूपेण, परिहासेन सलीलवचसा, त्वया मे मनो मदीयं चेतः, व्याक्षिप्तं मुग्धतां नीतं चञ्चलीकृतमिति यावत् । ततस्तस्मात्कारणात् मनसो मुग्धत्वाद्धेतोरिति यावत्, इयं वाणी 'सर्वमेतत्कथयिष्ये देव्यै वासवदत्तायै' इत्येवंरूपा, पूर्वाभ्यासेन प्राक्कालिकसंस्कारबलात्, तथैव तत्कालसदृश्येव, निःसृता निर्गता, मन्मुखादिति शेषः । प्रियाप्रीतितारतम्यरूपं त्वदुक्तं सलीलं वचनं निशम्य प्रमुदितश्चपलचित्तो वासवदत्तावियुक्तमहमात्मानं विस्मृतवानस्मि । वासवदत्तायाः सत्ताकाले च त्वदीयाऽविनयादिकं तां सूचयितुं बहुशोऽभ्यस्तमासीत्पुरा । मनसो मुग्धतया हि तत्तादृक्पूर्णकालिकाभ्यासवशात्तादृगेवेदं वचनं परवशस्य मे वदनान्निःसृतं साम्प्रतम्, बुद्धिपूर्वं तु मया नोक्तमिति भावः । अनुष्टुब् वृत्तमिदम् ॥ ५ ॥

**रमणीअ** इति । खल्विति वाक्यसौन्दर्ये । नृशंसेन क्रूरेण, 'नृशंसो घातुकः क्रूर' इति कोषः, दुष्टेनेति यावत्, विदूषकेणेत्यर्थः, विसंवादितः नाशितः । प्रियाविषयकप्रियतमप्रणयप्रकाशकतया हृदयङ्गमः प्रस्तुतस्तावदयं वार्तालापप्रसङ्गो

---

राजा—( खेद से ) ऐसा ? मर गयी वासवदत्ता ।

इस परिहास से तो तुमने मेरा मन चंचल बना दिया । उससे, पहिले के अभ्यास से वैसी ही यह बात निकल पड़ी ॥ ५ ॥

पद्मा०—दुष्ट विदूषक ने सुन्दर कथाप्रसङ्ग को बिगाड़ दिया ।

वासवदत्ता—[ आत्मगतम् ] (क) भोदु भोदु, विस्सत्थह्मि। अहो ! पिअं णाम, ईदिसं वअणं अप्पच्चक्खं सुणीअदि।

विदूषकः—(ख) धारेदु धारेदु भवं। अणदिक्कमणीओ हि विही।

---

(क) भवतु भवतु, विश्वस्तास्मि। अहो ! प्रियं नाम, ईदृशं वचनमप्रत्यक्षं श्रूयते।

(ख) धारयतु धारयतु भवान्। अनतिक्रमणीयो हि विधिः। ईदृश-

---

दुर्जनेन विदूषकेण वासवदत्ताया असत्तां स्मारयता सम्प्रत्यहो ! विघटितः। 'चिरात्खलूपरता वासवदत्ते'ति यद्यसौ नासूचयिष्यद्विदूषकस्तर्हि किं किं न प्रालयिष्यत्प्रीतिमुग्धः सोऽयमार्यपुत्रः। तेन च तदीयं किमपि मया हृद्गतं वेदितुमपारयिष्यतेति हार्दमाकूतं वचनमेतदुदीरयन्त्याः पद्मावत्याः।

**भोदु भोद्विति**। पूर्वप्रदर्शितमेतं वचःप्रपञ्चमाकलयन्त्या वासवदत्तायाः ससन्तोषं मानसोद्गारोऽयम्। भवतु भवत्विति भृशार्थे द्विर्भावः। विश्वस्ता समुत्पन्नविश्वासा, अहो इति प्रशंसायाम्, नामेति निश्चयार्थकम्, अप्रत्यक्षं परोक्षम्। वासवदत्तां विनष्टां सूचयन्विदूषको हृदयङ्गमं तमेतं प्रस्तुतं कथाप्रसङ्गं विघटितवांस्ततश्चार्यपुत्रो मत्प्रीतिविषयकं किमप्यधिकं नोक्तवानित्यतः का नाम हानिः ? तावदेव तत्प्रियतमोक्तं पर्याप्तम्। तदीयाऽनिर्वचनीयनिर्व्याजप्रेम्णः प्रत्ययं प्राप्तवत्यस्मि, तद्विषये च न वर्तते कापि मे शङ्का। सन्तोषकरमिदं नूनं प्रशंसनीयम् यत्किलैतादृशप्रणयसूचकमार्यपुत्रप्रयुक्तं वचनं परोक्षमपि श्रवणाभ्यां पीयते मया। सर्वथाहं धन्यास्मि। प्रत्यक्षं प्रायः सर्वेऽपि प्रीतिवैभवं प्रकटयन्ति, परोक्षे तु तत्प्रकटनं कथं नाम न प्रशंसनीयं भवेदिति भावः।

इत्थं राजानं विषादभावापन्नमाकलयन्विदूषकस्तं समाश्वासयन्नाह—धारेदु इति। धारयतु धारयत्विति दार्ढ्ये द्विरुक्तिः। स्वार्थिकोऽयं णिच्, धैर्यं कर्म। हि हेतौ, अनतिक्रमणीयः अनुल्लङ्घनीयः। ईदृशं कष्टकरम्, एतद् वियोगवैक्लव्यम्, सोढव्यमिति शेषः। मित्रवर ! शोकावेगं निरुध्य दृढतमं सन्धार्य धैर्यमिदानीं दुःस-

---

वासव०—[ स्वगत ] अच्छा अच्छा ( प्रियतम का इतना ही कहना पर्याप्त है ), मुझे विश्वास हो गया। ऐसा वाक्य आड़ से ( छिपकर ) सुनाई देता है—यह बहुत ही प्यारा निश्चय प्रशंसनीय है।

विदू०—सम्हल जाइये, आप सम्हल जाइये। दैव का उल्लंघन नहीं हो सकता। इस समय

ईदिसं दाणि एदं।

राजा—वयस्य ! न जानाति भवानवस्थाम् ! कुतः,

**दुःखं त्यक्तुं बद्धमूलोऽनुरागः स्मृत्वा स्मृत्वा याति दुःखं नवत्वम्।**
**यात्रा त्वेषा यद् विमुच्येह वाष्पं प्राप्ताऽऽनृण्या याति बुद्धिः प्रसादम्॥**

---

मिदानीमेतत्।

---

मापतितमिदं सह्यतां भवता, यतो विधिगतिर्न केनाप्युल्लङ्घयितुं शक्या। भाव्यं भवत्येव। तदानीं भूयोऽनुभूतं तत्तादृशं सुखम्, इदानीं पुनर्वियोगवैक्लव्यमपि कष्टकरमिदं दैवोपनतं तूष्णीं सोढव्यमेव। अत्र न स्वातन्त्र्यं किमपि कस्यापीति भावः।

विदूषकोक्तमाकर्ण्य विषादभावं नाटयन् राजा ब्रूते—**वयस्येति**। अवस्थां दुःखदां दशाम्, ममेति शेषः। न ज्ञायते मित्र ! कष्टकरी विरहावस्था मे भवता। अत एतादृशमुपदिश्यते। कुत इति तस्याः कष्टकारणताप्रदर्शनम्।

तथाहि—**दुःखमिति**। बद्धं मूलं यस्य स बद्धमूलो दृढः, अनुरागः, प्रियाविषयकं प्रेम, त्यक्तुं दुःखं दुस्त्यजः। स्मृत्वा स्मृत्वा तत्प्रेम्णो मुहुः स्मरणेन, दुःखं मे कष्टं, नवत्वं याति नवमिव सम्पद्यते। कष्टं पुनः प्राक्कालिकमपि स्मृतिबलेन तात्कालिकमिव सञ्जायत इति भावः। इह अस्मिन्प्रसङ्गे, यात्रागतिरुपायस्तु, एषा वक्ष्यमाणा वर्तते, यत् वाष्पं विमुच्य रोदनमित्यर्थः। भावार्थे त्वाप्रत्ययः। (तेन च) प्राप्तानृण्या प्राप्तं लब्धमानृण्यं तत्प्रेम्णो निष्कृतिर्यया सा, बुद्धिर्मनः, प्रसादं नैर्मल्यं, याति गच्छति, प्रसीदतीति यावत्। महीयान्खलु निस्तुलः श्रीमान् वासवदत्तायाः प्रणयमहिमा। विरहे च तत्स्मरणं मुहुर्दुःखमुद्बोधयति। तेन चातितरां मुग्धं व्याकुलं जायते मनः। रोदनेन हि दुःखभारो लघूभवतीति तदानीं रोदनमेव मनसश्चञ्चलस्याकुलस्य नूनं स्थिरीकरणोपायः। प्रीतिपात्रप्रेमसम्पादनाद् ध्रुवं मनोऽधमर्णं भवति, अश्रुपात एव तदृणनिर्यातनं नाम वियोगावस्थायाम्। इत्थं सति वियोगवशादवसन्नं मनः पर्याकुलं कथमपि प्रसन्नतामधिगच्छति। अतो हि

---

वह वियोग-दुःख ( चुपचाप सहना ही होगा )।

राजा—मित्र ! तुम मेरी अवस्था को नहीं जानते। क्योंकि—

प्रियजनों में दृढ़ मये हुए प्रेम को छोड़ना कठिन है। बार-बार उसकी स्मृति करने से दुःख नया-सा हो जाता है। इस दशा में आँसू बहाना ही एकमात्र उपाय है। इससे प्रियजन के प्रेम से उऋण होकर मन प्रसन्न होता है।

*विदूषकः*—(क) अस्सुपादकिलिण्णं खु तत्तहोदो मुहं। जाव मुहोदअं आणेमि। [ निष्क्रान्तः। ]

*पद्मावती*—(ख) अय्ये ! वप्फाउलपडन्तरिदं अय्यउत्तस्स मुहं।

---

(क) अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम्। यावन्मुखोदकमानयामि।

(ख) आर्ये! वाष्पाकुलपटान्तरितमार्यपुत्रस्य मुखम्। यावन्निष्क्रामामः।

---

विरहावस्थोचितं दौःस्थ्यमनुभवता नियतमधिगन्तव्यं मया रुदित्वैव साम्प्रतं स्वास्थ्यमिति भावः। अत्र च स्मृत्वे'ति हेत्वर्थे त्वाप्रत्ययश्चिन्त्यः। 'व्याकुलीभवत' इति पदाक्षेपात्कथञ्चित्समर्थनीयो वा। केचित्तु कृत्प्रत्ययान्तां 'दुःख'मिति क्रियां कल्पयित्वा समानकर्तृकतया त्वाप्रत्ययमुपपादयन्ति। इत्थमेव 'विमुच्ये'त्यत्रापि भावार्थे प्रयुक्तस्त्वाप्रत्ययो विचारणीयः। 'स्यातव्य'मिति पदाक्षेपेण वा स्थितस्य गतिश्चिन्तनीया। शालिनी वृत्तमिदम्, 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति तल्लक्षणम् ॥ ६ ॥

सुहृदो वियोगदुःखाद्रुदितं दृष्ट्वा विदूषकः प्राह—**अस्सुपादेत्यादि**। अश्रुपातक्लिन्नम्, अश्रुपातेन रोदनजलोद्रेकेन क्लिन्नमार्द्रम्। क्लिन्नमित्यत्र क्लिद्यतेः क्तप्रत्यये 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इत्यनेन तकारदकारयोर्नत्वम्। खलु वाक्यालङ्कृतौ, यावदित्यस्य 'अत' इत्यर्थः। मुखोदकं मुखप्रक्षालनजलम्, मध्यमपदलोपी समासः। अहह ! रुदितेन हेतुनाऽधुना माननीयस्य राज्ञो वदनं भृशमार्द्रं मलिनं सञ्जातम्। अतो मुखप्रक्षालनाय मया जलमानेतुं गम्यत इत्यर्थः। प्रस्तावोचितं विदूषकस्य सलिलाहरणाय निर्गमनं दर्शयति कविः—**निष्क्रान्त** इति।

'सन्निधावेव शिलातले समवस्थितं सविदूषकं राजानमाकलय्य वासवदत्तादयो माधवीकुञ्जं प्रविष्टास्तद्दर्शनपरिहाराय तत्रैवाऽवरुद्धाः सत्यो वहिर्निर्गन्तुं ततो न प्रभवन्ति स्मे'ति पूर्वं प्रतिपादितम्। अस्मिन्क्षणे तु पतदश्रुपूर्णेक्षणः प्रियतमो न किलास्मान् द्रष्टुं शक्नुयादिति कुञ्जान्निर्गमनावसरमुदीक्षमाणा पद्मावत्यावन्तिकां प्रति ब्रूते—**अय्ये** इति वाष्पाकुलपटान्तरितम्, वाष्पेणाश्रुणा आकुलं व्याप्तम्, अतः पटेन वस्त्रेणेवान्तरितं व्यवहितमाच्छादितं चेति कर्मधारयः। यावदित्यस्य 'अधुने'त्यर्थः। अयि ! मान्ये ! प्रियतमस्य सम्प्रत्यश्रुपातमलिनी-

---

विदू०—आपका मुख आँसुओं के गिरने से मलिन हो गया है, तो मुख धोने के लिये पानी ले आता हूँ। (चला गया।)

पद्मा०—आर्ये ! आर्यपुत्र का मुख अश्रु-पूर्ण होने से मानों कपड़े से ढँका हुआ है।

जाव णिक्कमह्म ।

वासवदत्ता—(क) एव्वं होदु । अहव चिट्ठ तुवं । उक्कण्ठिदं भत्तारं उज्झिअ अजुत्तं णिग्गमणं । अहं एव्व गमिस्सं ।

चेटी—(ख) सुट्ठु अय्या भणादि । उवसप्पदु दाव भट्टिदारिआ ।

---

(क) एवं भवतु । अथवा तिष्ठ त्वम् । उत्कण्ठितं भर्तारमुज्झित्वाऽयुक्तं निर्गमनम् । अहमेव गमिष्यामि ।

(ख) सुष्ठ्वार्या भणति । उपसर्पतु तावद् भर्तृदारिका ।

---

कृतमेतन्मुखं प्रतीयते वस्त्रेणैवाच्छन्नम् । अश्रूणि किल वस्त्रकार्यमावरणं मुखे कुर्वन्ति प्रेयसः । एतेन स किलास्मान्न वीक्षितुमस्मिन्क्षणे क्षमो भविष्यतीति हेतोरितो निर्गच्छामो वयमित्यर्थः । समीचीनोऽयमवसरो निर्गमनस्येति पद्मावत्यावन्तिकायास्तत्रानुमतिमेतेन वचसा प्रार्थयते ।

कुञ्जान्निर्गमनेऽनुमतिं प्रार्थयमानां पद्मावतीं प्रत्यब्रवीदावन्तिका—**एव्वमिति** । समीचीनस्ते विचारोऽयम् । इतो निर्गन्तव्यमधुनास्माभिरित्यर्थः । पुनः किञ्चित् समयोचितं विचार्य पद्मावतीं ततो निर्गमनान्निवारयितुकामा पक्षान्तरमुपक्षिपति—**अहवेति** । उज्झित्वा त्यक्त्वा, उपेक्ष्येति यावत् । अयि ! पद्मावति ! सर्वासां नो निर्गमनपक्षोऽयं न समीचीनः । त्वयात्रैव स्थीयताम् । त्वद्दर्शनविपर्ययिणीं भृशमुत्कण्ठां वहन्तं प्रियतमं पतिमुपेक्षापथं नीत्वा नेतो निर्गन्तुमर्हसि त्वम् । एकाकिन्या मयैवेतः प्रस्थास्यते, न मया सार्धमिदानीं गन्तुमुचितं तवेति भावः । 'अत्रावस्थितायां मयि मदर्थमेपापि प्रियदर्शनाद्विरहिता भवती'ति तस्मात्प्रदेशादात्मनो निर्गमनप्रस्तावः समुपस्थापितोऽयं समयोचितो वासवदत्तया ( ऽऽवन्तिकया ) ।

आवन्तिकयोपस्थापितं तमेतं प्रस्तावमनुमोदमाना चेटी ब्रूते—**सुट्ठु** इति । सुष्ठु उचितम्, आर्या आवन्तिका । उपसर्पतु, भर्तारमिति शेषः । तावद्वाक्यालङ्कारे । श्रीमत्याऽऽवन्तिकया वचनमेतदुचितं प्रस्तूयते । एतया गम्यतामितः । राजकुमार्या पुनर्भर्तुः समीपं गन्तव्यम् । कालेऽस्मिन्निदमेव कार्यं कार्यमिति भावः ।

---

इस समय हम लोग निकल चलें ।

वासव०—ऐसा ही सही । अथवा तुम यहीं ठहरो । उत्कण्ठित भये हुए स्वामी को छोड़कर तुम्हारा यहाँ से जाना ठीक नहीं । मैं ही जाऊँगी ।

दासी—आर्या ठीक कहती हैं । आप स्वामी के पास जायें ।

*पद्मावती*—(क) किं णु खु पविसामि ?

*वासवदत्ता*—(ख) हला ! पविस । [ इत्युक्त्वा निष्क्रान्ता । ]

[ प्रविश्य ]

*विदूषकः*—[ नलिनीपत्रेण जलं गृहीत्वा ] (ग) एसा तत्तहोदी पदुमावदी ? ।

*पद्मावती*—(घ) अय्य ! वसन्तअ ! किं एदं ?

---

( क ) किन्नु खलु प्रविशामि ?

( ख ) हला ! प्रविश ।

( ग ) एषा तत्रभवती पद्मावती ?

( घ ) आर्य ! वसन्तक ! किमेतत् ?

---

प्रियोपसर्पणं प्रति चेत्या प्रेरिता पद्मावती विषयेऽस्मिन्नावन्तिकाया अभ्यनुज्ञां याचते—**किं णु खु** इति । नु खलु इति वाक्यालङ्कारे । प्रविशामीति विध्यर्थे लट्, प्रियावस्थानपवित्रीकृतं प्रदेशमिति शेषः । किमधुना भर्तुः समीपं गम्यतां मया ? अभ्यनुज्ञायते च किमिदं भवत्या ?

अत्र विषयेऽभ्यनुज्ञां दर्शयत्यात्मन आवन्तिका—**हलेति** । सखि ! स्वैरमुपसर्पणीयस्ते प्रियः साम्प्रतम् । इत्येवमुचितं पद्मावतीं निगद्य वासवदत्ता (आवन्तिका) ततो निर्गच्छति स्मेत्याह—**इत्युक्त्वेत्यादि** ।

राज्ञो मुखस्य प्रक्षालनार्थमुदकमानेतुं गतस्य विदूषकस्य साम्प्रतं राजसन्निधौ प्रवेशमाह—**प्रविश्येति** ।

कमलिनीपत्रपुटे जलमादाय राज्ञः समीपमुपेयिवान्विदूषकस्तत्रोपगतां पद्मावतीं पश्यन् सप्रमोदाश्चर्यं वचनमाह—**एसेति** । अहो ! अत्र पूज्या पद्मावती श्रीमतीयं विराजते ? चिरात्किल यस्या दर्शनं प्रत्युत्कण्ठिता वयं, सेयमनायासमिदास्माकं पुरस्तात्समुपस्थितेति नूनमानन्ददायी क्षणोऽयं प्रियसखस्य राज्ञः कृते ।

प्रियतमं रुदन्तं विदूषकं च जलमानयन्तमालोक्य तत्कारणं जिज्ञासमाना विदूषकं पृच्छति पद्मावती—**अय्येति** । एतत्किम् आर्यपुत्रकर्तृकरोदनं भवत्कर्तृकं

---

पद्मा०—क्या मैं जाऊँ ?

वासव०—हाँ, सखी जाओ । ( ऐसा कह चली गई । )

( प्रवेशकर )

विदू०—(कमल के पत्ते में पानी लेकर) अहा ! ये माननीय पद्मावती यहाँ आ गई ?

पद्मा०—आर्य वसन्तक ! यह क्या ?

*विदूषकः*—(क) एदं इदं । इदं एदं ।

*पद्मावती*—(ख) भणादु भणादु अय्यो भणादु ।

*विदूषकः*—(ग) भोदि ! वादणीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण सस्सुपादं खु तत्तहोदो मुहं । ता गह्णदु होदी इदं मुहोदअं ।

---

(क) एतदिदम् । इदमेतत् ।

(ख) भणतु भणत्वार्यो भणतु ।

(ग) भवति ! वातनीतेन काशकुसुमरेणुनाऽक्षिनिपतितेन साश्रुपातं खलु तत्रभवतो मुखम् । तद् गृह्णातु भवतीदं मुखोदकम् ।

---

जलानयनं चेत्युभयं किङ्कारणकमित्यर्थः । अयि ! मान्य ! वसन्तक ! किमर्थमार्यपुत्रेणाद्य रुद्यते भवता चपानीयमानीयते ? कथ्यतां तत्कारणं यथार्थं भवतेति भावः ।

रोदनजलानयनयोः कारणे ज्ञातुं पूर्वोक्तं पृच्छन्त्याः पद्मावत्या अभिप्रायं बुद्ध्वापि, यथार्थं तत्कारणं गोपनीयमनुद्घाटयन्प्रकटं करगतवस्तुविषयकप्रश्नस्योत्तरं दित्सुर्विदूषकः सहासमस्फुटं किमप्याह—**एदमिति** । एतत् करस्थम्, इदं जलम् । मत्करे किमस्तीत्येवं पृच्छ्यते चेद्भवत्या, जलमिदं वर्तत इत्युत्तरं दीयते मया । पदप्रातिलोम्येन पुनरपि तदर्थकमेव वाक्यान्तरमाह—**इदमिति** । जलमेवेदं नान्यत्किमपि । प्रत्यक्षमेवैतद्भवत्या इति वाक्यद्वयार्थः ।

**भणादु** इति । प्रियतमस्य रोदनकारणं ज्ञातुं तदुचितं च विदूषकवदनादुत्तरं सुस्पष्टमधिगन्तुमिच्छन्त्याः पद्मावत्या वचनमिदम् । त्रिरुक्तं 'भण' त्विति पदं तदुत्तरश्रवणे सत्वराया अत्यन्तौत्सुक्यं सूचयति पद्मावत्याः । यत्किमप्येवं किमुच्यते श्रीमता ? कथ्यतां यथार्थं कारणमार्यपुत्राश्रुपातस्य भवतो जलानयनस्य च । तत्समाकर्णयितुं भृशमुत्कण्ठितास्मीति भावः ।

'वासवदत्तावियोगवैक्लव्याद्राजा रोदितीत्युक्ते सति सपत्नीभावसहजमीर्ष्याभावं भजन्तीयं पद्मावती प्रियतमे प्रणयकोपमाविष्कुर्या'दिति हेतोर्विदूषकः सत्यं कारणमपलप्य कारणान्तरं तत्र समयोचितमसत्यं निर्दिशति—**भोदि** । इति ।

---

विदू०—यह यह, यह यह !

पद्मा०—कहिये, कहिये, आप कहिये ।

विदू०—आर्ये ! हवा से उड़ाई गई कास के फूल की धूल के आँख में पड़ने से राजा के मुख पर आँसू बह आये हैं । तो आप मुख धोने के इस पानी को लें ।

*पद्मावती*—[ आत्मगतम् ] (क) अहो ! सदक्खिण्णस्स जणस्स परिजणो वि सदक्खिण्णो एव्व होदि। [ उपेत्य ] जेदु अय्यउत्तो। इदं मुहोदअं।

*राजा*—अये ! पद्मावती ? [ अपवार्य ] वसन्तक ! किमिदम् ?

---

( क ) अहो ! सदाक्षिण्यस्य जनस्य परिजनोऽपि सदाक्षिण्य एव भवति। जयत्वार्यपुत्रः। इदं मुखोदकम्।

---

वातनीतेन पवनावधूतेन, अश्रुपातो रोदनजलोद्गमस्तेन सहितं साश्रुपातम्, खलु निश्चये। तत् तस्मात्कारणात्। श्रीमति ! वातावधूतं काशकुसुमानां रजो नयनाभ्यन्तरं गतम्। नियतमेतेन हेतुना समयेऽस्मिन्पूजनीयस्य राज्ञो मुखेऽश्रूणि पतन्ति दृश्यन्ते। अतो राजकीयमुखप्रक्षालनार्थं मयानीतमेतत्पानीयं गृह्यतां भवत्या प्रक्षाल्यतां च श्रीमतो राज्ञो मुखमश्रुपातमलिनमित्यर्थः।

विदूषकस्य वचनमुदारमाकर्ण्य तदौदार्यं प्रशंसति स्वान्ते पद्मावती—**अहो** इति। अहो इत्यव्ययं प्रशंसावाचि, परिजनः स्वात्मीयवर्गः। उदारो जन उदारमेव जनं लभते। यो यादृशः स तादृशमेवाप्नोति सहचरम्। इदमौदार्यं सर्वथा प्रशंसनीयं विदूषकस्य, यदनेन राज्ञो दुःखेन दुःखिना सता राजानं स्वस्थतां नेतुं कुतोऽप्यन्विष्य जलमानीतम्। समदुःखसुखत्वमेव तावदौदार्यम्। अहो ! कीदृशीमेष राज्ञी विषये चिन्तामुद्वहति। इत्येवं स्वगतमभिधाय भर्तुः समीपं गत्वा ब्रवीति—**जेद्विति**। श्रीमान् पतिदेवः सर्वोत्कर्षेण वर्तताम्। स्वामिन् ! मुखप्रक्षालनार्थमेतत्सलिलम्, एतेन मुखं प्रक्षालनीयमित्यर्थः।

मुखप्रक्षालनजलमुपनयन्तीं पद्मावतीमुपनतां विलोक्य सानन्दं राजा ब्रूते—**अये** इति। अये इति सम्भ्रमं व्यनक्ति। पद्मावत्यास्तत्र सहसोपलब्ध्या सम्भ्रमो युज्यते राज्ञः। समुपस्थितेति शेषः। अहो ! प्रियतमा पद्मावतीयं समागता ? अपवार्य पद्मावत्याः सकाशान्मुखं परावर्त्य विदूषकसम्मुखं कृत्वेत्यर्थः। किमिदं

---

पद्मा०—( स्वगत ) अहा ! उदार लोगों के सेवक भी उदार ही होते हैं। ( पास पहुँच कर ) आर्यपुत्र की जय हो। यह मुँह धोने का पानी है।

राजा०—ऐं पद्मावती ? ( पद्मावती से मुँह फेर कर विदूषक से वसन्तक ! यह क्या !

*विदूषकः*—[ कर्णे ] (क) एव्वं विअ।

*राजा*—साधु वसन्तक ! साधु। [आचम्य] पद्मावति ! आस्यताम्।

*पद्मावती*—(ख) जं अय्यउत्तो आणवेदि। [ उपविशति। ]

---

( क ) एवमिव।

( ख ) यदार्यपुत्र आज्ञापयति।

---

किन्तावदेतत्, आपतितमिति शेषः। अयि ! मित्र ! सहसोपलब्धया हि पद्मावत्या कथं किमेतदानीतम् ? इदानीं रोदनकारणं च किमस्यै मया निवेदनीयम् ?

राज्ञः प्रश्नस्योत्तरं कर्णे कथयति विदूषकः—**एव्वं विअ** इति। इवेति वाक्यालङ्कारे। एवमित्युत्तरणप्रकारप्रदर्शनम्। तच्च गूढं पद्मावत्या नाकर्णनीयमिति तस्य कर्णे कथनम्। तत्तावद्विदूषकोक्तमिदमेव—'इमं प्रदेशमागतया पद्मावत्या मित्र ! भवतोऽवस्थामिमां मत्कर्तृकतत्सलिलानयनं च नयनयोः पदवीमानीय तत्कारणं मत्पुरो जिज्ञासितम्। अस्पष्टं यत्किमप्युक्ता च सा मया, स्पष्टतया पुनस्तदेतद्वक्तुं, मामतितरामन्वरौत्सीत्। ततोऽहं भवतो वास्तवं रोदनकारणं वक्तुमनुचितं मन्वानः काशपुष्परागेणाक्षिपतितेन राजा रोदिति, तदर्थं च मुखप्रक्षालनौपयिकमिदं पानीयमानीतं मया, भवत्योपनीयतां श्रीमतो राज्ञः समीपमित्येव निवेदितवान्। सम्प्रत्येतां प्रति भवताऽप्येतदेव रोदनकारणमात्मनः प्रकटनीय' मिति।

विदूषकनिवेदितं रहस्यार्थमवधार्य तदर्थं तं प्रशंसन्नाह राजा—**साध्विति**। साधु साध्विति भृशार्थे द्विरुक्तिः। मित्रवर ! सुतरां समीचीनमुत्तरं सूचितं त्वया। मयापि तदेवेदं निवेदयिष्यत इत्यर्थः। कर्णे कथितं विदूषकवचनं निशम्य राज्ञस्तत्प्रशंसनं चेदमौचित्यात्कर्ण एवाऽपवार्य वा कृतमत्र वेदितव्यम्। पद्मावत्योपहृतं मुखप्रक्षालनजलं गृहीत्वा तेन राज्ञा कृतं मुखप्रक्षालनं दर्शयति कविः—**आचम्येति**। मुखं प्रक्षाल्येत्यर्थः। **पद्मावतीति**। पद्मावतीमुपवेशयितुमिच्छतो राज्ञः 'प्रिये ! समुपविश्यता' मितीदं पद्मावतीं प्रति वचनम्।

भर्तुराज्ञायाः सादरस्वीकरणं नाटयति पद्मावती—**जमिति**। आज्ञां करोति

---

**विदू०**—( कान में ) यह ऐसा।

**राजा**—शाबास वसन्तक ! शाबास। ( मुँह धोकर ) पद्मावती ! बैठ जाइये।

**पद्मा०**—जैसी आपकी आज्ञा। ( बैठती है। )

*राजा*—पद्मावति !

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ? ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥ ७ ॥

---

आज्ञापयति, 'तत्करोति तदाचष्टे' इति णिच, आदन्तत्वात्पुगागमः। तत्रभवता श्रीमता यदादिश्यते, तत्पूरयितुमेतया मया सन्नद्धया भूयते। भर्तुराज्ञां शिरोधार्यां सादरमूरीकृत्य मत्प्रत्येशाहमुपविशामीति भावः। ततस्तस्यात्रोपवेशं दर्शयति—**उपविशतीति** ।

इत्थमात्मनः समीपमुपवेश्य पद्मावतीं 'मदश्रुपातकारणं तत्त्वतो विज्ञाय बालेयमीर्ष्याकषायिता कोपना सती विमनायेत, अनुक्ते च मया तत्कारणे नूनमन्यथा किमपि शङ्केते, त्येवं किल विदूषकवचनानुसारं सम्भाव्य राजा वस्तुस्थितिं गोपयन्नश्रुपाते कारणान्तरमन्यथा निर्दिदिक्षन्वक्तुमुपक्रमते—**पद्मावतीति** । सम्बुद्धिरियं श्लोकान्वयिनी ।

तदेव राज्ञो वचनं दर्शयति कविः—**शरदित्यादि** । अत्र पद्ये वासवदत्तावियोगहेतुतामश्रुपातस्य तर्कयन्तीं सम्भाव्यकोपां पद्मावतीमुद्दिश्य तत्कृते राज्ञा कृतमिदं 'भामिनी'ति सम्बोधनं युज्यते। भामिनि ! कोपने ! 'कोपना सैव भामिनी'त्यमरः, अयि ! पद्मावति! शरच्छशाङ्कगौरेण शारदचन्द्रवद्धवलेन, वाताविद्धेन वायुना वेल्लितेन चालितेन, 'आविद्धं कुटिलं भुग्नं वेल्लित'मित्यमरः, काशपुष्पलवेन काशाख्यप्रसूनकणेन धूलिरूपेण नयनयोरन्तरं गतेनेति शेषः, इदं दृश्यमानं, मम मुखं मदीयमाननं, साश्रुपातं रोदनजलोद्गमेन सहितम्, सञ्जातमासीदिति सामान्यक्रियाक्षेपः। 'अयि प्रिये ! सम्प्रति मदीयाश्रुपातविषयकं मनस्यन्यथा किमपि शङ्कमानया न त्वया मयि कुपितया विमनायमानयापि भाव्यम्। अत्र हि प्रमदवने काशपुष्परेणवो वायुना समन्ततः क्षिप्यन्ते। त एवामी मन्नयनान्तरे निपतिता अश्रूण्युद्भावयन्ति। इदमेव तावत्कारणं मद्रोदने। नेत्रयोर्धूलिपातादश्रूद्गमो युज्यत एवे'ति भावः। अनुष्टुप् वृत्तम् ॥ ७ ॥

'रोदनस्य वास्तवकारणापह्नवान्मृषा भाषितं समयोचितमिदानीं नेदं दूषणाय। महानुभावा अपि कारणविशेषादसत्यं रोचयन्ते। अन्यथाशङ्कनपरिहाराय प्रयुक्तं

---

राजा—पद्मावती ! शरदृतु के चन्द्रमा की भाँति गौरवर्ण, हवा से उड़ी हुई काश-कुसुम की धूल के आँख में गिरने से मेरे मुख पर हे प्यारी ! आँसू आ गिरे ॥ ७ ॥

[ आत्मगतम् ]

इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत्।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः॥ ८॥

विदूषकः—(क) उइदं तत्तहोदो मअधराअस्स अवरह्णकाले

---

(क) उचित तत्रभवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा

---

नवोढां पुनः पद्मावतीं प्रत्येतद् गुणाये'ति तस्यौचित्यं समर्थयन् स्वगतमाह राजा–इयमिति। बाला नूतनवयाः मुग्धेति यावत्, नव उद्वाहो यस्याः सा नवोद्वाहा नवोढा, इयं पद्मावती, सत्यं श्रुत्वा रोदनस्य वास्तवं कारणं निशम्य, व्यथां व्रजेत् व्यथिता दुःखिता भवेत। इयमेषा, धीरस्वभावा धीरो गम्भीरोऽचञ्चलः स्वभावः प्रकृतिर्यस्यास्तादृशी, कामं बाढं वर्तते, तु किन्तु, स्त्रीणां योषितां स्वभावः, कातरोऽधीरो भवति, 'अधीरः कातर' इत्यमरः। 'मदीयाश्रुपातस्य प्रियतमवासवदत्ता-वियोगहेतुतायामाकर्णितायां नवोढया मुग्धया पद्मावत्या भृशं व्यथितचित्तया भूयेत। यद्यपि प्रकृत्या धीरयाऽनया सत्यकारणश्रवणेऽपि सापत्न्यसहजमीर्ष्याभावं भजन्त्या विकृतचित्तया न भवितुं शक्यते, तथापि स्वभावतः स्त्रियोऽधीरा भवन्तीति तादृशी शङ्का युज्यतेऽस्यां कर्तुम्। चञ्चलं मनः सर्वेषां विशेषतस्तु बालानाम्, तेन सा किन्नाम कदाचिन्न चिन्तयेत। अतो मृषैतत्कारणं प्रदर्शयता युक्तमेवाचरितं मये'ति भावः। अत्राप्यनुष्टुप् छन्दः॥ ८॥

अथेदानीं प्रियतेरश्रुपातस्य कारणं विज्ञाय पद्मावत्यां नवोढाभावसुलभया लज्जया तत्र किञ्चिद्वक्तुमपारयन्त्यां, नृपतौ च सरसोचितवक्तव्यान्तरविचारचुम्बितचेतसि क्षणकालं तूर्णींभावं भजमाने, तत्कालसमुचितं मगधराजोपसर्पणरूपं राज्ञोऽनुष्ठेयमावश्यकं स्मारयन् राजानमुद्दिश्य विदूषको वक्तुमारभते—उइदमिति। मगधराजस्य मगधदेशाधीशितुः, अपराह्णकाले, पञ्चधा विभक्तस्य दिनस्य चतुर्थो भागोऽपराह्णकालस्तत्र। समयश्चायमष्टादशदण्डोत्तरं षड्दण्डपरिमितो वेदितव्यः। अह्नोऽपरमपराह्णः, 'पूर्वापरे'त्यादिनैकदेशिसमासः, 'अह्नोऽह्न एतेभ्य' इत्यह्नादेशः। हि निश्चये, नाम प्रसिद्धौ, प्रतीष्टः स्वीकृतः प्रीतिमुत्पादयति सन्तोषं

---

( स्वगत ) नई ब्याही हुई यह बाला सुनकर सचमुच ही दुःखी होगी। फिर भी यह गम्भीरप्रकृति की है। किन्तु स्त्रियों का, स्वभाव अधीर होता है॥ ८॥

विदू०—महाराज मगधस्वामी को आपके आगे कर शाम के समय अपने मित्रों से भेंट

भवन्तं अग्गदो करिअ सुहिज्जणदंसणं। सक्कारो हि णाम सक्कारेण पडिच्छिदो पीदिं उप्पादेदि। ता उट्ठेदु दाव भवं।

राजा—बाढम्। प्रथमः कल्पः। [ उत्थाय ]

**गुणानां वा विशालानां सत्काराणां च नित्यशः।**

---

सुहृज्जनदर्शनम्। सत्कारो हि नाम सत्कारेण प्रतीष्टः प्रीतिमुत्पादयति। तदुत्तिष्ठतु तावद् भवान्।

---

जनयति, अर्थात् सत्कर्तुः। तावद्वाक्यालङ्कारे। अयं भावः'—पूज्याः कन्यापक्षीया हि नूतनं जामातरं दर्शयितुं तेन सहैव परिचितान्सुहृदः समुपगच्छन्तीति प्रायो दृश्यते। अपराहृश्चायं यत्र तत्र गमनादिभिर्नीयते लोकैः। समयेऽस्मिन् मगधराजः श्रीमान् भवन्तं पुरस्कृत्य मार्गे परिचितानां दर्शनार्थं गन्तुमर्हति। निश्चितं प्रसिद्धं चैतत्, यत्-सम्मानः सम्मानपूर्वकं स्वीकृतः सन् सम्मानकर्तुरान्तरं तोषविशेषमुद्भावयितुं प्रभवति। स एवेतरथा स्वीकृतो विपरीतं भावमुद्भावयति। मगधराजकर्तृकं च पुरस्करणं भवतः सत्कार एव। तमेतं तेन करिष्यमाणमादरं स्वीकर्तुमर्हति भवान्। अतस्तदर्थं तत्रोपस्थातुमित उत्थातव्यमिदानीं भवते'ति।

विदूषकोक्तेः स्वीकृतिं दर्शयति राजा—**बाढमिति**। बाढं वरम्, प्रथमः कल्पः मुख्यो विधिः, प्रधानं कार्यमिति यावत्, 'मुख्यः स्यात्प्रथमः कल्प' इति कोषः। मित्र! सुन्दरस्तवायं प्रस्तावः। मगधराजोपसर्पणं नाम कार्यमिदं मया कार्यमेवाधुनेत्यर्थः। तदौपयिकं च राज्ञस्ततः प्रदेशादुत्थानं दर्शयति—**उत्थायेति**। उत्तिष्ठन् ब्रवीतीत्यर्थः।

तदेव राज्ञो वचनमाह कविः—**गुणानामिति**। अत्र वाशब्दचशब्दौ समुच्चयवाचिनौ। कर्तारो विज्ञातारश्चेति पदे द्वयोः षष्ठ्यन्तयोः सन्वध्येते। लोके जगति, विशालानां महतामुदाराणां, गुणानां परोपकारादिसत्कर्मणां, सत्काराणां परपूजाप्रभृतीनां च, नित्यशः सन्ततं, कर्तारः प्रयोजका लोकाः, सुलभाः सुखमनायासेन लब्धुं शक्यास्ते भूयांसः सन्ति, गुणानां सत्काराणां च विज्ञातारस्तु सादरं तत्स्वीकर्तारः पुनः, दुर्लभाः दुःखेन लब्धुं शक्याः, विरलास्तादृशः सन्तीत्यर्थः। नित्यमुपकर्तारः सत्कर्तारश्च लोकाः स्वार्थप्रेरिता बहुतमादृश्यन्ते, किन्तु कृतज्ञाः सत्का-

---

करना उचित है। सत्कार-पूर्वक स्वीकृत सत्कार ही सन्तोष उत्पन्न करता है। तो अब आप उठें।

राजा—ठीक—मुख्य बात है। ( उठकर )

बड़े-बड़े उदारता आदि गुणों और सत्कारों के करनेवाले लोग संसार में सर्वदा सुलभ

कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः ॥ ९ ॥

[ निष्क्रान्ताः सर्वे । ]

**चतुर्थोऽङ्कः ।**

---

## अथ पञ्चमोऽङ्कः

[ ततः प्रविशति पद्मिनिका । ]

---

रज्ञाश्च लोके स्वल्पतमा एव । अयमाशयः—'उपकारं सत्कारं च परेषां तत्कर्तृकप्रत्युपकारप्रतिसत्कारलिप्सया बहवः प्रयुञ्जते, न तत्र कोऽपि विशेषः । परं परकृतोपकारसत्कारप्रकाशनपुरःसरं सादरं तत्स्वीकरणं कर्तुं बहवो न जानन्ति । जानन्तोऽपि वा तत्रोपेक्षन्ते । तद्गुणशालिनस्तु नियतं विशिष्टाः शिष्टगोष्ठीषु गणेया भवन्ति । अतो मगधराजपूजास्वीकरणं नाम तदीयसत्कारज्ञानरूपमिदमनायासलभ्यमन्यदुर्लभं कार्यं मे कर्तुं साम्प्रतं साम्प्रतमस्तीति तत्रैव मयोपस्थातव्य'मित्यलम्। अनुष्टुप् वृत्तमिदम् ॥ ९ ॥

**'निष्क्रान्ताः सर्वे'** इत्यनेन सर्वेषां राजादीनां ततो निर्गमनं सूचितम् ।

अङ्कसमाप्तिं दर्शयति—**चतुर्थोऽङ्क** इति ।

**इति श्रीस्वप्नवासवदत्तव्याख्यायां प्रबोधिन्यां चतुर्थोऽङ्कः ।**

---

पञ्चमाङ्कः प्रस्तूयते साम्प्रतम्—**अथ पञ्चमोऽङ्क** इति ।

विदूषकमुखाद्वासवदत्तां प्रियतमामाकलय्य तत्प्रसङ्गाद्वासवदत्तावियोगविकलस्य राज्ञो रोदनं पद्मावतीसमागमो मगधराजोपगमनं चेति संसूचिताश्चतुर्थेऽङ्के विषयाः । अत्र किल पञ्चमेऽङ्के—शिरोवेदनावशात्पद्मावत्या अस्वस्थतामधिगत्य तत्रोपस्थाय तत्प्रतीक्षया तस्या एव शय्यायां शयनसुखं प्राप्तवतस्तान् वासवदत्ताविषयकान् स्वप्नदर्शोपयिकान् विलापप्रलापाननुवर्ण्य जाग्रदवस्थायां विदूषकेण समं तद्विषयकमालपतो राज्ञो महाराजदर्शकादेशात्परिपन्थिनमारुणिं प्रति सेनयाऽभिगमनोत्साहो दर्शयिष्यते। तदनुगुणमेव प्रवेशकमुखेन चेटीद्वयस्य करणीयं दर्शयन् पद्मिनिकां नाम चेटीं प्रवेशयति कविः—**ततः प्रविशती**त्यादिना ।

---

हुआ करते हैं, किन्तु उनके ज्ञाता ( जानकार ) तो दुर्लभ हैं ॥ ९ ॥

( सब चले गये । )

चतुर्थ अङ्क समाप्त ॥

---

( पद्मिनिका आती है । )

पद्मिनिका—(क) महुअरिए ! महुअरिए ! आअच्छ दाव सिग्घं ।

[ प्रविश्य ]

मधुकरिका—(ख) हला ! इअह्मि । किं करीअदु ?

पद्मिनिका—(ग) हला ! किं ण जाणासि तुवं—भट्टिदारिआ पदुमावदी सीर्षवेदणाए दुक्खाविदेत्ति ।

---

(क) मधुकरिके ! आगच्छ तावच्छीघ्रम् ।

(ख) हला ! इयमस्मि । मधुकरिके ! किं क्रियताम् ?

(ग) हला ! किं न जानासि त्वं—भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति ।

---

पद्मिनिका चेयं भर्तृदारिकायाः पद्मावत्याः शिरोवेदनां मधुकरिकानामिकायाः सहचारिण्या मुखेन श्रीमतीं वासवदत्तां, विदूषकमुखेन च स्वयं राजानं निवेदयितुमुत्सुका सती मधुकरिकामन्विष्यन्ती तदुचितं वचः प्रस्तौति—**महुअरिए** इति । मधुकरिके इत्यामन्त्रणं त्वरायां द्विरुक्तम् । तावद्वाक्यालङ्कारः । अयि ! मधुकरिके ! सत्वरमागम्यतां त्वया, कार्यविशेषस्ते समुपस्थित इत्यर्थः ।

तदामन्त्रणानुसारं मधुकरिकायाः प्रवेशं दर्शयति—**प्रविश्येति** ।

सख्या पद्मिनिकयाऽऽमन्त्रिता कृतप्रवेशा च मधुकरिका ब्रूते—**हलेति** । सखि ! एषाहं समुपागता । किमर्थमाहूतास्मि सख्या ? किं तावत्करणीयं मया ?

प्रस्तुतं निवेदयति पद्मिनिका—**हलेति** । शीर्षवेदनया हेतुभूतया शिरोव्यथया । सखि ! साम्प्रतं श्रीमत्या राजकुमार्याः शिरसि वेदना सञ्जाता । तेन हेतुनाऽतितरामस्वस्थतां वहन्ती दुःखिता वर्तते सा । अवस्था च कष्टकरी तस्याः किमिदं न ज्ञायते त्वया ?

---

पद्मि०—मधुकरिका ! मधुकरिका ! जल्दी आओ ।

( आकर )

मधु०—अरी ! यह मैं हूँ । क्या किया जाय ?

पद्मि०—अरी ! तू क्या नहीं जानती कि, सिर की पीड़ा ने राजकुमारी को दुःखी बना दिया है ।

मधुकरिका—(क) हद्धि।

पद्मिनिका—(ख) हला! गच्छ सिग्घं, अय्यं अवन्तिअं सद्दावेहि। केवलं भट्टिदारिआए सीसवेदणं एव्व णिवेदेहि। तदो सअं एव्व आगमिस्सदि।

मधुकरिका—(ग) हला! किं सा करिस्सदि?

---

(क) हा धिक्।

(ख) हला! गच्छ शीघ्रम्, आर्यामावन्तिकां शब्दायस्व। केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय। ततः स्वयमेवागमिष्यति।

(ग) हला! किं सा करिष्यति?

---

वृत्तमिदमाकर्ण्य कष्टानुभावं नाटयति मधुकरिका—**हद्धीति**। कष्टं सखि! नूनं कष्टकरममुं वृत्तान्तं श्रावितवत्यसि। किमधुना विधेयम्?

तत्कालोचितं तदीयं कर्तव्यं निर्दिशति पद्मिनिका—**हलेति**। शब्दायस्व शब्दं कुरु, कथयेत्यर्थः। वृत्तमेतदिति शेषः। सखि! सत्वरमितो गम्यतां त्वया तत्रभवतीमावन्तिकां प्रति वृत्तान्तश्चाभिधीयतां श्रीमत्याः पद्मावत्या अस्वस्थतासूचकोऽयमित्यर्थः। वृत्तमिदं च केवलं सूचयन्त्यास्ते तदाह्वानं नावश्यकम्, श्रुतवतीदं सा स्वयमेव तत्रोपस्थिता भवेदित्याह—**केवलमिति**। राजकुमार्याः शिरसः पीडैव केवलं तत्समीपे सूचनीया, श्रुत्वैव तयाऽनाहूतयापि स्वत एव पद्मावतीस्नेहान्नियतं तत्रोपस्थास्यते। समयेऽस्मिन् सखीसमदुःखसुखा च सा पूज्यावन्तिका पद्मावत्याः प्रवृत्तिमेतामधिगत्य दुःखिता क्षणमपि तामदृष्ट्वा न स्थास्यतीति भावः।

'कार्यमधुना चिकित्सकस्य, किं तयावन्तिकयोपस्थाय विधास्यते' इत्याशयेनाह मधुकरिका—**हलेति**।

---

मधु०—हाय! कष्ट!!

पद्मि०—अरी! जल्दी जा और उज्जैनवाली आर्या को बुला ला। केवल राजकुमारी का सिरदर्द ही बताना, यह सुनकर वे स्वयं ही आवेंगी।

मधु०—अरी! वे क्या करेंगी?

*पद्मिनिका*—(क) सा खु दाणिं महुराहिं कहाहिं भट्टिदारिआए सीसवेदणं विणोदेदि।

*मधुकरिका*—(ख) जुज्जइ। कहिं सअणीअं रइदं भट्टिदारिआए?

*पद्मिनिका*—(ग) समुद्दगिहके किल सेज्जा त्थिण्णा। गच्छ दाणिं

---

(क) सा खल्विदानीं मधुराभिः कथाभिर्भर्तृदारिकायाः शीर्षवेदनां विनोदयति।

(ख) युज्यते। कुत्र शयनीयं रचितं भर्तृदारिकायाः?

(ग) समुद्रगृहके किल शय्या स्तीर्णा। गच्छेदानीं त्वम्। अहमपि

---

तयैव सखीनिर्विशेषया मनसो विनोदनं पद्मावत्याः सम्भावयन्त्याह पद्मिनिका—सा खु इति। खलु निश्चये। विनोदयतीति वर्तमानसामीप्ये भविष्यति लट्। अपनेष्यति लघूकरिष्यतीत्यर्थः। सखि! नूनं तयावन्तिकया समयेऽस्मिन्सरसानि वचनानि प्रयुज्य राजकुमार्याः शिरोवेदना किञ्चिदपनेष्यते। दुःखसमये च सुहृदां सरसमधुराणि वचनान्येव कष्टिकष्टभारं लघूकृत्य दुःखिनां मनोऽनुरञ्जयन्तीत्यसौ सत्वरं त्वया सूचनीयेति भावः।

पद्मिनिकया चिन्तितमुपायमभिनन्दन्ती 'क्वेदानीं पद्मावत्या अवस्थितिर्वर्तते, यत्र किल पूज्ययावन्तिकयोपस्थातव्य'मिति पद्मिनिकां पृच्छन्ती ब्रूते मधुकरिका—**जुज्जइ** इति। शयनीयं शय्या, शयनस्थानमिति यावत्, रचितं कल्पितम्। सखि! त्वयोक्तमिदं नाभ्रूपपद्यते। नूनमयमेवावलम्बनीय उपायः। इदं तावद्वक्तव्यमिदानीं त्वया, यत्किलावन्तिकया कुत्र गन्तव्यम्? क्व च सा राजकुमारी शिरोवेदनाक्रान्ता सती शेते? 'सरोगावस्थायां विशेषतस्तु शिरोवेदनायां शयनमेव शरणीकृतं सुखाय कल्पत' इत्यतः स्थाने खलु पद्मावतीशयनस्थानजिज्ञासेयं मधुकरिकायाः।

वचनमेतदाकर्ण्य मधुकरिकायाः पद्मिनिका तदुचितं वचः प्रस्तुवन्त्याह—**समुद्दगिहके** इति। समुद्रगृहके, तदाख्यया विख्याते भवने, समुद्राभ्यन्तरे स्थले कृत्रिमसमुद्रसमीपवर्तिनि स्थाने वा। किलेत्यस्य श्रूयत इत्यर्थः। 'सखि! शयनं

---

पद्मि०—इस समय वे मधुर कथाओं से राजकुमारी के सिर की पीड़ा हलकी करेंगी।

मधु०—ठीक है, राजकुमारी की सेज कहाँ रची है?

पद्मि०—समुद्र-गृह नामक कमरे में सेज बिछाई गई है। अब तू जा। मैं भी मालिक

त्तुवं । अहं वि भट्टिणो णिवेदणत्थं अय्यवसन्तअं अण्णेसामि ।

मधुकरिका—(क) एव्वं होदु । [ णिष्क्रान्ता । ]

पद्मिनिका—(ख) कहिं दाणिं अय्यवसन्तअं पेक्खामि ?

[ ततः प्रविशति विदूषकः । ]

---

भर्तुर्निवेदनार्थमार्यवसन्तकमन्विष्यामि ।

( क ) एवं भवतु ।

( ख ) कुत्रेदानीमार्यवसन्तकं पश्यामि ?

---

कल्पितं समुद्रगृहे तत्रभवत्याः पद्मावत्या इत्येवं श्रूयते । तत्रोपस्थापयितुमावन्तिकां सम्प्रति गन्तव्यं त्वया तत्समीपम्' इत्येवं पद्मावत्याः समीपे वासवदत्तामुपस्थापयितुं नियुज्य मधुकरिकाम् , आत्मनोऽपि दर्शयति करणीयं पद्मिनिका—**अहं वीति ।** भर्तुर्निवेदनार्थं स्वामिनं वत्सराजं निवेदयितुम् । तत्रभवान् भर्तापि वृत्तमिदं निवेदनीयः, तच्च कार्यं वसन्तकेनैव सुहृदा करणीयमित्यतो वसन्तकमुखेन श्रीमन्तं स्वामिनमिदं वृत्तं सूचयितुं पूज्यं वसन्तकमन्वेष्टुं मयापि गम्यत इति भावः ।

सख्या वचनमनुमोदमाना मधुकरिका ततः प्रस्थातुमिच्छन्ती ब्रूते—**एव्व-मिति ।** आर्यामावन्तिकामुद्दिश्य गच्छाम्यहम् , प्रयाहि तावत्त्वमपि पूज्यं वसन्तकमन्वेष्टुमित्यर्थः ।

ततस्तस्याः प्रस्थानं दर्शयति—**निष्क्रान्तेति ।**

विदूषकदर्शनविषयिणीं चिन्तां नाटयति पद्मिनिका **कहिम्** इति । समयेऽस्मिन् श्रीमान्विदूषकः क्वोपलप्स्यते मया, कुत्र वा स्थितं स्यात्तेन, क्व किलाहं तद्दर्शनं प्राप्नुयाम् ?

पद्मिनिकाचिन्तासमकालमेव तत्र स्थाने विदूषकं प्रवेशयति कविः—**ततः प्रविशतीति ।**

मदनसन्तापवशादस्वस्थस्य सुहृदो राज्ञश्चिन्तयेतस्ततः सञ्चरतस्तत्र प्रविष्टस्य

---

को खबर देने के लिए आर्य वसन्तक को खोज करती हूँ ।

( चली गई । )

मधु०—ठीक है ।

पद्मि०—अब आर्य वसन्तक को कहाँ ढूँढ़ूँ ?

( तब विदूषक प्रवेश करता है । )

*विदूषकः*—(क) अज्ज खु देवीविओअविहुरहिअअस्स तत्तहोदो वच्छराअस्स पदुमावदीपाणिग्गहणसमीरिअस्स अच्चन्तसुहावहे मङ्गलोसवे मदणग्गिदाहो अहिअदरं वड्ढइ। [ पद्मिनिकां विलोक्य ] अयि ! पदुमिणिआ ? पदुमिणिए ! किं इह वत्तदि ?

---

( क ) अद्य खलु देवीवियोगविधुरहृदयस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीरितस्यात्यन्तसुखावहे मङ्गलोत्सवे मदनाग्निदाहोऽधिकतरं वर्धते। अयि ! पद्मिनिका ? पद्मिनिके ! किमिह वर्तते ?

---

विदूषकस्य चिन्तनीयमाह—अज्ज खु इति। खलु इति वाक्यसौन्दर्ये। देवीवियोगविधुरहृदयस्य देव्या वासवदत्ताया वियोगेन विरहेण हेतुना विधुरहृदयस्य व्याकुलचेतसः, विषयनिरपेक्षस्येति यावत्, पद्मावतीपाणिग्रहणसमीरितस्य, पद्मावत्यास्तन्नामिकाया राजकुमार्याः पाणिग्रहणेन विवाहेन हेतुना समीरितस्य विषयाभिमुखं प्रवर्तितस्य, मङ्गलोत्सवे मङ्गलमये समये। 'प्रियतमाया वासवदत्तायाश्चिरविरहेण विमनायमानो विषयनैरपेक्ष्यं प्राप्तोऽपि गुणवतीं पद्मावतीं परिणीय ततोभवानुदयनो महीपतिर्विषयेषु प्रवृत्तिमाधत्तेऽधुना। स चायं नूतनविवाहव्यतिकरमये सर्वतः शुभे समये मदनानलज्वालाभिरतितरां पर्याकुलत्वमधिगच्छति। तमेनमतिविषमां दशामानीतवानयाहो ! निर्दयो मनसिजः'। इत्येवं प्रियसुहृदो राज्ञः स्थितिं चिन्तयन्विदूषकस्तत्र पद्मिनिकां नयनयोर्गोचरीकृत्य तस्या अतर्कितागमनेन विस्मयं प्रकटयति—**अयीति**। आश्चर्यसूचकम् 'अयी'त्यव्ययम्। अहो ! पद्मिनिकेयं समुपस्थिता ! इत्थं चित्रीयमाणस्तदागमनकारणं जिज्ञासते—**पदुमिणिए** इति। किम्, कार्यमिति शेषः। अयि ! पद्मिनिके ! किमत्र कार्यं ते, किमर्थमिह त्वमायातवत्यसि ? केन वा कारणेनात्र भ्रम्यते सम्प्रति त्वया ?

श्रीमन्तं विदूषकं तत्रोपनतमुद्दीक्ष्य तस्यैव मार्गणे परायणा पद्मिनिका तद्-

---

विदू०—वासवदत्ता के विरह से विकल-हृदय तथा पद्मावती के साथ विवाह करने से उत्सुक श्रीमान् वत्सराज के मदनानल का ताप आज सुखदायक इस उत्सव में बहुत ही अधिक बढ़ रहा है। (पद्मिनिका को देखकर) अरे ? यह पद्मिनिका आई ? पद्मिनिका ! यहाँ क्या है ?

*पद्मिनिका*—(क) अय्य ! वसन्तअ ! किं ण जाणासि तुवं—भट्टिदारिआ पदुमावदी सीसवेदणाए दुःखाविदेत्ति ।

*विदूषकः*—(ख) भोदि ! सच्चं ? ण जाणामि ।

*पद्मिनिका*—(ग) तेण हि भट्टिणो णिवेदेहि णं । जाव अहं वि सीसाणुलवणं तुवारेमि ।

---

( क ) आर्य ! वसन्तक ! किं न जानासि त्वं–भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति ।

( ख ) भवति ! सत्यं ? न जानामि ।

( ग ) तेन हि भर्त्रे निवेदयैनाम् । यावदहमपि शीर्षानुलेपनं त्वरयामि ।

---

द्वारेण राज्ञो निवेदनीयं पद्मावतीवृत्तं निवेदयति—**अय्येति** । अयि ! मान्य ! विदूषक ! तत्रभवती पद्मावतीदानीं शिरोवेदनामनुभवतीति वार्ता नोपलब्धा किं भवता ?

तद्विषयकमज्ञानं दर्शयत्यात्मनो विदूषकः—**भोदि** इति । सत्यमिति काकुः । अयि ! सत्यं ते कथितमिदम् ? अथवा–सत्यम् , वदामीति शेषः । सत्यमेतदुच्यते मयेत्यर्थः । पद्मावत्या अस्वस्थतेयं त्वया सूच्यमाना न ज्ञायते नूनं मयेति ।

**तेण हीति** । तत्रभवत्याः पद्मावत्या अस्वस्थतायां विदूषकोचितं कर्तव्यं निर्दिशन्त्याः पद्मिनिकाया वचनमिदम् । हीति वाक्यालङ्कारः । तेन पूर्वोक्तेन हेतुना, एनां शिरोवेदनाम् । यावत् अधुना, शीर्षानुलेपनं शिरस्यनुलेपनीयं पीडापनोदनमौषधम् , सम्पादयितुमिति शेषः, त्वरयामि त्वरां शीघ्रतां करोमि । पद्मावत्याः शिरसि काचित्पीडा समुत्पन्नेति वृत्तमिदं तत्रभवतः स्वामिनो निवेदनीयं भवता । मयापि साम्प्रतं तदीयशिरोवेदनाऽपनोदकं किञ्चिदौषधं त्वरया सम्पादनीयमिति भावः ।

---

पद्मि—आर्य वसन्तक ! राजकुमारी पद्मावती सिर की पीडा से दुःखी हो रही है—यह क्या तुम नहीं जानते ?

विदू०—अजी ! सच ? मैं नहीं जानता ।

पद्मि०—तब तो तुम अपने मालिक से यह बात कह देना । मैं भी तब तक सिर की पीडा को दूर करनेवाले लेप को जल्दी करती हूं ।

*विदूषकः*—(क) कहिं सअणीअं रइदं पदुमावदीए ?

*पद्मिनिका*—(ख) समुद्दगिहके किल सेज्जा त्थिण्णा ।

*विदूषकः*—(ग) गच्छदु भोदी । जाव अहं वि तत्तहोदो णिवेदइस्सं ।

[ निष्क्रान्तौ । ]

[ प्रवेशकः । ]

---

( क ) कुत्र शयनीयं रचितं पद्मावत्याः ?

( ख ) समुद्रगृहके किल शय्या स्तीर्णा ।

( ग ) गच्छतु भवती । यावदहमपि तत्रभवते निवेदयिष्यामि ।

---

'शिरोवेदनावशादस्वस्थतां वहन्ती पद्मावती क्वापि शयानैवाऽवश्यं वर्तेत' इत्यभिप्रायेण विदूषकस्तां पृच्छति—**कहिमिति** । प्रागुक्तोऽर्थः ।

**समुद्दगिहके** इति । 'समुद्रगृहे तस्याः शयनं कल्पितमित्यतस्तत्रैव तत्र-भवान् भर्ता भवतोपस्थापयितव्य' इत्येष पद्मिनिकावचसोऽर्थः ।

उक्तचरं पद्मिनिकावचनमनुमोदमानो विदूषक आह—**गच्छदु** इति । याव-द्वाक्यालङ्कारे । गम्यतां पद्मिनिके ! भवत्या, तत्रभवत्याः पद्मावत्याः शिरोवेदना-पनोदनमौषधं त्वरया सम्पाद्यताम् । मयापि तत्रभवन्तं भूपतिमेतां वार्तां निवेदयितुं तदन्तिकमेव गम्यते ।

द्वयो रङ्गमञ्चान्निष्क्रमणं सूचयति—**निष्क्रान्ताविति** ।

**प्रवेशक** इति । लक्षणमेतस्योक्तं प्राक् । विशेषस्तु—सूच्यं वस्तु तावन्नाटके 'विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशक'नामकैः पञ्चभिरर्थोपक्षेपकैः प्रतिपाद्यते । अत्र किल प्रवेशकमुखेन भूतकालिकी पद्मावत्या अस्वस्थता भविष्यत्कालिकं राज्ञ-स्तदीयशयनस्थानं प्रत्युपसर्पणं चेति भूतभविष्यदर्थज्ञापनं कृतम् । प्रवेशकस्ताव-दप्रदर्शनीयमर्थं सूचयन्नङ्कद्वयस्याऽन्तरेव प्रयुक्तो दृश्यते । अयं च नीचेन पात्रेण, विष्कम्भकस्तु मध्यमेन मध्यनाभ्यां मध्यमाधमैर्वा पात्रैः प्रयुज्यत इत्यनयोः

---

विदू०—पद्मावती की सेज कहाँ रची है ?

पद्मि०—समुद्र-गृह नाम के घर में सेज बिछी है ।

विदू०—तुम जाओ । मैं भी महाराज से निवेदन कर दूँगा ।

( दोनों गये । )

( प्रवेशक समाप्त । )

[ ततः प्रविशति राजा । ]

राजा—

श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः ।
लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥ १ ॥

---

परस्परं भेदः । तथा चोक्तमिदं **दशरूपके**—'अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् । विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥ वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥ एकानेककृतः शुद्धः सङ्कीर्णो नीचमध्यमैः । तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः ॥ प्रवेशोऽङ्कद्वयस्यान्तःशेषार्थस्योपसूचकः' । इति ।

सम्प्रति पद्मावतीप्रवृत्तिसूचनाय समयोचितं प्रवेशं राज्ञो दर्शयति कविः—**तत इत्यादिना** ।

अचिरेण पद्मावतीं परिणीतवानपि चिरविरहकातरः श्रीमानुदयनो वासवदत्तायाः प्रणयमहिमानं जानंस्तदीयस्मरणानुभावं नाटयन्ब्रूते—**श्लाघ्यामिति** । कालक्रमेण समयमहिम्ना वासवदत्ताविनाशकालात्कतिपयकालातिक्रमानन्तरं वा, पुनरागतदारभारः, पुनर्भूय आगत उपस्थितो दारभारः पद्मावतीपरिग्रहरूपा धूर्यत्र सोऽहम् , लावाणके तन्नाम्नि ग्रामे, हुतवहेनाऽग्निना, हृताङ्गयष्टिं हृता दग्धा अङ्गयष्टिस्तनुलता यस्यास्तादृशीम् , श्लाघ्यां गुणगौरवात्प्रशंसनीयाम् , अवन्तिनृपतेः अवन्तिदेशाधीश्वरस्य प्रद्योतनाम्नो नृपतेः, सदृशीमनुरूपां, तनूजां कुमारीं, तां भूयोऽनुभूतपूर्वां वासवदत्तामिति यावत् , हिमहतां हिमेन पतितेन तुषारेण, 'तुषारस्तुहिनं हिमम्' इत्यमरः, हतां विदलितां नाशितां, पद्मिनीं कमलिनीमिव, चिन्तयामि ध्यायामि स्मरामीत्यर्थः । अत्र 'लावाणके हुतवहेन हृताङ्गयष्टि'मितीदं प्रथमाङ्कसूचितां कार्यविशेषोद्भावितां प्रसिद्धिमनुसृत्य प्रोक्तम् । 'प्रियतमाया वासवदत्ताया

---

( तब राजा का प्रवेश । )

**राजा**—समयमाहात्म्य से फिर भी जिसपर स्त्री-परिग्रह रूपी भार आ पड़ा ऐसा मैं सर्वथा प्रशंसायोग्य, अपने अनुकूल, लावाणक नामक गाँव में जो आग से जली अत एव तुषार से मारी हुई कमलिनी की भाँति अवन्तिराज महासेन की कन्या वासवदत्ता की याद करता हूँ ।

[ प्रविश्य । ]

*विदूषकः*—(क) तुवरदु तुवरदु दाव भवं ।

*राजा*—किमर्थम् ?

*विदूषकः*—(ख) तत्तहोदी पदुमावदी सीसवेदणाए दुक्खाविदा ।

---

( क ) त्वरतां त्वरतां तावद् भवान् ।

( ख ) तत्रभवती पद्मावती शीर्षवेदनया दुःखिता ।

---

विनाशमाकलयन्नशक्यनिवेदनां तद्वियोगवेदनां सोढुमपारयन्पुनः परिग्रहान्तरं कर्तुमनिच्छन्नपि कार्यगौरवमाकलय्य बलात्पद्मावतीमहं परिणीतवान् । स चायं विवाहस्तद्वियोगव्याकुलस्य नियतं भारभूत इव मे प्रतीयते । लौकिकः किलायमत्र मे प्रणयो वासवदत्ताविषयकप्रणयमहिमानं न नाम विस्मारयितुं पारयते । कथञ्चित्पद्मावतीं परिणीतवतोऽपि बहो दग्धां प्रशंसनीयगुणगणामनुरूपां राजकुमारीं वासवदत्तामुद्दिश्य मे मनोमार्गमारूढः शोकभारो न तावल्लघूभवति । वारंवारं सैव मत्स्मरणपदवीं गाहते । अहो ! तुहिनपातविहता सरोजिनीव सा मन्मानसं सुतरां दुःखाकरोती'ति भावः । एतेन नूतनं परिणयनं कृतवतोऽपि भूतपूर्वप्रियाविनाशशोकाकुलस्य राज्ञो वासवदत्ताप्रणयानुवृत्तिरतिभूमिं गता ध्वन्यते । वृत्तमिदं वसन्ततिलकं नाम । लक्षणमुक्तं प्रागेतस्य ॥ १ ॥

राजानं पद्मावतीवृत्तं निवेदयिष्यतो विदूषकस्य प्रवेशमाह—**प्रविश्येति** । राज्ञः समीपं गत्वेत्यर्थः ।

त्वरयन् राजानं विदूषको ब्रूते—**तुवरदु** इति । 'त्वरतां त्वरता'मिति द्विरुक्तिस्त्वराधिक्यं सूचयति । तावद्वाक्यालङ्कारे । राजन् ! भवताऽत्यन्तं त्वरा कर्तव्या ।

ईदृश्यास्त्वरायाः किं कारणं का च वार्तेति पिपृच्छिषया राजाह—**किमर्थमिति** ।

राज्ञः प्रश्नस्योत्तरं दित्सुर्विदूषकः 'पद्मावतीं तत्रभवतीं बाधते शिरोवेदने'त्येवं प्रकृतार्थं निवेदयति—**तत्तहोदी** इति । पद्मावत्या अस्वस्थतां श्रुत्वा सत्वरं तत्र भवतोपस्थातव्यमित्येष विदूषकोक्तेर्गूढोऽभिप्रायः ।

---

( प्रवेश कर )

विदू०—आप बहुत शीघ्रता करें ।

*राजा*—*किस लिये ?*

विदू०—माननीया पद्मावती शिरोवेदना से दुःखी हुई हैं ।

*राजा*—कैवमाह ?

*विदूषकः*—(क) पदुमिणिआए कहिदं ।

*राजा*—भोः ! कष्टम्,

**रूपश्रिया समुदितां गुणतश्च युक्तां**
**लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।**

---

( क ) पद्मिनिकया कथितम् ।

---

'पद्मावती शिरोवेदनामनुभवतीत्येतत्केन पुनः कथित'मित्येवं पृच्छति विदूषकं राजा—**कैवमिति** ।

**पदुमिणिआए** इति । 'वृत्तमिदं पद्मिनिका कथितवती'त्युत्तरं विदूषकस्य पूर्वप्रदर्शिते राज्ञः प्रश्ने ।

प्रेयस्याः पद्मावत्या अस्वस्थतायाः श्रवणात्कष्टमनुभवन्नाह राजा—**भोः ! कष्टमिति** । अहो ! कष्टकरीयं वार्ता ।

किं तत्कष्टमित्याह—**रूपश्रियेति** । अद्य वर्तमाने समये, रूपश्रिया स्वरूपशोभया, समुदितां समेतां, च पुनः, गुणतो गुणैः, सार्वविभक्तिकस्तसिः, युक्तां सहिताम्, अत एव प्रियां प्रीतिपात्रं पद्मावतीमिति यावत्, लब्ध्वा प्राप्य, समाश्वस्तस्येति शेषः, मम वासवदत्तावियुक्तस्य मे, शोकस्तद्विनाशजन्मा विषादस्तु, मन्द इव किञ्चिन्न्यून इव, सञ्जात इति सामान्यक्रियाक्षेपः । पूर्वाभिघातसरुजः, पूर्वः प्राथमिकश्चासावभिघातो वासवदत्ताविनाशरूपवज्रपातः तेन कारणेन सरुजो रुजया पीडया सह वर्तमानो दुःखीति यावत् । 'आपं चैव हलन्ताना'मिति भागुरिमतेनाबन्तो रुजाशब्दः । 'तेन सहेति तुल्ययोगे' इत्यनेन बहुव्रीहिसमासः, 'वोपसर्जनस्ये'ति सहस्य सादेशः । 'रुजा सह वर्तमानः सरुक् तस्य सरुज' इति हलन्तात्

---

राजा—किसने ऐसा कहा ?
विदू०—पद्मिनिका ने कहा ।
राजा—हाय ! दुःख—
रूप-सम्पत्ति तथा गुणों से युक्त प्रिया को पाकर मेरा शोक आज मन्द सा हो गया था, कि प्राथमिक आघात से पीड़ित और दुःख का अनुभवी मैं पद्मावती को भी उसी तरह

पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥ २ ॥

अथ कस्मिन् प्रदेशे वर्तते पद्मावती ?

*विदूषकः*—(क) समुद्दगिहके किल सेज्जा त्थिण्णा ।

---

(क) समुद्रगृहके किल शय्या स्तीर्णा ।

---

षष्ठ्यन्तमिदं ममेत्यस्य विशेषणं वा । अपि पुनः, अनुभूतदुःखः, अनुभूतं भुक्तं दुःखं कष्टं येन सोऽहं, पद्मावतीं नवोढामिमामपि, तथैव मामिव दुःखानुभवकारिणीं दुःखिताम्, अथवा विनाशं गतां वासवदत्तामिव विनाशं गमिष्यन्तीं, समर्थयामि सम्भावये । 'पद्मावती तावत् सुरूपा गुणवती चेति प्रिया मे वर्तते । तत्प्राप्त्या च वासवदत्तावियोगविकलस्य मम सा तद्दर्शनाभावसम्भवस्य शोकस्य मात्रा कियतांशेन न्यूनतामासादितवती । वस्तुतो बह्वंशेन स शोकस्तदवस्थ एव, किन्तु तदन्तरे पद्मावतीलाभात्तत्र किञ्चित् समाश्वासनं जातम् । विनष्टवासवदत्तावियोगवज्रपातोऽयमिदानीं मदुपरि प्रथम एव संवृत्तः । तेन पुनर्दुःखं भूयोऽनुभूतं भवति । इतः पूर्वमहं कदापि वियोगदुःखमेवं नान्वभूवम् । विधेरनुग्रहाद्ययाहमधुना दुःखी पुनर्दुःखभाग् भवामि तथा पद्मावत्यापि भूयो दुःखभाजा भाव्यम्, अथवा वासवदत्ता यथाभूद्विनष्टा तथैवं वेदनाक्रान्ता पद्मावत्यपि विनाशं गमिष्यतीति सम्भाव्यते । विपन्नो जनः सर्वतो विपत्तिमेवाभिशङ्कत' इति भावः । अत्र किल वासवदत्ताया विनाशमाकलय्य नवां प्रेयसीमुद्वहतोऽपि वत्सराजस्य भूतपूर्वप्रियाविषयकप्रणयविशेषस्याऽनुस्यूततया वासवदत्ताविषयको रतिभावः परमां पुष्टिमानीतः कविना । वसन्ततिलकं वृत्तम् ॥ २ ॥

इममीदृशमात्मनो दुःखोद्गारं प्रकटयन् पद्मावतीसमीपं जिगमिषू राजा विदूषकं प्रत्यनुयुङ्क्ते—**अथेति** । अथेत्यव्ययं प्रश्नवाचि, 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । कुत्र खलु स्थीयते साम्प्रतं पद्मावत्या ? कस्तावदलङ्क्रियते स्थानविशेषस्तया ? कुत्र वा मया प्रयातव्यम् ?

**समुद्दगिहके** इति । 'समुद्रगृहके तस्याः शयनं कल्पित'मित्येवमुत्तरितवान्

---

अर्थात् पीडित समझता हूं ॥ २ ॥

अच्छा, पद्मावती किस स्थान पर है ?

विदू०—समुद्र-गृह में सेज बिछी है ।

*राजा*—तेन हि तस्य मार्गमादेशय ।

*विदूषकः*—(क) एदु एदु भवं ।

[ उभौ परिक्रामतः । ]

*विदूषकः*—(ख) इदं समुद्दगिहकं । पविसदु भवं ।

*राजा*—पूर्वं प्रविश ।

---

( क ) एत्वेतु भवान् ।
( ख ) इदं समुद्रगृहकम् । प्रविशतु भवाम् ।

---

राज्ञः प्रश्नं विदूषकः ।

**तेन हीति** । हिशब्दोऽत्र वाक्यालङ्कारे । तेन हेतुना, तस्य समुद्रगृहस्य । आदेशय सूचय, आङ्पूर्वाद्दिशतेर्निवृत्तप्रेषणव्यापारात्स्वार्थिकोऽयं णिच् । 'समुद्रगृहे तदीयं शयनीयं कल्पितमस्ती'त्यतस्तत्प्रदेशं गच्छन् मार्गस्त्वया सखे ! दर्शनीयो मे' ।

मार्गं प्रदर्शयन्नाह विदूषकः—**एदु एदु**—इति । 'एत्वेतु' इति वीप्सा त्वराभिप्रायिका । सा च त्वरा 'गन्तव्यस्थाने त्वरयोपस्थातुमिदानीं स्यान' इति तात्पर्यं बोधयति ।

**'उभौ परिक्रामतः'** इत्यनेन तन्मार्गानुसरणं कुर्वतो राजविदूषकयोस्तत्र गमनोद्यमः सूचितः ।

गन्तव्यस्थानसामीप्यं प्राप्य तद्दर्शयंस्तत्र राजानं प्रवेशयितुमिच्छन् विदूषक आह—**इदमिति** । अस्तीति शेषः, मित्रैतद्वर्तते समुद्रगृहम् । अत्र किल साम्प्रतं प्राप्तौ स्वः । प्रविश्यतामन्तर्भवता ।

'अग्रे सेवकेन गन्तव्यं स्वामिना च पश्चा'दित्येवं लौकिकं व्यवहारमपेक्ष्य प्रथमं तत्र विदूषकप्रवेशनं चिकीर्षन् राजा ब्रूते—**पूर्वमिति** ।

---

राजा—तो उसका रास्ता बताओ ।
विदू०—आइये, आप आइये ।

( दोनों घूमते हैं । )

विदू०—यह समुद्र-गृह है । आप प्रवेश करें ।
राजा—पहले तुम प्रवेश करो ।

विदूषकः—(क) भो ! तह । [ प्रविश्य ] अविहा ! चिट्ठदु चिट्ठदु दाव भवं ।

राजा—किमर्थम् ?

विदूषकः—(ख) एसो खु दीवप्पभावसूइदरूवो वसुधातले परिवत्तमाणो, अअं काओअरो ।

---

( क ) भोः ! तथा । अविहा ! तिष्ठतु तिष्ठतु तावद् भवान् ।

( ख ) एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानः,

---

**भोः** इति । राजन् ! भवद्वचनानुसारं पूर्वमत्र प्रविश्यते मयेत्यर्थः । **प्रविश्येति** । प्रविश्य प्रवेशोपक्रमं कृत्वा, वक्ष्यमाणं वदतीति शेषः । तदेवाह—**अविहेति** । 'तिष्ठतु तिष्ठत्वि'ति सम्भ्रमे द्विर्भावः । सम्भ्रमश्चाऽतर्कितवस्तुदर्शनात्सुसम्भवः । तावद्वाक्यालङ्कारे । अहह ! कष्टम् , सखे ! स्थीयतामत्रैव भवता, नाग्रे समागन्तव्यम् । 'तत्र प्रवेशद्वारेऽवलम्बिनीं स्रजं सर्पबुद्धया पश्यन् विदूषकस्तत्र स्वयं तिष्ठन् राजानमेवमग्रे गन्तुं निरुद्धवानि'त्येतदग्रे स्फुटीभविष्यति ।

निरुद्धगतिर्भूपतिरात्मनो गतेर्निरोधस्य कारणं पृच्छति विदूषकम्—**किमर्थमिति** ।

विदूषकस्तत्कारणं वर्णयति—**एसो** इति । एष इति जन्तुसामान्यनिर्देशः । खलुपदं वाक्यालङ्कारे । दीपप्रभावसूचितरूपः, दीपप्रभावेण प्रदीपमहिम्ना सूचितं व्यञ्जितं दीपस्य प्रभया प्रकाशेन अवसूचितं वा रूपं स्वरूपमाकारविशेषो यस्य सः, परिवर्तमानश्चेष्टमानः । मित्रात्र प्रवेशद्वारे कोऽपि जन्तुर्वर्तते । दृश्यतां तावत् , दीपोऽस्य रूपं प्रकाशयति, एष तावद् भूतले लम्बमानश्चेष्टितं करोतीत्यर्थः । इत्येवं जन्तुसामान्यं निर्दिश्य तद्विशेषरूपतां प्रतिपादयति—**अअमिति** । अयं पूर्वोक्तः, काकोदरः सर्पः, 'काकोदरः फणी' इति सर्पपर्यायेषु कोषः । 'ईषत् अकति' इत्यर्थे 'अक कुटिलायां गतौ'वित्यतः पचादेराकृतिगणत्वादचि 'ईषदर्थे चे'ति कोः कादेशे 'काक'मिति रूपम् , तादृशम् 'अर्थात्कुटिलगतिशालि उदरमस्येति व्युत्पत्तिः

---

विदू०—जी, अच्छा । ( प्रवेश कर ) ठहरिये, जरा आप ठहरिये ।

राजा—क्यों ?

विदू०—दीपक के प्रकाश से स्पष्ट दिखाई पड़नेवाला जमीन पर लोट-पोट करता हुआ

राजा—[ प्रविश्यावलोक्य सस्मितम् ] अहो ! सर्पव्यक्तिर्वैधेयस्य ।

ऋज्वायतां हि मुखतोरणलोलमालां
भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख ! सर्पम् ।

---

अयं काकोदरः।

---

कर्णाया। यः किल दीपप्रकाशितात्मरूपश्चेष्टते लम्बमानो भूतले, सोऽयं सर्पोऽस्तीत्यर्थः। अत्र दीपप्रभावसूचितरूप इत्यनेन—दीपस्य पूर्णे प्रकाशे सति रुग्णायाः पद्मावत्या दृशोरुपघातः स्यात्, स च मा भूदित्यौचित्यात्तत्र मन्द एव दीपप्रकाशः कल्प्यते। अत एव सुस्पष्टं द्रष्टुमशक्नुवतो विदूषकस्य तत्रत्यवस्तुनि सर्पभ्रान्तिर्भवति। रूपं तदीयं दीपेन किञ्चित्सूचितम्, वस्तुगत्या तु विदूषकेण तत्रैव निरूपयितुं पारितम्। अनिलान्दोलनाद्भवन्तीं चलनवलनात्मिकां तत्र सर्पसाधारणीं चेष्टां पश्यतस्तस्य सर्पभ्रमस्तत्रत्यवस्तुनि युज्यत इति।

विदूषकोक्तमाकर्ण्य तत्र स्थले किञ्चित्प्रवेशं कृत्वा विदूषकीयसर्पप्रतिभासविषयं तद्वस्तु सम्यगुद्वीक्ष्य तन्मूर्खतायां मन्दं हसन् राजा विस्मयमाविष्करोति स्वान्ते—अहो इति। सर्पव्यक्तिः सर्प इति ज्ञानम्, तच्च भ्रमात्मकम्। आश्चर्यम्, मूर्खोऽयं विदूषकः, यो हि दृश्यमानममुं वस्तुविशेषं सर्परूपेण गृह्णाति।

वस्तुस्थितिं दर्शयंस्तस्य सन्देहं दूरीकरोति—**ऋज्वायतामिति**। अत्र हीति पदं पादपूरणे। अयि ! मूर्ख ! अयथार्थज्ञानिन् ! ऋज्वायताम्, ऋजुः सरला आयता दीर्घा च तामिति विशेषणोभयपदः कर्मधारयः, क्षितौ भ्रष्टां समीचीनवन्धनसम्बन्धाभावाद् भूमावधः पतितां, मुखतोरणलोलमालाम्, मुखं प्रधानं यत्तोरणं गृहस्य बहिर्द्वारं, 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः, तत्र या लोला पवनकम्पनवशाच्चञ्चला माला शोभार्थमवलम्बिता पुष्पस्रक् तां, त्वं सर्पमवगच्छसि 'सर्पोऽय'मिति मन्यसे। तमेव तदीयं सर्पभ्रममुपपादयति—**मन्दानिलेनेति**। या माला, निशि रात्रौ, मन्दानिलेन मन्दं वहता समीरेण, किञ्चित्परिवर्तमाना परितः स्पन्दमाना, भुजगस्य विचेष्टितानि सर्पसदृशीश्चलनवलनादिकाः क्रियाः, करोति वितनोति।

---

यह साँप है।

राजा—( जाकर और देखकर मुस्कुराते हुए ) अहो ! क्या ही मूर्ख का सर्प-विषयक ज्ञान है।

मूर्ख ! तुम सीधी, लंबी, पृथ्वी पर गिरी और सदर फाटक पर लटकने वाली माला को साँप समझ रहे हो ! जो कि रातमें मन्द पवन से कम्पित हो कुछ साँप की सी चेष्टायें करती है ॥ २ ॥

मन्दानिलेन निशि या परिवर्तमाना
किञ्चित् करोति भुजगस्य विचेष्टितानि ॥ ३ ॥

*विदूषकः*—[ *निरूप्य* ] (क) सुट्ठु भवं भणादि । ण हु अअं काओअरो । [ *प्रविश्यावलोक्य* ] तत्तहोदी पदुमावती इह आअच्छिअ णिग्गदा भवे ।

*राजा*—वयस्य ! अनागतया भवितव्यम् ।

---

(क) सुष्ठु भवान् भणति । न खल्वयं काकोदरः । तत्रभवती पद्मावतीहागत्य निर्गता भवेत् ।

---

'अयि ! सखे ! प्रधानभूतेऽस्मिन्समुद्रगृहस्य बहिर्द्वारेऽवलम्बिनी सरला लम्बमाना च मालेयमिदानीं भूमौ पतिता मन्दगतिना पवनेन किञ्चिच्चाचल्यं नीयते, तेनैव सर्पसाधारणीश्चेष्टा वितन्वाना मूर्ख! त्वयैषा 'सर्प' इति सम्भाव्यते। पवनेन कम्पमानायां तत्र ते सर्पभ्रमो जायते, सोऽपि सम्यक्प्रकाशरहिते नैशे किल समयेऽस्मिन्नापाततो युज्यते। वस्तुतो नायं सर्पः किन्तर्हि मालेयमिति वस्तुस्थितिमपर्यालोचयतस्ते मौर्ख्यं प्रशंसनीय'मिति भावः। वसन्ततिलकं नामेदं छन्दः ॥३॥

राज्ञैवं दर्शितां सर्पभ्रान्तिनिराकरणक्षमां वस्तुस्थितिमवधारयन्विदूषको ब्रूते—**सुट्ठु** इति। खलु निश्चये। राजन् सम्यगुच्यते भवता, निरूपितं मया। भवदीयं वचस्तथ्यं, मिथ्यैवासीन्मम भ्रमः। बहिर्द्वारे वर्तमानो दृश्यमानः। कम्पमानो लम्बमानश्च पदार्थोऽयं सर्पो नास्तीत्यधुना निःसन्देहमवगतमित्यर्थः। इत्येवं वदंस्तद्गृहान्तः प्रवेशं कृत्वा पद्मावत्यास्तत्रानुपस्थितिं दृष्ट्वा कल्पमान आह—**तत्तहोदी** इति। स्थानेऽस्मिन्नुपेत्याय पद्मावत्या पुनरितः प्रस्थितं स्यादिति सम्भाव्यते। पद्मिनिकया हि सूचितमत्र शयनीयं पद्मावत्याः, तद्दर्शनं तु न जायत इत्यतः कल्प्यते तस्याः समागत्येतो निर्गमनम्। अन्यथा, यदि स्यादत्रोपलभ्येत सेति भावः।

लक्षणैस्तस्या अनागमनं सम्भाव्य राजा विदूषकोक्तं निराकुरुते—**वयस्येति**।

---

विदू०—( अच्छी तरह देखकर ) आप ठीक कहते हैं। यह साँप नहीं है। ( प्रवेशकर तथा देखकर ) माननीया पद्मावती यहाँ आकर निकल गई होंगी।
राजा—मित्र ! अभी आई न होंगी।

विदूषकः—(क) कहं भवं जाणादि ?

राजा—किमत्र ज्ञेयम् ? पश्य,

**शय्या नावनता तथास्तृतसमा न व्याकुलप्रच्छदा**
**न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः।**

---

(क) कथं भवान् जानाति ?

---

मित्र ! मन्ये सेयमत्रानागता भवेदिति।

केन पुनर्लक्षणेन ज्ञायत इदं भवता 'यत्किलोपस्थितिस्तदीया नाभूदद्यापी'ति विदूषको राजानमनुयुङ्क्ते—**कहमिति**।

राजोत्तरं दत्ते—**किमत्रेति**। मयोच्यमानमिति शेषः। अत्र विषये किं नाम वक्तव्यं मया ? किंवा तदवगन्तव्यं त्वया ? तस्या अनागमनसाधनं किमपि कथनं नावश्यकम्। ननु प्रत्यक्षमेवैतत्, तथापि सन्तोषार्थं ते तद्विशदीकरोमि। ज्ञायतामवधार्यताञ्च।

तथाहि—**शय्येति**। हि यस्मात्कारणात्, शय्या शयनीयं न अवनता शरीरभारेण हेतुनाऽवनतिं न प्राप्ता, तथा एवम्, आस्तृतसमा, आस्तृता कुथाद्यास्तरणेनालङ्कृता च सा समा, पूर्ववदेवास्ति मनागपि विषमतां नाधिगतेति यावत्, अथ च व्याकुलप्रच्छदा, व्याकुलो गात्रपरिवर्तनादिना सङ्कुचितो वलीभङ्गं प्राप्तः प्रच्छदो निचोलपट उत्तरपिधानवस्त्रं यस्यां तथाभूता, न वर्तते, 'निचोलः प्रच्छदपट' इत्यमरः। अमलं शिरःसम्बन्धसुलभेन मलेन विरहितं स्वच्छं, शिर उपधीयत आरोप्यते यत्रेति शिरोपधानं शिरःस्थानीय उपवर्हः, अधिकरणे ल्युट्। अत्र 'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा' इति कोषान्तरप्रामाण्यात् 'विचकर्त शिरान् द्रौणिः' 'पिण्डं दद्याद्गयाशिरे' इति प्रयोगदर्शनाच्च 'शिरोपधान'मिति श्रृणातेर्घञर्थे कप्रत्ययविधानेन साधितमकारान्तं शिरशब्दं स्वीकृत्य तस्योपधानशब्देन सह षष्ठीसमासः। शीर्षाभिघातौषधैः शिरोवेदनापनोदकैरनुलेपनीयैरौषधिविशेषैः, क्लिष्टं मलिनीकृतं दूषितं, न नास्ति। श्रीमत्याः पद्मावत्या अनागमन-

---

विदू०—यह आप कैसे जानते हैं।

राजा—इस में जानना क्या है ? देखो—

सेज (बिछौना) ज्यों की त्यों बिछी हुई है, कुछ भी दबी नहीं, न इस पर की चादर सिकुड़ी है। सिर-दर्द की दवाइयों से सिरहाने की तकिया, जो कि बिलकुल साफ थी, कुछ

रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता
प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥ ४ ॥

---

साधनानि लक्षणानि शय्यागतानीत्थं प्रतिपाद्य तत्र शय्यागृहान्तर्गतं लक्षणान्तरमप्याह—**रोग** इति । रोगे आमये व्याधौ सति, दृष्टिविलोभनं दृष्टेरावर्जनं, जनयितुमाधातुं, काचिच्छोभा भित्तौ चित्रलेखनादिसम्भवा कापि सुन्दरता, न कृता नापादिता । अमीभिर्हेतुभिस्तत्र पद्मावत्या अनागमनकार्यं संसूच्य 'अत्रागत्य तया पुनरितो गतं स्या'दिति विदूषकोक्तमपि निराकुरुते- **प्राणीति** । रुजा रोगेण कारणेन तदुपलक्षितो वा, हेतावुपलक्षणे वा तृतीया, प्राणी शरीरधारी यः कोऽपि जन्तुः, शयनं प्राप्य शय्यामासाद्य, पुनः शीघ्रं भूयस्तदानीमेव, स्वयं स्वतो न मुञ्चति तद्विहायान्यत्र गन्तुं न वाञ्छतीत्यर्थः । 'ननु मित्र ! पद्मावत्या अत्रागतौ सत्यां सरोगावस्थासुलभयोः शयनोपवेशनयोश्च सञ्जातयोः शय्यायां तद्देहपातात्तत्राक्रमणजनिताऽवनतिः शरीरचलनवलनादिना तूलिकास्तरणे वैषम्यं किमपि प्रच्छदपटे वलीभङ्गरचेति नूनं सम्भवि, किन्तु तदेतन्न दृश्यते किमपि । किञ्च शिरःस्थानीयमुपधानमपि निर्मलमेव । शिरसि वेदनापनोदनस्यौषधस्य लेपेन तत्सम्बन्धात्तत्र मालिन्यं सुलभमपि न किञ्चिल्लब्धावकाशं खलु । अन्यच्च सरोगावस्थायां दृष्टिर्व्याकुला कापि धत्ते न स्थिरताम् । तस्याश्चैकत्रावर्जनेन स्थैर्यं सम्पादयितुं शयनभागस्य पुरो भित्तावालेख्यरचनादिकं किमपि कामनीयकं तन्यते । किन्तु नैतदप्यत्र सम्पादितम् । कदाचिदेवं कल्प्येत-'यत्किल पद्मावतीहागत्य त्वरितमेव स्थानान्तरं प्रस्थिते'ति, तदपि नैव सम्भवति । यतः क्वापि शयनं प्राप्त आतुरो जनः पुनस्तदानीमेव शयनं तद्विहातुं न तावच्चेष्टते । अस्वस्थतावशात्तत्क्षणमेव तत्त्यागे तदीयप्रवृत्तेरदर्शनात् । अतः पूर्वोक्तैर्लिङ्गैः पद्मावत्या आगमनाभावो-निःसन्देहमनुमातुं शक्य' इति भावः । अत्र शय्यावनत्यभावादिहेतुभिः पद्मावत्यागमनाभावरूपसाध्यस्य साधनादनुमानालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

अनुकूलतर्कयुक्तमिदं वचनमाकर्ण्य राज्ञः पद्मावतीप्रतीक्षायां तत्र क्षणकालिको-

---

भी मैली नहीं हुई है । यहाँ पर रोग की दशा में आँखों को लुभाने के लिये कोई सजावट भी नहीं बनाई गई है । और एक बात यह भी है कि आदमी रोग से बिछौने पर आकर फिर शीघ्र ही उसे स्वयं नहीं छोड़ता ॥ ४ ॥

*विदूषकः*—(क) तेण हि इमस्सिं सय्याए मुहुत्तअं उवविसिअ तत्त-होदिं पडिवालेदु भवं ।

*राजा*—बाढम् । [ उपविश्य ] वयस्य ! निद्रा मां बाधते । कथ्यतां काचित् कथा ।

*विदूषकः*—(ख) अहं कहइस्सं । हों त्ति करेदु अत्तभवं ।

*राजा*—बाढम् ।

---

(क) तेन ह्यस्यां शय्यायां मुहूर्तकमुपविश्य तत्रभवतींप्रतिपालयतुभवान् ।
(ख) अहं कथयिष्यामि । हों इति करोत्वत्रभवान् ।

---

प्रवेशनं प्राप्तकालं सूचयन्विदूषक आह—**तेण हीति** । यद्येवं तर्हि नूनमत्र शयनीये क्षणकालमवस्थातव्यं भवता श्रीमत्याः पद्मावत्या आगमनं च प्रतीक्षितव्यम् । अचिरादागमिष्यति सा, ततस्तस्याः प्रवृत्तिर्लप्स्यत इत्यर्थः ।

**बाढमिति** । समयोचितमिदानीं सम्यक्सूचितं त्वयेत्यहमत्रोपवेष्टुमुद्यतोऽस्मीति भावः । **उपविश्येति** । राज्ञस्तत्रोपवेशनसूचनम् । शयनीयमुपविष्टो निद्रोपगमस्य लक्षणं पश्यन् राजाह विदूषकम्—**वयस्येति** । ममोपरि मित्र ! निद्रादेवी कर्तुमिच्छत्याक्रमणम्, तयाऽहं पीड्येऽधुना । तन्निवारणार्थं कथय काञ्चित्कथाम्, यत्समाकर्णनवशादन्यचित्तो भवन्न तयाऽहं पीडितो भवेयमित्यर्थः । मनोऽनुरञ्जनसमर्थायाः सरसकथायाः श्रवणयोगान्निवारणं सुशकमायास्यन्त्या निद्राया' इति तात्कालिकनिद्रापनोदनोपयिके कथाकथनरूपे कर्मणि प्रेरितवान् विदूषकं राजा ।

राज्ञः कथनानुसारं कथां कथयितुं प्रतिजानानो विदूषक आह—**अहमिति** । 'हो'मित्यनुकरणम् । श्रवणसावधानतासूचकमिदं च लोके व्यवहृतं दृश्यते । मित्र ! भवदीयं मनो विनोदयितुं मया कथयिष्यते कथा । तत्र परं श्रीमता 'श्रूयते, सावधानोऽस्मि, कथ्यतां विषयोऽग्रिमः' इत्येतत्सूचनार्थकं 'हो'मितिशब्दोच्चारणं मध्ये मध्ये क्रियताम्, येन पुनरग्रिमविषयवर्णने ममोत्साहेन भूयतामिति भावः ।

विदूषकोक्तमङ्गीकरोति राजा—**बाढमिति** । स्वीकृतं ते वचः, एवं करि-

---

विदू०—तो इस सेज पर घड़ी भर बैठकर आप उनकी प्रतीक्षा करें ।
राजा—ठीक ! ( बैठकर ) मित्र ! नींद मुझे सताती है । कोई कथा कहो ।
विदू०—मैं कहूँगा । आप हुँकारी भरते जाइये ।
राजा—अच्छा ।

विदूषकः—(क) अस्थि णअरी उज्जइणी णाम। तहिं अहिअरमणीआणि उदअह्लाणाणि वत्तन्ति किल।

राजा—कथमुज्जयिनी नाम ?

विदूषकः—(ख) जइ अणभिप्पेदा एसा कहा, अण्णं कहइस्सं।

राजा—वयस्य ! न खलु नाभिप्रेतैषा कथा। किन्तु।

---

(क) अस्ति नगर्युज्जयिनी नाम। तत्राधिकरमणीयान्युदकस्नानानि वर्तन्ते किल।

(ख) यद्यनभिप्रेतैषा कथा, अन्यां कथयिष्यामि। -

---

ष्यामि। त्वं पुनः स्वेच्छया कथां प्रस्तुहीत्यर्थः।

ततः काञ्चित्कथां प्रस्तौति विदूषकः—अस्थीति। उदकस्नानानि जलावगाहनस्थानानि, स्नातेरधिकरणे ल्युट्, किल श्रूयते। वर्तते काचिदुज्जयिनीत्याख्यया विख्याता नगरी, तस्यां च जलाशया अत्यन्तसुन्दराः सन्तीति श्रूयते। अत्र किलोज्जयिनीनामधेयं प्रस्तुत्य तद्विषयकं किमपि कमनीयं वर्णनमकृत्वा तत्र सुन्दरजलाशयावारताप्रदर्शनमिदं विदूषकस्य प्राकृतातिशयं दर्शयति।

विदूषकेण प्रस्तुतमुज्जयिनीनामधेयं श्रुत्वा तत्सम्बन्धेन प्रियाविषयकं किमप्यतीतं वृत्तं मनसिकृत्य 'किमुज्जयिनी ? तत्सम्बद्धा कथेयं प्रस्तुता त्वयैत्येवमाशयं सूचयदस्फुटार्थं वचनमाह राजा—कथमिति। नामेति वाक्यालङ्कारे।

'उज्जयिनीविषयिणी कथा नास्मै रोचत' इत्याशयमवबुध्य विदूषकः प्राह राजानम्—जइ इति। अनभिप्रेता अप्रिया। मदुक्तेयमुज्जयिनीविषयिणी कथा न चेद्रोचते भवते, तर्हि तदन्या काचित् प्रस्तोष्यते मया। कथ्यतां राजन् ! किं तावद्भवतोऽभीष्टम् ?

तत्कथाया अप्रियात्वं निषेधन् राजा तन्नामश्रवणादुद्गतमात्मनो मानसं भावं विशदयिष्यन्नाह—वयस्येति। न खलु, नाभिप्रेता, नूनं प्रियैवेति यावत्, निषेधद्वयं विधिमेव गमयति। मित्र ! प्रस्तुता त्वयेयं कथा मम तावदप्रियैति न मन्तव्यम्। नूनं प्रियैव सेत्यर्थः। किन्त्विति। 'अप्रिया न चेत्तन्नामश्रवणात्किमिति

---

विदू०—एक उज्जैन नामक नगरी है। वहाँ बहुत सुहावनी स्नान करने की जगहें हैं।

राजा—क्या उज्जयिनी ? (उज्जयिनी की कथा तुमने छेड़ी ?)

विदू०—यदि यह कथा अच्छी न लगती हो तो मैं दूसरी कहूँगा।

राजा—मित्र ! मुझे यह कथा अच्छी नहीं लगती सो नहीं। किन्तु—

स्मराम्यवन्त्याधिपतेः सुतायाः प्रस्थानकाले स्वजनं स्मरन्त्याः ।

---

भावान्तरमिव व्यक्तीकृत'मित्याशङ्कायां तत्कारणमाह—

**स्मरामीति ।** प्रस्थानकाले गमनकाले, यौगन्धरायणनीतिमहिम्ना स्वीयजनानुमतिमन्तरेणैव स्नेहान्मदीयमार्गानुसरणं कुर्वाणया वासवदत्तया समं यदाहमुज्जयिन्याः कौशाम्बीं गतवांस्तदेत्यर्थः, स्वजनं परित्यज्यमानमात्मीयवर्गं, स्मरन्त्याः सोत्कण्ठं चिन्तयन्त्यास्तत्परित्यागदुःखानुभवं कुर्वत्याः, प्रवृत्तं स्वत उद्गतं, नयनान्तलग्नम् अपाङ्गयोः सङ्गतं तत्रावरुद्धमिति यावत्, वाष्पमश्रु जातावेकवचनम्, ममैवोरसि मदीय एव वक्षःस्थले, पातयन्त्या मुञ्चन्त्याः, अवन्त्याधिपतेः अवन्तिदेशाधीश्वरस्य प्रद्योतस्य सुतायां वासवदत्तायाः, कर्मणः शेपत्वविवक्षायाम् 'अधीगर्थदयेशां कर्मणि' इत्यनेन षष्ठी, स्मरामि, तत्स्मरणं करोमीत्यर्थः । स्वजनं विहाय मया सह स्नेहादुज्जयिनीतः कौशाम्बीं प्रति प्रयाणसमये यया स्वजनस्मरणं मुहुः कृतमासीत्, स्वजनस्नेहान्मत्प्रेम्णो वा तदानीमुद्गतान्यश्रूणि च यस्या मद्भुजाश्लेपेण मदीयोरःस्थले भृशं निपतितानि, सैवाद्य प्रद्योतनृपतेः सुता वासवदत्ता मित्रवर! त्वया क्रियमाणमुज्जयिनीवर्णनमाकर्णयतो मम स्मरणसरणिं गाहमाना सती पूर्वानुभूतानि स्मारयतीत्येप एव भावोदयः समयेऽस्मिन्मनसि मामके सञ्जात इति भावः । अत्र 'अवन्त्याधिपते'रिति पदप्रयोगश्चिन्त्यः । समासे 'अवन्त्यधिपते'रिति, व्यासे च 'अवन्त्या अधिपते'रिति स्यात् । वृत्तमुखप्रेक्षितया च तदिदं द्वयमपि तत्रानुसर्तुमपारयन् 'अपि मापं मपं कुर्याच्छन्दोभङ्गं कदापि ने'ति कविना तथा प्रतिकूलं चेष्टितं स्यात् । केचित्तु—'गवा स्वामी'तिवत् स्वामित्वहेतुताविवक्षया तृतीयान्ते 'अवन्त्ये'ति पदे कल्पिते ततो दीर्घसन्धौ, अधिपतिपद आङः प्रश्लेपात् षष्ठीसमासे वा 'अवन्त्याधिपते'रित्युपपादयन्ति । वयन्तु—'अवन्तीषु साधु'रित्यर्थे 'तत्र साधु'रित्यनेन यत्प्रत्यये 'अवन्त्य' इति रूपे संसाधिते 'अवन्त्यश्चासावधिपतिश्चे'ति कर्मधारयसमासाश्रयणात्तत्प्रयोगोपपत्तिं कथमपि कल्पयामः । अस्य श्लोकस्य प्रथमे चरणे उपेन्द्रवज्रा द्वितीयादिचरणत्रये इन्द्रवज्रा चेत्यनयोर्योगादुपजातिनामकं वृत्तम् ।

---

उज्जैनसे मेरे साथ चलते समय आत्मीय लोगों अर्थात् पिता-माता आदियोंकी याद करने वाली, निकल कर भी आँखों के कोने में रुके हुए आँसुओं को प्रेम से मेरी ही छाती पर

बाष्पं प्रवृत्तं नयनान्तलग्नं स्नेहान्ममैवोरसि पातयन्त्याः ॥ ५ ॥

अपि च,

वहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥ ६ ॥

---

तथा च तल्लक्षणम्—'स्यादिन्द्रवज्रा यदि तौ जगौ ग, उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥' इति । चतुर्दशभेदासूपजातिषु च प्रथमोऽयं कीर्तिनामको भेदो **वृत्तरत्नाकरटीकायां नारायणभट्टेनोक्तः** ॥ ५ ॥

अन्यदपि वासवदत्तागतमतीतं वक्तुं प्रतिजानीते—**अपि चेति** ।

तथाहि—**वहुशोऽपीति** । वहुशोऽपि अनेकविधेष्वपि, 'वह्वल्पार्थाच्छस् कारकादन्यतरस्या'मित्यनेन सप्तम्यर्थे शस्प्रत्ययः, उपदेशेषु मत्कर्तृकवीणावादनशिक्षणावसरे दीयमानासु तदुचितासु शिक्षासु, माम् ईक्षमाणया आत्मनो मुखं मदभिमुखं कुर्वन्त्या । एतेन विशेषणेनात्र 'यथावदुपदेशश्रवणपरायणा वासवदत्ता तत्र प्रसक्ते विषये दत्तावधाने'ति सूचितम् । 'किं किमुच्यत' इति श्रोतुमुत्कण्ठितानां शिक्षकवदनप्रेक्षिता प्राकृतिकी प्रसिद्धैव शिष्याणाम् । यया वासवदत्तया, स्रस्तकोणेन स्रस्त उपदेशश्रवणमुग्धचित्ततयाऽविदितं पतितः कोणो वीणावादनसाधनीभूतोऽङ्गुलीगतो वस्तुविशेषो यस्मात्तादृशेन, 'कोणो वीणादिवादनम्' इति कोषः, हस्तेन करेण, आकाशवादितं लयतालादिशून्यं वादनं, कृतं विहितम् । यदा किल वासवदत्ता मत्तो वीणावादनकलां शिक्षते स्म, तदा तदुचितास्तस्यै वहव उपदेशा मया दीयन्ते स्म । सा तु तान् वहूनप्युपदेशान् साकल्येन सावधानव्याकुलं शृण्वती स्नेहान्मन्मुखार्पितदृष्टिरासीत्तत्र क्षणे । तेन च तदानीं स्वीयहस्ताच्च्युतः कोणो न विदितस्तया । कोणाभावेऽपि प्रेममुग्धतया वीणां रागस्वरव्यक्तिविरहितं सा कथञ्चिद् वादितवती । इदमेव सर्वमुज्जयिनीनाम-

---

गिरानेवाली उज्जैन के राजा की कन्या वासवदत्ता का स्मरण ( इस नाम के सुनने से ) मुझे हो रहा है ॥ ५ ॥

*और भी—*

अभ्यास के समय बहुत सी ( दी हुई ) शिक्षाओं में भी ( सावधानी से ) मेरी ओर देखते हुए जिसने हाथ से कोण ( मेजराव ) के छूट जाने पर बिना ताल-लय के वीना बजाई, ( उसीकी याद आ रही है ) ॥ ६ ॥

*विदूषकः*—(क) भोदु, अण्णं कहइस्सं । अत्थि णअरं ब्रह्मदत्तं णाम । त्तहि किल राआ कंपिल्लो णाम ।

*राजा*—किमिति किमिति ?

*विदूषकः*—[ पुनस्तदेव पठति । ]

---

( क ) भवतु, अन्यां कथयिष्यामि । अस्ति नगरं ब्रह्मदत्तं नाम । तत्र किल राजा काम्पिल्यो नाम ।

---

धेयश्रवणाद् 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकं भवती'ति मन्मनोरङ्गमध्येऽधुना मुहुर्नृत्यतीति तेन किञ्चिच्चित्तमन्यदिव मे संवृत्तम् । न तावदुज्जयिनीविषयकं वर्णनं ममाऽप्रियमित्याशयः । राजमुखदर्शनस्पृहयालुता करात् कोणस्रंसनं च वासवदत्ताया राजविषयकं प्रेमभावमतिभूमिं गतं गूढं द्योतयतः । अनुष्टुव् वृत्तम् ॥ ६ ॥

वर्णनीयोज्जयिनीविषयस्याऽप्रियाभावतां श्रुत्वापि राज्ञस्तेन विमनायमानमानसत्वमाकलयन् विदूषको विषयान्तरवर्णनप्रस्तावमुपक्षिपति—**भोदु** इति । इयं कथेत्यार्थम् । राजन्नास्तां तावदुज्जयिनीविषयिणी कथा । सा च भवन्तमनुभूतमतीतं स्मारयन्ती नूनं विमनीकरोति । अधुना च तदन्या कथा वर्णयिष्यते मया । इत्येवमुक्त्वा तत्स्वरूपमवतारयति—**अत्थीति** । किलेति प्रसिद्धिः । ब्रह्मदत्तनामके नगरे काम्पिल्यनामको राजा प्रसिद्धोऽस्तीत्यर्थः । अत्र 'नगरं काम्पिल्यं, राजा ब्रह्मदत्त' इति वक्तव्ये तद्विपरीतं वचनं मूर्खतानिदानं हास्यरसव्यञ्जकं विदूषकस्य हास्यरतित्वमाविष्करोति ।

नामधेयव्यत्यासास्पदं वचनमिदमाकर्ण्य विदूषकमुखादनवधानवशादेतादृत्थं निर्गतं भ्रमाद्वेति वस्तुतत्त्वपरीक्षाचिकीर्षया 'किमुक्तं त्वये'त्येवं पृच्छति तं राजा—**किमितीति** । उक्तमित्यर्थादायातम् । किमितीत्येषा द्विरुक्ती राज्ञो विदूषकमुखात्तदर्थश्रवण औत्सुक्यं दर्शयति ।

विदूषकेण पुनर्मौर्ख्येण हास्यं जनयितुं विपरीतरूपं तत्तथैव पूर्वोक्तं पठ्यते—**पुनरित्यादि** ।

---

विदू०—अच्छा दूसरी कहता हूँ । ब्रह्मदत्त नामक नगर है । वहाँ का राजा काम्पिल्य है ।

राजा—क्या ? क्या ( कहा ) ?

विदू०—( फिर वही कहता है । )

राजा—मूर्ख ! राजा ब्रह्मदत्तः, नगरं काम्पिल्यमित्यभिधीयताम् ।

विदूषकः—(क) किं राआ ब्रह्मदत्तो, णअरं कंपिल्लं ?

राजा—एवमेतत् ।

विदूषकः—(ख) तेण हि मुहुत्तअं पडिवालेदु भवं, जाव ओट्ठगअं करिस्सं । राजा ब्रह्मदत्तो, णअरं कंपिल्लं । [ इति बहुशस्तदेव पठित्वा ] इदाणिं सुणादु भवं । अयि ! सुत्तो अत्तभवं ? अदिसीदला

(क) किं राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् ?

(ख) तेन हि मुहूर्तकं प्रतिपालयतु भवान्, यावदोष्ठगतं करिष्यामि । राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् । इदानीं शृणोतु भवान् ।

विदूषकभ्रान्तिमपाकुर्वन् 'अयि ! वैधेय ! काम्पिल्ये नगरे राजासीद् ब्रह्मदत्त इत्येवं वदे'ति वस्तुतत्त्वं दर्शयन्नाह—**मूर्खेति** ।

अज्ञेन विदूषकेण राज्ञो वचनं निशम्य तदीयं याथार्थ्यमवगन्तुम् 'अपि सत्यमिदं भवदुक्त'मित्येवं पुनस्तदनूद्य पृच्छ्यते—**किमिति** ।

'इत्यमेवैतद्वर्तते, त्वया न्वेतद्विपरीतमुक्त'मित्येवं प्राह राजा विदूषकम्—**एवमेतदिति** ।

राज्ञो वचनं निशम्य विदूषक आह—**तेण हीति** । तेन हि तेन कारणेन । ओष्ठगतं मुखगतम्, अभ्यस्तमिति यावत् । यद्येवं तर्हि क्षणकालपर्यन्तं प्रतीक्षितव्यं भवता, यावन्मया भवदुक्तं कण्ठस्थं विधास्यते । तदेव पठ्यमानमाह—**राजेति** । 'राजा ब्रह्मदत्त' इत्यादि पुनः पुनरावृत्त्या पठन्नभ्यस्तं कृत्वा कथयति—**इदाणिमिति** । ननु मित्र ! कण्ठस्थं कृतमेतन्मया, न कदापीतः परं विस्मरिष्यते । सम्प्रति श्रूयतां भवता । इत्थं निगद्य विदूषको राजानं निद्रागमालोक्य स्वयमपि किञ्चिच्छिकीर्षुरभिवक्ते—**अयीति** । अयीत्यव्ययं प्रश्नार्थकम्, माननीयः श्रीमान् राजा सुप्तः किम् ? एवं चेन्मयापि जागरिन्दकादिना

राजा—मूर्ख ! राजा ब्रह्मदत्त और नगर काम्पिल्य—ऐसा कहो ।

विदू०—क्या, राजा ब्रह्मदत्त और नगर काम्पिल्य ?

राजा—हाँ ऐसा ही है ।

विदू०—तो आप क्षणभर ठहरें, जब तक मैं यह याद कर लूँ । राजा ब्रह्मदत्त, नगर काम्पिल्य । (इसीको कई बार कहकर) अब आप सुनिये। अरे ! आप सोगए । यह बहुत ठण्डा

इअं वेला । अत्तणो पावारअं गहिअ आअमिस्सं । [ निष्क्रान्तः । ]

[ ततः प्रविशति वासवदत्ता आवन्तिकावेषेण, चेटी च । ]

चेटी—(क) एदु एदु अय्या । दिढं खु भट्टिदारिया सीसवेदणाए दुक्खाविदा ।

वासवदत्ता—(ख) हद्धि, कहिं सअणीअं रइदं पदुमावदीए ?

---

अयि ! सुप्तोऽत्रभवान् ? अतिशीतलेयं वेला । आत्मनः प्रावारकं गृहीत्वागमिष्यामि ।

( क ) एत्वेत्वार्या । दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखिता ।

( ख ) हा ! धिक्, कुत्र शयनीयं रचितं पद्मावत्याः ?

---

किं कार्यम् ? तात्कालिकीं तत्र पुनः शैत्यबाधामनुभवन्ब्रूते—**अदिसीदलेति** । प्रावार एव प्रावारकस्तं प्रावरणवस्त्रम् । प्रपूर्वादाच्छादनार्थाद् वृञ्धातोर्घञि 'उपसर्गस्य घञ्यमनुष्ये बहुल'मित्यनेनोपसर्गस्य दीर्घे प्रावारशब्दो निष्पन्नः, ततः स्वार्थे कः । अस्मिन् खलु शीतकाले शीतताऽतितमां व्याकुलीकरोति माम्, अतः स्वकीयमुत्तरीयवस्त्रमादाय समागन्तव्यं मया, यदाच्छादितवपुषो मे शैत्यबाधा पुनर्न स्यात् इत्युक्तवतो विदूषकस्य प्रावरणवस्त्रानयनार्थं ततः प्रस्थानं सूचयति—**निष्क्रान्त** इति ।

पूर्वं पद्मिनिका नाम चेटी पद्मावत्याः शिरोवेदनां निवेदयितुं मधुकरिकां नाम स्वीयां वयस्यां वासवदत्तायाः ( आवन्तिकायाः ) समीपं प्राहिणोत् । सा च मधुकरिका नाम चेटी वासवदत्तामुपगत्य तदागमनं प्रतीक्षते स्म । साम्प्रतं तदनुकूलमेव तयोर्द्वयोरेकत्र सम्मेलनं दर्शयति कविः—**ततः प्रविशती**त्यादिना ।

आवन्तिकामागच्छन्तीमवलोक्य प्रकृतमाह चेटी वचनं ताम्—**एदु एदु** इति । एतु एत्विति वीप्साऽऽगमनविषयिणीं शीघ्रतां द्योतयति । दृढम् अत्यधिकम्, खलु वाक्यालङ्कारे । श्रीमत्या सत्वरमागन्तव्यम् । राजकुमारीं पद्मावतीं भृशं शिरोव्यथा व्याकुलीकरोत्यधुना ।

**हद्धीति** । चेट्युक्तं वृत्तमिदं श्रुतवती वासवदत्ता दुःखमभिनयन्ती पद्मावत्याः

---

समय है । अपना ओढ़ना लेकर आता हूं । ( चला गया । )

( आवन्तिका के वेश में वासवदत्ता का आना, साथ ही दासी का भी । )

दासी—आर्या ! आइये आइये, राजकुमारीजी मस्तक-पीड़ा से बहुत ही दुखी हैं ।

वासव०—हाय ! कष्ट ! पद्मावती का बिस्तर कहाँ लगा है ?

चेटी—(क) समुद्दगिहके किल सेज्जा त्थिण्णा।

वासवदत्ता—(ख) तेण हि अग्गदो याहि।

[ उभे परिक्रामतः। ]

चेटी—(ग) इदं समुद्दगिहकं। पविसदु अय्या। जाव अहं वि

---

( क ) समुद्रगृहके किल शय्या स्तीर्णा।

( ख ) तेन ह्यग्रतो याहि।

(ग) इदं समुद्रगृहकम्। प्रविशत्वार्या। यावदहमपि शीर्षानुलेपनं त्वरयामि।

---

शयनीयस्थानमित्यं पृच्छति चेटीम्। महत्कष्टमिदम्, अस्वस्थतेयं पद्मावत्याः कष्टाय मे कल्पते। इदं तु ब्रूहि—तस्याः शयनीयं कुत्र कल्पितम् ?

**समुद्दगिहके** इति। 'समुद्रगृहे शयनं तदीयमास्तीर्ण'मित्युत्तरं दत्तं चेट्याऽऽवन्तिकायाः पूर्वोक्ते प्रश्ने।

आवन्तिका तत्राह—**तेण हीति**। अस्वस्था वर्तते पद्मावती, समुद्रगृहे तस्याः शयनीयमारचितम्। इत्थं सति साम्प्रतं तत्र मयोपस्थातव्यम् तदर्थं च समुद्रगृहस्य पन्थानं दर्शयितुं त्वया मदग्रे भूयताम्। अहं च त्वामनुयामीति भावः।

**'उभे परिक्रामत'** इत्यनेन द्वयोर्वासवदत्ताचेट्योः समुद्रगृहं प्रति प्रस्थानं सूचितम्।

गन्तव्यदेशान्तिकं गत्वा चेटी ब्रूते—**इदमिति**। यावत् इदानीम्। एतद्वर्तते समुद्रगृहम्, प्रवेशोऽत्र विधीयतां श्रीमत्या। मया च पद्मावत्याः शिरोवेदनापनोदनाय लेपनीयमौषधं त्वरया सम्पादयितुं गम्यत इत्यर्थः। अत्रेदमवधेयम्—शीर्षानुलेपनमिदमात्मना सम्पादयितुं पद्मिनिकया पूर्वं सूचितमासीत्। तस्यैव कार्यस्य सत्वरं पूर्तये पद्मिनिकां सखीं त्वरयितुं, कार्ये च तदौपयिकेऽवशिष्टे स्वयं साहाय्यं कलयितुमिच्छन्ती तदनुकूलमिदं गमनमात्मनः प्रास्तावीन्मधुकरिकाख्या चेटीति।

---

दासी—बिछौना तो समुद्रगृह में बिछाया गया है।

वासव०—तो आगे आगे चलो।

( दोनों घूमती हैं। )

दासी—यह समुद्रगृह है। आप प्रवेश करें। तब तक मैं भी मस्तकपीड़ाहारक लेप के

सीसाणुलेवणं तुवारेमि । [ निष्क्रान्ता । ]

वासवदत्ता—(क) अहो ! अकरुणा खु इस्सरा मे । विरहपय्युस्सुअस्स अय्यउत्तस्स विस्समत्थाणभूदा इअं वि णाम पदुमावदी अस्सत्था जादा । जाव पविसामि । [ प्रविश्यावलोक्य ] अहो ! परिजणस्स पमादो । अस्सत्थं पदुमावदिं केवलं दीवसहाअं करिअ परित्तजदि ।

---

(क) अहो ! अकरुणाः खल्वीश्वरो मे । विरहपर्युत्सुकस्यार्यपुत्रस्य विश्रमस्थानभूतेयमपि नाम पद्मावत्यस्वस्था जाता । यावत् प्रविशामि । अहो ! परिजनस्य प्रमादः । अस्वस्थां पद्मावतीं केवलं

---

ततस्तस्याः प्रस्थानमाह—**निष्क्रान्तेति** ।

अन्तः प्रविशन्त्येव वासवदत्ता तत्र पद्मावत्याः शय्यायामेव शयितं प्रियतमं नायकं पद्मावतीबुद्धया पश्यन्ती तदीयमस्वास्थ्यं विचिन्त्य दूयमाना ब्रूते—**अहो** इति । अहो इति विषादसूचकमव्ययम्, खल्विति निश्चये, मे मद्विषये । विश्रमस्थानभूता मनोविनोदास्पदम्, नामेति वाक्यालङ्कारे । यावत् अस्तु, प्रविशामीति विध्यर्थे लट् । 'हन्त ! सर्वथा दैवं निर्दयत्वमवलम्बितं मयि, यदसौ पद्मावती मद्वियोगवशाद् गाढमुत्कण्ठाभावं बिभ्रतः प्रियस्य सन्तापजात प्रशमय्य मनो विनोदयति स्म, सापि साम्प्रतं शिरोवेदनया दुःखिता सती सुतरामस्वास्थ्यं भजते । मन्ये दुःसहां विरहवेदनामनुभवन्त्याः, विरहवेगपर्याकुलस्य पत्युर्मनोविनोदनौपयिकं कमप्युपायमिदानीमपश्यन्त्या मम दैवदुर्विपाकादप्रसन्नानामीश्वराणामकारुण्यस्यैव परिणामोऽयम् । अस्तु, किं कार्यम् ? प्रविश्यतामन्तर्मया' इत्येवं वदन्त्या वासवदत्तायास्तद्गृहान्तः प्रवेशं परितो वीक्षणं चाभिधाय चिन्तापुरःसरं वचनोद्गारमाह—**प्रविश्यावलोक्येत्यादि** । प्रमादोऽनवधानता । दीपसहायां, दीप एव सहायः सहचरो यस्यास्ताम् अनन्यसहायानेकाकिनीमित्यर्थः । परित्यजतीति भूतार्थे लट् । यावत् अधुना । असावधानतेयं भृशं विस्मयकरी पद्मावत्याः

---

लिये शीघ्रता करती हूँ । (चली गई ।)

**वासव०**—देव लोग मेरे विषय में अतीव निर्दय हो रहे हैं । मेरे विरह से दुःखी होनेवाले आर्यपुत्र के लिये विश्राम-रूप यह पद्मावती भी भला अस्वस्थ हुई । भीतर जाती हूँ (प्रवेशकर और देखकर) हाय ! सेवकों की भारी गलती है । जिन्होंने बीमार पद्मावती को केवल दीपक के सहारे

इअं पदुमावदी ओसुत्ता। जाव उवविसामि! अहव अण्णासणपरिग्गहेण अप्पो विअ सिणेहो पडिभादि। ता इमस्सिं सय्याए उवविसामि। [ उपविश्य ] किं णु हु एदाए सह उववसन्तीए अज्ज पह्लादिदं विअ मे हिअअं। दिट्ठिआ अविच्छिण्णसुहणिस्सासा। णिव्वुत्तरोआए होदव्वं। अहव एअदेससंविभाअदाए सअणीअस्स

दीपसहायां कृत्वा परित्यजति। इयं पद्मवत्यवसुप्ता। यावदुपविशामि। अथवान्यासनपरिग्रहेणाऽल्प इव स्नेहः प्रतिभाति। तदस्यां शय्यायामुपविशामि। किं न खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम्। दिष्ट्याऽविच्छिन्नसुखनिःश्वासा। निवृत्तरोगया भवितव्यम्। अथवैक-

परिचारिकावर्गस्य, योऽधुना वेदनावशादस्वस्थतामनुभवन्तीं पद्मावतीमत्रैकाकिनीं परित्यक्तवान्। रोगिणः सन्निधौ केनापि नूनमवस्थातव्यम्, अत्र तु कोऽपि नास्तीत्यनुचितकारितेयं परिजनस्य। शेते किलैषा पद्मावती, इदानीमत्रोपविश्यते मया। इत्थं तद्दूरेऽन्यत्रोपवेशनं विचार्य पुनः किञ्चिच्चिन्तयन्ती ब्रूते— अहवेति। अन्यासनपरिग्रहेण स्थानान्तरोपवेशनेन। अस्यामवस्थायामेतस्या दूरेऽवस्थातुं नोचितं मे। स्थानान्तरेऽवस्थित्या स्नेहस्याल्पतेव दृश्यते। रोगिणो दूरेऽवस्थातुर्मनसि जुगुप्साभाव इवोदितः सम्भाव्यते लोकैः। अतोऽत्रैव शयनीयेऽस्याः समीपमेवोपविश्यते मया। तथा करणं दर्शयति—**उपविश्येति**। पद्मावतीशयनीयमुपविष्टायाश्च तस्या मनोगतान्वितर्कानाह—**किं णु हु** इति। किं नु खलु, किमितीत्यर्थः। प्रह्लाद आनन्दः सञ्जातोऽस्य तत् प्रह्लादितम्, तदस्य सञ्जातमितीतच् प्रत्ययः। न जानामि; केन कारणेनात्र पद्मावत्या सहोपवेशनान्मनः प्रसीदतीव मे। मन्दं मन्दं चरन्ति रोगिणां निःश्वासपवनाः। अस्यास्तु निःश्वासपरम्परा दैवादनवरुद्धाऽयत्नसञ्चारा दृश्यते। सम्भावयाम्यतः स्वस्था लब्धारोग्या भवेदियमिति। **अहवेति**। पूर्वोक्तं विचार्य वासवदत्ता स्नेहाऽनुरूपं

छोड़ दिया है। यह पद्मावती सोई है। तो मैं बैठती हूं। या दूसरा आसन स्वीकार करनेसे प्रेम न्यून-सा प्रतीत होता है। इसलिये इस सेज पर ही बैठ जाऊं। (बैठकर) क्यों भला इसके साथ बैठते हुए मेरा हृदय आज आनन्दित-सा हो रहा है? सौभाग्य की बात है कि साँस सुख से ले रही है। रोग निकल गया होना चाहिए। अथवा, एक ओर सोने से मालूम होता

सूएदि मे आलिङ्गेहि त्ति । जाव सइस्सं [ शयनं नाटयति । ]

राजा—[ स्वप्नायते । ] हा वासवदत्ते !

---

देशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति । यावच्छयिष्ये ।

---

सहशयनं नाम तत्कालोचितं कर्तव्यं मन्यमाना पक्षान्तरमुपक्षिपतीदम् । शयनीयस्य शय्यायाः, एकदेशसंविभागतया, एकदेशे एकत्र प्रदेशे नतु सर्वत्र संविभागः पार्थक्येनावस्थितिः यस्य तत् तद्भावस्तत्ता तया हेतुभूतया, शयनस्यैकदेशे स्थित्येति यावत् । 'याव'दित्यस्य 'अत' इत्यर्थः । इयमत्र पद्मावती' शयनस्यैकदेशे शयाना वर्तते । शयनैकदेशस्य च स्वाधिष्ठिततया स्वाऽनधिष्ठितं प्रदेशं प्रियजनशयनोचितं ध्वनयन्ती 'सविध इह शयित्वा साऽहमाश्लेषणीया' इति व्यक्तमाकूतमात्मनो निवेदयति माम् । अतः कारणादेतदिच्छापूरणमात्मनः कर्तव्यं मत्वा सहैतया शयिष्यते मया । **शयनं नाटयती**त्यनेन शयनाभिनयप्रदर्शनपूर्वकं तत्र शयनीये वासवदत्ताया अवस्थानं दर्शितम् ।

दृढसङ्कल्पबलात्सुलभस्मरणां हृदगतां प्रियतमां वासवदत्तां विचिन्तयन् सुप्तो राजा 'हा ! हन्त ! वासवदत्ते !' इति स्वप्नविषयं तन्नामग्रहणं कुर्वन्नात्मनो विरहविह्वलतां दर्शयति—**स्वप्नायते** इत्यादिना । स्वप्नायते इत्यत्र स्वप्नशब्दः स्वप्नचेष्टाख्यमर्थं बोधयति । स्वप्नलक्षणं च—'बाह्येषु करणेषूपसंहृतेषु जागरितवासनानुसारेण मनसस्तदर्थाभासाकारावभासनं स्वप्नशब्दितम्' इत्युक्तम् । यथाहुः—'इन्द्रियाणामुपरमे मनोऽपुरतं यदि । सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनम् ॥' स च सप्तविधः, यथा—'दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा । भावितो दोषजश्चेति स्वप्नः सप्तविधः स्मृतः' ॥ इति । स्वप्नं करोतीत्यर्थे 'तत्करोती'त्यनेन णिच् । स्वप्नतुल्यां चेष्टां करोति, स्वप्नं पश्यतीत्यर्थः । अथवा स्वप्नशब्दः स्वप्नविषयपरः, अत्र 'स्वप्नमाचष्टे' इत्यर्थे 'तदाचिष्टे' इति णिच्, स्वप्नोचितं विषयं प्रलपतीत्यर्थः । इत आरभ्य 'हस्तौ प्रसारयती'ति यावद्विरहिणो वत्सराजस्य विलापप्रलापाः स्वप्नोचिताः क्वचिद्वासवदत्ताप्रकल्प्यमानतदुत्तरदानसहकृता वर्णयिष्यन्ते ।

---

है कि मेरा आलिंगन करो ऐसा इशारा रही है । तो सोती हूं । (सोने का भाव दिखाती है ।)

राजा—( स्वप्न में ) हाय ! वासवदत्ता !

वासवदत्ता—[ सहसोत्थाय ] (क) हं ! अय्यउत्तो, ण हु पदुमावदी ? किं णु खु दिट्ठह्मि ? महन्तो खु अय्यजोअन्धराअणस्स पडिण्णाहारो मम दंसणेण णिप्फलो संवुत्तो ।

राजा—हा ! अवन्तिराजपुत्रि !

वासवदत्ता—(ख) दिट्ठिआ सिविणाअदि खु अय्यउत्तो । ण

---

( क ) हम् ! आर्यपुत्रः, न खलु पद्मावती ? किन्नु खलु दृष्टास्मि ? महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः ।

( ख ) दिष्ट्या स्वप्नायते खल्वार्यपुत्रः । नात्र कश्चिज्जनः । याव-

---

स्वकीयनामग्रहणं प्रियतमेनकृतमालोच्य वासवदत्ताऽकस्मात्ससम्भ्रममुत्थिता सविस्मयशङ्कावितर्कं वचनमाह—हमिति । हु, नु खलु, इति वाक्यालङ्कारे । अहो ! किमिदम्, आर्यपुत्रोऽत्र शयितः न खलु पद्मावती ? प्रयत्नप्रच्छादितस्व-स्वरूपा किमहमिदानीं प्रबुद्धस्यार्यपुत्रस्य दृग्गोचरतां गता ? एवं चेच्छ्रीमतो यौगन्धरायणस्य मत्स्वरूपप्रच्छादनमूला स्वामिराज्यप्रत्याहरणरूपा कृतपूर्वा महती प्रतिज्ञा मत्स्वरूपप्रदर्शनादद्य नैष्फल्यं गता । शङ्के, कथङ्कारमियं सिद्धिं प्राप्स्यतीति । महान्खल्वयं विचारावसरः समुपस्थित इति भावः । 'अत्रार्यपुत्रः स्वप्नदर्शनोचितं प्रलपतीत्यनवगत्य वासवदत्तया तत्प्रबोधनं स्वस्वरूपप्रत्यायकतयाऽनर्थमूलं सम्भावितम् । पद्मावत्या सह स्वामिनो विवाहस्य सङ्घटनेन यौगन्धरायणप्रतिज्ञा यद्यपि भूयसांशेन सिद्धा, तथापि शत्रोः सकाशाद्राज्यप्रत्याहरणरूपो मुख्यस्तदीयोंशः साध्य एव । तत्र च प्रच्छादनीयस्वस्वरूपप्रकटनं नाम कार्यसिद्धेः शङ्कां जनयतीति स्थाने वितर्कितमिदं वासवदत्ताया' इत्येवमवगन्तव्यम् ।

पुनरपि राजा स्वप्नदृष्टां वासवदत्तां नामान्तरेण सम्बोधयति—हेति । अयि ! प्रद्योतनृपतेः पुत्रि ! त्वदीयाऽदर्शनादहं विषीदामि, क्वासि त्वं ? देहि मे दर्शनमिति राज्ञो हृद्गतमत्र ।

दिट्ठिएति । पुनः प्रयुक्तेन सम्बोधनान्तरेण लक्षणेन चक्रे नचिच्चक्षुषोर्लक्ष्यतां

---

वासव०—( एकाएक उठकर ) हैं आर्यपुत्र, पद्मावती नहीं ? क्या मैं देखी गई ? आर्य-यौगन्धरायण का बड़ा प्रतिज्ञा का भार मेरे दर्शन से व्यर्थ हुआ ।

राजा—हा ! अवन्तिराजनन्दिनी ?

वासव०—सौभाग्य है कि आर्यपुत्र स्वप्न में बोल रहे हैं । यहाँ कोई मनुष्य नहीं है ।

एत्थ कोच्चि जणो । जाव मुहुत्तअं चिट्ठिअ दिट्ठिं हिअअं च तोसेमि ।

*राजा*—हा ! प्रिये ! हा ! प्रियशिष्ये ! देहि मे प्रतिवचनम् ।

*वासवदत्ता*—(क) आलवामि भट्टा ! आलवामि ।

*राजा*—किं कुपितासि ?

---

न्मुहूर्तकं स्थित्वा दृष्टिं हृदयं च तोषयामि ।

( क ) आलपामि भर्तः ! आलपामि ।

---

गतेन प्रियतमं स्वप्नावस्थाऽवस्थितमवधारयन्त्या वासवदत्ताया वचनमिदम् । खलु वाक्यालङ्कृतौ, यावत् अतः । सौभाग्यमेतन्मे, यदयं प्रियतमः स्वप्नचेष्टितान्यातनुते । एतदीयप्रबोधशङ्कया 'मत्स्वरूपं प्रकाशितमभू'दित्येवं यन्मे शङ्कितमासीत्तदिदानीं दैवान्निवृत्तम् । अत्र किल स्थले शयितमार्यपुत्रं विहाय न विद्यते कश्चिदन्यो मनुष्यः, अतः 'कोऽपि मां पश्ये'दिति शङ्काया अवसरो नास्ति । चिरात्प्रियविलोकनोत्कलिकाकुले लोचनयुगलं मनश्च मे । तस्मादहं प्रियदर्शनादेतयोस्तृप्तिं सम्पादये क्षणकालमिहावस्थानसुखमनुभवन्तीत्यर्थः ।

राजा पुनः प्रलपति—**हा ! प्रिये** इति । 'अयि ! प्रीतिपात्रच्छात्रे । प्रियतमे ! मौनमवलम्बमाना किमिति प्रतिवचो न दत्से ? क्वासी'ति सप्रेम त्वामाह्वयन्तम् 'इयमत्रास्मी'ति प्रत्युत्तरवितरणेन सम्भावय माम् ।

पुनः पुनरेवं तत्तन्नामग्रहणरूपां प्रत्युत्तरश्रवणाभिलापसूचिकां भर्तुः प्रणयवाचमालोचयन्ती प्रणयानुरोधात्तदुचितां वाचं रोद्धुमपारयन्ती वासवदत्ता ससम्भ्रमं ब्रूते—**आलवामीति** । सम्भ्रमे क्रियापदद्विरुक्तिः । प्राणप्रिय ! किमर्थं व्याकुलेन भूयते भवता । इदमिदानीमालप्यते, प्रत्युत्तरं दीयते माया ।

'अपि नाम कोऽपि कोपस्ते मयि ?' इत्येवं पुनराह राजा—**किमिति** । वासवदत्ताया किल स्वाप्नं वचनं निशम्य राज्ञः स्नेहात्तदुचितमुत्तरं कल्प्यते । राज्ञा तु स्वप्नगतेन वासवदत्तोत्तरं न श्रोतुं शक्यत इति वारंवार तदुत्तरश्रवणोत्कण्ठया तत्तादृशं प्रलप्यत इत्येवमत्राकलनीयम् ।

---

घड़ी भर बैठकर अपनी दृष्टि और हृदय को आनन्दित करूँ ।

राजा—हा ! प्रिये ! प्रियशिष्ये ! मुझे उत्तर दो ।

वासव०—उत्तर देती हूँ स्वामी ! उत्तर देती हूँ ।

राजा—क्या तुम कुपित हुई हो ?

वासवदत्ता—(क) ण हि ण हि, दुक्खिदह्मि ।

राजा—यद्यकुपिता, किमर्थं नालङ्कृतासि ?

वासवदत्ता—(ख) इदो वरं किं ?

राजा—किं विरचिकां स्मरसि ?

---

( क ) नहि नहि, दुःखितास्मि ।
( ख ) इतः परं किम् ?

---

राज्ञो वचनं निशम्याह वासवदत्ता—**ण हीति** । नैवास्मि कुपिता किल, न चास्ति कोऽपि कोऽपस्यावकाशः साम्प्रतं प्रियतमे । किन्तु हतभाग्याहं विरहिणी दुःखमयीं दशामनुभवामीत्यर्थः ।

व्यतिरेकमुखेन तां कुपितां निश्चित्य चित्ते भूयोऽभिधत्ते राजा—**यद्यकुपितेति** । यदीति सम्भावनायाम् । अथ सम्भाव्यते—त्वं कुपिता नासीति, तर्हि पुनः केन हेतुना न धत्सेऽलङ्कारान् शरीरे ? कोपं विनाऽलङ्कारसम्बन्धाभावो न सम्भवी । कारणान्तरस्याऽनवसरेण च 'कोपादेव त्वयालङ्करणानि परित्यक्तानी'ति स्पष्टमुन्नीयते । तस्मात्त्वं कुपितैवासीति-मन्ये । यद्वा—प्रणयविशेषशालिन्यां कोपाऽनुदयं सम्भाव्य तत्र पुनः कोपे कारणान्तरं जिज्ञासमानस्य राज्ञो वचनमिदम् । अत्र पक्षे—'क्रोधाभावे सति न तर्कये किमितीदमलङ्कारवैकल्यं ते' इत्यर्थः करणीयः । विरहिणीं वासवदत्तां ध्यायतो राज्ञः स्वप्ने तादृशविरहावस्थोचितालङ्कारवियोगवत्येव सा प्रादुरासीत् । यथाकल्पितं हि दृश्यते स्वप्ने ।

तत्राह वासवदत्ता—**इदो** इति । इतः 'दुःखितास्मी'त्येतदपेक्षया, परमन्यत्, कारणमिति शेषः । विरहयोगादहं दुःखितास्मीत्यत एवालङ्कारधारणं न मे रोचते । नान्यत्किमपि तत्परित्यागे कारणं दुःखं विना । दुःखितानामलङ्कारा हि भारभूता भवन्तीति भावः ।

सपत्नीस्मरणात्स्त्रीणां कोपानुभावः प्रादुर्भवतीति तत्स्मरणं तस्याः कोपकारणं सम्भावयन्नाह राजा—**किमिति** । सपत्न्या विरचिकायाः स्मरणमिदानीं ते

---

वासव०—नहीं, नहीं । मैं दुखी हूं ।
राजा—यदि कुपित नहीं हो तो शरीर पर अलङ्कार क्यों नहीं धारण किये ?
वासव०—( मैं दुखी हूं ) इससे दूसरा कारण क्या होगा ?
राजा—क्या विरचिका की याद कर रही हो ?

*वासवदत्ता*—[ सरोषम् ] (ख) आ अवेहि, इहावि विरचिआ ?

*राजा*—तेन हि विरचिकार्थं भवतीं प्रसादयामि । [ हस्तौ प्रसारयति । ]

---

( ख ) आ अपेहि, इहापि विरचिका ?

---

सञ्जातं किमु ? अत एव रुष्टासि त्वम् ? विरचिकानाम्नी च भोगिनी काचिदासी-दुदयनस्य राज्ञो दाराः । तत्सम्बद्धा च कथा कथामुखलम्बकेऽस्ति प्रतिपादिता **कथासरित्सागरे ।**

सपत्नीनामस्मरणात्कोपकलुषिता सती सरोषं ब्रवीति वचनं वासवदत्ता—आ इति । आ इत्यव्ययं कोपे स्मरणे च, तथा चोक्तम्—'वाक्यस्मरणयोरङित्' इति । 'आ अपेहि' इत्यत्र 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञा 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावश्च । तेन सवर्णदीर्घो निषिद्धः । इहापि, मत्सामीप्येऽपि वियोग-दुःखेऽपि पद्मावतीगृहेऽपि वा, विरचिका तन्नाम्नी सपत्नी, स्मर्यते स्मार्यते चेति शेषः । हन्त भोः ! विरचिकायास्तस्या नामधेयं गृह्णन्निदानीं दूरमपसर त्वम् । मत्पुरोऽपि सपत्नीस्मरणं कुर्वतो मत्समीपे न स्थातुमुचितं ते । वियोगदुःखेऽपि मे, तस्याः स्मरणं स्वयं कुर्वता मां च कारयता पुनरिदं दुःखमुत्पाद्यते त्वया । सम्प्रत्यत्र पद्मावत्याः सदने तस्याः प्रसङ्गो न किलोपक्षेपणीयः । न रोचते हि मह्यं ते वचनमेतदिति भावः ।

विरचिकासम्बन्धस्मरणमूलकमेव कोपं सम्भावयंस्तत्कृते तां प्रसादयितुमु-द्यतो राजा ब्रूते—**तेन हीति** । विरचिकार्थं विरचिकानामग्रहणजन्मापराधक्षमाप-नार्थमिति यावत् । यदि नाम विरचिकास्मृतिस्त्वां कोपयति, तर्हि 'त्वं प्रसन्ना भवे'त्यनुनयाम्यहम् । तन्नामग्रहणरूपो मन्तुरेष मे क्षन्तव्यस्त्वया । इति वदंस्त-त्प्रसादनोपायमभिनयति—**हस्तौ प्रसारयतीत्यनेन** । अञ्जलिबन्धं प्रापित-योर्हस्तयोः प्रसारणं प्रसादनोपायभूतं लोकाचारानुगतम् । अन्यासङ्गरूपापराध-क्षमाप्रार्थनादिभिर्यथावसरं प्रयुज्यमानैरुपायैः प्रियायाः कुपितायाः प्रसादनमपि प्रणयमहिमैकमूलकम् । प्रणयप्रकर्षेण प्रियाप्रसादनस्य बहुशोऽभ्यस्ततया दृढतर-संस्कारबलेन स्वप्नदर्शनेऽप्ययं तत्प्रसादनप्रयत्नो राज्ञः साम्प्रतमेव साम्प्रतम् ।

---

**वासव०**—( क्रोध से ) आः, हटो, यहाँ भी विरचिका ?

**राजा**—तो विरचिका के लिये तुम्हें मनाता हूँ । ( दोनों हाथ फैलाता है । )

वासवदत्ता—(क) चिरं ठिदह्मि। को वि मं पेक्खे। ता गमिस्सं। अहव सय्यापलम्बिअं अय्यउत्तस्स हत्थं सअणीए आरोविअ गमिस्सं। [ तथा कृत्वा निष्क्रान्ता। ]

---

(क) चिरं स्थितास्मि। कोऽपि मां पश्येत्। तद् गमिष्यामि। अथवा शय्याप्रलम्बितमार्यपुत्रस्य हस्तं शयनीय आरोप्य गमिष्यामि।

---

एतावदवधि राज्ञो विरहिणः स्वप्नावस्थोचितालापा उपवर्णिताः। इतः परं जागर्ति प्राप्तवतो वासवदत्तां स्वसमीपतो गच्छन्तीं पश्यतस्तस्य शोकानुभावो वर्णयिष्यते। अत्र तावत्—'जाग्रदवस्थायां मनसि दृढं भावितं वस्तुजातं भावनावैभवेन स्वप्नावस्थायामप्यनुगतं दृश्यते। असाधारणस्तावत्प्रणयो वत्सराजस्य वासवदत्तायां बहुशः प्रकाशितचरः। जागरावस्थायां तामेव सन्ततं वासवदत्तां ध्यायतस्तस्योदयनस्यातिवेलध्यानयोगबलात् स्वप्नेऽपि तद्विषयानुचिन्तनं सहजमेव। अत एव स्वप्नदर्शनविषयतां नूनं गतासीद्राज्ञो वासवदत्ता। स्वप्नगतवासवदत्तादर्शनरूपं तमेनं विषयमधिकृत्य कृतं 'स्वप्नवासवदत्तम्' इति नामकरणं च नाटकस्यैतस्यानुगतार्थतां कलयती'ति रहस्यमाकलनीयम्!

तमेतं पूर्वोक्तं प्रियकृतमात्मप्रसादनोद्यमं दृष्ट्वा, कोपं च स्वप्नगतार्थसम्भूतं व्यर्थं विचिन्त्य वासवदत्ता नादत्त चित्तेऽवकाशं कोपाय। इदानीं हस्तप्रसारणाद्राज्ञो निद्राभङ्गं तत्रान्यजनोपगमनं चाभिशङ्क्य स्वस्वरूपगोपनार्थं ततः प्रस्थातुकामायाः प्रियं भर्तारं चिरतिथात्समयतः समुपलब्धवत्यास्तस्या वचनमाह कविः—**चिरमिति**। आर्यपुत्रं पश्यन्त्यास्तदीयप्रणयसूचकस्वप्नदर्शनकालिकालापश्रवणमुग्धस्वान्ततया स्वीयामवस्थामपश्यन्त्या अत्र स्थिताया मे भूयान्समयोऽतीतः। दैवादेतावत्कालपर्यन्तं न केनापि दृष्टाऽहम्। 'दृष्टिगोचरतां कस्यापि नोपैष्यामी'ति प्रतिक्षणं शङ्का मां बाधते। अतो यावन्न कस्यापि संमुखं गतम्, तावदितः प्रस्थातव्यं मयेत्यर्थः। इत्यभिधाय किञ्चिद्विचार्य स्नेहोचितं कर्तव्यान्तरं निर्दिशन्ती पुनः पक्षान्तरं दर्शयति वासवदत्ता—**अहवेति**। शय्यायाः प्रलम्बितं शय्याप्रलम्बितम् शयनाधस्तले लम्बमानम्। प्रच्छन्नरूपाया ममार्यपुत्रप्रबोधशङ्का तु दूरापेता। स चाधुनापि शयित एव। किन्तु सुचिरादत्रागताया जनान्तरोपगमनसम्भावनया च

---

वासव०—देर तक ठहर गई। कोई मुझे देख लेगा, अतः जाती हूँ। अथवा, पलंग पर से लटके हुए आर्यपुत्र के हाथ को फिर पलंग पर रख कर जाऊँगी। (हाथ उठाकर चली गई।)

राजा—[ सहसोत्थाय ] वासवदत्ते ! तिष्ठ तिष्ठ । हा ! धिक् ।

**निष्क्रामन् सम्भ्रमेणाहं द्वारपक्षेण ताडितः ।**
**ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥ ७ ॥**

---

मे प्रस्थानमितः स्थानेऽस्मिन्समये । अथ गच्छन्त्यापि मया, मत्प्रसादनाय प्रसारितयोरेकतः शयनाधःप्रदेशे लम्बमानं प्रियस्य करं पुनः शयनस्थलेऽवस्थाप्य गन्तव्यमिति । **तथा** कृत्वेत्यादिना लम्बमानस्य प्रियकरस्य शयनेऽवस्थापनं ततः प्रदेशान्निर्गमनं च वासवदत्तायाः सूचिते ।

प्रेयसीकरसरोजसंस्पर्शात्तदानीमकस्मात्प्रबुद्धो राजा समीपतो गच्छन्तीं वासवदत्तामिव पश्यन् शयनादुत्थाय तां जिघृक्षुर्जिज्ञासमानश्चाह—**वासवदत्ते** इति । 'तिष्ठ तिष्ठे'ति द्विरुक्ती राज्ञो वासवदत्ताग्रहणविषयिणीं त्वरामाविष्करोति । अयि ! वासवदत्ते ! स्थीयतां किञ्चित्त्वया स्थीयताम् । विहाय मामेकाकिनमत्रोपेक्षितप्रणयानुबन्धया कुत्र गम्यते ? इत्येवं वदंस्तद्ग्रहणसंरम्भेण गच्छन् द्वारपार्श्वदेशाभिहतः सन्नग्रे गन्तुमशक्नुवंस्तत्प्राप्तौ निराशो भूत्वा शोचति राजा—**हा धिगिति** । हन्त ! कष्टम्, गतैव सा । किमिदानीं विधेयम् ?

तात्कालिकीं निजामवस्थां वर्णयति—**निष्क्रामन्निति** । सम्भ्रमेण तद्विषयपरीक्षणत्वरया, निष्क्रामन् ततः प्रदेशान्निर्गच्छन्नहं, द्वारपक्षेण द्वारस्य पार्श्वभागेन, ताडित आहतोऽस्मि, ततस्तस्मात्कारणात्, व्यक्तं न जानामि सैव स्यान्न वेति स्पष्टं न वेद्मि, तन्मुखानवलोकनान्निश्चितमत्र ज्ञानं मे किमपि नाभूत् । अयं, मनोरथः तद्विषयपरिज्ञानरूपोऽभिलाषः, भूतार्थः भूतः सञ्जातोऽर्थो निवृत्तिर्यस्य तादृशोऽभूत्, 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इति कोषः । वस्तुतत्त्वपरीक्षणाभिलाषो विनष्ट इत्यर्थः । वासवदत्तानुरूपाकृतिमितो निर्यान्तीं कान्तामेकां विलोकयता तद्विषयपरिज्ञानाय तामनुगन्तुमिच्छता मयापि निर्गन्तुमुपक्रान्तम्, किन्तु त्वरावशाद्गच्छता ततो वहिर्गमनद्वारपार्श्वप्रदेशात्सङ्घट्टनं प्राप्य तदाघातवेदनावशान्निरुद्धगतिना च गन्तुमग्रे न पारितं किमपि । अन्तरेऽस्मिन्नियं तु

---

राजा—( एकाएक उठकर ) वासवदत्ते ! ठहर, ठहर । हाय ! हाय !!

मैं ( वासवदत्ता का स्वरूप जानने की ) जल्दी में निकलता हुआ द्वार के बगल से टकरा गया । इससे यह मैं स्पष्टरूप से नहीं जानता कि यह वही है या नहीं ? मेरा ( इस विषय के जानने का ) मनोरथ व्यर्थ हो गया ॥ ७ ॥

[ प्रविश्य ]

*विदूषकः*—(क) अइ ! पडिवुद्धो अत्तभवं ।

*राजा*—वयस्य ! प्रियमावेदये, धरते खलु वासवदत्ता ।

---

( क ) अयि ! प्रतिबुद्धोऽत्रभवान् ।

---

दूरं निर्गता हन्त ! दृग्गोचरत्वं नोपगच्छति । अमुना च गतेः प्रतिरोधेन हेतुना निश्चितं न ज्ञायते मया, केवलं तदाकारसादृश्येन कल्प्यते 'सैव स्या'दिति । तद्वार्ता-परीक्षाचिकीर्षा च सेयं मे विनष्टा । दैवादिच्छापूर्तिर्न जातेति स्पष्टार्थः । दुर्दैवेऽपि केनापि सुदैवांशेन स्वप्नदशाया वासवदत्ताया जागरावस्थायां दर्शनावसर आनीतोऽपि सोऽयं भूयो बलवत्तरेण विरहवेदनामनुभावयता दुर्दैवदुर्विपाकेन मे समयेऽस्मिन्नकस्मादाच्छिन्नः । दुर्दैवं हि सुखं प्रतिरुणद्धीत्यहो ! मन्दभागिता ममेति भावः । अथवा—ततः पूर्वोक्तेन द्वारपार्श्वाभिघातेन गतेः प्रतिरोधात्, अयम् इदानीमनुभूतो वासवदत्तादर्शनरूपो विभ्रमः, भूतार्थो यथार्थः सत्यः किम् ? मनोरथः केवलं मानसिकी कल्पना वा किम् ? उभयत्र प्रश्नकाकुरियम्, इति वाक्यार्थः कर्मरूपः, व्यक्तं स्पष्टरूपेण, न जानामि । गतेरुपरोधाद्वासवदत्तादर्शनमिदं वास्तवं सङ्कल्पमयं वेति किमप्यहं निर्धारयितुं न प्रभवामीत्यर्थः । यद्वा—अयं मनोरथो, वासवदत्तादर्शनाभिलाषो भूतार्थः सत्यरूपोऽस्तीति न जानाम्यहम् । मनोरथस्य सत्यताकथनमिदं मनोरथविषयस्य सत्यतां गमयति । वासवदत्तादर्शनमिदं सत्यमस्तीति स्फुटं न ज्ञायते मयेति भावः । अनुष्टुब् वृत्तमिदम् ॥७॥

राजनि शयाने सति शैत्यवेदनापनोदनार्थिनः प्रावरणवस्त्रानयनार्थं पुरा सूचितं गमनमासीद्विदूषकस्य । इदानीं 'राजा प्रबुद्धः स्या'दिति सम्भावयतस्तस्य पुनः राज्ञः सन्निधावुपस्थितिं सूचयति—**प्रविश्येति** ।

तत्रोपगतो राजानं जाग्रतमालोक्य सप्रसादं विदूषको मानसं ब्रूते—**अइ** इति । अयीति प्रसन्नतासूचकमव्ययम् । अहो ! परमं प्रियमिदम्, श्रीमान् मान्यो महीपतिरिदानीं शयनादुत्थितो वर्तते ।

---

( प्रवेश कर )

विदू०—अरे आप जाग गये ।

राजा—मित्र ! खुशी की बात सुनाता हूँ, वासवदत्ता जीती है ।

विदूषकः—(क) अविहा ! वासवदत्ता ? कहिं वासवदत्ता ! चिरा खु उवरदा वासवदत्ता ।

राजा—वयस्य ! मा मैवम्,

**शय्यायामवसुप्तं मां बोधयित्वा सखे ! गता ।**

---

( क ) अविहा ! वासवदत्ता ? कुत्र वासवदत्ता ? चिरात् खलूपरता वासवदत्ता।

---

सञ्जातचरवासवदत्तादर्शनविषयकं प्रियं वृत्तं सुहृदमुपयातं विदूषकं निवेदयितुकामस्तदुचितं वचः प्रस्तौति राजा—**वयस्येति**। प्रियं प्रीतिकरम्, वृत्तमिति शेषः। धरते धत्ते, अत्र प्राणान् जीवितं वेति कर्मपदमर्थबलादाक्षेप्यम्, जीवतीत्यर्थः, खलु निश्चये। मित्रवर ! प्रसन्नतासूचकं वृत्तान्तमेतर्हि सूचयामि त्वाम्। जीवति वासवदत्ता। निश्चितमेतदवगच्छेत्यर्थः।

निशम्य राज्ञो वचनं विदूषकस्तदुक्तं निषेधन्नाह—**अविहेति**। कष्टमद्यापि वासवदत्ताया दर्शनं सम्भाव्यते ? क्व किलोपलब्धव्या, समयेऽस्मिन्कुतोऽद्य सा ? परलोकं प्रस्थितायास्तस्या भूयान्समयोऽतिक्रान्तः, दुर्लभं तद्दर्शनम्। मन्ये, विरहकार्तेण यत्किमप्यसम्भावितं प्रलप्यते भवतेत्यर्थः। 'वासवदत्ता दग्धे'ति चिरप्रसिद्धया तत्प्राप्तिरद्याऽसम्भवा, राजा तु विरहाकुलस्तत्सङ्कल्पेन यत्किञ्चिदेतत्प्रलपतीत्यभिप्रायाद्विदूषको राजोक्तं न्यषेधीत्।

विदूषकोक्तिं खण्डयन् राजा ब्रूते—**वयस्येति**। मा मा, नैवेत्यर्थः, एवं पूर्वोक्तप्रकारकम्, वादीरिति शेषः। 'वासवदत्ता नास्तीदानीं दुर्लभं च तद्दर्शन'मित्येवं मित्र ! त्वया न वक्तव्यम्।

तद्दर्शनविषयकं वृत्तं निर्दिशति—**शय्यायामिति**। सखे ! हे मित्र ! शय्यायां पर्यङ्के, अवसुप्तं शयितं मां, बोधयित्वा जागरयित्वा, सा वासवदत्तेति

---

विदू०—हाय ? वासवदत्ता, वासवदत्ता कहाँ ? वासवदत्ता को मरे बहुत दिन हुए।

राजा—मित्र ! नहीं, ऐसा नहीं।

मित्र ! पलंग पर सोते हुए मुझको वह जगाकर गई। पहले 'वासवदत्ता जल गई' यह

दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥ ८ ॥

प्रकरणबलादनुसन्धेयम्, गता दृशोरगोचरतां प्रयाता। सा च दग्धा भस्मीभूता, इतीत्थं ब्रुवता सूचयता रुमण्वता तदाख्येन मन्त्रिणा, पूर्वं पुरा, वञ्चितः प्रतारितः, अस्मीति भूतार्थे लट्, अभूवमित्यर्थः। पद्मावतीमस्वस्थामवगत्य तदवस्थावलोकनाय गतोऽहं यदा तदीयं गृहं, तदा तत्र तामनुपलभ्य तस्या एव शयनेक्षणं तत्प्रतीक्षयाऽवस्थितो निद्रितः स्मरणगोचरायमाणवासवदत्ताविषयकस्वप्नदर्शनसुखानुभवेषु मग्नोऽभूवम्। मन्ये च तत्रान्तरे मत्स्मरणमहिम्ना नु विदितवार्तया नु पद्मावतीं द्रष्टुमिच्छन्त्या वासवदत्तयापि तत्रोपस्थितम्। पद्मावतीशयननिशयानं मां पद्मावतीमेव पूर्वं मत्वा यथार्थं च ततो विदित्वा निद्रितं मां प्रबोध्य तया स्वयं ततो निर्गतम्। तत्क्षणमेव शयनादुत्थाय वासवदत्तायाः प्रियतमाया दुर्लभतमं दैवप्रदत्तं दर्शनं प्राप्य प्रसन्नेन तदानीं मया सप्रेम तामनुसर्तुमुद्यतम्। किन्तु त्वरितं ततो गच्छन्ती सा स्वरूपदर्शनशङ्कया हन्त!, दैवान्नयनपदवीं नोपयाता मे। पुरास्मात्तु लावाणकग्राममधितिष्ठत्सु कदाचित्तत्प्रवृत्तेन सहसा ग्रामदाहेन सा दग्धेति विश्वासपात्रेण मन्त्रिणा मे रुमण्वता सूचितमासीद्, अद्य यावत्तथैव च तत्सम्भावितमस्माभिः। परमद्य वासवदत्तायाः समुपलब्ध्या न तावत्तिरोहितमिदं यद्रुमण्वान्नाम तदानीं तदलीकवार्ताप्रख्यापनेन मां प्रतारितवान्। असत्यमेव तद्वचनं समयेऽत्र मे प्रतिभातीति भावः। अनुष्टुब् वृत्तम् ॥ ८ ॥

एतत्पद्यानन्तरञ्च—'पद्मावत्या मुखं वीक्ष्य विशेषकविभूषितम्। जीवत्यावन्तिकेत्येवं पूर्वं विज्ञातमेव मे' इत्येकं पद्यमादर्शपुस्तकेष्वनुपलभ्यमानं चिरभ्रष्टप्रचारमपि प्रसङ्गोचितं मत्वा योजितं—**श्रीगणपतिशास्त्रिमहोदयैः**। 'इदञ्च दशरूपकलक्षणप्रदर्शनावसरे **भावप्रकाशस्याष्टमेऽधिकारे** बीजसमुद्भेदोदाहरणत्वेन स्वप्नवासवदत्तादुद्धृत्य पठितं वासवदत्तागमनसाक्षात्कारेण सम्प्रत्यवधारितो वासवदत्ता जीवतीत्ययमर्थः पूर्वं साक्षात्कृतायाः पद्मावत्या मुखे वासवदत्ताकरकौशलैकनिष्पाद्यस्य तिलकवैचित्र्यस्य दर्शनेन स्वयं मे विदित एवासी'दित्याशयं प्रकाशयत्पद्यं राजकीयवचनत्वेन स्थानेऽस्मिन्नयौचित्यान्निवेशनीय'मिति तैः स्वकीयटीकायां प्रतिपादितम्। पूर्वमधुना च प्रदर्शितयोः 'पादाक्रान्तानि पुष्पाणि' 'पद्मावत्या मुखं वीक्ष्ये'ति पद्ययोरुपलब्धेष्वादर्शपुस्तकेष्वनुपलम्भेन **भासकृतता**

---

कह कर रुमण्वान् ने मुझे धोखा दिया ॥ ८ ॥

*विदूषकः*—(क) अविहा। असम्भावणीअं एदं ण। आ उदअह्लाणसङ्कित्तणेण तत्तहोदिं चिन्तअन्तेण सा सिविणे दिट्ठा भवे।

---

(क) अविहा! असम्भावनीयमेतन्न। आ! उदकस्नानसङ्कीर्तनेन तत्रभवतीं चिन्तयता सा स्वप्ने दृष्टा भवेत्।

---

**स्वप्नवासवदत्ता**दन्यदेव स्यादिदं '**स्वप्नवासवदत्त**'मित्याशङ्कामुपस्थाप्य तैः शास्त्रिवरैः 'उपलब्धेष्वादर्शपुस्तकेषु पद्ययोरनयोः सद्भावस्यानुमातुं शक्यतया **भास**रचितग्रन्थाद् भिन्नत्वकल्पनमेतस्य ग्रन्थस्य नोचितं प्रतीयत' इत्येवं समाहितम्। अस्तु तावत्, नाटकमिदं तदेवान्यद्वेति विषये किमपि नेदानीं वक्तव्यमस्माभिः प्रकाशयिष्यते च विषयेऽस्मिन् ग्रन्थावसाने स्वकीयं वक्तव्यं भूमिकायाम्। इदं तावदत्रावगन्तव्यम्—वासवदत्ताकरकौशलैकनिष्पाद्यं पद्मावत्यास्तिलकमवलोक्य 'जीवत्यावन्तिके'त्यनुमाने कर्तुं सुशकेऽपि 'आवन्तिकेयं वासवदत्तैवे'ति यौगन्धरायणं विहाय न कोऽपि जानाति, वासवदत्तामिदानीं स्वप्नगतां पश्यन् शयनादुत्थितो राजा तत्रैनामुपलभ्य जीवन्तीं विदितवान्, किन्तु 'आवन्तिका'रूपेण ज्ञानं तस्य नासीद्वासवदत्तायाः'। इत्यतो 'जीवत्यावन्तिके'ति पदस्योल्लेखात्तत्प्रयोगस्य च राज्ञो वचनेऽत्यन्तमनुचितत्वाच्छ्लोकोऽयममूल एव केनापि प्रक्षिप्त इति प्रतिभाति। अन्यच्च—पद्यस्यास्य चतुर्थे चरणे पाठान्तराणि स्वयं शास्त्रिमहाभागैः कल्पितान्युपन्यस्तानि। प्राचीनपाठपरिवर्तनपुरःसरं स्वकल्पनानुरूपपाठान्तरकल्पनं पुनर्दुःसाहसमात्रतां प्रदर्शयदनौचितीमेव पुष्णातीत्यम्।

वासवदत्ताविषयकं राज्ञः शोकानुभावमवलोक्य स्नेहवशात्तत्र शोकमात्मनोऽपि प्रकटयन् विदूषको ब्रूते—**अविहा** इति। अविहेत्यव्ययं शोकसूचकम्, शोकश्च वासवदत्तागमनश्रवणादेव। एतत् वासवदत्तादर्शनम्। 'मित्र! वासवदत्ता मया दृष्टा, सा मां बोधयित्वा गता' इति यद्भवतोक्तं तत्तावदसम्भावनीयं नास्ति, सम्भवत्येतत्। कथमिति चेत्पूर्वोदन्तस्मरणेन वासवदत्तादर्शनस्य सम्भाव्यतामेवाह—आ इति। आ इति च तद्दर्शनकारणस्मरणाभिनयनम्। सखे! स्मृतं मया

---

विदू०—हाय? यह असभव नहीं। हाँ (ठीक है), उज्जयिनी के नहाने के स्थानों का वर्णन मैंने किया था, उससे माननीया वासवदत्ता की याद करते हुए आपने उसे स्वप्न में देखा होगा।

राजा—एवम्, मया स्वप्नो दृष्टः ?

यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम्।
अथायं विभ्रमो वा स्याद्, विभ्रमो ह्यस्तु मे चिरम् ॥ ९ ॥

---

वासवदत्तादर्शनोपलब्धेः कारणम्, किन्तु तद्दर्शनं स्वप्नावस्थायां सुसम्भवं न किल जाग्रदवस्थायाम्। 'उज्जयिन्यामुदकस्नानानि परमं रमणीयानि सन्ती'त्येवं मया यद्वर्णितं पुरा कथाख्यानप्रसङ्गे, तदेतदाकर्ण्य भवता श्रीमतीं वासवदत्तां हृदन्तर्ध्यायता सुप्तेन स्वप्नावस्थायां तद्दर्शनं लब्धं स्यात्। स्वप्ने च दृष्टं वस्तुजातं जागर्तौ सत्यां नोपलब्धं भवतीति भवद्बोधने तद्गमनं सम्भवत्येवेति भावः। अथवा—एतत् वासवदत्तागमनं रुमण्वद्वचनं च। असम्भावनीयम् अकल्पनीयम्, नेति काकुः। असम्भावनीयमेवेत्यर्थः। 'दर्शनगोचरतां प्रयाता वासवदत्ता भवन्तं बोधयित्वा गता। अन्यथोक्तवता च पूर्वं रुमण्वता भवान् वञ्चित' इत्येतन्नैव सम्भावनीयम्। एतादृक्कल्पनापि न कर्तुं शक्या। विश्वासपात्रस्य रुमण्वतो मिथ्याभाषणेन भवत्कर्मकं प्रतारणं, तेन वासवदत्तादर्शनं चेति वार्ता न विश्वसनीयेति भावः।

विदूषकोक्तौ सवितर्कमाह राजा—**एवमिति**। इत्थमिदम्? किमहं स्वप्नं दृष्टवान्? स्वप्नबलेन च मे तद्दर्शनम्? राज्ञः काकूक्तिरियम्।

पुनस्तत्रापि तर्कयति राजा—**यदीति**। यदि चेत् भवद्वचनाभ्युपगमे इति यावत्, तावद्वाक्यालङ्कारे, अयं वासवदत्तादर्शनरूपो विषयः, स्वप्नः स्वप्नरूपो वर्त्तते, तर्हि अप्रतिबोधनं ततो जागराऽभावः, धन्यं समीचीनं मन्य इति शेषः। स्वप्ने हि वासवदत्तादर्शनादिविषयाणामुपलब्धेस्तदानीं तदानन्दसन्दोहमनुभवतो जाग्रदवस्थायाः स्वप्नावस्थैव मे बहुमतेति भावः। अथवा पक्षान्तरे 'नायं स्वप्नः किन्तर्हि जागर्तिरेवे'ति कल्पनायाम्, अयं वासवदत्तादर्शनरूपो विषयः, विभ्रमो वा, वेति पादपूरणे, ममोभ्रान्तिः, स्याद्भवेदिति सम्भावना। विभ्रमो हि, हिशब्दोऽप्यर्थे, सा मानसी भ्रान्तिरपि, मे मम, चिरं बहुकालं यावत्, अस्तु जायताम्।

---

राजा—ऐसा, मैंने स्वप्न देखा ?

यदि यह स्वप्न है तो न जागना ही अच्छा होता। अथवा यह मेरा भ्रम हो, किन्तु वह भी बहुत देर के लिये बना रहे ॥ ९ ॥

*विदूषकः*—(क) भो ! वअस्स ! तदस्सिं णअरे अवन्तिसुन्दरी णाम जक्खिणी पडिवसदि । सा तुए दिट्ठा भवे ।

*राजा*—न न,

**स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।**
**चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥ १० ॥**

---

( क ) भो ! वयस्य । एतस्मिन् नगरेऽवन्तिसुन्दरी नाम यक्षी प्रतिवसति । सा त्वया दृष्टा भवेत् ।

---

वासवदत्तादर्शनमिदं स्वप्नसम्भवं न चेद् , भ्रान्तिमूलकं सम्भवति । प्रबुद्धावस्थायामपि सङ्कल्पवलान्मनस उन्मादवशाद्यत्र कुत्रापि कस्यचिच्चिन्तितार्थभ्रमो भवितुमर्हति । किन्तु सेयं तद्विषया भ्रान्तिरपि मे भूयांसं समयं यावदनुवर्तताम् । तावदेव क्षणं मनोऽनुरञ्जनस्य सम्भवादिति भावः । अनुष्टुब् वृत्तम् ॥ ९ ॥

स्मृतिगतस्यानुभूतचरस्य वस्तुनो भ्रान्तिस्तत्समानवस्त्वन्तरदर्शनात्सम्भवतीति वस्त्वन्तरदर्शनं राज्ञः संभाव्यमानं विदूषको निर्दिशति—**भो** इति । मित्र ! नाम्नाऽवन्तिसुन्दरी कापि यक्षी पुरमेतदलङ्करोति निजावासेन । अवन्तीनगरे सकललोकातिशायि सौन्दर्यं वहन्तीयं यथार्थनामधेयाऽवन्तिसुन्दरी वासवदत्तामनुकरोत्यात्मनो रूपवेषाभ्याम् । तस्या एव दर्शनमिदानीं भवता लब्धं स्यादित्यहं सम्भावये ।

तन्निषेधन्नाह राजा—**न नेति** । द्वौ नञौ प्रकृतार्थं द्रढयतः । न हि भोः ! अवन्तिसुन्दरी न दृष्टा मया, लोचनगोचरतां गता मे वासवदत्तैव साऽऽसीत् । अत्र निश्चयो मे ।

तथाहि—**स्वप्नस्यान्ते** इति । स्वप्नस्यान्ते स्वप्नावस्थायां निवृत्तायां, विबुद्धेन जाग्रदवस्थायां स्थितेन, मयेति शेषः, चारित्रमपि, चरित्रमेव चारित्रमिति स्वार्थिकोऽण् प्रत्ययः, अपिशब्देन जीवितमाक्षिप्यते, जीवितेन सह पतिव्रतानुरूपं

---

विदू०—हे मित्र ! इस राजकुल में एक अवन्ति-सुन्दरी नाम की यक्षिणी ( चुड़ैल ) रहती है । वह आप से देखी गई होगी ।

राजा—नहीं, नहीं ।

नींद के टूटने पर जागते हुए मैंने (प्रोषितभर्तृका स्त्री के योग्य) चरित्र की रक्षा करने वाली उस वासवदत्ता के बिना काजल की आँखवाले तथा लम्बे छूटे हुए बाल वाले मुख को देखा ॥ १० ॥

अपि च—वयस्य ! पश्य पश्य,

योऽयं सन्त्रस्तया देव्या तया बाहुर्निपीडितः ।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥ ११ ॥

---

शीलमपीत्यर्थः, रक्षन्त्याः पालयन्त्याः, वासवदत्ताया इति विशेष्यं प्रकरणानुरोधाद्गम्यम्, नेत्रविप्रोषिताञ्जनम्, नेत्राभ्यां विप्रोषितं प्रवासं गतं दूरीभूतमिति यावत् अञ्जनं कज्जलं यत्र तादृशम्, दीर्घालकम्, दीर्घा लम्बमाना अलकाश्चूर्णकुन्तला यत्र तथाभूतं च- मुखं वदनं, दृष्टं साक्षात्कृतम् । निद्रावसाने यदाहं प्रबुद्धोऽभवं तदा वासवदत्तामुखं दृष्टवान् । नेत्रे तस्या अञ्जनशून्ये अलकाश्च केशानां यथावदसंयतत्वेन परितः प्रसर्पन्तो लम्बमाना आसन् । सा किल मद्वियोगेऽस्मिन्न केवलं कष्टमयं जीवितम्, अपि तु तेन समं सतीजनोचितमाचारमप्यय यावत्समीचीनं रक्षतीत्येतन्मया प्रत्यक्षमनुभूतम् । अतो हि विशिष्य तन्मुखदर्शनेन प्रत्यभिज्ञाबलात्सेयं वासवदत्तैवेति दृढं निश्चिनोमीत्यर्थः । प्रोषितभर्तृकाभिर्नेत्रयोरञ्जनसम्बन्धो वेणीबन्धश्च सर्वथा परिहरणीय इत्यत्र प्रकल्पितेन 'नेत्रविप्रोषिताञ्जनं दीर्घालक'मित्यनेन मुखस्य विशेषणद्वयेन विरहव्यथावैकल्येऽपि वासवदत्तायाः सतीजनाचारपरिपालनव्रतमक्षुण्णमनुस्यूतमेवास्तीति गम्यते । तच्च 'चारित्रमपि रक्षन्त्या' इति विशेषणवचनेन कविना भृशं व्यक्ततां नीतम् । अनुष्टुप् छन्दः ॥ १० ॥

उक्तार्थसाधनाय स्वशरीरसमुद्भूतं चिह्नं च किञ्चिद्दिदर्शयिषू राजा तदुचितां वाचमवतारयति—**अपि चेति** । 'पश्य पश्ये'ति द्विरुक्तिर्वक्ष्यमाणस्य सम्यङ्निरूपणीयतां सूचयति । वक्ष्यमाणोऽर्थः कर्म । मित्र ! वासवदत्तासाक्षात्कारैकलक्षणं मया वक्ष्यमाणमिदमन्यदपि लक्षणं समीचीनतयाऽवधारयेत्यर्थः ।

तथाहि—**योऽयमिति** । सन्त्रस्तया मत्प्रबोधसम्भावनाभीतया, तया देव्या वासवदत्तया, अयं पुरो दृश्यमानो, यो बाहुर्मम भुजो, निपीडितः स्वकरेण गृहीतः, स्वप्ने स्वप्नावस्थायामपि, उत्पन्नसंस्पर्शः, उत्पन्नः सञ्जातः संस्पर्शो दयिताकरसम्पर्को यत्र तादृशः, स बाहुरिति शेषः, रोमहर्षं रोमाञ्चं, न मुञ्चति अद्यापि न त्यजति ।

---

और भी मित्र ! देखो, देखोः—

(कहीं ये जाग न जाँए इस विचारसे) डरती हुई उस देवी ने यह जो मेरा हाथ पकड़ा, वह निद्रावस्था में भी स्पर्श हो जाने से अपने में उत्पन्न रोमाञ्च को अभी तक नहीं छोड़ता है, अर्थात् अभी तक वह हाथ रोमांचित ही है ॥ ११ ॥

विदूषकः—(क) मा दाणिं भवं अणत्थं चिन्तिअ। एदु एदु भवं। चउस्सालं पविसामो।

[ प्रविश्य ]

(क) मेदानीं भवाननर्थं चिन्तयित्वा। एत्वेतु भवान्। चतुःशालं प्रविशामः।

अयं भावः—अत्रागत्य चिरकालस्पृहणीयोपलब्धमदीयदर्शनसम्भवानन्दसन्दोहसंरम्भवशान्मद्भुजपरिरम्भणं कर्तुकामा प्रिया मे वासवदत्ता प्रणयेन मदीयं भुजं गृहीतवती। स्वप्नगतेनापि तत्पाणिपङ्कजस्पर्शेन भुजो मे रोमाञ्चितोऽभूदयम्। अयमसौ सात्त्विकभावः प्रियतमापाणिपङ्केरुहस्पर्शमन्तरेण न सम्भवतीति वासवदत्तादर्शनोपलब्धिपक्षोऽयं दृढं सिद्ध एव। कमपि नात्रावकाशं लभतेऽवन्तिसुन्दरीसम्बन्ध इति। छन्दोऽनुष्टुप्॥ ११॥

प्रियतमास्मरणमुग्धमानसमवधार्य सुहृदं राजानं तदनुचिन्तनविषयान्निवर्तयितुकामो विदूषकस्तदुचितं वचनमाह—**मेति**। अनर्थम् असम्भवनीयमर्थम्। 'एदु एदु' इति वीप्सा चतुःशालगमनत्वरासूचिका। चतुःशालं च—चतसृभिः शालाभिः परस्पराभिमुखीनाभिर्भूषितं गृहम्। 'प्रविशाम' इति तु 'अस्मदो द्वयोश्चे'ति बहुत्वम्, विध्यर्थे च वर्तमानप्रयोगोऽयम्। वासवदत्तोपलब्धेत्येतदसम्भावनीयं न नाम चिन्तनीयं भवता। अलमतीतमर्थान्तरमफलं दुःखकरं चिन्तयित्वा। सत्वरमागम्यताम्, चतुःशालमुद्दिश्य साम्प्रतं प्रस्थानमावाभ्यां क्रियतामित्यर्थः। अत्रावस्थितौ सत्यामनुभूतविषयस्मरणाद्विरतिश्चेतसो नियतं राज्ञो दुष्करेति स्थाने खलु ततः स्थानात्प्रस्थानप्रस्तावोऽयं विदूषकस्य। अत्र माङ्योगे 'चिन्तयित्वे'ति क्त्वाप्रत्ययश्चिन्त्यः। केचिदलङ्खल्वोरुपलक्षणार्थकत्वकल्पनया माङोऽपि योगे कथञ्चित्साधयन्तीमम्।

इत्थमयं वासवदत्ताविषयको वत्सराजकल्पितः स्वाप्नो विषयः सरसं निरूपितः। अधुना च सपत्नापहृतराज्यप्रत्याहरणलक्षणप्रधानकार्यसंपादनौपयिकं महाराजदर्शकसूचनानुरूपं सपत्नारुणिकर्मकाक्रमणं नाम करणीयं कार्यं लब्धावसरमावेदयितुं नृपतेरुदयनस्य समीपे दर्शकभूपतिप्रेरितस्य काञ्चुकीयस्य प्रवेशमुचितं दर्शयति कविः—**प्रविश्येति**।

---

विदू०—अब व्यर्थ यह न सोचिये। आइये आप आइये। चौसाल में चलें।

( प्रवेश कर )

काञ्चुकीयः—जयत्वार्यपुत्रः । अस्माकं महाराजो दर्शको भवन्तमाह-एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदायेनोपयातः खल्वारुणिमभिघातयितुम् । तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि सन्नद्धानि । तदुत्तिष्ठतु भवान् । अपि च—

---

जयत्विति । वचनं चेदं राजानमुपजग्मुषो राजविजयाभिलाषिणः काञ्चुकीयस्य समुदाचारानुरूपम् । आर्यपुत्रः श्रीमान्, जयतु सर्वोत्कर्षेण वर्तताम् । विजयतां तत्रभवान् वत्सराज इत्यर्थः । 'आर्यस्य पुत्र' इति षष्ठीतत्पुरुषाश्रयणेन संसाधितमत्रार्यपुत्रपदम् 'आर्यस्य पुत्रोऽप्यार्य एव भवती'ति तात्पर्यं कलयतः काञ्चुकीयस्य वचनेऽस्मिन् राज्ञः श्रेष्ठतां द्योतयितुं प्रयुक्तम् । 'आर्यश्चासौ पुत्रश्चे'ति कर्मधारयो वाश्रयणीयः । अयमप्यर्थो राज्ञः शुभाशंसनं कुर्वतो वृद्धस्य काञ्चुकीयस्य वचने युज्यत एव । इत्यनाचारसुचितं प्रदर्श्य साम्प्रतं प्रस्तुतार्थमुपक्षिपन् ब्रूते काञ्चुकीयः—अस्माकमिति । अत्र षष्ठ्यन्तोऽस्मत्पदप्रयोगः काञ्चुकीयस्य स्वामिविषयं भक्तिभावं गौरवं चात्यधिकं प्रकाशयति । खलुपदद्वयं वाक्यालङ्कारे । बलसमुदायेन सैन्यसमूहेन, सहेति शेषः, उपयात उपस्थितः, अभिघातयितुं नाशयितुम्, हन्तेर्णिजन्तात्तुमुनि 'हनस्तोऽचिण्णलो'रिति तकारान्तादेशे 'हो हन्ते'रिति कुत्वे च रूपमिदम् । अत्र तावदुदयनो हन्तेः स्वतन्त्रः कर्ता प्रयोजकश्च रुमण्वान् बोध्यः । हस्त्यश्वरथपदातीनि,हस्तिनोऽश्वा रथाः पदातयश्च येषु सन्ति तादृशानि, मामकानि मत्सम्बन्धीनि, ममेत्यर्थेऽस्मच्छब्दात्पाक्षिकेऽण्प्रत्यये 'तवकममकावेकवचने' इत्यनेनास्मदो ममकादेशः, महाराजदर्शकस्वामिकानीत्यर्थः, विजयाङ्गानि विजयसाधनानि, सैन्यानीति शेषः, सन्नद्धानि सज्जानि सन्ति । तदिति हेत्वर्थकमव्ययम्, उत्तिष्ठतु विजययात्रार्थमुद्यतो भवतु । अयमर्थः—अस्मन्महाराजदर्शकमहोदयाः श्रीमन्तं निवेदयन्ति, यत्किल श्रीमन्त्रिणा रुमण्वता परिपन्थिनमारुणिं भवता प्रमाथयितुमिच्छता महान्तं सेनासमूहमात्मना सममादाय सम्प्रत्यत्रोपस्थितम् । हस्त्यश्वरथपादातं च मे सेनाङ्गचतुष्टयं जयैकसाधनं सर्वतः सज्जीभूतं श्रीमदागमनं प्रतीक्षते । अतः श्रीमतापि

---

कंचुकी—महाराज की जय हो । हमारे महाराज दर्शक ने आप से कहा है कि—यह आपका मन्त्री रुमण्वान् बड़ी सेना के साथ आरुणि का आपके द्वारा समूल नाश करने के लिए आ पहुँचा है । तथा मेरी विजय-सहायक हाथी, घोड़े, रथ और पैदल आदि सेनाएँ भी तयार हैं । तो आप उठिये । और भी—

भिन्नास्ते रिपवो, भवद्गुणरताः पौराः समाश्वासिताः
पार्ष्णी यापि भवत्प्रयाणसमये तस्या विधानं कृतम् ।
यद्यत् साध्यमरिप्रमाथजननं तत्तन्मयानुष्ठितं
तीर्णा चापि बलैर्नदी त्रिपथगा, वत्साश्च हस्ते तव ॥१२॥

---

सोत्साहं विपक्षमारुणिमभियातुमुद्यतेन भूयताम् । निश्चिन्तोपवेशनस्य नायं समयः, उत्थानावसर एष श्रीमतः समुपस्थितोऽस्तीति भावः। आक्रमणकार्योचितानि संविधानकान्यपि यथोचितमारचितानीत्यपि सूचयन्नाह—**अपि चेत्यादि ।**

**भिन्नास्ते** इति । ते मिथः संहता अपीति यावत्, रिपवः शत्रवः, भिन्नाः भेदं प्रापिताः परस्परं विरोधप्रोद्भावनेन पृथक्कृताः । भवद्गुणरताः भवदीयेषु दया-दाक्षिण्यादिगुणेष्वनुरागं वहन्तः, पौराः पुरे भवा नागरिकाः प्रजा इति यावत्, 'तत्र भव' इत्यण् प्रत्ययः, समाश्वासिताः 'विजयलक्ष्म्याऽलङ्कृतः श्रीमान् वत्स-राजोऽचिरादेव लब्धराज्यो भवतः पालयिष्यती'ति समाश्वासनदानेन सम्यक्सम्भा-विताः । अपि तथा, या पार्ष्णी सैन्यपृष्ठं, भवत्प्रयाणसमये भवदीयसमरविजय-यात्रावसरे, रक्षणीयतयोपयुज्यत इति शेषः, तस्या विधानं कृतं तद्रचना साधु संपा-दिता । सैन्यपृष्ठं यथा रक्षितं स्यात्तथा तदुचित उपायः कल्पित इत्यर्थः । पार्ष्णिः स्यात्कुन्मदः स्त्रियाम्, स्त्रियां द्वयोः सैन्यपृष्ठे' इति मेदिनीकोषप्रामाण्यात् पार्ष्णि-शब्दः स्त्रीलिङ्गः, 'कृदिकारादक्तिन' इति ङीपि पार्ष्णीशब्दोऽपि सिध्यति । अरिप्र-माथजननं शत्रुविध्वंसकं, यद्यत्कार्यं, साध्यं साधनीयमासीत्, तत्तत्सर्वं मया दर्शके-नेति यावत्, अनुष्ठितं संसाधितम् । त्रिपथगा त्रयाणां स्वर्गमृत्युपातालात्मनां पथां मार्गाणां समाहारस्त्रिपथमिति द्विगुः, तेन गच्छति सेत्युपपदसमासः, नदी गङ्गा नाम पुण्या सरित्, बलैः सैन्यैः, तीर्णा तरणविषयं नीता। एवंविधाखिलसाधनसंपा-दनवशाद्भाविनीं कार्यसिद्धिं प्राप्तकालां सूचयति—**वत्साश्चेति ।** वत्साः वत्स-

---

आप के शत्रुओं में फूट कर दी गई अर्थात् उनमें भेद डाला गया, आपके गुणों में लग्न नागरिकों को पूरा धीरज दिया गया । चढ़ाई करते समय आपकी सेना के पृष्ठभाग के रक्षण की व्यवस्था भी अच्छी की गई है । शत्रुओं का नाश करने के लिए जो जो करना चाहिए वह सब मैंने ठीक कर लिया है। सेना ने गंगा नदी भी पार कर ली। अब वत्सदेश भी ( जो शत्रु के अधीन हो गया था ) आप अपने हाथ में आ गया समझिये ॥ १२ ॥

राजा—[ उत्थाय ] बाढम् । अयमिदानीम् ,

**उपेत्य नागेन्द्रतुरङ्गतीर्णे तमारुणिं दारुणकर्मदक्षम् ।**
**विकीर्णबाणोग्रतरङ्गभङ्गे महार्णवाभे युधि नाशयामि ॥ १३ ॥**

---

देशाश्च, 'जनपदवाचिनः शब्दा भूम्नि प्रयुज्यन्ते' इति सङ्केतानुसारं बहुत्वमिदम् , तव भवतः, हस्ते करगतास्त्वदधीनाः सन्तीति सम्भावनीयम् । शत्रूणां परस्परं भेदः, शात्रवाधीनतां प्राप्तवतां पूर्वानुभूतभवद्गुणगणानुरागशालिनां पौराणां 'सत्वरं कष्टान्मुक्तिर्भविष्यती'ति वचनेन सम्यगाश्वासनं, समरप्रयाणसमयोचितः सैन्यदृष्टरक्षोपायश्चेति सर्वं सम्पादितम् । किं बहुना—शत्रुविध्वंसनोचितं सकलमपि संविधानकमारचितम् । सेनापि गङ्गाया उत्तरतीरं गता सती सन्नद्धाऽवतिष्ठते । सति चैवंविधे व्यतिकरे पुनर्वत्सदेशसाम्राज्यशासनरज्जुरचिरादेव भवत्करगता स्यादित्येतन्निश्चितमवगम्यतामित्यर्थः । यथोचितकल्पितोपकरणैः सम्पादितमिदं सर्वं भवत्करिष्यमाणसपत्नाभिगमनोचितकार्यानुकूल्यं मन्मुखेन श्रीमहाराजदर्शको भवन्तं निवेदयन् समरायोत्थापयितुमाकाङ्क्षतीत्यविलम्बेन भवतापि तत्प्रयाणायोद्यमः सम्यगवलम्बनीय इति भावः । शार्दूलविक्रीडितं नाम वृत्तम् ॥ १२ ॥

समयोचितसमरसन्नाहसूचकं काञ्चुकीयवचनं निशम्य राजा शौर्यभावोद्भेदभावितं समरोत्साहमभिनयन्ब्रूते—**उत्थायेत्यादि** । बाढं साधु । समीचीना व्यवस्थेयं कृता । भवत्स्वामिनो निदेशमनुसृत्य समुपस्थितेऽस्मिन् महति सङ्ग्रामसंरम्भे स्वकर्तव्यं सम्पादयितुमहमप्युद्यतोऽस्मीत्यर्थः । 'अयमिदानी'मिति वक्ष्यमाणश्लोकान्वयि ।

**उपेत्येति** । इदानीं समयेऽस्मिन् , सिद्धेषु युद्धोचितसाधनेषु, अयमहम् , उपेत्याभिगम्य शत्रुमाक्रम्येति यावत् , नागेन्द्रतुरङ्गतीर्णे, नागेन्द्रैर्गजश्रेष्ठैस्तुरगैश्च तीर्णे तरणक्रीडाविषयीकृते, विकीर्णबाणोग्रतरङ्गभङ्गे, विकीर्णा व्याप्ताः बाणाः शराः उग्रा भीषणास्तरङ्गभङ्गा ऊर्मीणां लहर्य इव यस्मिंस्तादृशे, अतएव महार्णवाभे महार्णवस्य आभेवाभा यस्य तथाभूते महासमुद्रसदृशे, युधि युद्धे, दारुणकर्मदक्षम् , दारुणेषु कष्टकरेषु कर्मसु दक्षं निपुणं, तं प्रसिद्धं राज्यापहारिणम् ,

---

राजा—( उठ कर ) ठीक अभी यह मैं—

जाकर उस घोरकर्म में चतुर आरुणि को हाथी और घोड़ों से पार किये-गये और चलाये हुए बाणरूपी भयानक-तरंग वाले महोदधि-तुल्य युद्ध में मारता हूँ ॥ १३ ॥

[ निष्क्रान्ताः सर्वे । ]

पञ्चमोऽङ्कः ।

## अथ षष्ठोङ्कः ।

---

आरुणिं तन्नामकं शत्रुं, नाशयामि उन्मूलयामि नामशेषं करोमीत्यर्थः। एषोऽहं चतुरङ्गसेनया शत्रुमाक्रमन् गजवाजिसञ्चारसङ्कुले बाणजालाच्छन्ने रणाङ्गणे दुष्टमात्मनः शत्रुं निपात्य समूलं विध्वंसयाम्यधुना । कोऽयं मत्पुरो वराकः स्थातुं समर्थः ? अचिरादेव निष्कन्टकं प्रियतमासहचरोऽनुभूतचरं राज्यसुखं निर्वेक्ष्यामि चिरं यथारुचीति भावः । स्त्रियामित्यधिकारे युध्धातो सम्पदादित्वात्क्विपि स्त्रीवाची युधशब्दः सिध्यति । कोपोऽपि 'समित्याजिसमिद्युधः' इति स्त्रीवाचकशब्दसाहचर्येण शब्दस्यैतस्य स्त्रीरूपमेव लिङ्गं ग्राहयति । अत्र तु महार्णवाभे इति विशेषणानुगुण्येन पुंसि प्रयुक्तः शब्दोऽयं प्राचां महाकवीनां क्वचित्प्रयोगविषये सर्वतन्त्रापरतन्त्रतां सूचयन्निरङ्कुशतामाविष्करोति । अत्र किल युद्धं समुद्रेणोपमातुं तदुचितं बाणांस्तरङ्गैर्गजतुरङ्गमांश्च तरणशीलैः प्राणिभिः सादृश्यं प्रापितवान् कविः । उपेद्रवज्राभिधं वृत्तमिदम् , 'उपेन्द्रवज्रा जतजास्ततो गौ' इति च तल्लक्षणम् ॥१२॥

युद्धोपक्रमं नाम भविष्यत्कार्यं संसूच्य तदनुरूपं प्रसङ्गान्तरमवतारयितुं ततः सर्वेषां निष्क्रमणं दर्शयितु—**निष्क्रान्ता** इति ।

**पञ्चमोऽङ्क** इति । पञ्चमाङ्कस्य समाप्तिं सूचयत्येतत् ।

**इति श्रीस्वप्नवासवदत्तव्याख्यायां प्रबोधिन्यां पञ्चमोऽङ्कः ।**

पञ्चमाङ्कसमाप्त्यनन्तरं क्रमप्राप्तः षष्ठाङ्कारम्भस्तावदिदानीमभिधीयते—**अथ षष्ठोऽङ्कः** इत्यनेन ।

पद्मावतीशिरोवेदनाजनीताऽस्वस्थताधिगमान्नवोढपद्मावतीशयनसदनोपस्थितेन स्वप्नावसानसमयसनुपागतस्मरणीयप्रियतमवासवदत्ताऽभिलषणीयदर्शनसौभाग्यसम्बन्धं विदूषकाऽनङ्गीकृतमनुभवता श्रीमता वत्सराजेन महाराजदर्शकनिदेशवशंवदेन सोत्साहं परिपन्थिनमारुणिं प्रत्यभियानाय सन्नद्धमित्येतत्पञ्चमाङ्कसमाप्तौ प्रतिपादितम् । चरमे च षष्ठेऽङ्के–'घोषवती नाम वीणा वासवदत्तीया केनापि

---

( सब चले जाते हैं । )

पाँचवां अंक समाप्त ।

[ ततः प्रविशति काञ्चुकीयः । ]

काञ्चुकीयः—क इह भोः ! काञ्चनतोरणद्वारमशून्यं कुरुते ?

वादितां श्रुतवतो वत्सराजस्य तच्छ्रावणितत्तदैव समं प्रियाऽनवाप्तिमूलको मानसः शोकाविर्भावः, तत्रैव तत्समीपे महासेनभूपतिना देव्या च महाराज्या प्रेषितयोर्नूतनराज्यलाभविजयाभिनन्दनाय कुशलवृत्तान्तावगतये च दूतयोरुपस्थितिः, वत्सराजस्य स्वसमीपे पद्मावत्युपस्थानम्, महाराज्ञीप्रेरितदूतीकर्तृकं वत्सराजाय वासवदत्ताचित्रपटसमर्पणम्, चित्रदर्शनेन तदाकारसंवादात्पद्मावत्याः स्वान्तिकन्यस्तायामावन्तिकायां वासवदत्तात्वशङ्का, पद्मावत्याः सविधे पूर्वं न्यासरूपेण स्थापितां वासवदत्तां ग्रहीतुं यौगन्धरायणस्य तत्रागमनम्, स्वसमीपोपनीतावन्तिकावलोकनेन राज्ञोऽपि तत्र महासेनपुत्रीत्वसम्भावना, अपनीतकपटवेषयौगन्धरायणस्वरूपपरिचयो, रहस्योद्भेदपुरःसरं यौगन्धरायणेन कृतं वासवदत्तावियोजनरूपस्वापराधक्षमाप्रार्थनं महासेनमहाराजसमीपे सर्वेषां प्रस्थानप्रस्तावश्चेति विषयाः सकौशलं प्रदर्शिताः।

तत्र तावद् भूपतेरुदयनस्य पुनर्वत्सराज्यलाभं, घोषवतीवीणोपलब्ध्या वासवदत्तास्मरणेन विमनायमानमानसमुदयनं भूपतिमुद्दिश्य, महाराजमहासेनसन्देशवचनं च काञ्चुकीयप्रतीहारीभ्यां मध्यमनीचपात्राभ्यां मिश्रविष्कम्भकेण सूचयितुं तदुचितमादौ काञ्चुकीयस्य प्रवेशं दर्शयति—**ततः प्रविशतीत्यादिना** ।

महाराजमहासेननृपतेः सन्देशहरोऽयं काञ्चुकीयः सन्देशवार्तां तां निवेदयितुमिच्छन् राजद्वारान्तिकमागतो 'वत्सराजस्य भूपतेर्द्वारपालत्वेन क इहोपस्थितोऽस्ति, येन मे सन्देशस्तं प्रति प्राप्येते'ति तात्पर्योचितं तथाऽनुयुङ्क्ते—**क इहेति** । तत्रस्थं जनमुद्दिश्य 'भोः' इति सम्बोधितमत्र । काञ्चनतोरणद्वारम्, काञ्चनं सुवर्णमयं च तत्तोरणद्वारं बहिर्द्वारं तत् । अत्र 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरेण तोरणशब्दादेव बहिर्द्वाररूपेऽर्थेऽवगते पुनर्द्वारशब्दोपादानात्तोरणशब्दस्य 'बहि'रित्येवार्थः करणीयः, अथवा द्वारपदप्रयोगः स्पष्टार्थप्रतिपत्तये । अशून्यं सनाथम् । 'कः पुनरत्र राजभवनस्य द्वारभूमौ स्थितः सन् स्वीयं कार्यं कुर्वन्ननवरतं जागर्ती'ति प्रश्नाभिप्रायः ।

---

( तब कंचुकी का प्रवेश । )

कंचुकी—हे ! यहाँ कौन है ? सुवर्ण के बने हुए बाहर के द्वार को कौन सनाथ करता है ?

[ प्रविश्य ]

*प्रतीहारी*—(क) अय्य ! अहं विजआ। किं करीअदु ?

*काञ्चुकीयः*—भवति ? निवेद्यतां निवेद्यतां वत्सराज्यलाभप्रवृद्धोदयायोदयनाय—एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चु-

---

(क) आर्य ! अहं विजया। किं क्रियताम् ?

---

प्रश्नसमकालमेव समुचितप्रवेशां प्रतीहारीमुपस्थापयति-**प्रविश्येति**। प्रतीहारत्वजातिविशिष्टा स्त्री प्रतीहारी, गौरादित्वान्ङीप् द्वारपालिकेति यावत्। रङ्गस्थले समुपस्थाय ब्रूत इत्यर्थः।

तदेव तद्वचनमाह-**अय्येति**। अयि ! मान्य ! एषाहमत्रास्मि विजयानाम्नी समुपस्थिता। किं करणीयमस्ति मया ? मत्कार्यं कार्यमादिश्यतां भवतेत्यर्थः।

ततः स्वीयमागमनं निवेदनीयं सूचयन्नाह काञ्चुकीयः—**भवतीति**। निवेद्यतामिति क्रियापदद्विरुक्तिर्निवेदनस्य सत्वरं करणीयतामभिधत्ते। वत्सराज्यलाभप्रवृद्धोदयाय, वत्सराज्यस्य लाभः पुनः प्राप्तिः तेन प्रवृद्धो वृद्धिं गत उदयः समुन्नतिर्यस्य तथाभूताय। अयि ! श्रीमति ! सपत्नापहृतस्वीयराज्यप्राप्तिरूपप्राज्यमहोत्कर्षलक्ष्मीशालिने श्रीमते राज्ञ उदयनाय सत्वरमिदं निवेदनीयमित्यर्थः। अत्रेदमवगन्तव्यम्—पञ्चमाङ्कसमाप्तौ खलु श्रीमतो नरपतेरुदयनस्य सपत्नाभिगमनोचितः समरसमारम्भोत्साहो दर्शितः। तदनुसारं च युद्धं विधाय बलेन शत्रुं जित्वा परहस्तगतं निजं राज्यं पुनः स्वहस्तगतमकरोद्वत्सराजः। युद्धं हि रसभङ्गभिया न तावद्वर्णनीयं भवति नाटकेषु। 'दूराह्वानं वधं युद्धं ·······प्रत्यक्षाणि न निर्दिशेत्' इत्यादिना **दशरूपके** निषिद्धं च तत् कयापि विधया सूचनीयम्। अत्र तु युद्धं विना राज्ञो वत्सराज्यप्राप्तिर्न सम्भवतीति राज्यप्राप्तिरूपेण कार्येण तत्कारणीभूतं भूतकालिकं युद्धं कल्प्यते। तच्चात्र कविना प्रकृतरसविच्छेदभीरुणा फलेन परिचायितं न किल केनापि पात्रेण सूचितम्, वत्सराज्यलाभप्रवृद्धोदयायेत्युदयनविशेषणेन चैतदभिव्यक्ततां नीतमिति। राज्ञो निवेदनीयं विषयमाह—**एष** इति। एष

---

( प्रवेश कर )

प्रतीहारी—आर्य मैं विजया ( उपस्थित ) हूं। मुझे क्या करना होगा ?

कंचुकी—श्रीमती जी ! वत्सदेश के राज्य की प्राप्ति से विशेष उदय पाने वाले महाराज उदयन से शीघ्र जाकर कहिए महासेन के पास से आया हुआ रैभ्य-गोत्र अथवा इस नाम

कीयः प्राप्तः, तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च, प्रतीहारमुपस्थिताविति ।

*प्रतीहारी*—(क) अय्य ! अदेसकालो पडिहारस्स ।

*काञ्चुकीयः*—कथमदेशकालो नाम ?

---

( क ) आर्य ! अदेशकालः प्रतीहारस्य ।

---

इत्यात्मनो निर्देशः, खलु पदं वाक्यालङ्कारे, महासेनस्य तदाख्यस्य राज्ञः वासवदत्तायाः पितुरिति यावत् , सकाशात् तदाज्ञयेत्यर्थः, प्राप्तः समागतः, रैभ्यसगोत्रः, रैभ्यगोत्रोत्पन्न इत्यर्थः, 'सकारेण तु वक्तव्यं गोत्रं सर्वत्र धीमता । सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन तं वदेत्' इति धर्मशास्त्रानुशासनाद्गोत्रनाम्नः परं 'स'शब्दः प्रयुज्यते । रैभ्येण समानं तदानुपूर्वीकं गोत्रं नाम यस्य तादृशः, तन्नामधेय इति वाऽर्थः । अङ्गारवत्या प्रद्योतनृपतेः पत्न्या, प्रतीहारं द्वारम्, 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः उपस्थितौ, एताविति शेषः । श्रीमन्महासेनमहीपतेराज्ञया समागतो रैभ्यनामा काञ्चुकीयोऽहम् अङ्गारवत्या श्रीमत्या प्रद्योतनृपतेः पत्न्या प्रेरिता वसुन्धराख्या वासवदत्ताया उपमाता चेत्येतावुभौ वत्सराजस्य विजयावसरे कमपि स्वामिनः सन्देशं कथयितुमुपस्थितौ द्वारि तिष्ठतः । इत्येव तावन्निवेदनीयमित्यर्थः ।

काञ्चुकीयोक्तं राज्ञे निवेदनीयं सन्देशमाकर्ण्य तन्निवेदनस्याऽनवसरं सूचयति प्रतीहारी—अय्येति । प्रतीहारस्य द्वारपालस्य, तद्गमनयोग्य इति यावत् 'प्रतीहारो द्वारपालः' इत्यमरः, अदेशकालः, देशसहितः कालो देशकालः न देशकाल इति अदेशकालः, मध्यमपदलोपी समासो नञ्समासश्च । राज्ञो निवेदनार्थमयं द्वारपालोपस्थितियोग्यो देशः कालश्च नास्तीत्यर्थः । इदानीं यस्मिन् स्थले राजा तिष्ठति यथा वाऽवसरः, तत्र द्वारपालगमनयोग्यता नास्तीति भावः ।

अवसरोऽयमस्मत्सूचितसन्देशप्रापणाऽननुकूलः कथमिति जिज्ञासमानो वचनमाह काञ्चुकीयः—कथमित्यादि ।

---

का एक कंचुकी और माननीय अङ्गारवती से भेजी गई आर्या वसुन्धरा–नाम की वासवदत्ता की धाई ये दोनों द्वार पर उपस्थित हैं ।

प्रतीहारी—आर्य ! ड्योढ़ीदार को (कहने का) यह देश (स्थल) और अवसर नहीं है ।

कंचुकी—देश और अवसर नहीं, यह कैसे ?

*प्रतीहारी*—(क) सुणादु अय्यो । अज्ज भट्टिणो सुय्यामुहप्पासादगदेण केण वि वीणा वादिदा । तं च सुणिअ भट्टिणा भणिअं घोसवदीए सद्दो विअ सुणीअदि त्ति ।

---

(क) शृणोत्वार्यः । अद्य भर्तुः सूर्यामुखप्रासादगतेन केनापि वीणा वादिता । तां च श्रुत्वा भर्त्रा भणितम्-घोषवत्याः शब्द इव श्रूयत इति ।

---

तदुत्तरं सोपपत्तिकं वक्तुमुपक्रमते प्रतीहारी—**सुणादु** इति । श्रोतव्यं श्रीमतेति श्रवणेऽवधानदानप्रार्थनमिदम् । **अज्जेति** । भर्तुः वत्सराजस्य, सूर्यामुखप्रासादगतेन, सूर्याया नवपरिणीतायाः पद्मावत्याः मुखं मुखभूतः प्रधानरूपो यः प्रासादो राजभवनं तं गतेन, 'प्रासादो देवभूभुजाम्' इत्यमरः । **भागवत**दशमस्कन्धीयप्रथमाध्याये 'देवक्या सूर्यया सार्धम्' इति पद्यव्याख्यावसरे **श्रीधरः** सूर्याशब्दस्य नवोढेति व्याख्यातवानर्थम् । यद्वा **एकाग्निकाण्डभाष्ये** 'सूर्यां यः प्रत्यक्षं विद्यात्' इत्यादिमन्त्रव्याख्याने 'सूर्या नाम विवाहदेवता' इति प्राह **हरदत्तमिश्रः**, तेन च सूर्या विवाहदेवता मुखे अग्रभागे यस्य तादृशं प्रासादं गतेनेत्यर्थः । वस्तुतस्तु—'सूर्यामुख' इत्येवमव्युत्पन्नं प्रासादस्य नामेदं प्रतिभाति, न तत्र व्युत्पत्त्यन्वेषणमावश्यकम् । केनापि अनिर्दिष्टनाम्ना । तां वीणाम्, श्रवणतात्पर्यानुपपत्त्या वीणाशब्दो वीणाध्वनिं लक्षयति, भर्त्रा वत्सराजेन, घोषवत्याः तदाख्याया वीणायाः इव तत्समान इति यावत् । वासवदत्ताप्रियतमाया घोषवत्याख्यवीणायाः स्वरेण परिचयो राज्ञः सुचिरमासीत्, अथ किल राजा राजभवनान्निर्गतं कमपि वीणाध्वनिं श्रुत्वा तत्स्वरश्रवणसमकालमेव 'केनेदं घोषवतीस्वरसदृशं श्राव्यत' इति सकौतुकं मानसमुक्तवानित्यर्थः । वसुनेमिदत्तामिमां सुस्वरां घोषवतीमुपलभ्य तद्वादनकौशलेन राजा गजहृदयं वशीचकारेति **कथासरित्सागरे** प्रसिद्धम् ।

---

प्रतीहारी—आर्य ! सुनिये । आज महाराज के सूर्यामुख-प्रासाद में जाकर किसी ने वीणा बजाई । उसे सुनकर महाराज ने कहा-कि घोषवती ( वासवदत्ता की वीणा ) का-सा शब्द सुनाई पड़ता है ।

*काञ्चुकीयः*—ततस्ततः ?

*प्रतीहारी*—(क) तदो तहिं गच्छिअ पुच्छिदो—कुदो इमाए वीणाए आगमो त्ति । तेण भणिअं—अह्मेहिं णम्मदातीरे कुच्चगुम्मलग्गा दिट्ठा । जइ प्पओअणं इमाए, उवणीअदु भट्टिणो त्ति । तं च उवणीदं

---

(क) ततस्तत्र गत्वा पृष्टः—कुतोऽस्या वीणाया आगम इति । तेन भणितम्—अस्माभिर्नर्मदातीरे कूर्चगुल्मलग्ना दृष्टा । यदि प्रयोजनमनया, उपनीयतां भर्त्र इति । तां चोपनीतामङ्के कृत्वा मोहं गतो भर्ता । ततो

---

तदनन्तरं किं संवृत्तमिति काञ्चुकीयः पृच्छति प्रतीहारीम्—**ततस्तत** इति । द्विरुक्तिरियं तदुत्तरकालिकवृत्तान्तश्रवणे कौतूहलं व्यनक्ति काञ्चुकीयस्य ।

काञ्चुकीयप्रश्नानुरूपमुत्तरयति प्रतीहारी—**तदो** इति । अत्र भट्टिणा (भर्त्रा) इति कर्ता पूर्वतोऽनुसृतः, वीणावादक इत्यार्थं कर्म । ततः तदनन्तरम्, आगमः प्राप्तिः । ततो घोषवतीस्वरसदृशं स्वरं निशम्य तत्र स्थले वीणावादकस्योपकण्ठं गत्वा 'कस्मात्पुरुषात् कस्मात्स्थानाद्वा वीणामिमां लब्धवान् भवान् ? तत्प्राप्तिप्रकारः कथ्यतां भवते'ति राजा तं पृष्टवानित्यर्थः । ततस्तस्योत्तरं प्रकाशयति—**तेणेति** । अस्माभिरिति स्वसार्थाभिप्रायेण बहुत्वम् । कूर्चगुल्मलग्ना, कूर्चानां दर्भाणां 'कूर्चोऽस्त्री श्मश्रुपीठयोः, भ्रूमध्ये कत्थने दर्भे' इति कोषः, गुल्मे स्तम्बे लग्ना सक्ता । फलस्यापि हेतुत्वेन ग्रहणात्फलार्थे 'अनये'ति हेतौ तृतीया । भर्त्रे स्वामिने उपनीयतां समर्प्यताम्, अर्थादस्माभिः । ततो वीणोपलब्धिविषयकं राज्ञः प्रश्नमाकर्ण्य 'सहचरैः सह गतोऽहमासं नर्मदायास्तटम्, तत्र च दर्भस्तम्बेषु पतितेयं वीणा दृग्गोचरतामुपगतास्माकं करगताऽभवत् । आवश्यकतास्ति यद्येतस्याः श्रीमतस्तर्हि समर्पणीयेयमस्माभिः श्रीमते, श्रीमन्तमेवेयमधुनाऽलङ्कुरुता'दित्येवं वीणावादकेनोत्तरं दत्तम् । ततस्तत्कर्तृकं राज्ञे वीणासमर्पणमर्थाद्

---

कंचुकी—उसके बाद फिर क्या ?

प्रतीहारी—तब वहाँ जाकर (बजाने वाले से) पूछा—यह वीणा कहाँ मिली ? उसने कहा—हमने नर्मदा नदी के किनारे कुश की झाड़ी में पड़ी हुई देखी । यदि इसकी आवश्यकता

अङ्के करिअ मोहं गदो भट्टा। तदो मोहप्पच्चागदेण वप्फपज्जाउलेण मुहेण भट्टिणा भणिअं—दिट्ठासि घोसवदि। सा हु ण दिस्सदि त्ति। अय्य! ईदिसो अणवसरो। कहं णिवेदेमि?

काञ्चुकीयः—भवति। निवेद्यताम्। इदमपि तदाश्रयमेव।

---

मोहप्रत्यागतेन वाष्पपर्याकुलेन मुखेन भर्त्रा भणितम्—दृष्टासि घोषवति! सा खलु न दृश्यत इति। आर्ये! ईदृशोऽनवसरः। कथं निवेदयामि?

---

गम्यम्। **तं चेति**। उपनीतां समर्पिताम्, अर्थाद्वीणावादकेन। ततः स वीणावादकस्तां वीणां राज्ञे समर्पितवान्। राजा च तां गृहीत्वा निजोत्सङ्गसङ्गिनीं विधाय वासवदत्तायाः स्मरन्मूर्च्छितोऽभवत्। **तदो** इति। मोहप्रत्यागतेन मोहात्प्रतिनिवृत्तेन चेतनां प्राप्तेनेति यावत्, वाष्पपर्याकुलेन मुखेन, वाष्पेणाऽश्रुणा पर्याकुलं व्याप्तं मलिनं वा तादृशेन वदनेन, उपलक्षितेनेति शेषः। भर्त्रेत्यस्य विशेषणद्वयमिदम्। कियतः समयादनन्तरं चेतनामधिगतो राजा रोदितुमारेभे। अश्रुपातमलिनाननश्च सन् 'अयि! घोषवति! त्वदीयं दर्शनं जातम्, वासवदत्ता तु या त्वामङ्के कृतवती दैवात् दृष्टिपथं न प्रयाती'त्येवं प्रत्यवोचत्। इत्थं सति राज्ञोऽवस्थाविशेषे, सन्देशनिवेदनयोग्योऽयमवसरो नास्तीत्याह प्रतीहारी—**अय्येति**। अनवसरः अयोग्यः समयः, निवेदनस्येति शेषः। निवेदयामीति विध्यर्थे लट्। श्रीमन्! इत्थमयं साम्प्रतं न तावत्साम्प्रतं समयो निवेदनस्य, राज्ञश्च वासवदत्ताध्यानमग्नतया विचारपदवीं न प्रयायात्किमपि निवेदितम्। सर्वथा व्यर्थं च तदस्मिन्समये, न च तस्मै रोचेत नूनम्। अतः कथमिदानीं प्रापणीयं राज्ञः समीपं मया भवदीयं सन्देशभाषितम्।

प्रतीहार्या वचनमेतदाकर्ण्य काञ्चुकीयो ब्रूते—**भवतीति**। निवेद्यतां सूच्य-

---

है तो महाराज को यह भेंट दे दूँ। (ऐसा कह कर उसने वह वीणा भेंट दे दी) तब उसे गोद में लेकर महाराज मूर्छित हो गये। फिर सचेत होने पर मुख पर आँसू बहाकर बोले-घोषवती! तू दिखाई पड़ी, वह तो नहीं दिखाई पड़ती। आर्य! इस प्रकार योग्य अवसर नहीं है, कैसे खबर पहुँचाऊँ?

कंचुकी—श्रीमती! निवेदन करिये, क्योंकि यह भी उसीसे सम्बन्ध रखता है।

*प्रतीहारी*—(क) अय्य ! इअं णिवेदेमि। एसो भट्टा सुय्यामुहप्पासादादो ओदरइ। ता इह एव्व णिवेदइस्सं।

*काञ्चुकीयः*—भवति। तथा।

[ उभौ निष्क्रान्तौ। ]

---

(क) आर्य ! इयं निवेदयामि। एष भर्ता सूर्यामुखप्रासादादवतरति। तदिहैव निवेदयिष्यामि।

---

ताम्, अस्मदागमनमिति शेषः। तदाश्रयम्, सा वासवदत्ता आश्रयो यस्य तत् तद्विषयकमिति यावत्। अयि ! देवि ! अस्मदागमनमचेदं वासवदत्तामेव विषयीकरोति, तदिदं भवत्या राज्ञे निवेदनीयमित्यर्थः। वासवदत्ताविषयकं वृत्तजातं किमप्युद्दिश्यैव सञ्जातमत्रास्मदीयमागमनम्। राज्ञे च तदस्मद्वाचिकं रोचेत ! रुचिकरो विषयस्तावदयं प्रस्तोतव्य एव राज्ञः पुरस्तान्निःशङ्कमित्याशयः।

श्रुत्वैतत्काञ्चुकीयवचनं तदागमनं राज्ञे निवेदयितुं प्रतिजानीते प्रतीहारी—**अय्येति**। इयमित्यनेन 'निवेदयितुमहमुद्यतास्मी'ति सूचितम्। इदमधुना भवद्वाचिकं निवेद्यते मयेत्यर्थः। इत्थं निवेदनाय राज्ञः समीपं गन्तुमुद्यता प्रतीहारी सूर्यामुखप्रासादादवतरन्तं राजानमवलोक्य तत्रैव तन्निवेदनावसरमुचितं मन्यमाना ब्रूते—**एसो** इति। एषः पुरो दृश्यमानः। घोषवत्या वृत्तान्तमधिगन्तुं पुरा सूर्यामुखप्रासादं गतवता राज्ञा ततोऽवतीर्यतेऽधुना। अतोऽत्रैव भवदुक्तं निवेदयिष्यते मया।

प्रतीहार्युक्तं संमनुते काञ्चुकीयः—**भवतीति**। अयि ! श्रीमति ! एवमेव कर्तव्यम्। समीचीनोऽयमवसरो राज्ञे निवेदयितुमित्यर्थः।

**उभौ निष्क्रान्ताविति**नेन सूर्यामुखप्रासादसमीपे प्रतीहार्याः काञ्चुकीयस्य च गमनं सूचितम्।

---

प्रतीहारी—आर्य ! यह मैं निवेदन करती हूँ। ये महाराज सूर्यामुख-प्रसाद से उतर रहे हैं, तो यहीं पर निवेदन करूँगी।

कंचुकी—श्रीमती ! ऐसा ही सही। ( दोनों का जाना। )

## मिश्रविष्कम्भकः ।

[ ततः प्रविशति राजा विदूषकश्च । ]

*राजा—*

श्रुतिसुखनिनदे ! कथं नु देव्याः
स्तनयुगले जघनस्थले च सुप्ता ।
विहगगणरजोविकीर्णदण्डा
प्रतिभयमध्युषिताऽस्यरण्यवासम् ॥१॥

---

**मिश्रविष्कम्भक** इति । उदयनस्य राज्ञः पुनः राज्यप्राप्तिर्महासेनभूपतेर्वाचिकं राज्ञे निवेदयिष्यमाणं चेति भूतभविष्यद्वृत्तान्तावत्र प्रतीहारीकाञ्चुकीयाभ्यां नीचमध्यमपात्राभ्यां प्रतिपादितावित्यतो मिश्रः सङ्कीर्णोऽयं विष्कम्भक इत्यर्थः । तथा चोक्तम्—'स तु सङ्कीर्णो नीचमध्यमकल्पितः' इति ।

**ततः प्रविशतीति** । कविरिदानीं श्रीमतो वत्सराजस्य रङ्गमञ्चे प्रवेशमिमं विदूषकेण समं प्रदर्शयति, यत्र पुनः प्राक्प्रकल्पितसूचनानुसारमुपस्थास्यते श्रीमन्महाराजमहासेनसन्देशनिवेदनाय प्रतीहार्या ।

प्रविष्टस्य वासवदत्तावियोगदौर्भाग्यदूषितां घोषवतीं वीणामुद्दिश्य राज्ञः शोकोद्गारमाह—**श्रुतिसुखेत्यादि** । हे श्रुतिसुखनिनदे ! श्रुत्योः सुखः श्रवणानन्ददायी निनदो निक्वणस्तालस्वरसमन्वितः शब्दो यस्यास्तादृशे ! वीणे इति विशेष्यमर्थानुरोधाद्गम्यम्, देव्या वासवदत्तायाः, स्तनयुगले कुचयुगे, जघनस्थले कटिपुरोभागे च, सुप्ता सुखशयनं प्राप्ता समुखमवस्थितेति यावत्, वादनावसरे हि वीणाया उत्सङ्गसङ्गिन्याः स्तनजघनसम्बन्धो भवत्येव, एतादृग्विशेषणविशिष्टा त्वं, विहगगणरजोविकीर्णदण्डा, विहगगणेन पक्षिवृन्देन रजोभिर्धूलिभिश्च विहगगणस्य रजसा मलरूपेण वा विकीर्णो व्याप्तो दूषित इति यावत् दण्डो यस्यास्तादृशी सती, प्रतिभयं भयङ्करं, भयङ्करं प्रतिभय'मित्यमरः, अरण्यवासम्, उष्यते यत्रेति वासो निवास-

---

( मिश्रविष्कम्भक )

( तब राजा और विदूषक आते हैं । )

राजा—रे कर्ण-मधुर शब्द वाली वीणा ! देवी वासवदत्ता के कभी स्तनों पर या कभी जाँघों पर सोनेवाली तू इस समय चिड़ियों और धूलि से या चिड़ियों के मल से दूषित दण्ड वाली होती हुई भयानक अरण्य-वास कैसे करती है ॥ १ ॥

अपि च, अस्निग्धासि घोषवति ! या तपस्विन्या न स्मरसि—
श्रोणीसमुद्वहनपार्श्वनिपीडितानि
खेदस्तनान्तरसुखान्युपगूहितानि ।

---

स्थानम् 'हलश्चे'ति घञ् , अरण्यमेव वासस्तम् 'वनस्थलमिति यावत् , 'उपान्वध्याङ्वसः' इति कर्मत्वम् , कथन्नु केन प्रकारेण कीदृशम् , अध्युषिता असि आश्रितवत्यसि, अधिपूर्वाद्वसतेः कर्तरि क्तः । अयि ! सुस्वरे ! घोषवति ! या त्वं पुरा वीणावादनक्रीडावसक्तचित्तया वासवदत्तया सस्नेहं कमनीयकोमलोत्सङ्गदेशे लालिता सती तत्र सुस्थलेऽवस्थानसुखं सुचिरमन्वभूः, कष्टमहो ! दुर्दैवादमीषु दिनेषु पक्षिगणजुष्टं धूलिधूसरं पक्षिमलदूषितं वा वीणादण्डं दधानया त्वया भयानकवनवासयातना असह्याः सोढाः ? गुणवद्वासवदत्तासङ्गतिसौभाग्यसमन्वितायाः अपि तद्वियोगसमयोपनीतवनवासक्लेशभारोपचितदौर्भाग्यव्यतिकरोपलब्धिरियं ते न तावत् सर्वथोचितेति भावः । पुष्पिताग्रा नाम वृत्तमिदम्, 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति च तल्लक्षणम् ॥ १ ॥

**अपि चेति** । अस्निग्धा स्नेहरहिता । इदमपि निश्चितं वीणे । यत्त्वाधुना वासवदत्तायां स्नेहो नास्तीति । इदानीं वासवदत्ताविषयकं तदेव स्नेहराहित्यं तस्या विशदीकरोति—**येत्यादि** । इदं श्लोकान्वयि ।

**श्रोणीति** । या त्वं, तपस्विन्या दीनायाः, विपत्काले रक्षकं कञ्चिदप्राप्तवन्त्या इति यावत् , 'मुनिदीनौ तपस्विना'वित्यमरः, अत्र 'वासवदत्ताया' इति विशेष्यमर्थानुगतम् , श्रोणीसमुद्वहनपार्श्वनिपीडितानि, श्रोण्या तत्पुरोभागेन जघनेनेति यावत् , 'कटिः, श्रोणि'रित्यमरः, 'सर्वतोऽक्तिन्नर्थादित्येके' इति दीर्घान्तोऽपि श्रोणीशब्दः, समुद्वहनानि वाद्यभाण्डस्य धारणानि च, पार्श्वेन कक्षाधःप्रदेशेन निपीडितानि, भावे क्तः, दण्डस्य घर्षणानि च तानि, इतरेतरयोगो नाम द्वन्द्वसमास, खेदस्तनान्तरसुखानि, खेदे वादनश्रमे सति स्तनान्तरे कुचमध्यभागे, अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनावहिरवसरमध्येऽन्तरात्मनि चे'त्यमरः, सुखानि सुखकराणि, अत्र 'खेदे स्तनान्तरे' इति व्यस्तपदप्रयोगो

---

और भी—हे घोषवती ! तू स्नेह-रहित है,

जोकि तू उस बेचारीको (अधोलिखित वार्तों की) याद नहीं करती । तुझे गोद और बगल में

उद्दिश्य मां च विरहे परिदेवितानि।
वाद्यान्तरेषु कथितानि च सस्मितानि॥२॥

*विदूषकः*—(क) अलं दाणिं भवं अदिमत्तं सन्तप्पिअ।

---

(क) अलमिदानीं भवानतिमात्रं सन्तप्य।

---

युज्यते, सामर्थ्याभावात् समासश्चिन्त्यः, उपगूहितान्युपगूहनानि आलिङ्गनानि, च किञ्च, विरहे मद्वियोगे, माम् उद्दिश्याभिलक्ष्य, कृतानीति शेषः, परिदेवितानि विलापाः, 'विलापः परिदेवनम्' इत्यमरः, च अन्यच्च, वाद्यान्तरेषु वादनीयप्रकारविशेषेषु, सस्मितानि मन्दहासेन सहितानि, स्मितमत्रालौकिकवादनप्रकारदर्शनादन्तर्गतानन्दसन्दोहोद्भेदं सूचयति, कथितानि प्रशंसापराणि वचनानि, न स्मरसि स्मृतिमार्गं न प्रापयसि, तदेतत्सर्वं विस्मरसीत्यर्थः। 'वादनावसरे च यत्किल वाद्यभाण्डमङ्केन वासवदत्ता धृतवती, यच्च तस्यास्तदानीं पार्श्वभागेन वीणादण्डस्य सङ्घर्षणं जायते स्म, वादनपरिश्रमान्मध्ये विश्रमार्थं यत्सा वक्षोजमध्यभागेन वीणादण्डमालिङ्ग्य तूर्ष्णीं कियच्चिरमवतस्थे, वियोगविक्लवतया च मद्विषयकान् यद् बहून्विलापान् कृतवती, लोकोत्तरेषु मत्प्रदर्शितेषु तत्तद्वादनकलाकौशलविशेषेषु हृद्गताऽसीमसहजस्नेहोचितहर्षप्रकर्षसूचकं सहासं यच्च किञ्चिद्वचनजातमुक्तवती मत्प्रशंसायाम्, तदेतदखिलं चेष्टितमिदानीं दीनां दशां वहन्त्या दुःसहवियोगदूनायास्तस्या वासवदत्तायाः किमपि न स्मर्यते त्वया? यत्किल समुपेक्षितस्नेहानुबन्धया समयेऽस्मिन्सहजस्नेहापि सेयं परित्यक्ता मत्प्रिया। नूनमयं तत्परित्यागस्तवायं वीणे! पूर्वानुभूतैतद्वृत्तान्तविस्मरणं तेन च तस्यां निःस्नेहरौक्ष्यं च विशदं प्रत्याययती'ति भावः। अत्र चैतद्वीणादर्शनं राज्ञो वासवदत्तावियोगदुःखमुद्दीपयत् कारणभावमवलम्बते भृशं विलपितेष्वमीषु। वसन्ततिलकं छन्दः॥ २॥

प्रियावियोगपरितप्तचित्ततया पूर्वोक्तमेतदित्थं विलपन्तं ततो निवारयन् सुहृदमाश्वासयितुकामो वचनमाह विदूषकः—**अलमिति**। अतिमात्रं भृशम्, अधिकमित्यर्थः, 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भर'मित्यमरः। अयि! मित्र! भृशं व्याकुलो मा भूद्भवान्! कथमपि तस्या उपलब्धेरभावादिदानीं शोको

---

रखना, थकने पर कुचोंके बीचमें छुवसे आलिंगन करना, विरह की दशा में मुझे उपलक्ष कर विलाप करना तथा अनेक प्रकार के बाजों के बजते हुए स्मित-पूर्वक वचनोंका कहना इत्यादि॥

विदू०—बस अब आप अतिसंताप न करें।

राजा—वयस्य ! मा मैवम् ;

चिरप्रसुतः कामो मे वीणया प्रतिबोधितः ।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥३॥

वसन्तक ! शिल्पिजनसकाशान्नवयोगां घोषवतीं कृत्वा शीघ्रमानय ।

---

नेरर्थकः । आन्तरः सन्तापोऽयं भवता दूरीकरणीयः शान्तिश्चावलम्बनीयेत्यर्थः ।

सन्तापनिवारणैकसूचकमित्थं विदूषकवचनं श्रुत्वा स्वकीयसन्तापस्यानिवार्यत्वं सूचयति राजा—**वयस्येति** । एवं सन्तापप्रशमनसूचकम् , वादीरिति शेषः । एवं ते वक्तव्यं मित्र ! मत्सन्तापशान्त्यै । सोऽयमनिवार्यो मे नियतं परितापः प्रियतमावियोगजन्मा ।

**चिरप्रसुत** इति । चिरप्रसुप्तः, चिरं शयितः उद्बोधकाभावादप्रबुद्ध इति यावत् , मे मम, कामः वासवदत्ताविषयको मानसोऽभिलाषः, वीणया अनया घोषवत्या,-प्रतिबोधित उद्बोधितः । घोषवती सेयं वीणा, यस्या वासवदत्तायाः, प्रिया प्रीतिपात्रम् , आसीदिति शेषः, तां मत्प्रेमसर्वस्वं, देवीं वासवदत्तां तु, न पश्यामि न साक्षात्करोमि । वियोगदिवसादारभ्य प्रियतमाविषयिणी गाढोत्कण्ठा ममेयं परिपूर्तिसाधनाभावादद्ययावत् क्रमेण परिक्षीणतां गच्छन्ती हृदये निलीनप्रायेव जाता, उद्बोधकं च नासीत्तस्याः किमपि । अद्य तूपलब्धेयं वीणा मत्प्रियां वासवदत्तां स्मारयन्ती नितान्तं तदीयमुत्कण्ठाविशेषमुद्भावयति मे । एषा च घोषवती यस्यै भृशमरोचत, दुर्दैवादद्य सा मे प्रिया वासवदत्ता न तावल्लोचनगोचरतां गच्छति । हन्त ! तां न विस्मारयति वीणेयं तत्तदनुभूतं स्मारयन्ती माम् । अतः कथमयं निवारणीयो मे महत्तमस्तत्परीताप इति भावः । अनुष्टुब् वृत्तमिदम् ॥ ३ ॥

इत्येवं निगद्य विकलाङ्गवीणासंस्कारसम्पादनविधौ प्रवर्तयितुमिच्छन् विदूषकं ब्रूते—**वसन्तकेति** । शिल्पिनो जनाः वीणासंस्करणकलाकुशला मनुष्याः, नव-

---

राजा—मित्र ! नहीं ऐसा नहीं—

वीणा ने चिर-काल से सुप्त मेरे काम को जगा दिया । कि-यह घोषवती वीणा जिसको प्यारी है, उस देवी वासवदत्ता को नहीं देख रहा हूँ ॥ ३ ॥

वसन्तक ! घोषवती को कारीगरों के पास से मरम्मत कराकर शीघ्र लाओ ।

*विदूषकः*—(क) जं भवं आणवेदि । [ वीणां गृहीत्वा निष्क्रान्तः । ]

[ प्रविश्य ]

*प्रतीहारी*—(ख) जेदु भट्टा । एसो खु महासेणस्स सआसादो रेब्भसगोत्तो कंचुईओ देवीए अङ्गारवदीए पेसिदा अय्या वसुन्धरा णाम वासवदत्ताधत्ती अ पडिहारं उवट्ठिदा ।

---

( क ) यद् भवानाज्ञापयति ।

( ख ) जयतु भर्ता । एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयो देव्याऽङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थितौ ।

---

योगां, नवो नूतनो योगस्तन्त्रीदण्डादिसम्बन्धो यस्यां तादृशीम् । मित्रवर ! चिरादनुपयोगान्नष्टभ्रष्टावयवैषा घोषवती सञ्जाता । अत एतां तत्संस्कारविदुषां मार्मिकाणां समीपं नीत्वा यथास्थलं तत्तत्प्राचीननष्टावयवपरिवर्तनपुरःसरं नूतनावयवयोजनेन प्रकल्पितजीर्णोद्धारां पुनः समीचीनतमां सुन्दरावयवां विधाय त्वयेयं सत्वरमानीयतां ममान्तिकमित्यर्थः ।

राजाज्ञापरिपालनं प्रतिजानीते विदूषकः—**जं भवमिति** । एषोऽहमादेशं भवतोऽनुसृत्य तदुचितं कर्तुमुद्यतोऽस्मीत्यर्थः । इत्युक्तवतो विदूषकस्य वीणां संस्कारयितुं वीणासहचरस्य ततः प्रस्थानमाह—**वीणां गृहीत्वेति** ।

सूर्यामुखप्रासादादवतरन्तं राजानमुद्दिश्य गमनं प्रतीहार्या निर्दिष्टमासीत्पुरा । इदानीं राज्ञः समीपवर्तिनि प्रदेशे तस्याः प्रवेशं दर्शयति—**प्रविश्येति** ।

विजयाशंसनपूर्वकं पूर्वोक्तकाञ्चुकीयसन्देशं राजानं निवेदयन्ती प्रतीहारी ब्रूते—**जेदु इति** । विजयतां भवान् । श्रीमान् महासेनभूपती रैभ्यसगोत्रं काञ्चुकीयं, श्रीमती प्रद्योतराज (महासेन) पत्नी अङ्गारवती च वसुन्धरानाम्नीं वासवदत्ताया उपमातरं श्रीमतोऽन्तिकं किमपि सन्दिश्य प्रेषयताम् . तौ च द्वारदेशमागतौ स्तः।

---

विदू०—आप जो आज्ञा दें । ( वीणा लेकर जाता है । )

( आकर )

प्रतीहारी—महाराज की जय हो । महाराज महासेन के पास से यह रैभ्य नामक कंचुकी और देवी अङ्गारवती की भेजी गई वासवदत्ता की धाई वसुंधरा ड्यौढ़ी पर उपस्थित हैं।

*राजा*—तेन हि पद्मावती तावदाहूयताम् ।

*प्रतीहारी*—(क) जं भट्टा आणवेदि । [ निष्क्रान्ता । ]

*राजा*—किन्नु खलु शीघ्रमिदानीमयं वृत्तान्तो महासेनेन विदितः ?

[ ततः प्रविशति पद्मावती प्रतीहारी च । ]

---

(क) यद् भर्ताज्ञापयति ।

---

प्रतीहार्या वचनं श्रुत्वा राजाह—**तेन हीति** । तावत्पदं वाक्याऽलङ्कारे । एवं चेत्, पद्मावत्याह्वयितव्या पूर्वम् । तत एव दूताविमावुपस्थापयितव्यौ । वाचिकं चानयोः प्रियानहचरेणैव मया श्रवणीयमित्यर्थः । 'बन्धुन्यराप्रेषणमिदं तावदङ्गारवत्याः पद्मावतीमुद्दिश्यैव सम्भवतीत्यतस्तस्याः पद्मावत्या अत्रोपस्थानमावश्यकम् । समुपस्थितायां च तस्याम्, सा किलाङ्गारवतीसन्देशमहं च महासेनसन्देशं सहैव श्रोष्याव' इत्येवमन्तस्तात्पर्येण राजा पद्मावतीमाजूहवत् । 'वासवदत्तावन्धुदर्शनमिदं पद्मावत्या सममेवात्मनो युज्यत' इत्याशयेन केचिदन्ये च—'सपत्नीभूतवासवदत्तावन्धुविषये कीदृग्भावोऽस्ति पद्मावत्या इति जिज्ञासया पद्मावत्युपस्थितौ राज्ञस्तत्राभिमते'ति व्याचक्षते ।

पद्मावत्याह्वानरूपां भर्तुराज्ञां सादरं स्वीकुरुते प्रतीहारी—**जं भट्टा** इति । यत्किलादिष्टमार्येण, तत्तावत्साध्यते मयेत्यर्थः । ततस्तस्यास्ततो निर्गमनं सूचयति—**निष्क्रान्तेति** ।

प्रतीहार्यां गतायां राजा स्वगतं भाषते—**किन्नु खल्विति** । 'नु खलु' इति पदे वाक्यालङ्कृतौ, वृत्तान्तः पद्मावतीपरिणयरूपो राज्यप्राप्तिरूपो वा । किमिदं वृत्तमेतदस्मदीयमस्मिन्समये सत्वरमेवार्यो महासेन उपलब्धवान् ? यदुद्दिश्य दूतप्रेषणं कृतं तेन ?

पद्मावत्या सह पुनः प्रतीहारीं प्रवेशयति कविः—**ततः प्रविशतीति** ।

'अयमसौ तत्रभवान् भर्ता विराजते, अत्र किलोपसर्पणीयं श्रीमत्या राज-

---

राजा—तब तो पद्मावती को बुला लाओ ।

प्रतीहारी—स्वामी की जो आज्ञा । ( चली गई । )

राजा—क्या महासेन महाराज ने यह वृत्तान्त शीघ्र अभी जान लिया ?

( पद्मावती और प्रतीहारी का प्रवेश । )

*प्रतीहारी*—(क) एदु एदु भट्टिदारिआ ।

*पद्मावती*—(ख) जेदु अय्यउत्तो ।

*राजा*—पद्मावती ! किं श्रुतम्-महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयः प्राप्तः, तत्रभवत्या चाङ्गारवत्या प्रेपितार्या वसुन्धरा नाम वासवदत्ताधात्री च, प्रतीहारमुपस्थिताविति ।

*पद्मावती*—(ग) अय्यउत्त ! पिअं मे ञादिकुलस्स कुसलवुत्तं तं सोदुं !

---

(क) एत्वेतु भर्तृदारिका ।

(ख) जयत्वार्यपुत्रः ।

(ग) आर्यपुत्र ! प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम ।

---

कुमार्येत्यर्थकं वचनमाह पद्मावतीं प्रतीहारी—**एदु एदु** इति । राजदर्शनोपसर्पणत्वरयैव प्रतीहार्या वचनेऽस्मिन् 'एतु एतु' इति वीप्सेयं प्रयुक्ता ।

उपगता च भर्तुर्विजयाभिनन्दनं कुर्वती ब्रूते पद्मावती—**जेदु** इति । सर्वोत्कर्षेण वर्ततां तावदार्यः श्रीमानित्यर्थः ।

दूतोपस्थितिवार्तामुद्दिश्य पद्मावतीं पृच्छति राजा—**पद्मावतीति** । अयि ! पद्मावति ! 'श्रीमन्महासेनाङ्गारवतीप्रहिताभ्यां काञ्चुकीयवसुन्धराभ्यां द्वारदेशोऽलङ्क्रियते सम्प्रती'ति श्रवणपदवीं तव प्रयातं किमु ? किन्तु जानासि वार्तामिमाम् ?

**अय्यउत्तेति** । पूर्वोक्तं प्रियस्य वचनं निशम्य वासवदत्तावन्धुजनेषु स्वीयत्वाभिमानं वहन्त्याः पद्मावत्या उत्तरमिदम् । प्रियम् अभीष्टम्, ज्ञातिकुलस्य सम्बन्धिबन्धुजनस्य, 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समा' इत्यमरः' 'मे' इति पदं मध्यमणिन्यायेन 'प्रियं ज्ञातिकुलस्ये'त्युभयत्रान्वेति । इच्छार्थक एककर्तृके 'प्रिय'मित्युपपदे सति 'समानकर्तृकेषु तुमुन्' इत्यनेन 'श्रोतु'मिति तुमुन् प्रत्ययः ।

---

प्रतीहारी—आइये, राजकुमारी ! आइये ।

पद्मा०—आर्यपुत्र की जय हो ।

राजा—पद्मावती ! क्या तुमने सुना कि–महासेन के पास से रैभ्य नामक कंचुकी और माननीय अङ्गारवती की भेजी वासवदत्ता की दाई वसुंधरा ये दोनों आये हैं और द्वार पर खड़े हैं ।

पद्मा०—आर्यपुत्र ! आत्मीयों का कुशल-वृत्तान्त सुनना मुझे अच्छा लगता है ।

राजा—अनुरूपमेतद् भवत्याभिहितम्—वासवदत्तास्वजनो मे स्वजन इति। पद्मावति ! आस्यताम्। किमिदानीं नास्यते ?

पद्मावती—(क) अय्यउत्त ! किं मए सह उवविट्ठो एदं जणं पेक्खिस्सदि ?

---

(क) आर्यपुत्र ! किं मया सहोपविष्ट एतं जनं द्रक्ष्यति ?

---

श्रीमन् ! प्रियं मे वृत्तमिदम्। वासवदत्ताया बन्धुजनोऽयं ममैव बन्धुजनः। नात्र मे भेदभावः कोऽपि। बन्धुजनस्य कुशलावार्तां चिरादुपलभ्यमाना श्रोतुमिष्यते मयेत्यर्थः।

पद्मावत्युक्तं प्रशंसन्नाह राजा—**अनुरूपमिति**। अनुरूपं योग्यम्, अर्थात्कुल-शीलादिनः, एतत् 'वासवदत्ताया बन्धुजनोऽयं ममैव बन्धुजन' इत्येवंरूपम्। अयि ! प्रिये ! वासवदत्ताबन्धुजनं स्वजनं निर्दिशन्ती नूनं कुलशीलादिप्रदर्शनेवं साम्प्रतमुक्तवती भवती। सर्वथा प्रशंसनीयमिदं वचनं सापत्न्यद्वेषं हृदये स्वल्प-मप्यवहन्त्या भवत्या इत्यर्थः। समयोचितं किञ्चिद्विचार्य तत्र तिष्ठन्तीं पद्मावतीं पश्यन् 'ममाज्ञानन्तरेण नैवोपवेक्ष्यती'ति तां स्वसमीपमुपवेशयितुमिच्छन् राजा तदुचितां वार्त्तामुपन्यस्यति—**पद्मावतीति**। श्रीमति ! पद्मावति ! किमेवं स्थीयते ? समयेऽस्मिन् किमिति नोपविश्यते ? नात्र किञ्चिद्विचारणीयं निःशङ्कमत्रो-पवेष्टव्यं भवत्येत्यर्थः।

प्रियेण सहोपवेशनं तत्कालानुचितं मन्यमाना प्रियतमं तद्विषये पृच्छति पद्मा-वती—**अय्यउत्तेति**। एतं जनं समुपागतं वासवदत्तायाः स्वजनम्। भवानिति शेषः। स्वामिन् ! नूतनपरिणीतया मया सार्धं किमत्रोपविश्य भवता वासवदत्तायाः स्वजनोऽयं साक्षात्करिष्यते ? अनुचितमेतन्मन्येऽहम्। एकाकिन एव भवतस्तद्दर्शनं तुचितमित्याशयः।

इत्थं नाम ध्वनिमर्यादया सहोपवेशनं निषेधन्ती पद्मावती तत्कारणं जिज्ञास-

---

राजा—यह तुमने उचित कहा कि वासवदत्ता के भाई-बन्धु मेरे भाई-बन्धु हैं। पद्मावति ! बैठो। इस समय क्यों नहीं बैठती ?

पद्मा०—आर्यपुत्र ! क्या आप मेरे साथ बैठ कर उन लोगों से भेंट करेंगे ?

*राजा*—कोऽत्र दोषः ?

*पद्मावती*—(क) अय्यउत्तस्स अवरो परिग्गहो त्ति उदासीणं विअ होदि ।

*राजा*—कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहुदोषमुत्पादयति । तस्मादास्यताम् ।

---

(क) आर्यपुत्रस्यापरः परिग्रह इत्युदासीनमिव भवति ।

---

मानो राजा ब्रूते—**कोऽत्रेति** । अत्र अस्मिन्विषये सहोपवेशनरूपे, दोषः अनौचित्यरूपः । भवत्या सहोपविश्य मया करिष्यमाणे तद्दर्शनेऽस्मिन् किं तावदनुचितं मन्यते भवती ?

तदेवाऽनौचित्यं दर्शयति पद्मावती—**अय्यउत्तस्सेति** । अपरः परिग्रहः द्वितीया पत्नी, 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः, इति पूर्वोक्तो वाक्यार्थः कर्तृरूपः । उदासीनमिव अनभीष्टमिव अर्थाद्विलोकनीयस्य बन्धुजनस्य, भवति भवेदिति यावत् । स्वामिन् ! भवता सहोपविष्टाया भवदीयद्वितीयपत्न्या मे दर्शनं कदाचिद्वासवदत्तास्वजनाय न रोचेत, अयुक्तमिवैतत्तद्दृष्टौ भासेत । जामातुर्द्वितीयां भार्यां निभालयतो भूतपूर्वभार्यासम्बन्धिनश्चेतसि तद्विषयक ईर्ष्याभावोदयः सुतरां सुलभः । अत एवोदर्कदर्शिनी सहोपवेशनमिदं निषेधाम्यहम् । नान्यत्किमपि शङ्कनीयमत्रार्यपुत्रेणेति भावः ।

तत्कालोचितं सहोपवेशनं समर्थयन् पद्मावत्याः शङ्कितं निराकुरुते राजा—**कलत्रेत्यादि** । कलत्रं भार्या 'कलत्रं श्रोणिभार्ययो'रिति कोषः, परिहरति निवारयति, अयमिति शेषः उदयन इति तस्यार्थः । इति पूर्वोक्तो वाक्यार्थः, बहुदोषमिति जातावेकवचनम् , भवत्या सम्भाविताद्दोषाद् भूयसो दोषानित्यर्थः । प्रिये ! भवत्या विचारितं न सम्यक् । अत्रागत्य भवतीमपश्यन्नेष बन्धुजनो 'यस्मै सम्बन्धिजनाय भार्या दर्शनीया, तस्मै तां वत्सराजो न दर्शयति । 'नूनमयं सम्बन्धि-

---

राजा—इसमें कौन सा दोष है ?

पद्मा०—आर्यपुत्र की यह दूसरी पत्नी है-यह उन्हें अप्रिय-सा लगे ।

राजा—स्त्री-दर्शन के योग्य व्यक्ति को स्त्री-दर्शन से रोकता है-यह बात अनेक दोष उत्पन्न करेगी । इसीलिये बैठ जाओ ।

पद्मावती—(क) जं अय्यउत्तो आणवेदि। [उपविश्य] अय्यउत्त! तादो वा अम्वा वा किं णु खु भणिस्सदि त्ति आविग्गा विअ संवुत्ता।

राजा—पद्मावति! एवमेतत्।

(क) यदार्यपुत्र आज्ञापयति आर्यपुत्र! ततो वाऽम्बा वा किन्तु खलु भणिष्यतीत्याविग्नेव संवृत्ता।

---

जनाद्विमुखः, भार्या वास्य कुरूपा स्यात्' इत्येवमन्यादृशांश्च बहून्दोपानारोपयेदावयोः। द्वितीयपत्नीदर्शनं न रोचेताऽस्मै' इत्येष भवत्या सम्भावितो दोषस्त्वकिञ्चित्करः। प्रथमभार्याया अभावे च मया स्वीकृतां द्वितियां भार्यां भवतीं पश्यन्नयं जनस्तात्कालिकीं स्थितिमवधारयन् गुणग्राही कदाचिद् प्रमोदेताऽपि। अतोऽत्रैव समीपे भवत्योपवेष्टव्यम्। एतदेवोचितमस्मिन्समय इत्यर्थः।

पत्युराज्ञां शिरोधार्यां मत्वा तथा कर्तुं प्रतिजानीते पद्मावती—**जमिति**। स्वामिन्! यथेदमादिश्यते भवता, तथाहमधुना कर्तुमुद्यतास्मि। प्रदर्शिता सेयं मानसी सङ्कैव भवदिच्छाविरुद्धं विधातुं प्रेरयन्माम्, न किल भवेन्निदेशोल्लङ्घनेच्छा। एषाहमुपविशाम्यत्र भवत्सन्निधौ। **उपविश्ये**त्यनेन तदुपवेशनं दर्शितम्। उपविष्टा च सा समागतवन्धुजनविषये मौनसमात्मनो वितर्कितमार्यपुत्रं निवेदयन्ती ब्रूते—**अय्यउत्तेति**। तातः पिता महासेनः, अम्बा माताऽङ्गारवती, अर्थाद्वासवदत्तायाः, वा पदद्वयं चार्थे, 'नु खलु' इति वाक्यालङ्कारे, इति पूर्वोक्तम्, विचार्येति शेषः, आविग्ना उद्विग्ना, अस्मीत्यार्थम्। 'श्रीमान्महासेनः श्रीमत्यङ्गारवती च वासवदत्तायाः पितरौ किं नाम कञ्चुकिधात्रीभ्यां सन्देशवचनं प्रेषयिष्यत' इत्येतद्विषये विचारयन्त्याऽस्मिन् समये व्याकुलयेव भूयते मया। 'तदेतत्तयोर्वाचिकं प्रियमप्रियं वाऽस्माकं भवे'दित्येवायं विचार उद्भवतीत्यर्थः। अत्र तातम्बापदप्रयोगोऽयं वासवदत्तावन्धुजनेषु स्वात्मीयभावं पद्मावत्याः पूर्वोक्तं द्रढयति। तेन वासवदत्तायां पद्मावत्याः प्रीत्यतिशयो व्यङ्ग्यः।

'तातेनाऽम्बया च किं नाम कीदृशं सन्देक्ष्यत' इत्येवं व्याकुलां पद्मावतीं निशम्य भूपतिरात्मनोऽपि तादृशं शङ्काकुलत्वं प्रतिपादयति—**पद्मावतीति**। एव-

---

पद्मा०—आर्यपुत्र की जो आज्ञा। (बैठकर) आर्यपुत्र! पिताजी अथवा माता जीने क्या कहा होगा-यह सोचकर व्याकुल सी हुई हूँ।

राजा—पद्मावति! यह ठीक है।

किं वक्ष्यतीति हृदयं परिशङ्कितं मे
कन्या मयाप्यपहृता न च रक्षिता सा ।
भाग्यैश्चलैर्महदवाप्तगुणोपघातः
पुत्रः पितुर्जनितरोष इवास्मि भीतः ॥ ४ ॥

---

मेतत् यद्भवत्या शङ्कितं तत्तथैवेत्यर्थः अयि ! पद्मावति ! सन्देक्ष्यमाणविषयस्येदानीं प्रियत्वाप्रियत्वसम्भावनया भवत्याश्चित्तं यद्व्याकुलं जायते, तन्नूनं युज्यते । ममापि तादृश्येव दशा वर्तते ।

तथा हि—**किं वक्ष्यतीति** । अत्र प्रथमे चरणे तातोऽम्बा वेति कर्तृपदे पूर्वतोऽनुसृते । तयोश्च पृथक् पृथक् प्रत्येकं सम्बन्धाद् 'वक्ष्यती'त्येकवचनोपपत्तिः । वासवदत्तायास्तातः प्रद्योतो माताऽङ्गारवती च दूतमुखेन किं वक्ष्यति किं सन्देक्ष्यति, इति अस्मिन् विषये, मे, द्वितीयचरणादपिशब्दोऽत्रानुकर्षणीयः, भवत्या इव ममापीति यावत्, हृदयं मनः, शङ्कितं शङ्कायुक्तं वर्तते । 'तदस्य सञ्जात'मित्यादिना इतच् प्रत्ययः । तामेव हार्दिकीं शङ्कां प्रवर्तयत्कारणं प्रदर्शयति—**कन्येति** । मया वत्सराजेन, कन्या अनूढा वासवदत्तेति यावत्, 'कन्या त्वजातोपयमे'ति **दर्पणः**, यद्वा तयोस्तातामम्बयोः कुमारी, अपहृता उज्जयिन्याः पलाय्य कौशाम्बीमानीता, च अपि च, सा वासवदत्ता, न रक्षिता न परिपालिता । 'पूर्वं वासवदत्ताया अपहरणमेवासीदनुचितम् । तत्रापि रक्षणं कृतं चेदपहरणं न तावद् दूषणाय कल्पेत । किन्तु तद्रक्षणेऽक्षमतां गतवताऽनुचितेऽप्यनुचितं पुनर्मयाचरितम्, एतदेव मे हार्दिकीं शङ्कां जनयतीति भावः । पुनः सभयत्वमेवाह—**भाग्यैरिति** । चलैरस्थिरैः परिवर्तनशीलैः, भाग्यैः पूर्वजन्मकृतकर्मभिर्हेतुभूतैः, महदवाप्तगुणोपघातः, महत्सु गुरुजनेषु अवाप्तः प्राप्तः कृत इति यावत् गुणानां सदाचारादीनाम् उपघातो भङ्गो येन तादृशः, अहमिति शेषः, उत्तरपदस्य समानाधिकरणत्वाभावान्महत आत्वं न सदाचारभङ्गश्चात्र गुरुजनादेशाऽप्रतीक्षणपुरःसरं वासवदत्ताया अपहरणमेव । पितुर्जनयितुः, जनितरोषः, जनित उत्पादितो रोषः अनुचितकारितामूलकः क्रोधो येन तथाभूतः, पुत्र इव तनयो यथा, भीतो भयान्वितोऽस्मि । 'वासवदत्तामपहृत्य

---

वे क्या कहेंगे-इस विषय में मेरा भी हृदय संशयग्रस्त हो रहा है। मैंने लड़की तो भगाई, पर उसकी रक्षा न की। चञ्चल भाग्यों से गुरुजनों के विषय में सदाचारविरुद्ध काम करनेवाला

*पद्मावती*—(क) ण किं सक्कं रक्खिदुं पत्तकाले ?

---

(क) न किं शक्यं रक्षितुं प्राप्तकाले ?

---

तत्रापि तद्रक्षणेऽक्षमतां गतोऽहं प्रत्युत तां नाशितवानस्मी'त्येतं विषयमुद्दिश्य ताभ्यां कि वक्ष्यते ? शङ्कयाऽनया नितरां पर्याकुलं मे मनः । दैवदोषात्सदाचार-विरुद्धमाचरितं मया । ध्रुवमधुना पितरं कोपयन्पुत्र इवाहं भीतोऽस्मीत्यर्थः । अत्र 'भाग्यैश्चलै'रिति वचनेन—'समयानुरोधपरिवर्तमानतत्तच्छुभाशुभदैवयोगेन सुख-दुःखयोरुपलब्धिर्दृश्यते लोके । श्रीमन्महाराजमहासेनस्पृहणीयसम्बन्धोपलब्धं प्राज्य-राज्यसुखसौभाग्यं प्राप्तवतोऽपि मम केनचिद् दुर्दैवेन सदाचारमर्यादाव्यतिक्रमोप-स्थिता विपत्तिरियमतीव दुःसहा । अहो दैवस्य महिमा !' इत्येष राज्ञश्चिन्तानु-भावोऽतिगूढं ध्वनितः ।

अत्रेदमालोचनीयम्—नियतेर्नियोगाद्राजा वासवदत्तामपहृतवान् रक्षितुं च न पारितवान् । तदेतत्तस्य बुद्धिपूर्वकं नासीदिति वस्तुतोऽयं दोषभाजनं नास्ति । अतो राजविषये ताताम्बयोः कोपस्यावकाशस्तस्माच्च राज्ञो भयस्य सम्भावना न काचि-द्विद्यते । किन्तु 'केवलं तमिमं दोषमुद्दिश्य दैवं नाम तदीयं कारणमविगणय्य ताती-ऽम्बा च कुपितौ भविष्यत' इत्येतद्दृष्ट्या भयं सम्भाव्यतेऽपि । तच्च पुनर्निवारणीयं सदत्र सामान्यरूपेणोपतिष्ठते । तदिदं 'पुत्रः पितुर्जनितरोष इवे'त्युपमया स्फुटं प्रति-पादितम् । एतेन—सापराधे सुते कुपितोऽपि केनापि कारणेन पिता कालान्तरे यथा करुणार्द्रहृदयः सन् प्रशान्तकोपोऽवश्यमेव प्रसीदति, तथा वासवदत्ताऽपहरणतदी-याऽरक्षणलक्षणापराधभाजोऽपि वत्सराजस्यापराधमेनं क्षमित्वा नियतमेव तस्मिन्नु-दारचरितौ गुणग्राहिणौ तत्पितरौ प्रसादपूर्णां दृशं निक्षिपेतामितीदृग् ध्वन्यते । अतः कुपितयोरपि तयोर्महानुभावतया कोपस्यास्य सम्भाव्यमानस्य सत्वरं निवार्य-त्वं तेन राज्ञो भयस्याल्परूपताऽवगन्तव्येत्यलम् । वसन्ततिलकं वृत्तम् ॥ ४ ॥

'वासवदत्ताया रक्षणं कर्तुमक्षमोऽभूव'मित्येवं पत्युरन्तरे विलसन्तीं चिन्तां निवारयन्ती ब्रवीति पद्मावती—**ण किमिति** । प्राप्तश्चासौ कालश्च तस्मिन् प्राप्त-काले योग्येऽवसरे, अनुकूले समय इति यावत् । यदा किल समयोऽनुकूलो भवति,

---

मैं, अपने ऊपर कुपित किये हुए पिता से पुत्र जिस भाँति भयभीत होता है, वैसे ही इस समय भयभीत हो रहा हूँ ॥ ४ ॥

**पद्मा०**—उचित समय आने पर क्या नहीं बचाया जा सकता ?

*प्रतीहारी*—(क) एसो कञ्चुईओ धत्ती अ पडिहारं उवट्ठिदा ।

*राजा*—शीघ्रं प्रवेश्यताम् ।

*प्रतीहारी*—(ख) जं भट्टा आणवेदि ! [ निष्क्रान्ता । ]

---

(क) एष काञ्चुकीयो धात्री च प्रतीहारमुपस्थितौ ।

(ख) यद् भर्ताऽऽज्ञापयति ।

---

कस्य वस्तुनस्तदा रक्षणं न कर्तुं शक्यते, अपि तु सर्वं सुरक्षितं जायते । श्रीमता च यदत्र वासवदत्ता रक्षितुं न पारिता, तत्र श्रीमतो न दोषः, प्रतिकूलः समय एवापराधी तत्कारणत्वेनाऽवतिष्ठते । अतो ध्रुवं समयप्रातिकूल्येन दुर्दैवमहिम्ना तद्रक्षणं यथोचितं कर्तुमपारयता श्रीमता किमपि तद्विषये न चिन्तनीयम्, दैवादुपनतं सर्वं तूष्णीं सोढव्यमेवेति भावः ।

सम्प्रति प्रतीहारी पद्मावतीं श्रावयितुं पुनर्निवेदनमुचितं मन्यमाना स्वामिनं दूतागमनवार्तां निवेदयति—**एसो** इति । एष उपस्थापयिष्यमाणः । कञ्चुकिनोपमात्रा चागतया द्वारदेशोऽलङ्क्रियते । एतौ च सन्देशहारकौ राजदर्शनमिदानीमर्थयेते । कस्तावन्नियोगो भवत्येतयोः कृते ।

प्रतीहार्युक्तमाकर्ण्य राजा तत्र तयोः स्वसमीपप्रवेशनानुमतिं दत्ते—**शीघ्रमिति** । यथा विलम्बो न भवेत्तथैतावत्र प्रवेशयितव्याविल्यर्थः । अत्र काञ्चुकीयो धात्री चेति कर्मणोः पृथक्-पृथक् प्रवेशनक्रियायां सम्बन्धकरणेन 'प्रवेश्यता'मित्येकवचनान्तप्रयोग उपपादनीयः । शीघ्रमिति पदेन राज्ञस्तदीयसन्देशश्रवणोत्सुकत्वं द्योत्यते ।

'तत्रभवतः स्वामिनो निदेशानुसारं साध्यते मये'त्याशयेनाह प्रतीहारी—**जं भट्टेति** । **निष्क्रान्तेति** । कञ्चुकिनं धात्रीं च तत्रोपस्थापयितुं तयोः समीपं प्रतीहारी प्रस्थितेत्यर्थः ।

---

प्रती०—कंचुकी और धाई दोनों द्वार पर उपस्थित हैं ।

राजा—जल्दी लिवा लाओ ।

प्रती०—जो स्वामी की आज्ञा । ( चली गई । )

[ ततः प्रविशति काञ्चुकीयो धात्री प्रतीहारी च । ]

काञ्चुकीयः—भोः !

सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुतानिधनं विषादः ।
किं नाम दैव ! भवता न कृतं यदि स्याद्
राज्यं परैरपहृतं कुशलं च देव्याः ॥ ५ ॥

---

प्रतीहार्या सहितयोरुभयो राज्ञः सन्निधौ प्रवेशं सूचयति—ततः प्रविशतीति । तत्रोपतिष्ठतः काञ्चुकीयस्य मानसमुद्गारं दर्शयति—भो इति । मानसं सम्बोधनमिदम् ।

सम्बन्धिराज्यमिति । अत्र महानिति विशेषणं प्रहर्षविषादयोरुभयत्राऽन्वेति । इदं दृश्यमानं शत्रोः सकाशात्प्रत्यावर्तितं वा, सम्बन्धिराज्यं स्वामिजामातुः शासनविषयीकृतां भूमिम्, एत्यागत्य, ममेति शेषः, महान् भूयान्, प्रहर्षः प्रमोदो भवति, पुनः किञ्च, नृपसुतानिधनं, नृपसुताया राजकुमार्या वासवदत्तायाः निधनं मरणं, 'मरणं निधनोऽस्त्रियाम्' इत्यमरः, स्मृत्वा चिन्तयित्वा, महान् विषादोऽनल्पः खेदो भवति । हे दैव ! विधे ! परैः शत्रुभिः, अपहृतं स्वायत्तीकृतं, राज्यं वत्सदेशाधिपत्यं, देव्या वासवदत्तायाः, कुशलं क्षेमं पुनरुपलब्धिश्चेत्युभयं, यदि पक्षान्तरे, स्याद्भवेत् सम्पद्येत, तर्हि भवता त्वया, किंनाम, हितमिति शेषः, नामेत्यलङ्कृतिर्वाक्यस्य, न कृतं स्यात् न सम्पादितं भवेत् । श्रीमदस्मत्स्वामिसम्बन्धिनो वत्सराजोदयनस्य राज्येऽत्र समुपागमेन सुतरां प्रसीदत्यन्तरात्मा मे, राजकन्याश्रीमद्वासवदत्ताविनाशवार्ताव्यतिकरस्मरणेन च भृशं विषीदत्यधुना ।

---

( तब कंचुकी, धाई तथा प्रतीहारी का प्रवेश । )

कंचुकी—ओह !

संबन्धी के राज्य में आकर बड़ा हर्ष हो रहा है और राजकन्या की मृत्यु का स्मरण कर दुःख हो उठता है । हे दैव ! यदि शत्रु-द्वारा छीना गया हुआ राज्य फिर होकर देवी वासवदत्ता का कुशल भी प्राप्त होता तो तूने क्या भला न किया होता ? अर्थात् ये दोनों बातें एक साथ होतीं तो सभी कुछ बन जाता ॥ ५ ॥

*प्रतीहारी*—(क) एसो भट्टा, उवसप्पदु अय्यो।

*काञ्चुकीयः*—[ उपेत्य ] जयत्वार्यपुत्रः।

*धात्री*—(ख) जेदु भट्टा।

*राजा*—[ सबहुमानम् ] आर्य !

---

(क) एष भर्ता, उपसर्पत्वार्यः।

(ख) जयतु भर्ता।

---

दैवेन पुरा प्रतिकूलतां गच्छता वत्सराज्यं रिपुणाऽपहारितम्, साम्प्रतं तेनैवानुकूलतां कलयता पुनरेतदुपस्थापितम्। इदानीं तु यदि नाम राज्यमिव श्रीमतीं वासवदत्तां वत्सराजाद् वियोज्य भूयस्तेन संयोजयेद् दैवम्, तर्हि नूनं सुवर्णे सौरभयोगदानमिव श्रीमतोरुभयोर्महासेनोदयनयोः सर्वतोऽनुष्ठितं भवेद् दैवेन हितम्। लब्धमपीदं राज्यं देव्याः कुशलवृत्तान्तस्योपलब्धिं विना नीरसायमानं न तावत्तादृशं तोपमुत्पादयितुं प्रभवतीति भावः। अयनप्रहर्षयोः स्मरणविषादयोश्चेह समानकर्तृकतया 'एत्य स्मृत्वे'त्युभयत्र क्त्वाप्रत्ययस्योपपत्तिं कल्पयन्ति केचित्। वसन्ततिलकं नामेदं वृत्तम्॥ ५॥

स्वामिनः समीपमुपगच्छन्ती प्रतीहारी काञ्चुकीयमाह—**एसो** इति। एष इत्यङ्गुल्या निर्देशः। विराजत इति शेषः, आर्य इत्यादरसूचकम्। सिंहासनमेतदलङ्क्रियते श्रीमता महाराजवत्सराजेन। अत्रोपगम्यतां तत्रभवता भवता।

प्रतीहारीसूचनानुसारं समीपमुपस्थाय राज्ञो जयाशंसनं करोति काञ्चुकीयः—**जयत्विति**। सुगृहीतनामधेयस्य मान्यस्य सन्तानः तत्रभवान् सर्वोत्कर्षेण वर्त्ततामित्यर्थः। इदञ्च सेवकाचारसमुचितं कञ्चुकिनो वचनम्।

इदानीं वत्सराजमुदयनं साक्षात्कुर्वती धात्री विजयवाचाभिनन्दत्याह—**जेदु** इति। वत्सदेशाधिपतेः श्रीमतः सर्वतो विजयः स्यादित्यर्थः।

विजयाशंसनं कुर्वाणं काञ्चुकीयं तत्रभवतो महासेनभूपतेः कुशलं प्रष्टुमिच्छन् सविशेषादरं वचनमाह राजा—**आर्येति**। सम्बोधनमिदं श्लोकान्वयि।

---

प्रती०—ये स्वामी हैं। आप पास जाँय।

कंचुकी—( पास पहुँचकर ) श्रीमान् की जय हो।

धात्री—स्वामी की जय जयकार हो।

राजा—( बड़े आदर से ) आर्य !

पृथिव्यां राजवंश्यानामुदयास्तमयप्रभुः ।
अपि राजा स कुशली मया काङ्क्षितबान्धवः ॥ ६ ॥

काञ्चुकीयः—अथ किम् ? कुशली महासेनः । इहापि सर्वगतं कुशलं पृच्छति ।

राजा—[ आसनादुत्थाय ] किमाज्ञापयति महासेनः ?

---

प्रष्टव्यांशं दर्शयति—**पृथिव्यामिति** । पृथिव्यां भूमौ, राजवंश्यानां राजवंशोद्भवानां राज्ञामिति यावत्, भवार्थे यत् प्रत्ययः, उदयास्तमयप्रभुः, उदय उन्नतिः अस्तमयोऽस्तगमनम् अवनतिश्च तयोः प्रभुः समर्थः, मण्डलेश्वरः सम्राडिति यावत्, अस्तमित्यव्ययेन सह कप्रत्ययान्तस्य 'अय'शब्दस्य समासे 'अस्तमय'शब्दः सिध्यति, मया कर्त्रेति स्वात्मनो निर्देशः, काङ्क्षितबान्धवः काङ्क्षितमभीष्टं बान्धवं बन्धोर्भावः सम्बन्धः, भावार्थेऽण्प्रत्ययः, यस्य तादृशः, अथवा—मया, सहेति शेषः, काङ्क्षितबान्धवः काङ्क्षितं बान्धवं येन सः, स राजा पूजनीयः प्रतापी महासेनो नाम भूपतिः, अपि कुशली, अपीति प्रश्नार्थकम्, कुशलमस्यास्तीति कुशली, कुशलयुक्तो वर्तते वा ? तुष्टो रुष्टश्च राज्ञां निग्रहानुग्रहौ कर्तुं समर्थो यो हि मत्सम्बन्धाय सातिशयं स्पृहयते, अहं वा यदीयं सम्बन्धमभिलषामि भृशम्, अपि नाम तत्रभवतो मान्यस्य महीपतेः सर्वतः कुशलं वर्तते ? तदेतन्निवेदनीयं भवतेत्याशयः । अनुष्टुप् छन्दः ॥ ६ ॥

स्वस्वामिनो विषये राज्ञा वत्सराजेन कृतं कुशलप्रश्नमाकर्ण्य काञ्चुकीयस्तन्निवेदयन् ब्रूते—**अथेति** । किमन्यत्, एवमेव वर्तते । अस्ति तावच्छ्रीमतो महासेनस्य कुशलम् । इत्येवं निवेद्य कुशलं स्वामिनो महासेनस्य, तत्कृतमपि वत्सराजविषयकं कुशलप्रश्नं सूचयति—**इहापीति** । इहापि वत्सराज्येऽपि सर्वगतं सर्वविषयकं, सर्वेषामिति यावत्, पृच्छतीति भूतार्थे वर्तमानता । सकुशलेन श्रीमदस्मत्स्वामिनेह भवद्राज्येऽपि सर्वेषां कुशलं पृष्टमित्यर्थः ।

**किमिति** । प्रियाविरहेण स्वकीयं कुशलमपश्यन्नात्मनः कुशलप्रश्नविषये

---

पृथिवी के राजाओं की उन्नति तथा अवनति करने में समर्थ, मेरे साथ सम्बन्ध चाहने वाले या जिनका सम्बन्ध मुझे अभीष्ट है, वे राजा कुशल-सम्पन्न तो हैं ? ॥ ६ ॥

कंचुकी—और क्या ? महासेन कुशलपूर्वक हैं । यहाँ भी आप सब लोगों का कुशल पूछते हैं ।

राजा—( आसन से उठकर ) महासेन की क्या आज्ञा है ?

*काञ्चुकीयः*—सदृशमेतद् वैदेहीपुत्रस्य। नन्वासनस्थेनैव भवता श्रोतव्यो महासेनस्य सन्देशः।

*राजा*—यदाज्ञापयति महासेनः। [ उपविशति। ]

*काञ्चुकीयः*—दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतमिति। कुतः—

---

किमप्यनुत्तरयन्निदानीं राजा श्रीमन्महासेनसन्देशं श्रोतुमिच्छुस्तदुचितमिदं वचनं प्राह काञ्चुकीयम्। ज्ञाधातोर्ण्यन्ताल्लट्, तस्य चात्र माधवमतेऽचाक्षुपज्ञानार्थकतया मित्वाभावान्न ह्रस्वः। कस्तावदादेशोऽस्ति मत्कृते श्रीमतो महासेनस्य? आसनोत्थानपुरःसरं राज्ञः सन्देशश्रवणोद्यतत्वमिदं पूज्यवर—श्रीमन्महासेनविषये परमादरं सूचयति श्रीवत्सराजस्य। अत एव 'आज्ञापयती'त्युक्तं न तु 'सन्दिशती'ति।

'आसनादुत्थायैव गुरुजनादेशः श्रवणीय' इत्याशयेन राज्ञस्तादृशमाचारं दर्शितवतो विनयभावं प्रशंसन्नाह काञ्चुकीयः—**सदृशमिति**। एतत् आसनत्यागरूपादरविशेषाविष्करणम्, वैदेहीपुत्रस्य, विदेहस्य मिथिलाधीश्वरस्यापत्यं स्त्री वैदेही उदयनस्य जननी, 'तस्यापत्य'मित्यण्, 'टिड्ढाणञ्' इत्यादिना ङीप्, तस्याः पुत्रस्य। ननु किन्त्वित्यर्थः। श्रीमन्महासेनसन्देशश्रवणविधौ तदेतदासनोत्थानरूपसमुदाचारप्रदर्शनं विदेहराजदौहित्रस्य भवतो युज्यत एव। मातृवंशपरम्परागतोऽयं विनयः स्थानेऽलङ्करोति भवन्तम्। युक्तमेवैतत्सर्वथा। किन्तु समयेऽस्मिन्नासनमासीन एव श्रीमान् महासेनभूपतेः सन्देशभाषितं शृणुयात्। तच्छ्रवणे पुनः स्वासनादुत्थानस्य नावश्यकतेयमिति भावः।

'आसनादनुत्थायैव भवता स्वामिनः सन्देश आकर्णनीय' इत्येवं कञ्चुकिनाऽनुरुद्धो राजा महासेनभूपतिनैव यथाऽऽदिष्ट इव ब्रूते—**यदाज्ञापयतीति**। भवदीयमनुरोधमेतमनुल्लङ्घनीयं महासेनस्यैवादेशं मन्ये। अतस्तदनुसारमेव साम्प्रतं वर्तेऽहमित्यर्थः। इत्युक्तवतो राज्ञ उपवेशनं दर्शयति—**उपविशतीति**।

अवसरोचितमिदानीं श्रीमन्महासेनसन्देशं निवेदयति काञ्चुकीयः—**दिष्ट्येति**। 'दिष्ट्या' इत्यव्ययं हर्षार्थे, 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः। इति

---

कंचुकी—यह वैदेही-पुत्र के योग्य ही शिष्टाचार है। किन्तु महाराज महासेन के सन्देश को आप आसन पर बैठकर ही सुनें।

राजा—महासेन की जैसी आज्ञा। ( बैठता है। )

कंचुकी—आनन्द की बात है कि शत्रुओं द्वारा छीना गया राज्य फिर लौटा लिया गया। क्योंकि—

**कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते ।**
**प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥ ७ ॥**

*राजा*—आर्य ! सर्वमेतन्महासेनस्य प्रभावः । कुतः—

---

शब्दो वाक्यसमाप्तिसूचकः । सपत्नापहृतराज्यः श्रीमान् यत्किल परान् पराभूय पराक्रमेण विजयश्रियाऽलङ्कृतः स्वं राज्यं पुनः प्राप्तवांस्तदेतदिदानीं महतः प्रमोदस्य स्थानम् । तदर्थं च भवानभिनन्दनीय इत्यर्थः । धीरतासहचरितोत्साहसम्पत्तिश्च भवतोऽस्मिन् विजये हेतुभूतास्तीति गूढमत्र व्यङ्ग्यम् । तदेव समर्थयन्नाह—कुत इति । यत इत्यर्थः ।

तथा हि—**कातरा** इति । ये पुरुषाः कातरा अधीराः, अपि वा अपि च अशक्ताः शक्तिरहिताः सन्ति, तेषु पुरुषेषु, उत्साहोऽध्यवसायः 'उत्साहोऽध्यवसायः स्या'दित्यमरः, न जायते लब्धावकाशो न भवति । हि युक्तमेवैतत् , प्रायेण बहुधा, नरेन्द्रश्रीः राजलक्ष्मीः समृद्धं राज्यसुखमिति यावत् , सोत्साहैरुत्साहसम्पन्नैरेव पुरुषैः, भुज्यते आस्वाद्यत इत्यर्थः । शक्तिमन्तोऽप्यधीरा ये, ये च धीरा अप्यशक्ता वर्तन्ते,उभयविधा अप्यमी उत्साहंशक्त्या विरहिता भवन्ति । उत्साहस्तु धैर्यं शक्तिं चेत्युभयमप्यपेक्षते, बहुत्रेदं दृश्यते, यदुत्साहेन सम्पन्ना एव राजश्रियं भोक्तुं'पारयन्ते, अलसानामनुद्यमिनां च राज्यसुखं सर्वथा दुर्लभमिति । सोत्साहं च भवन्तं विजयलक्ष्मीः स्वयं वृतवतीति लब्धराज्यो भवानभिनन्दनीय इत्येष भवन्तमुद्दिश्य श्रीमन्महासेनस्य सन्देशो वर्तत इति भावः । अनुष्टुप् छन्दः ॥ ७ ॥

श्रीमतो महासेनस्य सन्देशमेतं निशम्य 'श्रीमन्महासेनप्रभावेणैव सर्वमिदं सम्पन्नम् , अन्यथा दुर्लभविजयावाप्तौ मम का वा शक्ति'रित्यर्थकं वचनमाह राजा—**आर्येति** । 'आर्ये'त्ययं सम्बुद्ध्यन्तपदप्रयोगो वृद्धं काञ्चुकीयं प्रत्यादरभावं सूचयति राज्ञः । सर्वमेतदिति सामान्ये नपुंसकता, विजयश्रियो लाभः परापहृतराज्यस्य पुनः प्रत्याहरणं चेति तदर्थः । प्रभावशब्दस्य नियतलिङ्गत्वान्

---

जो अधीर और असमर्थ होते हैं, उनमें उत्साह उत्पन्न नहीं होता । प्रायः उत्साही पुरुष ही राज-संपत्ति का उपभोग करते हैं ॥ ७ ॥

**राजा**—आर्य ! यह सब महासेन का प्रभाव है । क्योंकि—

अहमवजितः पूर्वं तावत् सुतैः सह लालितो
दृढमपहृता कन्या भूयो मया न च रक्षिता ।
निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता
ननु यदुचितान्वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ॥ ८ ॥

---

पुंस्त्वपरिवर्तनम् । प्रभावजन्यमिति तस्यार्थः । वचनं चेदमभिमानशून्यतां विनयालङ्कृततां द्योतयति राज्ञः । कुतः इति विजयस्य तत्प्रभावसाध्यत्वसूचनमिदम् ।

तथा हि—**अहमिति** । पूर्वं पुरा गजमृगयावसरे, तावत्पदमप्यर्थे, अवजितः पराजित्य निगृहीतोऽप्यहं, गुणवत्सलत्वात् सुतैः सह स्वपुत्रैः समं, दृढमत्यर्थं लालितो लालनपूर्वकं पालितोऽभवम् , अर्थान्महासेनेन । तदानीं च तत्र तिष्ठता मया, कन्या तस्यैव राज्ञो महासेनस्य कुमारी वासवदत्तेति यावत् , अपहृता अपहरणपूर्वकं ततः स्वं नगरमानीता, भूयः पुनश्च, न रक्षिता अग्निदाहान्न पालिता । च किञ्च, तस्याः स्वकन्यायाः, निधनं श्रुत्वापि विनाशश्रवणादपीत्यर्थः, तथैव पूर्ववदेव, मयि मद्विषये, महासेनस्येति शेषः, स्वता आत्मीयता वर्तते, 'स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये' इत्यमरः । ननु निःसंशयम् , उचितान्वत्सान् प्राप्तुं मदीयशासनयोग्यं वत्सराज्यं पुनः शत्रोः सकाशात्स्वायत्तीकर्तुं यत् , 'मया समर्थेन जात'मिति शेषः, 'शकधृषे'त्यादिना 'प्राप्तु'मिति तुमुन् प्रत्ययः, अत्र राज्यप्राप्तिक्षमतारूपेऽस्मिन्विषये, नृपो हि, हिपदमेवार्थे, राजा महासेन एव, कारणं निमित्तभूतोऽस्तीत्यर्थः । 'पुरा खलु वत्सदेशाधीश्वरमुदयनं नाम वीरं वैणिकाचार्यं गजविद्याविदं गुणिनं तदीयगुणलोभेन स्वकन्याया वासवदत्तायाः पतिं कर्तुमिच्छंस्तदुचितावसरान्वेषणपरायणः प्रद्योतनामा नरपतिः कदाचित् स्वरसान्मृगयायै कमपि वनोद्देशमागतं तं गजमृगयापराधेन च्छलाद्बन्दीकृतमात्मनोऽन्तःपुरमानीय वासवदत्तावीणाशिक्षणे नियुज्य पुत्रवत्पालयाञ्चक्रे । कियच्चिरं च तत्रावस्थाय वत्सराजो यौगन्धरायणनामधेयस्य मन्त्रिणश्चातुर्येण वासवदत्तां नाम निजप्रीतिपात्रं राजकन्यां ततोऽपहृत्य कौशाम्बीं निजां राजधानीं पर्यापतत् ।' एतत्कथानुसारेव राज्ञः स्वीयावस्था-

---

पहले मैं जीता जाकर अपने लड़कों के साथ जिनसे पाला गया, उनकी कन्या को मैं बलपूर्वक भगा ले आया और फिर उसकी रक्षा न कर सका । उस कन्या की मृत्यु का समाचार पाकर भी उनका मेरे ऊपर वही पूर्ववत् प्रेम या ममता बनी हुई है । निश्चय, मेरे शासन के योग्य वत्सराज्य के फिर पाने में वे राजासाहब ही कारण हैं ॥ ८ ॥

काञ्चुकीयः—एष महासेनस्य सन्देशः। देव्याः सन्देशमिहात्रभवती कथयिष्यति।

राजा—हा! अम्ब!

षोडशान्तःपुरज्येष्ठा पुण्या नगरदेवता।

---

प्रदर्शनमिदम्। अयमर्थः—पुरा किल गजमृगयापराधभाजं बन्दीकृत्यापि मां गुणग्राही पुत्रवत् पालितवान् सर्वतो महासेनः। अहञ्च तांस्तदुपकारानवगणय्य कृतघ्नो राजकन्यामपाहरं दैवादग्निना दह्यमानां च तां रक्षितुं नापारयम्। निजात्मजाविनाशवृत्तमिदं कालेन विदित्वापि सापराधेऽप्युदारो मयि महासेनोऽद्यापि तादृशीमेव स्वीयत्वबुद्धिं यदवलम्बते, तदिदं कृतदौर्जन्येऽपि मयि तदीयं सौजन्यमभिनन्दनीयं नाम। सन्देहलेशस्यापि नात्रावकाशो वर्तते-यदहं परैरपहृतं पुनरात्मनो राज्यं करगतं कर्तुं समर्थोऽभूवम्, स एष श्रीमन्महासेनस्यैव प्रभुशक्तेर्महीयान् महिमा। मदीयराज्यप्राप्तौ ध्रुवं तेनैव राज्ञा कारणीभूतेन जातम्। अहन्त्वकिञ्चित्करो महत्तमेऽस्मिन्कर्मण्यसमर्थ एवासं सर्वथेति। हरिणीच्छन्दः। 'रसयुगहयैर्न्सौ म्रौ स्लौ गौ यदा हरिणी तदा' इति तल्लक्षणम्॥ ८॥

राज्ञो वचनं श्रुत्वा काञ्चुकीय आह—**एष** इति। एष पूर्वोक्तः। इह अस्मिन्समये। महाराजमहासेनस्य सन्देशवागियं मया निवेदिता। इदानीं महाराज्या अङ्गारवत्याः सन्देशस्तावन्मान्यया वासवदत्तोपमात्रा निवेदयिष्यते। सोऽयं च तत एवावगन्तव्यो भवतेत्यर्थः। 'अत्रभवती'ति पदप्रयोगोऽयं काञ्चुकीयस्य राजकन्याया वासवदत्ताया उपमातरं वसुन्धरां प्रत्यादरभावं सूचयति।

श्वश्रूसन्देशश्रवणात्पूर्वं मातृतुल्यां तां मातृपदेन सम्बोधयंस्तदीयं कुशलं जिज्ञासू राजा तदुचितं वचः प्रयोदयन्नाह—**हा! अम्बेति**। मातः! कष्टम्। एष च राज्ञः स्वामिनो वियोगेन दुःखिनीं मातृकल्पां श्वश्रूमुद्दिश्य शोकानुभावो दर्शितः कविना।

**षोडशेत्यादि**। षोडशान्तःपुरज्येष्ठा, - षोडशानां षोडशसंख्याकानाम्

---

कंचुकी—यह श्रीमहासेन का संदेश है। देवी (महारानी) का संदेश आर्या वसुन्धरा कहेंगी।
राजा—हाय! माता!
सोलह रानियों में प्रधान ( महिषी ), पवित्र, नगर की देवता, मेरे प्रवास-दुःख से

**मम प्रवासदुःखार्ता माता कुशलिनी ननु ? ॥ ९ ॥**

*धात्री*—(क) अरोआ भट्टिणी भट्टारं सव्वगदं कुसलं पुच्छदि ।

*राजा*—सर्वगतं कुशलमिति ? अम्ब ! ईदृशं कुशलम् ।

---

(क) अरोगा भट्टिनी भर्तारं सर्वगतं कुशलं पृच्छति ।

---

अन्तःपुराणामन्तःपुरस्थानां राजभोग्यस्त्रीणां मध्ये ज्येष्ठा प्रधानभूता महिषीति यावत्, 'स्त्र्यगारं भूभुजामन्तःपुर'मिति कोपादन्तःपुरशब्दो राजमहिलागारवाचकोऽप्यत्र तात्स्थ्याद्राजदारेषूपचरितो बोद्धव्यः, पुण्या पवित्रचरिता, नगरदेवता पूजनीयत्वान्नगरस्य देवतेव स्थिता, मम मे, प्रवासदुःखार्ता, प्रवासदुःखेन वियोगरूपेण कष्टेन आर्ता पीडिता, माता मातृकल्पा श्वश्रूरङ्गारवती, कुशलिनी, ननुशब्दः प्रश्नार्थे, कुशलयुक्ता वर्तते वा ? या किल शुद्धेन चारित्रेण पूजनीया राजमहिषी नगरदेवतेव मन्यते लोकैः, या च मदीयवियोगदुःखेन दुःखिनी वर्तते, तस्या मातुरङ्गारवत्याः कुशलं विद्यते ? अत्र राज्ञा कृतं मातुरङ्गारवत्या दुःखिनीत्ववर्णनं स्वात्मजासम्बन्धेन पुत्रनिर्विशेषे राजनि वात्सल्यभावोदयेन च स्वाभाविकतयोचितं वेदितव्यम् । षोडशान्तःपुरज्येष्ठेति मातुर्विशेषणेन महासेनभूपतेर्भोगिन्यः स्त्रियः षोडशाऽऽसन्निति सूचितम् । अनुष्टुप् वृत्तमिदम् ॥ ९ ॥

धात्रीदानीं स्वामिन्याः कुशलं, तया कृतं वत्सराजमुद्दिश्य कुशलप्रश्नं च निवेदयति—**अरोआ** इति । अरोगा आरोग्यवती कुशलिनीति यावत्, भर्तारं स्वामिनं वत्सराजम्, 'अकथितं चे'त्यनेन कर्मसंज्ञा । अस्मदीया स्वामिनी स्वयं कुशलिनी श्रीमतः सपरिवारस्य कुशलं जिज्ञासत इत्यर्थः ।

राजा च स्वात्मनः सपरिवारस्य श्वश्रूकृतममुं कुशलप्रश्नमाकर्ण्य सशोकं ब्रूते—**सर्वगतमिति** । इतिशब्दादनन्तरं 'पृच्छ्यते' इत्यर्थवलाद् योजनीयमत्र । किं सपरिवारस्य मे कुशलं मात्रा पृष्टमित्यर्थः । इत्येवमुक्त्वा स्वकुशलविषये स्वावस्थां निवेदयति—**अम्बेति** । मातः ! ईदृशं कुशलं वर्तते, यादृशं मयानुभूयतेऽधुना वासवदत्तावियोगविकलेन । अकुशलमेव ममेत्यर्थः । अकुशलिन्या प्रियया वियुक्तोऽहं कष्टेन कथञ्चित्प्राणिमि । एतेनैव कुशलं मदीयमुन्नेयम् । केवलं कथ-

---

दुःखी माताजी कुशल-पूर्वक तो हैं ? ॥ ९ ॥

धात्री—सकुशल महारानी सपरिवार आपका कुशल-मंगल पूछती हैं ।

राजा—सबका कुशल पूछती हैं ? माँ ! यहाँ तो ऐसा कुशल है ।

*धात्री*—(क) मा दाणि भट्टा अदिमत्तं सन्तप्पिदुं।

*काञ्चुकीयः*—धारयत्वार्यपुत्रः। उपरताऽप्यनुपरता महासेनपुत्री

---

(क) मेदानीं भर्तातिमात्रं सन्तप्तुम्।

---

मपि शारीरं कुशलं वर्तते, मानसं तु तन्नास्त्येव साम्प्रतं हतभाग्यस्य ममेति भावः।

अत्र च 'यादृशं कुशल'मित्येवं कुशलस्वरूपं किमप्यनभिधाय 'ईदृश'मित्यनेन ध्वनिमर्यादया स्वीयमकुशलं तावद् व्यक्ततां नीतं राज्ञा। एतेन प्रियाविरहाद्राज्ञोऽवस्थाविशेषस्य कष्टमयत्वमनिर्वचनीयत्वं च द्योत्येते। 'स्वावस्थायां च यथार्थतो निवेदितायामुद्बुद्धकन्यावियोगदुःखा च माता समधिकं दुःखं प्राप्नुया'दित्येवं तत्कालोचितं विचारयन् राजा किमपि गूढं सूचितवान् कुशलविषये च विशिष्य किञ्चिन्नोक्तवान्। पूर्वं कञ्चुकिमुखेन श्रीमन्महासेनकृतमात्मनो विषये कुशलप्रश्नमाकर्ण्यापि तत्र किमपि स्वावस्थानिवेदनं कष्टकरमनुचितं च मन्यमानेन तद्विषये राज्ञा मौनमेवावलम्बितम्। इदानीं पुरस्तात्पुनरप्युपगतं तमेव धात्रीमुखेन महाराज्ञ्याः प्रश्नमवगत्य 'किमपि तद्विषये सूचनीयमेवे'ति तदुचितमुत्तरं तदेतदस्फुटं कल्पितमिति दिक्।

पूर्वोक्तेन वचसा श्रीमतो राज्ञः शोकाकुलत्वमाकलयन्ती राजानं समाश्वासयति धात्री—मेति। अर्हतीति शेषः। स्वावस्थास्मरणेन नात्यर्थमवलम्बनीयोऽस्मिन्समये श्रीमता सन्तापः। न मनः खेदनीयमेवम्। वियोगदुःखं पुनः स्मृतं सद् दुःखमेवोद्दीपयेत्। सर्वथेदमिदानीमनुचितं निष्फलं चेति भावः।

काञ्चुकीयोऽपि राज्ञः शोके समुचितं समाश्वासनवचनं प्रस्तौति—धारयत्विति। धारयतु निगृह्णातु, शोकावेगमिति शेषः। एवं पूर्वोक्तप्रकारेण, अनुकम्प्यमाना, अनुकम्पा कृपा सा चात्र स्मरणरूपा, स्मर्यमाणेति यावत्। साम्प्रतं तत्रभवता भवतैष शोकावेगोऽन्तर्निग्रहीतव्यः। अदर्शनं गतापि श्रीमती वासवदत्ता सम्प्रतीदमीदृशं श्रीमता स्मरणविषयत्वं नीयमाना ध्रुवं जीवत्येव। अतस्तद्विनाशविषये न किञ्चिच्छोचितव्यं भवतेत्याशयः। 'वासवदत्ताया रक्षणमहं न तावत्कर्तुं

---

धात्री—अब आप अधिक शोक न करें।

कंचुकी—श्रीमान् शोक के आवेग को रोकें। श्रीमान् से इस प्रकार स्मरण की जानेवाली महासेन की पुत्री वासवदत्ता मर कर भी नहीं मरी। अथवा (मैं वासवदत्ता का रक्षण नहीं

एवमनुकम्प्यमानार्यपुत्रेण । अथवा—

कः कं शक्तो रक्षितुं मृत्युकाले रज्जुच्छेदे के घटं धारयन्ति ? ।
एवं लोकस्तुल्यधर्मो वनानां काले काले छिद्यते रुह्यते च ॥१०॥

पारितवा'नित्यत्रापि विषये भवता विषादो न विधेय इत्याशयेनाह—अथवेति । वासवदत्तारक्षणविधावक्षमतापि सेयं दैवकृता न भवतश्चिन्तनीयेति भावः ।

तथा हि—कः कमिति । मृत्युकाले आयुषः क्षयस्यावसरे समुपस्थिते, कः सप्रयत्नोऽपि नरः, कं प्रीतिपात्रमपि जनं, रक्षितुं शक्तः मृत्योः सकाशात्परित्रातुं समर्थो भवति, अर्थान्न, आसन्नमृत्युर्म्रियत एव सर्वोऽपीति भावः । अत्र विषये दृष्टान्तं दर्शयति—रज्जुच्छेद इति । रज्जुच्छेदे, रज्जोर्गुणस्य घट बन्धनसमर्थस्य वस्तुन इति यावत् छेदे भङ्गे सति, के पुरुषा जलमुद्धर्तुमिच्छन्तोऽपि, घटं रज्जु-चलात्कूपमध्ये प्रवेशितं कलशं, धारयन्ति कूपान्तःपतनान्निवारयितुं पारयन्ति, न केऽपीत्यर्थः । भग्नरज्जुर्घटस्तावत्कूपान्तः पतत्येवेति भावः । यथासमयं दैवा-दुपनतौ शरीरिणामुत्पत्तिविनाशौ भवत एवेत्याह—एवमिति । एवं पूर्वप्रदर्शित-प्रकारेण प्राणिनामदृष्टमात्रैकपरतन्त्रतयेति यावत्, वनानाम्, अत्र वनपदं तत्र-स्थवृक्षोपलक्षकम्, वनस्थानां वृक्षाणामित्यर्थः, तुल्यधर्मः, तुल्यः समानो धर्मः वक्ष्यमाणो गुणो यस्य तादृशः, लोको मनुष्यः, काले काले तत्र तत्र तदनुकूले समये, छिद्यते छिन्नो भवति नश्यति, रुह्यते रोहत्युत्पद्यते च । अयं भावः—अवलम्ब्य-भूतायां रज्जौ सत्यामेव यथोपरिष्टाद्घटस्तिष्ठति तदभावे च स कूपान्तर्नूनं पतति; तथैव सति शेषे जीवितकालस्य जनोऽवतिष्ठतेऽन्यथा च परवशो मृत्युमुखं प्रवि-शति । भग्नरज्जुर्घटो गतायुश्च पुमान् प्रयत्नशतैरपि केनापि तदानीं नियतभाविनो विनाशाद्रक्षितुं न शक्येते । दुर्लभस्तत्र सर्वथा पुंप्रयत्नः । वनस्थाः पादपा यथा यथासमयमुत्पद्यन्ते विनश्यन्ति च, एवमेव प्राणिनां जन्ममृत्यू नियतकालभाविना-वनिवार्यौ नियतम् । अतश्च 'न मया वासवदत्ता रक्षितुं पारिते'त्येवं चिन्तया

---

कर सका—यह भी आपको नहीं सोचना चाहिये )—

मृत्यु का समय आजाने पर कौन किसको बचा सकता है ? रस्सी के टूट जाने पर कौन घड़े को धारण करते हैं अर्थात् गिरने से रोक सकते हैं ? इसी तरह मनुष्य भी वृक्षों के समान—जैसे वृक्ष समय समय पर काटे जाते हैं और उत्पन्न होते हैं—समय समय पर मरते उत्पन्न होते हैं ॥ १० ॥

*राजा*—आर्य ! मा मैवम् ,

**महासेनस्य दुहिता शिष्या देवी च मे प्रिया ।**
**कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥ ११ ॥**

---

नात्माऽनुतापनीयः, कथमसौ दैवाद्विनश्यन्ती रक्षितुं शक्यासीद्भवता । तथा च श्रीहर्षः—'न वस्तु दैवस्वरसाद्विनश्वरं सुरेश्वरोऽपि प्रतिकर्तुमीश्वरः' इति । अत्र 'तुल्यधर्म' इति पदे 'धर्मादनिच् केवलात्' इत्यनिच् प्रत्ययः समासान्तविधेरनित्यत्वकल्पनया न कृतः कविना । 'तुल्यधर्मा' इति युक्तं पठितुम् । 'छिद्यते रुध्यते' चेत्यत्रोभयत्र कर्तुः कर्मवद्भावः, तेन यगात्मनेपदे । शालिनीनामकं छन्दोऽदः, लक्षणमुक्तं प्रागेतदीयम् ॥ १० ॥

**आर्येति** । दर्शनविषयातीतवासवदत्तास्मरणविषयान्निवारयन्तं काञ्चुकीयं प्रति वासवदत्ताविस्मरणस्य दुःसम्भवत्वं प्रतिपादयतो वचनमिदं राज्ञः । अत्र वाक्ये 'वोचः' इति शेषः । श्रीमन् ! नैवेदं वक्तव्यं भवता, यद् 'वासवदत्ताऽनुचिन्तनं न कर्तव्य'मिति । स्मृतिपथादपनेतुं न शक्या सा मत्प्रिया ।

तथा हि—**महासेनस्येति** । महासेनस्य तन्नाम्नो भूपतेः, दुहिता कन्या, मे शिष्या मत्तः सङ्गीतविद्यां शिक्षितवती, देवी कृताभिषेका महिषी, प्रिया असाधारणप्रणयास्पदं चेत्येवंगुणविशिष्टा, साऽनुभूता वासवदत्ता, देहान्तरेषु अन्येषु जन्मस्वपि, किं पुनरेतस्मिञ्जन्मनीत्यपिशब्दार्थः, मया तद्गुणान् जानता, कथं केन प्रकारेण, स्मर्तुं चिन्तयितुं न शक्या न पार्या । या किल निरतिशयं मयि वात्सल्यं वहतः श्रीमतो महीपतेर्महासेनस्य कन्यासीत्, यां च विनेयां नपरिश्रमं सङ्गीतविद्यामहं शिक्षितवान्, यया हि मन्महिषीत्वपदं गुणैर्विभूषितं व्यधीयत, यस्यै च प्रेमसर्वस्वाय मे परवशं चेतः सुतरां स्पृहयते स्म, तादृशाऽवर्णनीयगुणविशेषशालिनीं प्रियतमां तां वासवदत्तामस्मिञ्जन्मनि कथमहं विस्मर्तुं शक्नुयाम् ? जन्मान्तरेऽप्यविस्मरणीयं कुतो नाम नाकलनीयं तद्गुणगौरवं गुणज्ञेन मयेति भावः । अनुष्टुब् वृत्तम् ॥ ११ ॥

---

राजा—आर्य ! नहीं, ( ऐसा न कहिये )

वह महासेन की पुत्री मेरी प्रिय शिष्या और प्रिय रानी थी । मैं उसका जन्म-जन्मान्तर में भी कैसे स्मरण नहीं कर सकता ? अर्थात् मैं उसे कभी भी भूल जाने की इच्छा रखने पर भी नहीं भूल सकता ॥ ११ ॥

धात्री—(क) आह भट्टिणी—उवरदा वासवदत्ता । मम वा महासेणस्स वा जादिसा गोवालअपालआ, तादिसो एव्व तुमं पुढमं एव्व अभिप्पेदो जामादुअत्ति । एदण्णिमित्तं उज्जइणिं आणीदो । अणग्गि-सक्खिअं वीणाववदेसेण दिण्णा । अत्तणो चवलदाए अणिवुत्तविवाह-मङ्गलो एव्व गदो । अहअ अह्मेहिं तव अ वासवदत्ताए अ पडिकिदिं चित्तफलआए आलिहिअ विवाहो णिव्वुत्तो । एसा चित्तफलआ तव

(क) आह भट्टिनी—उपरता वासवदत्ता । मम वा महासेनस्य वा यादृशौ गोपालकपालकौ, तादृश एव त्वं प्रथममेवाभिप्रेतो जामातेति । एतन्निमित्तमुज्जयिनीमानीतः । अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता । आत्मनश्चपलतयाऽनिर्वृत्तविवाहमङ्गल एव गतः । अथ चावाभ्यां तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः । एषा

तमेतमुपस्थितं राज्ञः प्रियतमाऽतीतविषयानुचिन्तनप्रसङ्गमाक्षिप्य धात्री श्रीमन्स-हाराज्याः सन्देशवाचोऽवशेषमुपक्षिपन्ती ब्रूते—आहेति । भट्टिनी स्वामिनी, आह सन्दिष्टवतीति यावत् । अस्मदीयस्वामिन्या वक्ष्यमाणमिदं सन्दिष्टमस्ती-त्यर्थः । तमेव सन्देशाकारं दर्शयति—उवरदेति । मम वा महासेनस्य वेत्यत्र वापदद्वयं चार्थे, चकारार्थश्च समुच्चयः, गोपालकपालकौ, गोपालकश्च पालकश्चे-त्येतन्नामकौ द्वौ राजकुमारौ, यादृशौ प्रीतिभाजाविति शेषः, प्रथममेव उज्जयिन्यां तवानयनात्पूर्वमेव, एतन्निमित्तं जामातृभावं त्वां प्रापयितुम् , जामातरं कर्तुमिति यावत् । न विद्यतेऽग्निर्वैवाहिकोऽग्निः साक्षी साक्षाद् द्रष्टा यस्मिन्कर्मणीत्यनग्नि-साक्षिकम् , इदञ्च दत्तेति क्रियाया विशेषणम् , वीणाव्यपदेशेन वीणावादनशिक्षण-व्याजेन, वस्तुतस्त्वदीयभार्यात्वेन, 'तुभ्यं से'ति शेषः । चपलतया अधीरतया, न निर्वृत्तं न सम्पन्नं विवाहमङ्गलं परिणयोत्सवो यस्येत्यनिर्वृत्तविवाहमङ्गलः, 'त्वं तया सहे'ति शेषः । अथ च तदनन्तरम् , प्रतिकृतिम्, आकारसंवादिनीं काय-

धात्री—महारानी कहती हैं कि वासवदत्ता तो मर गई । मेरे या महाराज के जैसे गो-पालक और पालक दो पुत्र प्रिय हैं, वैसे ही तुम हो और पहले ही से जामाता मान लिए गये हो । इसलिए तुम उज्जयिनी में लाये गये थे । अग्नि को साक्षी किये बिना ही वीणा सिखाने के बहाने वह तुम्हारे स्वाधीन कर दी गई । किन्तु अपनी चञ्चलता के कारण विवाह-मंगल हुए बिना ही तुम चले गये । तब हम दोनों ने तुम्हारी और वासवदत्ता की

सआसं पेसिदा । एदं पेक्खिअ णिव्वुदो होहि ।

*राजा*—अहो ! अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या ।

---

चित्रफलका तव सकाशं प्रेपिता । एतां दृष्ट्वा निर्वृतो भव ।

---

च्छायाम्, चित्रफलकायां चित्रफलके काष्ठपटपत्रादिरूपचित्राधारविशेषे, स्त्रीत्वमिदं कवेर्निरङ्कुशत्वात् । आलिख्य सम्पाद्य, निर्वृत्तः कृतः । निर्वृतः अपगतप्रियावियोगव्यथः स्वस्थचित्तः, सुखीति यावत् । अयमर्थः—दैववशादिदानीं कालेन कवलितायाः वासवदत्ताया दर्शनं दुर्लभम् । वत्सयोर्गोपालकपालकयोर्विषये श्रीमतो महाराजस्य मम च यथा वात्सल्यं वर्तते तथा त्वय्यपि । युष्मासु न कश्चिदावयोर्भेदभावः । उज्जयिन्यां त्वदागमनात्पूर्वमेव त्वद्गुणलुब्धाभ्यामावाभ्यां मनसा त्वं जामाता कल्पितः । तदेव च मानसोद्दिष्टं पूरयितुं त्वदीयजामातृभावसम्बन्धसङ्घटनाभिप्रायेण पुरा त्वमुज्जयिन्यामुपस्थापितः । अकृत्वाऽग्निं साक्षिणं तत्र वीणावादनकलाकौशलशिक्षणच्छलेन तुभ्यं दत्ता स्वकन्या वासवदत्ता । गान्धर्वविवाहविधिना च स्वीकृत्य तां तत्प्रीतिपाशपरवशेन त्वया चेतसश्चाञ्चल्येन विवाहमङ्गलविधानमस्मत्सम्पादयिष्यमाणमनपेक्ष्यैव तया सह गूढं स्वां नगरीमागतम् । आवां च तदेतदालोच्य त्वया सह वासवदत्तायाः परिणयं कर्तुमिच्छन्तौ तदिच्छापूर्तेरुपायमनुरूपं कमप्यपश्यन्तौ चिरतियात्कालादभिलषितं विवाहमङ्गलं युवयोरालेख्यकल्पितयोः कृत्रिमं सम्पाद्य कथञ्चित्सन्तोषं लब्धवन्तौ । मनस्तु नौ साक्षात्सत्यं सम्बन्धं युवयोर्मिथः सम्पादयितुमिच्छति । अस्तु तावत्, गतं न शोच्यम् । 'विधेः सङ्केत एतादृगेव स्यात्कदाचि'दिति मत्वा तूष्णीमास्यते । चित्रफलकं च तदिदं युवयोराकृतिभ्यां संवदन्त्यौ प्रतिच्छाये बिभ्रत् साम्प्रतं प्रहितं त्वत्समीपम् । वासवदत्ताविरहानलज्वालाजालाकुलेन त्वया खलु चित्रदर्शनेनैव कथञ्चिच्छान्तिं नेयोऽन्तरात्मा । अयमेव तावदिदानीमुपायोऽस्ति मनसस्तेऽनुरञ्जनस्येति ।

श्रीमत्या अङ्गारवत्याः सन्देशभाषितमिदं प्रशंसति सानन्दं राजा—अहो इति । अहो इत्यानन्दसूचकमव्ययम् । अतिस्निग्धं स्नेहातिशयसमन्वितम् । श्रीमती मान्या मे श्वश्रूरसाधारणस्नेहपरिपूर्णं योग्यं च वचनमेतदुक्तवती ।

---

तसवीर चित्र-पट पर उतारकर तुम दोनों का विवाह कर दिया । यह चित्र-पट तुम्हारे पास भेजा है । इसे देखकर शान्त हो जाओ ।

राजा—अहा ! महारानी ने अत्यन्त प्रेम-युक्त और अपने अनुरूप कहा ।

वाक्यमेतत् प्रियतरं राज्यलाभशतादपि ।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः ॥ १२ ॥

पद्मावती—(क) अय्यउत्त ! चित्तगदं गुरुअणं पेक्खिअ अभिवादेदुं इच्छामि ।

धात्री—(ख) पेक्खदु पेक्खदु भट्टिदारिआ । [चित्रफलकां दर्शयति ।]

---

(क) आर्यपुत्र ! चित्रगतं गुरुजनं दृष्ट्वाभिवादयितुमिच्छामि ।
(ख) पश्यतु पश्यतु भर्तृदारिका ।

---

वात्सल्यातिशयसूचकं तदेतदाकर्णयतोऽतितरां प्रसीदत्यन्तरात्मा मे ।

**वाक्यमिति** । एतद्वाक्यं धात्रीमुखेन श्रीमत्या महाराज्या सूचितं सन्देशवचनमिदं, राज्यलाभशतादपि, शतशब्दोऽत्रायं बहुत्वं बोधयति, प्रभूतराज्यप्राप्तेरपीति यावत्, प्रियतरमतिप्रियं वर्तते, अर्थान्मम । प्रियतरत्वमेव तस्याह— **अपराद्धेष्वपीति** । यत्, अपराद्धेष्वप्यस्मासु, बहुत्वमिदमात्मनो गौरवार्थम्, कन्यापहरणादिरूपगुरुतरापराधभाजनेऽपि मयि, अम्बयेति शेषः, जनन्याङ्गारवत्येति तदर्थः, स्नेहः स्वीयत्वसूचकं वात्सल्यं, न विस्मृतो विस्मृतिं न प्रापितः, अनुसृत एवेति यावत् । अयमाशयः—प्राप्तानि भूयांस्यपि राज्यानि न तथा मां प्रीणयितुं प्रभवेयुर्यथेदमिदानीं श्वश्रूवाचिकं प्रीणयति । योऽहं तदीयकन्यापहारादिकमक्षम्यापराधजातं कृतवांस्तत्रापि मयि तयोदारचित्तया यत्तावत्तादृशं वात्सल्यं दर्श्यते, तदेतदालोचयन् वचनमुदारमेतदीयमेतस्याः समधिकं रोचये । सर्वथैतादृशमुदारार्थं सन्दिशन्ती श्रीमती श्वश्रूरभिनन्दनीया मयेति । अनुष्टुप् छन्दः ॥१२॥

मान्यां वासवदत्तां चित्रविन्यस्तां द्रष्टुं तत्र स्वीयमुचितमादरं च दर्शयितुं प्रस्तौति पद्मावती—**अय्यउत्तेति** । गुरुजनं वासवदत्तामिति यावत्, स्वामिन् ! चित्रस्थमेतं पूजनीयं वासवदत्तालक्षणं जनं नयनगोचरं कुर्वत्याः प्रणामेन तं सम्भावयितुमीहते ममेदं मन इत्यर्थः ।

**पेक्खदु** इति । 'प्रणामकरणव्याजेन चित्रमिदं द्रष्टुमिष्यते नियतमेतये'ति

---

यह ( दाई के द्वारा सास का भेजा हुआ संदेश-रूप ) वाक्य सैकड़ों राज्य-लाभ से अधिक प्रिय है । क्योंकि उन्होंने मुझ अपराधी पर से भी अपना प्रेम नहीं भुलाया ॥ १२ ॥

पद्मा०—आर्यपुत्र ! तसवीर में गुरुजन का दर्शन कर प्रणाम करना चाहती हूँ ।

धात्री—देखिये, राजकुमारीजी देखिये ( चित्रपट दिखलाती है । )

पद्मावती—[ दृष्ट्वा आत्मगतम् ] (क) हं! अदिसदिसा खु इअं अय्याए आवन्तिआए। [ प्रकाशम् ] अय्यउत्त! सदिसी खु इअं अय्याए?

राजा—न सदृशी। सैवेति मन्ये। भोः! कष्टम्।

(क) हम्! अतिसदृशी खल्वियमार्याया आवन्तिकायाः। आर्यपुत्र! सदृशी खल्वियमार्यायाः?

तस्यास्तद्दर्शने धात्र्याः नमम्भ्रमोक्तिरियम्। अर्थानुरोधादत्र चित्रमिदं गुरुजनं वेति कर्मपदाक्षेपः। 'पेक्खदु' पदद्विरुक्तिरत्रेयं पद्मावतीं तद्दर्शयितुं धात्र्याः सम्भ्रमं, सम्यग्दर्शनरूपमर्थं वा बोधयति। दिदृक्षितं तावद् दृश्यतां समीचीनतया निर्वर्त्यतां च राजकुमार्याऽस्मिन्समये स्वीयमनोगताभिप्रायपरिपूर्तिरित्यर्थः।

चित्रेऽभिलिखितां वासवदत्तां स्वान्तिकन्यस्ताऽऽवन्तिकाकारेण संवदन्तीं संलक्ष्य पद्मावती सशङ्कमानसं ब्रूते—**हमिति**। 'हम्' इत्यव्ययं शङ्कायाम्। अतिसदृशी अत्यन्तं समाना, खलुपदं त्वर्थे, इयं वासवदत्तायाः प्रतिकृतिः। इदमहं किं पश्यामि? अत्रैषा तु वासवदत्तायाः प्रतिकृतिर्ब्राह्मणेन तेन पूर्वं मत्समीपे स्थापितायास्तत्रभवत्या आवन्तिकायाः सर्वतः संवादं भजत्याकारेण। तेन च पूर्णमत्रोपलभ्यते साम्यम्। किमावन्तिका वासवदत्तैव? एवं चेत्तथ्यापह्नवात्प्रतारिताः सर्वे वयं परिव्राजकवेषधारिणा ब्राह्मणेन तेन। किमस्तीदम्? भूतार्थं नावधारये किमपीति भावः। इत्येवंमानसं शङ्कित्वा 'वासवदत्तायाः स्वरूपेण सदृशी चेदियं प्रतिकृतिस्तर्हि नूनमेतदीयाकृतिसादृश्यविशेषशालिनी श्रीमत्यावन्तिका वासवदत्तैव। यथार्थं च वासवदत्तास्वरूपं प्रियः पतिरेव परिचिनोती'ति राजानमुद्दिश्य प्रकाशं काकूक्तिमुपन्यस्यति—**अय्यउत्तेति**। खलुपदं वाक्यालङ्कारे, आर्याया वासवदत्ताया इति यावत्। नाथ! किमिदं चित्रमाकारेण वासवदत्तया समानं वर्तते? एतादृशाकारैव भवतः प्रियासीद्वासवदत्ता?

**नेति**। 'प्रतिकृतावस्यां वासवदत्तासादृश्यमस्ति न वे'त्येतादृशि पद्मावत्याः

पद्मा०—( देखकर स्वगत ) हूं, यह तो आर्या आवन्तिका से बहुत ही मिलती-जुलती है। ( प्रकट ) आर्यपुत्र? यह तसवीर आर्या के ऐसी है?

राजा—सदृश नहीं, मैं समझता हूँ कि यह वही है। हाय! शोक!—

अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम् ?
इदं च मुखमाधुर्यं कथं दूषितमग्निना ? ॥ १३ ॥

*पद्मावती*—(क) अय्यउत्तस्स पडिकिदिं पेक्खिअ जाणामि इअं अय्याए सदिसी ण वेत्ति ।

(क) आर्यपुत्रस्य प्रतिकृतिं दृष्ट्वा जानामीयमार्यायाः सदृशी न वेति ।

---

प्रश्ने राज्ञ उत्तरमिदम् । अत्र तस्याः सादृश्यं न दृश्यत, सादृश्यस्य भेदघटितत्वात् सर्वथाऽनुपलब्धेः । एषा तु तदभिन्ना ध्रुवं तद्रूपैव साक्षादित्येवं कल्पना ममेत्यर्थः । सम्प्रति प्रियायाः प्रतिकृतेर्दर्शनादुद्बुद्धं विषादभावोदयं दर्शयति राज्ञः-**भो** इति । भो इत्यव्ययं कष्टसूचकम् । अहह ! महत् कष्टम् , कथमिदं सोढव्यम् ?

तदेव कष्टं विशदयति—**अस्येति** । अस्य पुरो दृश्यमानस्य मयाऽनुभूतचरस्येत्यर्थः, स्निग्धस्य सरसस्य लावण्यपूर्णस्य, वर्णस्य रूपस्येति यावत्, दारुणा भीषणा असदृशीति यावत्, विपत्तिर्विनाशः, कथं किमिति, अभूत् इति शेषः । च अपि च, इदम् अलौकिकं, मुखमाधुर्यं मुखस्याननस्य माधुर्यं सौन्दर्यमाकर्षकत्वम्, अग्निना वह्निना, कथं केन प्रकारेण, दूषितं वैरूप्यं नीतं विध्वंसितमित्यर्थः । स्वरूपलावण्यं वदनसौन्दर्यं च दर्शनीयमिदमेतदीयं कथङ्कारमसदृशं विनाशमध्यगच्छत् ? उचितो न चासीत्कमनीयाकृतिर्देहोऽयं दाहविषयीभवितुम् । अनुष्टुव् वृत्तमिदम् ॥१३॥

'अभिन्नाकृतिरियं वासवदत्तायाः प्रतिकृति'रित्येवं पत्युर्विदित्वापि स्वयं तद्याथार्थ्यं जिज्ञासमाना पद्मावती 'आर्यपुत्रस्य प्रतिकृतिस्तदाकारसंवादिनी चेद्वासवदत्ताया अपि तादृश्येव सा कल्प्येत, एकस्याः प्रतिकृतेर्यथार्थरूपत्वे तदितरस्या अपि तथात्वमनुमातुं शक्य'मिति स्वरूपेण पूर्णतया परिचितस्य पतिदेवस्य प्रतिकृतिं द्रष्टुमिच्छन्ती ब्रूते—**अय्यउत्तस्सेति** । जानामीति भविष्यत्कालसामीप्ये लट्, निर्णेष्यामीत्यर्थः । 'प्रतिकृतावत्र वासवदत्तायाः सादृश्यं विद्यते नवे'ति विषयं निर्णेतुमार्यपुत्रस्य प्रतिकृतिः पूर्वं मया दर्शनीया । ततस्तद्दर्शनेन तत्रैवात्रापि सादृश्यमसादृश्यं वा किमपि यथोचितं निर्धारणीयमिति भावः ।

---

इस सुन्दर रूप पर भयानक, विपदा कैसी ? और इस मुख की मधुरता ( लावण्य ) को आग ने कैसे बिगाड़ दिया ? ॥ १३ ॥

पद्मा०—आर्यपुत्र की तसवीर देखकर यह दूसरी तसवीर आर्या के समान है या नहीं यह मैं समझूंगी ।

*धात्री*—(क) पेक्खदु पेक्खदु भट्टिदारिआ।

*पद्मावती*—[ दृष्ट्वा ] (ख) अय्यउत्तस्स पडिकिदीए सदिसदाए जाणामि इअं अय्याए सदिसित्ति।

*राजा*—देवि ! चित्रदर्शनात् प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि। किमिदम् ?

---

(क) पश्यतु पश्यतु भर्तृदारिका।

(ख) आर्यपुत्रस्य प्रतिकृत्याः सदृशतया जानामीयमार्यायाः सदृशीति।

---

अत्रार्थेऽनुमतिं दर्शयन्त्याह धात्री—पेक्खदु इति। क्रियापदद्विरुक्तिरियं तद्विलोकनस्यावश्यकर्तव्यतां द्योतयति। राजकुमार्याऽवश्यं दर्शनीयं तच्चित्रं परीक्षणीयं च यथार्थं तत्स्वरूपमित्यर्थः। इतोऽनन्तरं वत्सराजप्रतिकृतिदर्शनं पद्मावत्या धात्रीकारितमर्थानुरोधादवगम्यम्।

विलोकितार्यपुत्रप्रतिकृतिश्च पद्मावती सादृश्यं तत्रोपलभमानाऽभिधत्ते—अय्यउत्तस्सेति। दृष्ट्वा, अर्थात्पत्युश्चित्रम्। जानाम्यनुमिनोमि। चित्रमिदं तत्रभवतः पत्युराकारेण पूर्णं संवदति। अतो वासवदत्ताया अपि तद्यथार्थं तदाकाराविसंवादि स्यादित्येवमनुमीयते। एकत्राकारसंवादोपलब्ध्याऽन्यत्रापि तत्संवादकल्पना भवितुमर्हतीति भावः।

इदानीं वासवदत्तायाः प्रतिकृतिं तत्स्वरूपेण संवदन्तीं विलोक्य तस्याश्च स्वसमीपन्यस्तावन्तिकासमानाकृतित्वमाकलय्य पद्मावती 'सम्प्रत्यार्यपुत्रप्रियतमा जीवन्त्युपलब्धा वासवदत्तेति हर्षं, वासवदत्तारूपा च सेयमावन्तिका स्वान्तिके न्यासरूपेण केनापि स्थापिता कथङ्कारमस्माभिर्लभ्ये'त्युद्वेगं च मानसं भूयस्तरां प्राप्नोति स्मेत्येवात्र वस्तुस्थितिः। राजा तु चित्रदर्शनादुद्भूतां हर्षोद्वेगशबलीकृतां पद्मावत्या अवस्थां संलक्ष्य तस्याः पुरस्तात्प्रश्नमेवमुपस्थापयति—देवीति। प्रहृष्टा प्रसन्ना चोद्विग्ना व्याकुला चेति तां प्रहृष्टोद्विग्नाम्। प्रिये ! चित्रदर्शन-

---

धात्री—देखिये, देखिये राजकुमारीजी !

पद्मा०—(देखकर) आर्यपुत्र की प्रतिकृति के संवाद से 'यह आर्या से मिलती-जुलती है' ऐसा मैं समझती हूँ।

राजा—देवी ! चित्र देखने के समय से मैं तुम्हें प्रसन्न और साथ ही उद्विग्न-सा देख रहा हूँ। यह क्या ?

*पद्मावती*—(क) अय्यउत्त! इमाए पडिकिदीए सदिसी इह एव्व पडिवसदि।

*राजा*—किं वासवदत्तायाः?

*पद्मावती*—(ख) आम।

*राजा*—तेन हि शीघ्रमानीयताम्।

---

(क) आर्यपुत्र! अस्याः प्रतिकृत्याः सदृशीहैव प्रतिवसति।
(ख) आम्।

---

कालादारभ्य प्रसन्ना व्याकुला च दृश्यसे। किन्नु नामेदम्? कथमेतौ परस्परविरोधिनौ ते भावौ? किं तावदत्रास्ति रहस्यम्?

समयेऽस्मिन्समुचितप्रकाशनं रहस्यमेतद्विषयकं प्रकाशतां नयन्ती पद्मावती प्राह—**अय्यउत्तेति**। इहैव मत्समीप एवेति यावत्। एतस्याश्चित्रेण समाना कारा नाथ! काचित्कान्ता मदन्तिक एव साम्प्रतं निवसन्ती वर्तते। इदमेव नूनं भावद्वयशबलां दशामनैषीन्मामिति भावः। हर्षोद्वेगयोरात्मनः स्फुटतरं कारणं किमप्यनिर्दिशन्ती पद्मावन्यत्र तावदित्थमिमां वस्तुस्थितिं दर्शयामास।

पद्मावत्या वचनमिदं श्रवणगोचरीकृत्य तां राजा सकुतूहलमाचष्टे—**किमिति**। सदृशीति शेषः। किं वासवदत्तया समानमाकारं वहन्ती विद्यते काचिदत्र?

**आमेति**। 'सत्यमेतत्' तादृशी वर्तते काप्यत्रे'ति पद्मावत्या उत्तरमिदं पूर्वोक्ते राज्ञः प्रश्ने।

सञ्जातकौतूहलश्च वासवदत्तोपलब्धिसम्भावनया नरपतिः 'समीचीनः साम्प्रतं शुभोदर्कश्च विषयोऽयं प्रत्यक्षीकर्तव्य' इत्येवं तात्पर्येण तदानयनमादिशन् ब्रूते—**तेन हीति**। एवं चेद्विद्यते, तदसौ सत्वरं पुरस्तान्मे समानेतव्या। वृत्तान्तमेनं सम्यङ् निरूपयिष्यामीति भावः।

आर्यपुत्रस्य सन्निधौ तदुपस्थितेर्यथावत्प्रकारं प्रदर्शयन्ती पद्मावती पुनराह—

---

पद्मा०—आर्यपुत्र! इस चित्र जैसी एक स्त्री यहीं रहती है।
राजा—क्या वासवदत्ता जैसी?
पद्मा०—हाँ।
राजा—तो शीघ्र लिवा लाओ।

पद्मावती—(क) अय्यउत्त ! मम कण्णाभावे केणवि बह्मणेण मम भइणिअत्ति ण्णासो णिक्खित्तो । पोसिदभत्तुआ परपुरुसदंसणं परिहरदि । ता अय्यं मए सह आअदं पेक्खिअ जाणादु अय्यउत्तो ।

राजा—

यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति ।

---

(क) आर्यपुत्र ! मम कन्याभावे केनापि ब्राह्मणेन मम भगिनिकेति न्यासो निक्षिप्तः । प्रोषितभर्तृका परपुरुषदर्शनं परिहरति । तदार्यां मया सहागतां दृष्ट्वा जानात्वार्यपुत्रः ।

---

अय्यउत्तेति । कन्याभावे अनूढावस्थायाम् , अनुकम्पनीया भगिनी भगिनिका, अनुकम्पायां कन् , इति इत्थम् , उक्त्वेति शेषः । तत् तस्मात्कारणात् , जानातु निश्चयं करोतु । स्वामिन् ! न सञ्जातमासीद्यदा मत्पाणिग्रहणं तदा किल ब्राह्मणः कश्चिदागत्य 'ममेयं दयापात्रं भगिनी'ति न्यासरूपेण तां मत्सविधे स्थापितवान् । अस्याः पतिः परदेशं गतो वर्तते, इयञ्च 'परपुरुषो न दर्शनीय' इत्येतद् व्रतं धत्ते । अतस्तामहमात्मना सार्धमत्राऽऽनये । मत्साहचर्येण समागतां च नयनयोः पन्थानमानीय निश्चयमेतं कर्तुमर्हतीदानीं भवान् , यत्—'सैव नवे'ति । अत्र 'ता अय्यं' इत्येतद्वाक्यस्थले 'ता अय्या पेक्खदु सदिसी ण वेत्ति' ( तदार्या पश्यतु सदृशी न वेति ) इत्यदः पाठान्तरमुपलभ्यते कुत्रचित्पुस्तके । अस्यार्थः-यतः सा परपुरुषस्य दर्शनं न करोति, ततः कारणात्पूज्या वासवदत्तोपमाता वसुन्धरा 'वासवदत्तासादृश्यमस्यां वर्तते न वे'ति विषयमेनं प्रत्यक्षीकरोत्विति ।

पद्मावत्या वचनमाकर्ण्य, ब्राह्मणभगिनीत्वात्तस्या आवन्तिकाया वासवदत्तासादृश्यं तत्राऽसम्भवन्मन्यमानो ब्रवीति राजा—यदीति । यदि चेत् , सेति प्रकरणानुरोधाद्गम्यम् , विप्रस्य भगिनी ब्राह्मणस्य कस्यचित्स्वसा वर्तते, तर्हीत्यार्थम् , व्यक्तम् स्पष्टम् , अन्या वासवदत्ताया इतरा काचिद् , भविष्यति स्यादिति

---

पद्मा०—आर्यपुत्र ! मेरे कुआँरेपन में किसी ब्राह्मण ने, 'मेरी बहन है, ऐसा कहकर न्यास ( थाती ) रूप से उसे रक्खा है । वह प्रोषित-भर्तृका होने से पर-पुरुष का दर्शन बचाती है, तथापि मैं (युक्ति) से उसे यहाँ लिवा लाती हूँ । तब आप उसे देखकर समझ लें कि यह वही है या नहीं । (इसलिये आर्या वसुन्धरा देखें कि यह उसके ऐसी है या नहीं ? )

राजा—यदि वह ब्राह्मण की बहन है, तो निश्चय दूसरी होगी । संसार में एक दूसरेके

परस्परगता लोके दृश्यते रूपतुल्यता ॥ १४ ॥

[ प्रविश्य ]

*प्रतीहारी*—(क) जेदु भट्टा । एसो उज्जइणीओ ब्रह्मणो, भट्टिणीए हत्थे मम भइणिअत्ति ण्णासो णिक्खित्तो, तं पडिग्गहिदुं पडिहारं उवट्ठिदो ।

---

(क) जयतु भर्ता । एष उज्जयिनीयो ब्राह्मणः, भट्टिन्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तः, तं प्रतिग्रहीतुं प्रतीहारमुपस्थितः ।

---

सम्भाव्यते । रूपसादृश्येन तथात्वं शङ्क्यते चेत् , तत्राह—**परस्परगतेति** । लोके जगति, परस्परगता पारस्परिकी, एकस्या व्यक्तेरन्यया सहेति यावत् , रूपतुल्यता स्वरूपसादृश्यं, दृश्यते प्रत्यक्षमनुभूयते । अत्रैषा न्यासरूपेण स्थापिता यतो ब्राह्मणभगिनीपदमालम्बते, ततो निःसन्देहमसौ काचिद्वासवदत्ताव्यतिरिक्ता भवेत् । ब्राह्मणी सा क्षत्रियराजकुमारी वासवदत्ता कथं स्यात् ? परस्परं रूपसादृश्येन 'सैवेय'मिति च नैव निर्धारयितुं शक्यम् । रूपेण सादृश्यं हि बहूनां बहुत्र प्रत्यक्षमुपलभ्यते, किन्तु नैतावतोपलब्धव्यं तत्र ताद्रूप्यम् । न हि केवलं रूपसादृश्यं ताद्रूप्यप्रयोजकं भवतीति भावः । अनुष्टुप् छन्दः ॥ १४ ॥

इदानीं कविः प्रसङ्गोचितं यौगन्धरायणप्रवेशं कारयिष्यंस्तत्र तस्योपस्थितिं सूचयन्त्याः प्रतीहार्याः प्रवेशं दर्शयति—**प्रविश्येति** ।

तद्वाचं प्रपञ्चयति—**जेदु** इति । 'विजयोऽस्तु स्वामिन' इत्येवं जयाशंसनरूपोऽयं समुदाचारः प्रतीहार्याः । **एसो** इति । एष उपस्थापयिष्यमाणः 'उज्जयिनी निवासोऽस्ये'त्युज्जयिनीयः । 'सोऽस्य निवास' इत्यधिकारे 'वा नामधेयस्ये'ति वृद्धसंज्ञायां 'वृद्धाच्छ' इति छप्रत्यये तस्य ईयादेशः । 'ब्राह्मण' इत्येतस्य 'प्रतीहारमुपस्थित' इत्यनेन सम्बन्धः । भट्टिन्याः पद्मावत्या इति यावत् , इति इत्येवमुक्त्वा, 'च' इति शेषः, आवन्तिकारूपेण प्रसिद्ध इत्यर्थः । 'इयं मे भगिनी परिपालनीये'त्युक्तिपूर्वं तत्रभवत्याः पद्मावत्याः सन्निधौ न्यासरूपेण येन या स्थापिता-

---

रूप की समानता दिखाई पड़ती है ॥ १४ ॥

*प्रती०*—( आकर ) महाराज की जय हो । यह उज्जयिनी का ब्राह्मण राजकुमारी के पास धरोहर-रूप में रक्खी हुई अपनी बहन को लेने के लिये द्वार पर आ खड़ा है ।

राजा—पद्मावति ! किन्नु स ब्राह्मणः ?

पद्मावती—(क) होदव्वं ।

राजा—शीघ्रं प्रवेश्यतामभ्यन्तरसमुदाचारेण स ब्राह्मणः ।

प्रतीहारी—(ख) जं भट्टा आणवेदि । [ निष्क्रान्ता । ]

---

(क) भवितव्यम् ।

(ख) यद् भर्ताज्ञापयति ।

---

सांप्रतम्, स चोज्जयिनीनिवासी विप्र आत्मनो न्यासभूतामेनामिदानीं पुनरादातुं द्वारदेशं समागतो वर्तत इति स्पष्टार्थः ।

**पद्मावतीति** । 'उज्जयिनीनिवासिनस्तस्य ब्राह्मणेतरत्वे सति तेन न्यासीकृतेयं पद्मावत्युक्तरूपसाम्याद्वासवदत्ता भवितुमर्हति, अन्यथा च नेदं सम्भवती'ति पूर्वोक्तमेतस्य ब्राह्मणत्वं द्रढयितुं तेन च सन्देहमात्मनो निराकर्तुं पद्मावतीं प्रति प्रश्नोऽयं राज्ञः । अयि ! प्रिये ! स चायं न्यासनिक्षेप्ता पुरुषो ब्राह्मणजातीयः किमु ?

**होदव्वमिति** । भवदुक्तेनेति शेषः । भवदुक्तं सम्भवत्येतत् । ब्राह्मण एव स्यादयमित्यर्थः ।

पद्मावतीवचनात्तदीयं ब्राह्मणत्वमवगच्छन्नतिथिसत्कारप्रदर्शनपुरःसरं तं किल तत्रोपस्थापयितुमादिशंस्त्वरयति प्रतीहारीं राजा—**शीघ्रमिति** । अभ्यन्तरसमुदाचारेण, अभ्यन्तरे गृहाभ्यन्तरे यः समुदाचारः पाद्यादिप्रदानरूपोऽभ्यागतजनोचितः सत्कारस्तेन तत्प्रदर्शनेन । गृहाभ्यन्तरमानीय गृहागतजनोचितं सत्कारं प्रदर्श्य विप्रममुं सत्वरमत्रोपस्थापय त्वम् । विलम्बमत्र मा कार्षीरित्यर्थः ।

राजाज्ञामङ्गीकृत्य तथा कर्तुं प्रतिजानीते प्रतीहारी—**जमिति** । स्वामिन आदेशं साधयितुं साधयाम्यहमित्यर्थः । **निष्क्रान्तेति** । प्रस्थानं ततस्तस्याः सूचयत्येतत् ।

---

**राजा**—पद्मावती ! क्या वह ब्राह्मण है ?

**पद्मा०**—हो सकता है !

**राजा**—घरके भीतर लाकर उचित सत्कार करके उस ब्राह्मणको शीघ्र यहाँ उपस्थित करो ।

**पद्मा०**—स्वामी की जो आज्ञा ।

( चली गई । )

*राजा*—पद्मावति ! त्वमपि तामानय ।

*पद्मावती*—(क) जं अय्यउत्तो आणवेदि । [ निष्क्रान्ता । ]

[ ततः प्रविशति यौगन्धरायणः प्रतीहारी च । ]

*यौगन्धरायणः*—भोः ! [ आत्मगतम् ]

**प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं**
**कामं मया कृतमिदं हितमित्यवेक्ष्य ।**

---

(क) यद् आर्यपुत्र आज्ञापयति ।

---

इदानीं भूपतिर्न्यासभूतां तां तत्रोपस्थापयितुं प्रेरयति पद्मावतीम्—**पद्मावतीति** । प्रिये ! त्वयापि गम्यतां तत्र, न्यासभूता समानीयतां सेयम् । अवेक्षणीयस्तावदयं समुपस्थितो विषयः ।

'श्रीमदाज्ञानुसारं विधीयते मये'त्याशयेन पद्मावत्याह राजानम्—**जमिति** । सूचनानुसारं तद्गमनं दर्शयति—**निष्क्रान्तेति** ।

इदानीं राजादेशानुसारं प्रतीहार्या सह यौगन्धरायणस्य प्रवेशं दर्शयति कविः—**तत** इति ।

चिराद् दृग्गोचरीकृतं राजानमुपगच्छन् स्वीयानि कार्याणि कृतपूर्वाणि स्मरणगोचरीकुर्वन् यौगन्धरायणो मानसमात्मनो वितर्कं दर्शयति—**भोः** इत्यादि । आत्मानमुद्दिश्य भोः इतीदं सम्बोधनपदं वितर्कसूचकं प्रायुङ्क्त यौगन्धरायणः ।

तमेव तद्वितर्कमाह—**प्रच्छाद्येति** । नृपतेः स्वामिनो राज्ञ उदयनस्य, हितार्थं हिताय, हितमत्र नूतनपद्मावतीविवाहसङ्घटनैकरूपं बोद्धव्यम्, राजमहिषीं महाराज्ञीं वासवदत्तामिति यावत्, प्रच्छाद्य 'वह्नावियं दग्धे'तिमिथ्याप्रवादप्रचारणपुरःसरं स्वरूपेण सङ्गोप्य, हितं शत्रुहृतराज्यप्रत्याहरणसाधनत्वेन हितकरं, भवेदिति शेषः, इति इत्थम्, आलोच्य मनसिकृत्य, मया यौगन्धरायणेन, इदं पद्मावत्याः समीपे न्यासरूपेण वासवदत्ताया अवस्थापनं स्वामिना सह पद्मावत्याः परिणयनं चेत्येतत्कार्यद्वयं, कामं स्वैरं यथा स्यात्तथा, कृतं सम्पादितम् । नामेति वाक्या-

---

राजा—पद्मावती ! तुम भी उस स्त्री को ले आओ ।

पद्मा०—आर्यपुत्र की जो आज्ञा ।  ( चली गई । )

( बाद यौगन्धरायण और प्रतीहारी का प्रवेश । )

यौगं०—( स्वगत ) ओह !

पद्मावती के साथ विवाह होने से महाराज का हित है—ऐसा सोच कर उस कार्य को

सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥ १५ ॥

*प्रतीहारी*—(क) एसो भट्टा। उपसप्पदु अय्यो।

---

(क) एष भर्ता। उपसर्पत्वार्यः।

---

लङ्कारे, मम कर्मणि मत्कृते कार्ये, सिद्धेऽपि स्वामिनः सन्निधौ शत्रुहृतराज्यप्रापकत्वेन सिद्धिं गतेऽपि सति, असौ पुरो दृश्यमानोऽस्मत्स्वामी, पार्थिवः श्रीमान् राजोदयनः, किं वक्ष्यति समीचीनमसमीचीनं वाऽभिधास्यति, इति इत्येवं, मे मम, हृदयं मनः, परिशङ्कितं परितः शङ्काकुलं वर्तते। 'प्रणयविशेषशालिन्यां वासवदत्तायामवस्थितायां न कदापि राज्ञे परिणयान्तरमात्मनो रोचेत, संवृत्ते च पद्मावत्या समं परिणये श्रीमन्महासेनमहीपालसाहायकलाभेन शत्रुं पराजित्य राजा परायत्तमात्मनो राज्यं पुनः स्वायत्तीकर्तुं प्रभवे'दित्येवं भाविशुभोदर्कमर्थं पर्यालोच्य सिद्धादेशप्रत्ययादहं श्रीमन्महाराज्ञीं वासवदत्तां 'वह्नावियं दग्धे'ति मिथ्याप्रवादविषयीभूतां तद्विप्रहपवेषामावन्तिकारूपेण पद्मावत्याः समीपे 'मदागमनं यावन्न्यासोऽयमभिरक्षणीय' इत्येवं निगद्य सम्यङ् निक्षिप्तवान्। कालेन पद्मावत्यां परिणीतायां प्राप्तायां च परहस्तगतायां राज्ञा विजयिना राज्यलक्ष्म्यां, यद्यपि मे सकलं कार्यं सफलतामध्यगच्छत्तथापि यन्मया 'वासवदत्तोपरते'त्यलीकवार्ताप्रख्यापनपुरःसरमात्मनो भगिनीत्वेन निर्दिश्य सा परहस्ते न्यासीकृता, तमेतं विषयमनुचिन्त्य 'श्रीमान् वत्सराजोऽयं कार्यमिदं मदीयमुचितमनुचितं वा वेत्स्यति तदर्थं च साध्वसाधु किं वाऽभिधास्यति मा'मित्येवमिदानीं बलवती मे शङ्का वर्तत इति भावः। वसन्ततिलकं छन्दः ॥ १५ ॥

स्वामिनं प्रदर्श्य तदुपसर्पणं कारयन्ती यौगन्धरायणमाह प्रतीहारी—**एसो** इति। अयमत्र स्वामी विराजते, सन्निधावुपस्थीयतां भवता।

---

पूर्ति के लिये उनकी प्रधान रानी वासवदत्ता को 'वह आग में जल गई' इस प्रकार झूठ बात के साथ स्वरूप से छिपा कर, 'यह कार्य राज्य-प्राप्ति का साधन अत-एव हितकर होगा' इस विचार से, पद्मावती के पास वासवदत्ता को धरोहर के रूप में रखना तथा महाराज का पद्मावती के साथ विवाह-सम्बन्ध सिद्ध करना-यह कार्य मैंने अपनी इच्छा से किया। मेरे सब काम के सिद्ध होने पर भी-'ये महाराज उदयन इस विषय में अच्छा या बुरा मुझे क्या कहेंगे'-इस प्रकार मेरा मन शंका से व्याकुल हो रहा है ॥ १५ ॥

प्रती०—ये महाराज हैं। आप आगे बढ़ें।

*यौगन्धरायणः*—[ उपसृत्य ] जयतु भवान् जयतु ।

*राजा*—श्रुतपूर्व इव स्वरः । भो ब्राह्मण ! किं भवतः स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता ?

*यौगन्धरायणः*—अथ किम् ?

*राजा*—तेन हि त्वर्यतां त्वर्यतामस्य भगिनिका ।

---

समीपमुपगतो राज्ञः प्रस्तौति जयाशंसनं यौगन्धरायणः—**जयत्विति**। आदरातिशये पौनःपुन्ये च 'जयतु जय'त्विति द्विरुक्तिः पुनःपुनर्विजयश्रीरलङ्करोतु तत्रभवन्तं भवन्तमित्यर्थः ।

**श्रुतपूर्व** इति । पूर्वं श्रुतः श्रुतपूर्वः, 'पूर्वकालैके'त्यादिना समासः, स्वरः शब्दविशेषः, इति एवंरूपेण । 'श्रूयमाणः शब्दविशेषोऽयं पूर्वं श्रुतः परिचित इव मे प्रतीयत' इतीदं राज्ञो वचनमात्मगतत्वेन युज्यते । राजा च यौगन्धरायणकृतं विजयाशंसनं निशम्य, पूर्वं बहुशः श्रुतं तदीयं स्वरं परिचितवान् , किन्तु तत्प्रयोक्तारं प्रच्छादितात्मरूपं तेन रूपेणाऽपरिचितं पुरुषविशेषं 'सोऽय'मित्येवं न नाम प्रत्यभिज्ञातवान् , अत एवमुक्तवान् । श्रुतिगोचरीकृतं न्यासरूपं विषयं तन्मुखेन स्फुटयितुं प्रकाशं पृच्छति यौगन्धरायणं राजा—**भोः** इति । हे विप्र ! किं भवान् स्वकीयां भगिनीं पद्मावत्याः सन्निधौ न्यासरूपेण स्थापितवान् ? अपि नाम सत्योऽयं विषयः ?

राजा पृष्टस्य विषयस्य सत्यतां दर्शयन् यौगन्धरायणो ब्रूते—**अथेति** । किमन्यत् ? यथार्थमेवास्तीदम् । अहमेवात्मभगिनीं न्यासरूपेण स्थापितवानत्रेत्यर्थः ।

**तेन हीति** । पद्मावतीं सत्वरमुपस्थापयितुकामस्य राज्ञो वचनमिदं प्रतीहारीं प्रति । तेन हि ततः कारणादित्यर्थः । 'त्वर्यता'मिति णिजन्तात्त्वरयतेः कर्मणि लोट् , द्विरुक्तिस्त्वराविशेषं सूचयति, त्वयेति कर्तृपदं गम्यम् । ब्राह्मणोऽयं न्यासमात्मनो ग्रहीतुमागतः । अत एतस्य भगिनीं त्वरय त्वम् । यथा च सेयमतिशीघ्रमत्रोपस्थिता भवेत्तथा विधेहीत्यर्थः ।

---

**यौग०**—( समीप जाकर ) जय हो, आप की जय हो ।

**राजा**—स्वर तो पहले सुना हुआ-सा प्रतीत होता है । हे ब्राह्मण ! पद्मावती के पास आपकी बहन न्यास-रूप से रक्खी हुई है क्या ?

**यौग०**—और क्या ?

**राजा**—( प्रतीहारी से ) तो इनकी बहन को यहाँ लाने की जल्दी करो ।

*प्रतीहारी*—(क) जं भट्टा आणवेदि। [ निष्क्रान्ता। ]

[ ततः प्रविशति पद्मावती आवन्तिका प्रतीहारी च। ]

*पद्मावती*—(ख) एदु एदु अय्या। पिअं दे णिवेदेमि।

*आवन्तिका*—(ग) किं किं ?

*पद्मावती*—(घ) भादा दे आअदो।

---

(क) यद् भर्ताज्ञापयति।
(ख) एत्वेत्वार्या। प्रियं ते निवेदयामि।
(ग) कि किम् ?
(घ) भ्राता ते आगतः।

---

'यथा श्रीमदादेशमनुष्ठीयते मये'त्याह प्रतीहारी स्वामिनम्—**जमिति**। राजाज्ञां निर्वर्तयितुं प्रतीहार्याः प्रस्थानं ततः सूचयति—**निष्क्रान्तेति**।

नरपतेराज्ञयावन्तिकामानेतुं पूर्वं पद्मावती ततश्च तां त्वरयोपस्थापयितुं गतासीत्प्रतीहारी। साम्प्रतं तिस्रोऽप्येता रङ्गमञ्चं प्रविशन्तीर्दर्शयति कविः—**ततः प्रविशतीति**।

राजानमुसर्पन्ती पद्मावती तद्भ्रातुरुपस्थितेर्वार्तामावन्तिकां निवेदयितुमुद्यता ब्रूते—**एदु एद्विति**। एतुपदद्विरुक्तिरियमागमनत्वरां सूचयति। सत्वरमागन्तव्यं श्रीमन्त्या, भवतीमहं किञ्चिद्रुचिकरमभीष्टं श्रावये वृत्तम्, यच्छ्रुत्वा भृशं प्रसन्नया भूयेत भवत्या।

तदभीष्टवृत्तान्तश्रवणविधावात्मनः कौतूहलं दर्शयत्यावन्तिका—**किमिति**। द्विरुक्तं किंपदं प्रियवार्ताश्रवणकौतूहलं व्यनक्ति। किम् कीदृशं तत् ?। सविशेषं तत्स्वरूपं निवेदनीयमित्यर्थः।

तदेव प्रियं निवेदयति पद्मावती—**भादेति**। समुपस्थितोऽद्य भवदीयो भ्राता, येन किलात्र भवती निक्षिप्ता, यद्दर्शनं च भवत्याः प्रतिवासरमाकाङ्क्षितमासीत्।

---

प्रती०—जसी प्रभु की आज्ञा। (चला गई)।

( पद्मावती आवन्तिका और प्रतीहारी आती है। )

पद्मा०—आओ, आर्या ! आओ। मैं तुम्हें प्रिय बात सुनाती हूँ।

आव०—क्या ? क्या ?

पद्मा०—आपके भाई आए हैं।

आवन्तिका—(क) दिट्ठिआ इदाणिं पि सुमरदि ।

पद्मावती—[ उपसृत्य ] (ख) जेदु अय्यउत्तो । एसो णासो ।

राजा—निर्यातय पद्मावति ! साक्षिमन्न्यासो निर्यातयितव्यः । इहात्रभवान् रैभ्यः अत्रभवती चाधिकरणं भविष्यतः ।

---

(क) दिष्ट्येदानीमपि स्मरति ।

(ख) जयत्वार्यपुत्रः । एष न्यासः ।

---

भ्रात्रागमनवृत्तमाकर्णयन्त्यावन्तिका ब्रूते—**दिट्ठिआ** इति । दिष्ट्येति हर्षे, भाग्येनेति वा तदर्थः । अत्र मन्निक्षेपसमयादद्य यावत्तु विस्मृतवानासीत्स माम् । सौभाग्यं हर्षस्य वाऽवसरोऽयं मम, यत्साम्प्रतमसौ मम स्मरणं कृत्वा समागतवानत्र ।

इदानीं पद्मावती श्रीमतो भर्तुः समीपं गत्वा न्यासभूतां तामावन्तिकां तं दर्शयन्ती वचनमिदं प्रयुङ्क्ते—**जेदु** इति । विजयः स्तात्तत्रभवतः स्वामिनः । एषाहमानीतवती न्यासभूतामिमाम् ।

न्यासभूतां तामुपस्थितां दृष्ट्वा 'ब्राह्मणस्य भगिनीत्वेन नेयं वासवदत्ते'ति चेतसा निश्चितवांश्चित्रसादृश्यपरीक्षणविषयाद्विमुखीभवन्नरपतिः समागताय तस्मै तन्न्यासप्रत्यर्पणं कारयितुकामस्तदर्थं पद्मावतीं प्राह—**निर्यातयेति** । निर्यातनं न्यासप्रत्यर्पणम् , तथा चामरः—'निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च' इति । साक्षी विद्यते यत्रेति साक्षिमत्, साक्षिपुरःसरम्, क्रियाविशेषणमिदम्, अत्रभवती धात्रीत्यर्थः, अधिकरणं निर्णयस्थानम् । अयि ! पद्मावति ! न्यासोऽयं प्रत्यर्पणीय एतस्मै, न्यासप्रत्यर्पणं च सम्भाव्यमानाऽनभ्युपगमप्रसङ्गभिया कञ्चित्साक्षिणं पुरस्कृत्यैव कर्तव्यम् । अत एतस्मिन्विषये श्रीमान् रैभ्यः श्रीमती धात्री चेत्युभौ निर्णयस्थानतां नेतव्यौ । एतावेव साक्षिणौ कृत्वा न्यासप्रत्यर्पणमिदं कार्यमित्यर्थः ।

राजवचनादुभयोः साक्षित्वे न्यासं प्रत्यर्पयितुमुद्यता तदुचितं वचनमाह न्यास-

---

आव०—धन्य भाग्य ! अब माँ सुध ले रहे हैं ।

पद्मा०—( पास पहुँच कर ) आर्यपुत्र की जय हो । यह धरोहर है ।

राजा—पद्मावती ! धरोहर लौटा दो । साक्षियों के सामने धरोहर लौटाना चाहिये । इस विषय में आये रैभ्य और आर्या वसुन्धरा साक्षी अथवा न्याय-सभा के सभ्य होंगे ।

*पद्मावती*—(क) अय्य ! णीअदां दाणि अय्या ।

*धात्री*—[ आवन्तिकां निर्वर्ण्य ] (ख) अम्मो ! भट्टिदारिआ वासवदत्ता !

*राजा*—कथं महासेनपुत्री ? देवि ! प्रविशत्वमभ्यन्तरं पद्मावत्या सह ।

*यौगन्धरायणः*—न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा ।

---

(क) आर्य ! नीयतामिदानीमार्या ।

(ख) अम्मो ! भर्तृदारिका वासवदत्ता !

---

निक्षेप्तारं पद्मावती—**अय्येति** । अयि ! मान्य ! अत्रभवता न्यासरूपेण मत्सन्निधौ स्थापिता *श्रीमत्यावन्तिकेयं मया श्रीमते प्रत्यर्प्यते*, साम्प्रतं नेतव्या च स्वात्मना सार्धं श्रीमता ।

न्यासप्रत्यर्पणकाले दृग्गोचरमावन्तिकां कृत्वा स्वरूपच्छाययैतां परिचितां वासवदत्तां कलयन्ती धात्री तदुपलब्धौ विस्मयं प्रकटयन्ती ब्रूते—**अम्मो** इति । आश्चर्यसूचकम् 'अम्मो' इत्यव्ययम् । 'अहो ! राजकुमारीयं वासवदत्ता । कथङ्कारमेतस्या इदानीमत्रोपलब्धिः ? वासवदत्तायास्तु दहनज्वालया कवलितायाः कुतोऽपि न वर्तते दर्शनयोग्यते'त्यसौ धात्र्या वचसोऽभिप्रायः ।

नृपोऽपि धात्रीवचनं निशम्य स्वयं तामावन्तिकां निपुणं निरूप्य वासवदत्तां प्रेयां प्रत्यभिज्ञाय साश्चर्यं प्राह—**कथमिति** । कथम्, किमित्यर्थः । 'किमेषा श्रीमन्महासेनस्य दुहिता वासवदत्ता ? अहो ! चिराद् दर्शनं गतापि साम्प्रतं दृश्यते मत्प्रिया वासवदत्ता ।' इत्येवं निगद्य तां गृहान्तर्गन्तुमादिशन् ब्रूते—**देवीति** । अयि ! प्रिये ! वासवदत्ते पद्मावतीमात्मनः सहचारिणीं विधाय त्वया समयेऽस्मिन् गृहान्तः प्रवेष्टव्यमित्यर्थः ।

गृहान्तःप्रवेशान्निवारयत्यावन्तिकां यौगन्धरायणः—**न खल्विति** । खलुपदद्वयं वाक्यालङ्कारे, द्वौ नञौ निषेधार्थं द्रढयतः । नैव तावत्प्रविश त्वं गृहाभ्यन्तरं राज्ञः, मया समं प्रयाहीत्यर्थः । **ममेति** । राजानं प्रतीदं वचनम् । खलु निश्चये !

---

पद्मा०—आर्य ! यौगन्धरायण ! अब आर्या को ले जाइये ।

धात्री—( आवन्तिका को गौर से देखकर ) अरे, यह तो राजकुमारी वासवदत्ता है !

राजा—क्या महासेन की पुत्री ? देवी ! पद्मावती के साथ भीतर जाओ ।

यौग०—नहीं, भीतर न जाना चाहिये । यह तो मेरी बहन है ।

*राजा*—किं भवानाह ? महासेनपुत्री खल्वेषा ।

*यौगन्धरायणः*—भो राजन् !

**भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।**
**तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥ १६ ॥**

---

निःसंशयमियं मे स्वसा वर्तते । महासेनपुत्रीत्वशङ्कया किमित्यभ्यन्तरं नीयते भवतेपेति भावः । 'परिचयप्रदानपुरःसरं स्वस्वरूपप्रकाशनानन्तरमेव श्रीमन्महाराजाय तत्रभवती स्वामिनीयं प्रत्यर्पणीये'ति विचारयन् प्रच्छन्नदशानुरूपमेव वचनं प्रयुञ्जानो रहस्यमेतद्विषयं नाद्यापि समुद्घाटितवान् यौगन्धरायणः ।

**किमिति** । यौगन्धरायणवचनश्रवणानन्तरमिदं राज्ञो वचनम् । ममेयं भगिनीत्येवं किमुच्यते भवता, असत्यमेवास्तीदं सर्वथा वचनं भवतः । नूनमियं महासेनभूपतेः पुत्री प्रिया मे वासवदत्ता । ममैतां प्रेयसीं बलादपहर्तुमुद्यतस्य भवतो महदिदं दुःसाहसमिति भावः ।

तदिदं राज्ञो वचनं निशम्य पुनरुवाच तं सम्बोध्य यौगन्धरायणः-**भोः** इति । भो राजन्निति श्लोकान्वयि ।

**भारतानामिति** । भारतानां भरतकुलजानां राज्ञां पाण्डवानामिति यावत्, कुले वंशे, जातो गृहीतजन्मा, विनीतः शिक्षितो नम्रः, ज्ञानवान् सदसद्विवेकशीलो बुद्धिमान्, शुचिः पवित्राचारो निर्मलान्तःकरणः राजधर्मस्य राजोचितकर्तव्यस्य, देशिकः प्रवर्तक आचार्यश्च, असीति शेषः । तत् पूर्वोक्तविशेषणविशिष्टत्वाद्धेतोः, इमामिति शेषः, ममैतां भगिनीं परकीयामिति यावत्, बलात्, हठात्, हर्तुं ग्रहीतुमात्मसात्कर्तुं, नार्हसि न योग्योऽसि त्वम् । भारतकुलजस्य विनयज्ञानशालिनः शुचे राजधर्मोपदेशकस्य च सर्वथेदमसदृशं ते, यदिदं प्रसह्य परकीयापहारचेष्टितं नाम । न चैतच्छोभते नरपतेर्विशेषतो भारतवंशीयत्वादिगुणगणविशिष्टस्य । परकीयवस्तुनोऽपहार एतादृशस्त्वादृशैर्निवारणीयो न किल स्वयमेव प्रवर्तनीय इति भावः । वत्सराजस्य पाण्डववंशीयत्वं च **विष्णुपुराणा**दवगम्यते । 'अर्जुनपुत्रस्याऽभिमन्योः पञ्चविंशोऽयं पुरुष इति तत्रास्ति प्रतिपादितम् । वृत्तमनुष्टुप् ॥ १६ ॥

---

**राजा**—क्या आप कहते हैं ? यह तो महासेन की पुत्री हैं ।

**यौग०**—हे राजन् !

आप पाण्डव-वंशी राजाओं के कुल में उत्पन्न हुए हैं, नम्र, ज्ञानी, पवित्रात्मा तथा राजधर्म के प्रवर्तक भी हैं । इसलिये आपको इसे बलपूर्वक छीनना उचित नहीं है ॥ १६ ॥

*राजा*—भवतु, पश्यामस्तावद् रूपसादृश्यम्। संक्षिप्यतां जवनिका।

*यौगन्धरायणः*—जयतु स्वामी।

---

'एवं पुनरुत्तरप्रत्युत्तरैर्न किञ्चित्कार्यं सेत्स्यति। अस्यां च प्रियतमाकृतिसादृश्यं न तावदद्यापि मे पूर्णतया निश्चितम्। अतस्तन्निश्चय एव साम्प्रतं विधेयः, तेनैवेयमात्मनो हस्तगता भवे'दित्येवमन्तश्चिन्तयन् राजा तदाकृतिसादृश्यपरीक्षणाय पक्षान्तरमुपक्षिपति—**भवत्विति**। 'पश्याम' इति बहुत्वमात्मनो गौरवाय प्रयुक्तं राज्ञा। तावत्पदं वाक्यालङ्कारे। जवनिका तिरस्करिणी, सा चात्र पुरुषान्तरदर्शनपरिहाराय कृतं मुखावरणमेव, अवगुण्ठनमिति यावत्, संक्षिप्यताम् अपनीयताम्। अस्तु तावत्, ममैषा भवतो वेति नैवं जातु निर्णेष्यते। इदानीमाकृतेः साम्यमस्याः पूर्णं परीक्षणीयं मया। भवता च मुखावरणवस्त्रमेतदीयं किञ्चिदपनेयम्, येन सुस्पष्टमेतन्मुखं द्रष्टुं शक्येत निर्णीयेत च ततः 'केयमावयोः कस्ये'ति। तथा सति न कश्चिद्विवादस्यावसरः स्यादिति भावः। द्वित्रा अत्र टीकाकृतः—'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च से'ति कोषानुरोधाज्जवनिकां तिरस्करिणीं तां स्त्रियमन्तरयितुं वपुषि प्रसारितां निर्दिशन्ति। अत्रैतद् विचारणीयं भवति—स्वरूपदर्शनपरिहाराय वपुषि प्रावन्त्याः सत्यां जवनिकायां पूर्वं तत्र तत्रोद्गीतस्य स्वरूपसादृश्यस्य शङ्कैव नोदीयात्। तिरस्करणवस्त्रे च शरीरमावृत्य तिष्ठति रूपप्रतिभासोऽपि प्रायो दुःशकः, किमुत सादृश्यसम्भावना। अतो हि जवनिकाशब्दस्यौचित्यादत्राऽवगुण्ठनरूप एवार्थः करणीयः। एषोऽप्यर्थोऽवगुण्ठनस्य मुखतिरस्करणकारित्वेन मुख्यार्थ एव पर्यवस्यति। अवगुण्ठनेन संवीतेऽपि वदने कायच्छायया स्वरूपप्रतिभासे दुर्निवारे तदाकारसादृश्यसम्भावना भवितुमर्हतीति। इतोऽनन्तरमावन्तिकावगुण्ठनापनयनं ध्वनिमर्यादया बोद्धव्यम्।

देव्या वासवदत्तायाः स्वरूप एवं प्रकारेण प्रकाशतां गते सत्यात्मनोऽपि तदानीं प्रकाशनं तेनैव सममेतद्विषयकरहस्योद्घाटनं च समयोचितं मन्वानः स्वामिनो जयाशंसनं करोति यौगन्धरायणः—**जयत्विति**। सम्प्रत्यात्मानं प्रकाशयितुकामेन यौगन्धरायणेन राजानमुद्दिश्य स्वामीति पदं प्रयुज्य सेवकभावः स्वीयो व्यक्तीकृतः। एतेन सहैव यौगन्धरायणस्य स्वीयकृत्रिमपरिव्राजकनेपथ्यापनयनमपि ध्वनितम्।

---

राजा—अच्छा, आकृति की समानता देखें। जरा घूँघट हटाइये।

यौग०—महाराज की जय हो।

वासवदत्ता—(क) जेदु अय्यउत्तो ।

राजा—अये ! असौ यौगन्धरायणः, इयं महासेनपुत्री ।

किन्नु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया ।
अनयाऽप्येवमेवाहं दृष्टया वञ्चितस्तदा ॥ १७ ॥

---

(क) जयत्वार्यपुत्रः ।

---

प्रकटितस्वरूपा वासवदत्तापि तत्रभवतो भर्तुर्जयाशंसनं कुर्वती ब्रूते जेदु इति । सर्वोत्कर्षेण वर्ततामत्रभवान् श्रीमान् पतिदेवः ।

एवं विजयाशंसनेन स्वात्मानं प्रकाशयन्तावेतौ वासवदत्तायौगन्धरायणाविति प्रत्यभिजानन् सविस्मयं सहर्षं च वचनमाह राजा—अये इति । 'अये' इत्याश्चर्यानन्दसूचकमत्राव्ययम् । विस्मयहर्षौ च राज्ञस्तयोर्गृहीतवेषान्तरयोस्तद्वेषापनयनपुरःसरं यथावत्स्वरूपं प्राप्तवतोरतर्कितप्राप्त्यैव बोद्धव्यौ । अहो ! अयं मे मन्त्री यौगन्धरायणः, एषा च श्रीमन्महासेनराजकुमारी मत्प्रिया वासवदत्ता ! किन्न्विदम् ? स वेषः पूर्वमेतयोः, इदानीं चायम् ! किमत्र तत्त्वम् ?

**किन्नु सत्यमिति** । वासवदत्ताविषयकं दर्शनमुद्दिश्य राज्ञो वितर्कवचनमेतत् । इदं वासवदत्तायाः प्रत्यक्षं दर्शनमेतत्, किन्नु सत्यं यथार्थम्, किन्नु स्वप्नः स्वप्नरूपमयथार्थं वा वर्तते । सा पूर्वं समुद्रगृहे दृष्टा प्रियतमा वासवदत्ता, भूयः पुनरस्मिन्समये, दृश्यते दर्शनविषयीक्रियते । सत्येऽपि दर्शनविषयेऽसत्यत्वसम्भावना कथमिति तत्प्रयोजकं प्राक्तनानुभवमात्मनो दर्शयति—**अनयेति** । अपिरत्र भिन्नक्रमो 'दृष्टये'त्यनेनान्वेतव्यः । अहम् उदयनः, तदा तस्मिन् समुद्रगृहावस्थानसमये, एवमेवामुनैव प्रकारेण, दृष्टया जाग्रदवस्थायां नयनयोः पुरस्तादुपस्थितयापि, अनया वासवदत्तया, वञ्चितः स्वरूपान्तर्धानेन प्रतारितः, अभूवमिति शेषः । साम्प्रतिकं वासवदत्तादर्शनं तात्त्विकमतात्त्विकं वा ? अपि नाम सफलमेतन्निष्फलं वा भवेत् ? यथयमिदानीं दृश्यते, नूनं तथैव पद्मावत्या अस्वस्थता-

---

वासव०—आर्यपुत्र की जय हो !

राजा०—हैं, यह यौगन्धरायण हैं और यह महासेन की पुत्री वासवदत्ता !
क्या यह सत्य है ? अथवा क्या यह स्वप्न है जो कि इसे फिर देख रहा हूँ । उस समय अर्थात् समुद्र-गृह में सोते समय दिखाई पड़ने पर भी इसने इसी प्रकार मुझे ठगा था ॥१७॥

*यौगन्धरायणः*—स्वामिन् ! देव्यपनयेन कृतापराधः खल्वहम् । तत् क्षन्तुमर्हति स्वामी । [ इति पादयोः पतति । ]

राजा—[ उत्थाप्य ] यौगन्धरायणो भवान् ननु ।

---

प्रवृत्तिमधिगत्य समुद्रगृहान्तर्गतेन शयनं प्राप्तेन पुरा दृष्टासीन्मया । दृष्टिगोचरतां प्रयातापि तदा तत्क्षणमेवाऽदर्शनं गतवती दुर्दैवान्निराशं वितन्वती मां प्रतारितवती खल्वसौ । अधुनापि तादृगेव किमहमेतया न प्रतार्येय ? तदानीं तदिवेदानीमिदमपि दर्शनं क्षणिकं सत् फलविधौ शून्यं तु न स्यात्किनु ? दुग्धदग्धाननस्य पुनर्दधिभक्षण इव दर्शनेऽस्मिन् शङ्का मे भवितुमर्हतीति भावः । छन्दोऽनुष्टुप् ॥ १७ ॥

राज्ञ आज्ञां विनैव राज्ञीं स्थानान्तरं नीतवतः स्वस्य मन्तोरमुष्य क्षमापन्नं राजानं याचते यौगन्धरायणः—**स्वामिन्निति** । देव्यपनयेन, देव्या वासवदत्ताया अपनयः स्वरूपप्रच्छादनपुरःसरमन्यत्र नयनं तेन, खलु निःसंशयम् । तत् देव्यपनयनरूपं दुर्विनयचेष्टितम् । स्वामिन् ! श्रीमतीं वासवदत्तां गृहीतवेषान्तरां प्रच्छन्नरूपां विधाय यदहं श्रीमत्सकाशादन्यत्र नीत्वा न्यस्तवान् , श्रीमदभ्युदयसाधनत्वेन समयोचितं तदपि श्रीमन्तमनावेद्य कृतं निःसन्देहमनौचित्यपक्ष एव निक्षिप्तं भवतीति तमेतं नूनमपराधं कृतवान् । क्षन्तव्य एषोऽपराधः स्वामिना सेवकस्येति भावः । तदेतदभ्यर्थयमानस्य यौगन्धरायणस्य तदुचितं स्वामिचरणयोः प्रणिपातं दर्शयति—**इति पादयोरिति** ।

स्वामिभक्तस्य यौगन्धरायणकृतपूर्वाण्यसाधारणानि कार्याणि स्मरन् प्रियापनयनमपीदं तत्कृतं शुभोदर्कमनिक्षिपन्नपराधपक्षे, पादयोः पतितं तं स्नेहादुत्थापयन् प्रशंसन्नाह राजा—**यौगन्धरायण** इति । नन्विति वाक्यालङ्कारे । अत्र यौगन्धरायणमुद्दिश्य वदतो राज्ञः पुनस्तन्नामग्रहणं तद्गतं गुणविशेषं लक्षयति । स एवास्ति भवान् यौगन्धरायणः, यो हि स्वामिनो हितमेव स्वार्थं मन्यते । बुद्धिबलभक्तिसमन्वितेन प्रशंसनीयगुणगणेन यत्नामेदमापाततोऽनुचितमिव प्रतीयमानमाफलोदयं क्लेशकरं परिणामहितं विहितं भवता, तत्र विषये स्वापराधसम्भावन-

---

यौग०—महाराज ! महारानी के छिपाने से मैं अपराधी हूँ । मेरे इस दुर्विनय को आप क्षमा करें । ( पैरों पर गिरता है । )

राजा०—( उठाकर ) तुम सचमुच यौगन्धरायण ही हो ।

मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः॥ १८॥

*यौगन्धरायणः*—स्वामिभाग्यानामनुगन्तारो वयम्।

---

चेतया व्यर्थया किमयमात्मा सङ्कोचमानीयते। न चैष भवत्कर्तृकोऽपराधः प्रत्युत भवतो मत्कर्मकाराधनमेवैतदिति भावः।

इत्थं तावल्लक्षणामूलार्थान्तरसङ्क्रमितवाच्यध्वनिविधया प्रशंसितं तमेव यौगन्धरायणमुपकारिणं कृतज्ञताप्रकाशनपुरःसरं पुनः प्रशंसत्यभिधया वृत्त्या—**मिथ्योन्मादैरिति**। चकाराः समुच्चयार्थाः, ते चोन्मादादिभिः प्रत्येकं सम्बन्धाय पृथक्पृथक्प्रयुक्ताः। मज्जमानाः मज्जनशीला वयम्, अवरोधबन्धनरूपे दुस्तरे विपत्सिन्धौ सम्मोहऽमिति यावत्। मज्जमानशब्दोऽत्र ताच्छील्ये चानशा साधनीयः। मज्जतेः परस्मैपदित्वेन शानचस्तु न प्रसङ्गः। मिथ्योन्मादैः कल्पितैरसत्यैश्चित्तविभ्रमैः, 'उन्मादश्चित्तविभ्रम' इति कोषः, चित्तविभ्रमश्च चेतसोऽनवस्थितिरेव, युद्धैः प्रवर्तितैः सङ्ग्रामैः, शास्त्रदृष्टैः राजनीतिसिद्धान्तानुकूलैः मन्त्रितैर्गूढविचारैश्च, तथा भवद्यत्नैः भवतो यौगन्धरायणस्य तैस्तैरितरैरस्मदुद्धारकारणीभूतैरनुरूपैरुद्योगविशेषैः, खलु निःसंशयम्, समुद्धृताः विपत्सागराद्बहिर्निष्कासिता अभूम। यदा किल प्रद्योतराजोऽन्तःपुरे मां बन्धनं प्रापितवान्, दुःखाकरे तत्र काले विपद्बन्धुः समदुःखसुखः स्वामिभक्तो भवानेव समयोचितं विचारयन्नात्मानमुन्मत्तमिव तत्र प्रदर्शयन् युद्धं च कार्यसिद्ध्यौपयिकं प्रवर्तयन्नर्थनीत्युचितविचारपूर्वकं प्रशंसनीयं प्रयत्नमाधाय मां तदवरोधबन्धनान्मोचितवान्। एषा च भवतः साधारणेतरोपकृतिः कथं नाम विस्मृतिं नेष्यते कृतज्ञेन मया? सर्वथोपकर्ता मे भवान् प्रशंसनीय एवेति भावः। उन्मादयुद्धराजनीत्यनुकूलविचारसाधनप्रभृतिभिः प्रयत्नैर्यौगन्धरायणेन वरेण कृतं वत्सराजस्य प्रद्योतराजावरोधबन्धनान्मोचनं चेदं **प्रतिज्ञायौगन्धरायणे** द्रष्टव्यम्। अनुष्टुप् छन्दः॥ १८॥

गुणग्राह्येण राज्ञा कृतमात्मनः प्रशंसनं समवेक्ष्य तद्गौरवाल्लज्जमान इव सविनयं वचनमाह यौगन्धरायणः—**स्वामीत्यादि**। वयम्, मादृशाः सेवका इति

---

असत्य उन्माद–चेष्टाएँ, युद्ध, शास्त्रोक्त विचार और आपके उपायों से डूबते हुए हम उबारे गये हैं॥ १८॥

यौग०—हमलोग स्वामी के भाग्यों का अनुसरण करने वाले हैं।

*पद्मावती*—(क) अम्महे ! अय्या खु इअं । अय्ये ! सहीजणसमुदाआरेण अजाणन्तीए अदिक्कन्दो समुदाआरो । ता सीसेण पसादेमि ।

*वासवदत्ता*—[ पद्मावतीमुत्थाप्य ] (ख) उट्ठेहि उट्ठेहि ।

---

(क) अहो ! आर्या खल्वियम् । आर्ये ! सखीजनसमुदाचारेणाऽजानन्त्याऽतिक्रान्तः समुदाचारः । तच्छीर्षेण प्रसादयामि ।

(ख) उत्तिष्ठोत्तिष्ठाऽविधवे ! उत्तिष्ठ । अर्थिस्वं नाम शरीरमपराध्यति ।

---

यावत् । श्रीमतः स्वामिनो भाग्यानि यदा यादृशि विलसन्ति, तदा तादृगेव तेषामनुसरणमस्माभिः सेवकैरनुष्ठीयते । वयं तु तद्भागधेयनोदितास्तदौपयिकमेव यथासमयमाचरामः । तत्र भवतो भाग्यान्येव कल्पन्ते प्राधान्येन फलनिष्पत्तौ । अस्वतन्त्रा अकिञ्चित्कराश्च वयं न तावत्प्रशंसनार्हा इति भावः ।

अथ यावदावन्तिकां पद्मावती सखीर्निर्विशेषं पश्यति स्म । साम्प्रतं तामार्यपुत्रप्रियां वासवदत्तां महाराज्ञीं विदित्वा भूतपूर्वसखीभावोचिताचारप्रदर्शनरूपस्वीयापराधक्षमापनचिकीर्षया तत्प्रसादनौपयिकं वचनं प्रस्तौति—**अम्महे** इति । सुगुपदं त्वर्थे । अहो ! विचित्रमिदम् । आवन्तिकेति प्रसिद्धां यामहं सखीं सम्भावितवती, सैषा तु पूज्या श्रीमती वासवदत्तार्यपुत्रप्रियतमा वर्तते । इत्येवं स्वयमभिधाय तां प्रत्याह—**अय्ये** इति । तत् आचारोल्लङ्घनरूपापराधात्कारणात् । अयि ! मान्ये ! स्वरूपेण श्रीमत्या अपरिचयादद्यावधि सखीजनोचित आचारस्तत्र तत्र प्रदर्शितो मया । पूज्येषु यथाचारं यथा वर्तितव्यम्, न तथाऽवर्तिषि । अतो यथोचितमाचारमुल्लङ्घितवती क्षमां प्रार्थयमानैषाऽहं प्रसादनाय श्रीमतीं शिरसा प्रणमामि । आशासे च नूनं क्षमिष्यतेऽपराधो मामकीनः श्रीमत्योदारचित्तयेति । प्रणामकरणप्रतिज्ञेयं पद्मावत्याः । प्रणामश्चानुक्तोऽपि प्रसङ्गोचितोऽत्र वेदितव्यः ।

इत्येवं प्रणमन्तीं पादपतितां पद्मावतीमुत्थापयन्ती प्राह वासवदत्ता—**उट्ठेहि** इति । 'उट्ठेही'ति त्रिरुक्त्या वासवदत्ताप्रसादनसम्भ्रमस्यातिशयः पद्मावत्या दर्शितः कविना । 'पुनः पुनरुत्थातुं प्रेरितापि प्रणामकरणात्पद्मावती न विरन्तुमैहते'ति तस्या

---

**पद्मा०**—अरे ! ये तो आर्या वासवदत्ता हैं । न जानती हुई मैंने सखी के समान व्यवहार करने से शिष्टाचार का उल्लंघन किया है ! इसलिये सिर झुकाकर क्षमा चाहती हूँ ।

**वासव०**—( पद्मावती को उठाकर ) उठो, उठो, सौभाग्यवती ! उठो । न्यास का रक्षण

अविहवे ! उट्ठेहि । अत्थिसअं णाम सरीरं अवरद्धइ ।

---

अयं वासवदत्तायां भक्तेरतिशयो व्यङ्ग्यः । अविधवा सौभाग्यवती, तत्सम्बुद्धौ हे अविधवे ! अयि सौभाग्यवति ! मुहुरेवमुत्थाप्यमानापि मया किं नाम नोत्तिष्ठसि ? उत्तिष्ठ, पर्याप्तमिदमाचारप्रदर्शनम् । विदितस्ते यथावद्भावो ममेत्यर्थः । **अत्थिसअमिति** । अर्थिस्वम्, अर्थिनः त्वत्कृतं न्यासरक्षणं कामयमानस्य त्वत्समीपे न्यासं निक्षेप्तुमिच्छतो वा यौगन्धरायणस्य स्वं धनम्, नामेति प्रसिद्धौ, यौगन्धरायणेन 'मदीयमिद'मिति व्यपदिश्यमानं न तु वास्तविकं तस्येत्यर्थः । शरीरम् अर्थान्मे वासवदत्तायाः, लक्षणया अहमिति यावत्, अपराध्यतीति भूतकालार्थे वर्तमानकालिकः प्रयोगः । न्यासरूपेण मां क्वचिन्निक्षेप्तुकामेन यौगन्धरायणेन 'मदीयेय'मिति कृत्रिमं व्याहरता यदहमत्र ते सन्निधौ निक्षिप्ता, तेनैव मे स्वातन्त्र्यमपगतम् । आचारविरुद्धकारिता च प्रायः पराधीने जने सम्भवति । अतश्च नूनमहमेवापराधिनी । विनयवत्यां त्वय्यपराधसम्भावनापि कीदृशी ? त्वं तु मां तदानीं रक्षितवती ममोपकारिणी खल्वसीति भावः । अथवा—अर्थिस्वम्, अर्थिनः शरणार्थिन्या ममेति यावत्, स्वं स्वात्मीयं तथात्वेन सम्भावितम्, शरीरम् अर्थात्पद्मावत्यास्तव । अत्र च पक्षे 'अपराध्यती'ति काकुः, सर्वथा नापराध्यति स्मेत्यर्थः । मदीयशुश्रूषाविधौ त्वया विनियुक्ते मया च स्वात्मीयत्वेन सम्भावितेऽस्मिंस्तव शरीरे, लक्षणया तादृश्यां त्वयि, कथन्तावदपराधभाजनत्वं भवितुमर्हति ? उपकारकारिण्यपराधसम्भावनाप्यत्र कर्तुं न शक्येति भावः । वचनमिदं वासवदत्तायाः पद्मावतीं प्रति सापत्न्यद्वेषलेशतोऽप्यस्पृष्टं समानभावोचितं प्रेमभावं प्रकटयति । 'अविहवे' इति सम्बुद्ध्यन्तपदप्रयोगोऽप्येवमेवार्थं दर्शयति ।

अत्र 'सधवापदे प्रयोक्तव्ये विधवापदेन सह प्रयुक्तोऽयं तदभावो नोचितः, अभावेन सह भावस्यापि प्रतीतेरमङ्गलव्यञ्जकमिदम् अविधवापदं न तावत्प्रयोगयोग्य'मिति केचिदाक्षिपन्ति व्याख्याकृतः । तदेतदाक्षेपदुःसाहसमिदं तेषां व्यङ्ग्यार्थमर्यादाऽनाकलनमूलकं सहृदयहृदयोद्वेजकं ननु । इदमत्र गूढं तात्पर्यम्—सधवापदे प्रयुक्ते 'सौभाग्यवती'त्येवार्थो लभ्यते, अविधवापदप्रयोगः पुनः सौभाग्या-

---

चाहनेवाले यौगन्धरायण का धन-रूप यह शरीर अर्थात् मैं ही अपराधी हूँ । अथवा शरण चाहती हुई मुझसे अपनाया गया यह (तुम्हारा) शरीर अपराधी ! यह सर्वथा असम्भव है ।

*पद्मावती*—(क) अणुग्गहिदह्मि ।

*राजा*—वयस्य ! यौगन्धरायण ! देव्यपनये का कृता ते बुद्धिः ?

*यौगन्धरायणः*—कौशाम्बीमात्रं परिपालयामीति ।

---

(क) अनुगृहीताऽस्मि ।

---

ऽभावं निषेधन्नखण्डितसौभाग्यरूपमर्थं बोधयति । तेन 'अखण्डितमास्तां ते सौभाग्य'मिति पद्मावतीं प्रत्याशीर्वचनं ध्वन्यते वासवदत्तायाः । अत आपाततोऽनुचितवत्प्रतीयमानोऽप्यमङ्गलरूपोऽर्थः शाश्वतिकमङ्गलसूचकाऽखण्डितसौभाग्यरूपव्यङ्ग्यार्थबोधनक्षमो न कञ्चिदत्राऽनौचितीमुद्भावयेदिति नापरोक्षं प्रेक्षावताम् । इत्थमेव कालिदासोऽपि मेघदूते 'भर्तुर्मित्रं प्रियमविधवे' इत्यत्र गूढार्थं दर्शितवानित्यलम् ।

पूर्वोक्तेन वचसा प्रकाशितं स्नेहभावानुग्रहं वासवदत्तायाः सादरमभिनन्दति पद्मावती—**अणुग्गहिदह्मीति** । इदमित्थमिदानीं मां गौरवपदमारोपयन्त्याः श्रीमत्याः केवलमनुग्रहोऽयं मयि । अहन्तु सर्वथैतद्गौरवाऽनर्हास्मीति पद्मावत्युक्तेराशयः ।

वासवदत्तापद्मावत्योः परस्परालाप एवं प्रचलिते विरतिं गते, नरपतिर्वत्सराजो वासवदत्तापनयनविषये यौगन्धरायणस्य मानसमाशयं स्फुटं जिज्ञासमानस्तद्विधानकारणं पृच्छति तम्—**वयस्येति** । वयस्यपदप्रयोगश्चायं राज्ञो यौगन्धरायणे स्नेहातिशयसद्भावं सूचयत्यत्र । का किं फलमुद्दिश्येति यावत्, बुद्धिर्मानसो विचारः । मित्र ! मन्त्रिवर ! यन्नाम देवी वासवदत्ता त्वया मत्सकाशादपनीता, तत्र किं ते मानसं विचारितम् ? भावि तत्फलं मनसा किमुद्दिश्य कृतमिदं त्वया, परिणतौ हितं किं प्रयोजनमेतस्य तदा सम्भावितमासीत् ? अत्र च—'स्फुटं वस्तुतत्त्वं ज्ञातुमिच्छयैव राज्ञः प्रश्नोऽयम्, न तु विश्वासयोग्येऽस्मिन् यौगन्धरायणे तयाऽनुचितकार्यकारित्वेनाऽविश्वस्तत्वबुद्ध्ये'ति वेदितव्यम् ।

यौगन्धरायणो राज्ञः प्रश्नस्योत्तरं दित्सुर्देव्यपनयनविषयकं हृद्गतमात्मनोऽभीप्सितं तत्कारणं प्रतिपादयति—**कौशाम्बीमात्रमिति** । अत्र मात्रशब्दो-

---

पद्मा० —( आप के इस गौरव से ) मैं अनुगृहीत हूं ।

राजा —सखे ! यौगन्धरायण ! देवी को छिपाने में तुम्हारा क्या अभिप्राय था ?

यौग० —यह कि केवल कौशांबी ही अधिकार में रह गई ।

*राजा*—अथ पद्मावत्या हस्ते किं न्यासकारणम् ?

---

ऽवधारणे, कौशाम्बीमेवेत्यर्थः, परिपालयामीति देव्यपनयनकालिकी वर्तमानार्थता। राज्यपरिपालनं च प्रधानमन्त्रिणो राज्ञः प्रियतमस्य यौगन्धरायणस्य प्रधानं कर्तव्यम्। एतदुक्त्या च तस्य तत्र सुतरां स्वीयत्वसूचकः स्नेहः प्रदर्शितः। अयमर्थः—इदानीं केवलं कौशाम्बीनगरी राजशासनानुसारं परिपाल्यते मया। 'समग्रं वत्सराज्यं राज्ञः शासनविपर्यीकृतं परिपालयितुमिष्टं परहस्तगतं कथं नामात्मनो हस्तगतं भवे'दिति विचारणायां निर्धारितम्, यत्किल—'देवी वासवदत्ता फलोदयकालं यावत् प्रच्छन्नरूपा कुत्रापि स्थापनीया। देव्यनुपलब्ध्या रुमण्वदादिमन्त्रिवरप्रार्थनया च पुनरन्या काचिद्राजकुमारी परिणेष्यते श्रीमता। ततः स्वभार्याबन्धुसाहाय्येन श्रीमतो वत्सराज्ये पुनः करगते सञ्जाते, साकल्येन वत्सदेशपरिपालकत्वं मदीयमव्याहतं स्या'दिति। एवमेवार्थं ध्रुवं निर्धार्य देव्या अपनयनं चिकीर्षितमासीत्तदा। 'प्रणयविशेषपात्रभूतायां सत्यां च देव्यां न कदापि दारान्तरं तत्रभवता स्वीकरिष्यते, समुचितसाहाय्याऽनवाप्त्या च वत्सराज्यप्राप्तिः सर्वथा दुःसम्भवा। वासवदत्ताबन्धुना महासेनभूपतिना कृतं साहाय्यं कार्यसिद्धेः प्रयोजकं भविता, किन्तु कन्यापहरणकारणेन तदीयप्रसाददृष्टेरसम्भावनया तदपि दुर्लभं दूरेतरा'मिति विचार्य 'देवी दग्धे'ति मिथ्याप्रवादः प्रख्यापितः। एतेन च 'वासवदत्ताया अनुपलब्ध्या कथञ्चिन्मन्त्रिणामनुरोधात्स्वीकरिष्यति दारान्तरं तत्रभवा'—निति सम्भावितमासीत्। 'यथा चेदं मदुक्तम्, तथा स्फुटमेव सकलमालोकितं तत्रभवते'ति नाधिकं किमप्यत्र विषये वक्तुमवशिष्यत इति।

श्रुत्वेदं 'पद्मावत्याः समीपे किमिति सा न्यासरूपेण स्थापिते'त्येवं पुनः पृच्छामात्मनः प्रकटीकरोति राजा—अथेति। अथ देव्या अपनयनानन्तरम्। देवीं वासवदत्तां मत्तोऽपनीय पद्मावत्याः सन्निधौ स्थापयतः कस्तवाभिप्रायः ? किमत्रापि विषये मानसमुद्दिष्टमासीत्तवेत्यर्थः। एषोऽपि तद्बुद्धिपरीक्षां चिकीर्षतो राज्ञः प्रश्नः। पद्मावत्यामपरिचितायां न्यासरक्षणयोग्यतां सम्भाव्य तत्र ते विश्वासपात्रत्वबुद्धिः कथं जातेति प्रश्नस्याशयः।

इदमत्र पद्मावत्याः समीपे वासवदत्तान्यासस्य कारणं राज्ञा पृष्टो यौगन्धरा-

---

राजा—और पद्मावती के हाथ धरोहर रखने का क्या कारण था ?

यौगन्धरायणः—पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति ।

राजा—इदमपि रुमण्वता ज्ञातम् ?

यौगन्धरायणः—स्वामिन् ! सर्वैरेव ज्ञातम् ।

---

यणस्तदेव प्रतिपादयन्नाह—पुष्पकेत्यादि । आदेशिकैः सिद्धपुरुषैर्ज्यौतिषिकैर्वा, पद्मावतीति विशेष्यपदं पूर्ववाक्यादेवागन्तव्यम्, आदिष्टा भाव्यर्थसूचनविषयीकृता । पुष्पकभद्रप्रभृतिभिः सिद्धैर्महात्मभिर्दैवज्ञैर्वा 'श्रीमती महीपतेर्महिषीपदमेषाऽलङ्करिष्यती'त्येवं किल श्रीमतीं पद्मावतीमुद्दिश्य भविष्यत्फलं पूर्वमेव सूचितमासीद्, अतस्तेषां वचनेष्वनन्यथाभाविषु विश्वासातिशयवत्याः पद्मावत्याः समीप एव श्रीमती वासवदत्ता न्यासरूपेण स्थापिता । 'यथासमयमेतया च सूचिता वासवदत्ताचारित्र्यशुद्धिः श्रीमतः स्वामिनो नूनं विश्वासास्पदं भविष्यति, एतद्बन्धोः साहाय्येन वत्सराज्यमपि सपत्नापहृतं स्वामिना सुखेन प्राप्स्यत' इत्येवं मनसिकृत्य भविष्यत्कार्यगौरवेण श्रीमत्यां पद्मावत्यां विश्वासपात्रता न्यासरक्षणयोग्यतापि मया सम्भाविताऽऽसीदिति भावः । अयमर्थः प्रथमाङ्के ( १५–१६, २४ पृष्ठेषु ) द्रष्टव्यः ।

'सम्पादितस्त्वयार्थोऽयमात्मत्योदयं गोपितः कस्याप्यन्तरङ्गसचिवस्य विज्ञातो वे'ति तत्त्वं बुभुत्सू राजा रुमण्वत्येवात्मनः परिपूर्णभक्ते तादृग्गूढार्थसचिवे तन्मन्त्रविचारसाहचर्यमुचितं मन्यमानस्तमर्थमनुयुङ्क्ते यौगन्धरायणम्—इदमपीति । इदं वासवदत्ताया अपनयनं पद्मावत्यन्तिके न्यसनं चेत्युभयम् । अये ! यत्किल त्वं परिणामदर्शी सन् वासवदत्तां मत्तोऽपनीय पद्मावतीकृतं तद्रक्षणमाकाङ्क्षंस्तत्रैव न्यासरूपेण तस्या अवस्थानं कल्पितवान्, किमेतमप्यर्थं त्वत्तो विज्ञातवान् रुमण्वान् ? सर्वोऽपि विषयः प्रायोऽन्तरङ्गसचिवेन रुमण्वताऽऽलोचितो भवतीत्ययमपि तेनाऽऽलोचितः पूर्वं किंनु ? अपिरत्र भिन्नक्रमो रुमण्वता वा योज्यः । अत्र च पक्षे किमिदं ते चेष्टितं रुमण्वतोऽप्यर्थसचिवस्य विज्ञातमासीदित्यर्थः ।

अत्रोत्तरं प्रस्तौतीति यौगन्धरायणः—स्वामिन्निति । नाथ ! रुमण्वानेव

---

यौग०—पुष्पकभद्रादि सिद्ध या ज्योतिषियों का कहना था कि पद्मावती आपकी रानी होंगी । ( यह कारण था )

राजा—यह भी रुमण्वान् को अथवा यह रुमण्वान् को भी ज्ञात था ?

यौग०—महाराज ! सभी को विदित था ।

राजा—अहो ! शठः खलु रुमण्वान् ।

*यौगन्धरायणः*—स्वामिन् ! देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्रभवती च ।

केवलं किम्, तत्रभवतः श्रेयसि दत्तावधानाः सर्वेऽप्याप्ततमा अर्थमेनं जानन्ति स्म । न तावदेकाकिना मयेदं मन्त्रितं कृतं च । सकलसम्मत्यैव प्रवृत्तोऽहमस्मिन् कर्मणीति भावः ।

'सर्वेऽपि विषयमेनं जानन्तीति' यौगन्धरायणोक्तमाकर्ण्य राजा तमर्थं जानन्तमप्यप्रकाशितवन्तं रुमण्वन्तमुद्दिश्य सप्रणयोपालम्भवचनं प्रस्तौति—**अहो** इति । शठो वञ्चकः, वञ्चकत्वारोपश्च राज्ञो रुमण्वति वासवदत्ताकुशलवृत्ताऽप्रकाशनमूलकः । अन्यैश्च मदीयैर्विषयोऽयं न प्रकाशितो मत्पुरस्तादित्यास्तां तावत्, परमत्रायं चित्रं यदेषोऽवगतैतदर्थोऽपि रुमण्वान् मदीयदुःखैकसाक्षिभूतोऽपि वासवदत्तायाः कुशलवृत्तमिदं न नाम किञ्चिदपि सूचितवान् । एतदेवास्य नूनं वञ्चकत्वम् । कथमत्र वञ्चयति स्मैष मां विश्वासपात्रं मे सततपरिचर्यापरोऽप्यर्थमेनं मत्तो गोपयन्निति भावः ।

इदमत्रावगन्तव्यम्—श्रीमतो महीपतेर्हितमुद्दिश्य विहितं प्रधानमहिष्या अपनयनादिकमात्मनः सकलं कार्यजातं सफलतां प्राप्तमिति, शुभोदर्कदर्शिनो भर्तुर्मदीयचेष्टितमेतदरुचिकरं न जातमित्येवं च पर्यालोचयतो यौगन्धरायणस्य 'सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ किं वक्ष्यतीति हृदयं परिशङ्कितं मे' इतीदक्पूर्वोक्तं शङ्कितं साम्प्रतं हृदयादपगतम् । राजा तु विषयमेतमवगच्छन् पद्मावत्यां वासवदत्ताया न्यासीकरणात्तत्र विश्वासात्कामपि तत्राऽननुरूपां शङ्कां नाऽचकलत् ।

सम्प्रत्युपक्रान्ते च सर्वस्मिन्कर्मण्युपसंहृते, देव्याः कुशलं तन्मातरपितरौ तत्रभवन्तावङ्गारवतीमहासेनौ निवेदयितुं काञ्चुकीयधात्र्यो रैभ्यवसुन्धरानामिकयोस्तत्रोज्जयिन्यामुपस्थितिं प्राप्तकालां मत्वा यौगन्धरायणः स्वामिनं ब्रूते—**स्वामिन्निति ।** देव्याः वासवदत्तायाः । प्रतिनिवर्तताम् इतः प्रतिष्ठताम् , प्रत्येकाभिप्रायेणैकत्वमिदम्

राजा—अहो ! रुमण्वान् बड़ा ठग है ।

**यौग०**—महाराज ! देवी वासवदत्ता का कुशल निवेदन करने के लिये आज ही माननीय रैभ्य और वसुन्धरा लौट जायँ ।

राजा—न, न। सर्व एव वयं यास्यामो देव्या पद्मावत्या सह।

*यौगन्धरायणः*—यदाज्ञापयति स्वामी।

---

'नाथ! तौ मातरपितरौ देव्याश्चिराद् वृत्तान्तं कमप्यनधिगच्छन्तौ कुशलं श्रोतुमुत्कण्ठिता'विति तन्निवेदनाय श्रीमता रैभ्येण श्रीमत्या वसुन्धरया च सत्वरं तत्रोपस्थातव्यम्। ततः खलु कुशलप्रश्नसन्देशहारित्वेनात्र समागतयोर्द्वयोरेतयोरितोऽद्यतन एव दिवसे वासवदत्ताकुशलसन्देशहारित्वेन पुनरुज्जयिनीं प्रति प्रस्थानं स्थाने। नात्र विलम्बेन भवितव्यमिति भावः।

'धात्रीकाञ्चुकीयमुखेन कुशले निवेदिते मयि चानुपस्थिते तत्र मदीयमिदमौद्धत्यमिव प्रतिभायाद् गुरुजनस्ये'ति सपरिवारं तत्रास्माभिरुपस्थायाऽस्मिन्समये स्वात्मप्रदर्शनपुरःसरं स्वयमेव तन्निवेदनीयमित्येवमाशयं दर्शयन्नाह राजा—न नेति। द्वौ नञौ तयोरेकाकिनोस्तत्र गमनं सर्वथा निषेधतः। मन्त्रिवर! नैवम्, प्रस्तावस्तवायं न समीचीनः। नवोढया पद्मावत्या समं सकलैरस्माभिस्तत्रोपस्थातव्यमिदानीम्। चक्षुर्विषयतां प्रयातयोर्वासवदत्तापद्मावत्योः परस्परमीर्ष्याभावाऽस्पृष्टं सविशेषं प्रेमभावमवलोक्य मदीयौ श्वशुरौ भृशं तुष्येताम्। अतः प्रतिष्ठेमहि सर्वे वयमुज्जयिनीं प्रतीति भावः।

तत्रभवतः स्वामिन आदेशं प्रमाणयन् यौगन्धरायणो ब्रूते—**यदाज्ञापयतीति**। श्रीमतः स्वामिनो वचनं प्रमाणमस्माकम्। यथाभिलाषं कर्तुमर्हति स्वामी। वयन्तु किङ्कराः श्रीमदाज्ञाकारिणः स्म इत्यर्थः।

इत्यमत्र द्वितीयप्रेयसीप्राप्तिद्वारेण सपत्नोन्मूलनपुरःसरं पुना राज्यलाभे प्रधानप्रियतमासमागमे च नायकस्य सञ्जाते, उपसंहारं गते सति सकले नाटकीयसंविधानके, समाप्तौ मङ्गलार्थं भरतवाक्यं प्रदर्श्य नाटकमिदं समापयिष्यते। भरतवाक्यं च शुभाशंसनात्मकप्रशस्तिरूपं निर्वहणसन्धेरङ्गमुच्यते। तथा चोक्तं **दशरूपके**—'प्रशस्तिः शुभशंसनम्' इति। 'नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयत' इत्यन्यत्रापि तल्लक्षणमुक्तम्। एषा च प्रशस्तिरनुकर्तुर्भरतस्य ( नटस्य ) श्रीमतो

---

राजा—नहीं नहीं। हम सभी लोग देवी पद्मावती के साथ जाएंगे।

यौग०—जो महाराज की आज्ञा।

[ भरतवाक्यम्— ]

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥ १९ ॥

---

नाट्याचार्यस्य वा वाक्यत्वेन प्रतिपादिता भवतीति यौगन्धरायणमुखेन तदेव भरतवाक्यं प्रदर्श्यते कविना—**इमामीति** । इमां परिपालनीयां, महीं पृथ्वीं, नः अस्माकं, राजसिंहो नृपतिवरः, 'राजा सिंह इवे'त्युपमितसमासः, 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः, प्रशास्तु प्रकर्षेण पालयतु, प्रकर्षश्चाधिक्यम्, तदत्र गुणकृतं कालकृतं च वेदितव्यम्, परितः स्वकीयादेशप्रवर्तनपूर्वकं सविशेषं चिरं परिपालयतादित्याशंसनम् । कथम्भूतां महीमित्याह—**सागरपर्यन्तामिति** । सागराः समुद्राः पर्यन्ता अन्तिमाः सीमा यस्यास्ताम् समग्रामिति यावत्, पुनः कीदृशीं हिमवद्विन्ध्यकुण्डलाम्, हिमवान् हिमालयो विन्ध्यश्चेति पर्वतावेव कुण्डले कर्णवेष्टनसंज्ञकालङ्कारविशेषौ यस्यास्तादृशीम्, हिमवद्विन्ध्यभूभृतावुत्तरदक्षिणदिशोः सीमाभूताविति पृथिव्याः कुण्डलाकारत्वेन कल्पितावत्र, पुनरपि कथम्भूताम् एकातपत्राङ्काम्, एकमद्वितीयमातपत्रं श्वेतच्छत्ररूपम् अङ्को राज्यलक्ष्मीत्वसूचकं चिह्नं यस्यां तथाभूतामिति, 'उत्सङ्गचिह्नयोरङ्क' इति कोषः । या किल चरमसीमारूपान् सकलान् समुद्रान् व्याप्य स्थिता वर्तते, पुण्यभूमेरार्यावर्तस्य दक्षिणोत्तरदिक्सीमाभूतेन विन्ध्येन हिमवता च यस्याः सुषमाविशेषः समन्ततः स्तीर्यते, यत्र चैकाधिपत्यसूचकं तत्सितच्छत्रमेकमुद्द्योतते, समस्तां तां पृथ्वीं निष्कण्टकमस्माकं राजाधिराजः श्रीमानुदयनश्चिरं परिपालयतादित्यर्थः । 'सार्वभौमो भवन् भूमौ राजाऽस्माकं विराजताम्' इति तात्पर्यार्थः । अनुष्टुब् वृत्तम् ॥ १९ ॥

---

( भरतवाक्य— )

हमारे राज-सिंह अर्थात् राजाओं में श्रेष्ठ महाराज उदयन समुद्र तक विस्तृत, हिमाचल और विन्ध्याचल रूपी दो कर्ण-कुण्डलों से युक्त, एक श्वेतच्छत्र से चिह्नित इस सम्पूर्ण पृथ्वी का पालन करें ॥ १९ ॥

[ निष्क्रान्ताः सर्वे । ]

षष्ठोऽङ्कः ।

इति स्वप्नवासवदत्तं समाप्तम् ।



'निष्क्रान्ताः सर्वे' इत्यनेन रङ्गभूमेः सर्वेषां प्रस्थानं प्रदर्शितम् ।
षष्ठाङ्कस्योपसंहारं प्रतिजानीते–षष्ठोऽङ्क इति ।
इतीत्यादिना प्रकृतग्रन्थस्य समाप्तिं सूचयति ग्रन्थकारः ।

पूज्यश्रीगुरुभालचन्द्रचरणामात्रैकभव्याश्रयः
श्रीमल्लक्ष्मणसद्गुरूक्तिविलसत्साहित्यविज्ञानभूः ।
श्रीमत्सूरिविनायकाऽऽत्मजननः श्रीरुक्मिणीगर्भजः
काशीवृत्तिरनन्तरामसुकृती वेतालवंशाङ्कुरः ॥ १ ॥

श्रीमद्भासकवीश्वरेण रचिते क्लिष्टार्थके नाटके
मुग्धाऽबोधजनप्रबोधजननव्यापारबद्धादराम् ।
ग्रन्थग्रन्थिविभेदनेन सकलच्छात्रोपकारक्षमां
कोपन्याकृतिभावगर्भिततनूं टीकामिमां व्यातनोत् ॥ २ ॥

इति श्रीस्वप्नवासवदत्तव्याख्यायां प्रबोधिन्यां षष्ठोऽङ्कः परिपूर्णः ।
समाप्ता चेयं श्रीमदनन्तरामशास्त्रिवेतालविनिर्मिता
प्रबोधिन्याख्या व्याख्या ।



( सबका प्रस्थान )

छठा अङ्क समाप्त ।

जगन्नाथशास्त्री होशिङ्ग कृत स्वप्नवासवदत्त नाटक का हिन्दी अनुवाद समाप्त ।



॥ श्रीः ॥

विद्याभवन-संस्कृत-ग्रन्थमाला

३९



भासनाटकचक्रे

# प्रतिज्ञायौगन्धरायणम्

'प्रकाश' संस्कृत-हिन्दी व्याख्याद्वयोपेतम्

व्याख्याकारः

साहित्यशास्त्राचार्य-

श्री पं० कपिलदेवगिरिः



चौखम्बा विद्याभवन, वाराणसी-१



वि. सं. २०१५ ] मूल्यं २) [ ई. १९५८

# दो शब्द

प्रतिज्ञायौगन्धरायण पर जो एक-दो टीकाएँ देखने को मिलीं वे विद्यार्थियों के लिये उपयुक्त प्रतीत नहीं हुईं। अतः मैंने इस ग्रन्थ की यह छात्रोपयोगी सरल संस्कृत-हिन्दी व्याख्या प्रस्तुत की है।

इस पुस्तक की व्याख्या कराने का श्रेय प्रकाशक को ही है जिन्होंने इस पुस्तक के प्रकाशित करने का भार वहन किया है। प्रस्तुत पुस्तक को जान-बूझकर पाण्डित्यपूर्ण शैली का रूप नहीं दिया गया है। एतदर्थ लम्बे एवं जटिल शब्दों का पदच्छेद-विधि से ही अर्थ समझाने का प्रयास किया गया है। मैंने अपनी बुद्धि एवं गुरुजनों के मतानुसार जहाँ जैसा उपयुक्त अर्थ समझा वहाँ वैसा अनुवाद किया। आशा एवं विश्वास है कि विद्वान् सज्जन उचित परामर्श देकर द्वितीय संस्करण को अपनी रुचि के अनुकूल सुसंस्कृत रूप देने में सहयोग देंगे।

काशी हिन्दू विश्वविद्यालयीय संस्कृत महाविद्यालय के प्राध्यापक श्री पूज्य पं० रामभूर्ति जी त्रिपाठी के प्रति मैं हार्दिक कृतज्ञता प्रकट करता हूँ जिन्होंने अपने सहयोग से किंचित् उलझे हुए स्थलों को सुलझाया। यदि शास्त्री जी की इतनी अनुकम्पा न होती तो सम्भवतः यह पुस्तक और विलम्ब से प्रकाशित होती।

—कपिलदेव गिरि

# भूमिका

## महाकवि भास

ख्याति—महाकवि भास संस्कृत साहित्य के प्रख्यात एवं सम्मानित महाकवियों में से हैं। कालिदास ने अपने 'मालविकाग्निमित्र' नामक नाटक की प्रस्तावना में सूत्रधार(१) के मुख से स्पष्ट ही प्रश्न करवाया है कि प्रसिद्ध यशवाले भास, सौमिल्ल, कविपुत्र आदि महाकवियों के प्रबन्धों का अतिक्रमण कर कालिदास की कृति का इतना अधिक सम्मान क्यों हो रहा है ? इस कथन से भलीभांति प्रतीत होता है कि कालिदास के समय में भास के नाटक अत्यन्त लोकप्रिय थे। कालिदास के बाद कवियों ने भी भास के नाटकों का अत्यन्त सम्मान किया है। बाणभट्ट ने 'हर्षचरित' में इनके नाटकों की उत्कृष्टता बतलाते हुए कहा है कि भास ने सूत्रधार से आरंभ किये गये, बहुत भूमिका वाले तथा पताका ( रूपक की मुख्य अवान्तर घटना तथा ध्वजा ) से शोभायमान देवकुलों की भांति अपने नाटकों से साहित्य-जगत् में अच्छी प्रतिष्ठा पाई। (२) राजशेखर ने 'काव्यमीमांसा' में भास के नाटकों की अग्नि-परीक्षा तथा 'स्वप्नवासवदत्तम्' को सर्वोत्तम नाटक स्वीकार किया है।(३)

वाक्पतिराज ने अपने 'गउडवहो' नामक प्राकृतभाषा के महाकाव्य में 'जलणमित्ते'—ज्वलनमित्रं ( अग्नि का मित्र ) बताया है(४)। प्रख्यात आलंकारिक जयदेव ने भास को 'प्रसन्नराघव' की प्रस्तावना में कविताकामिनी का हास माना है(५)। उपर्युक्त

---

( १ ) 'प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य कथं वर्तमानस्य कवेः कालिदासस्य कृतौ बहुमानः'। ( मालविकाग्निमित्रम् )

( २ ) सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ ( हर्षचरितम् )

( ३ ) भासनाटकचक्रेऽस्मिञ्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ ( काव्यमीमांसा )

( ४ ) भासम्मि जलणमित्ते कन्तीदेवे तहावि रहुआरे।
सोवन्धवे अ बन्धम्मि हारि अन्दे अ आणन्दो ॥ ( गउडवहो )

( ५ ) यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरः
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षः हृदयवसतिः पञ्चबाणः स बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥ ( प्रसन्नराघव )

विशेषणों से यह बात स्पष्ट हो जाती है कि अतीत काल में सर्वसाधारण के बीच भास के रूपकों की अधिक ख्याति एवं प्रचार था और उनके बृहद् नाटक-चक्र में स्वप्नवासवदत्तम् प्रधान था।

संस्कृत साहित्य के एक विख्यात कवि होने पर भी बहुत दिनों तक विद्वानों के मध्य भास का केवल नाम ही सुना जाता था। इनके समय, ग्रन्थ तथा जीवनवृत्त के विषय में लेशमात्र भी ज्ञात नहीं था। केवल अनेक संस्कृत-काव्यों और नाटकों में उनका नामोल्लेख एवं उद्धरण देखकर ही अनुमान किया जाता था कि अतीतकाल में भास नामक कोई प्रख्यात नाटककार हो गया है। ऐसी स्थिति अनेक काव्यों की है, जिनका केवल नाममात्र ही श्रवणगोचर होता है, जैसे 'कण्ठाभरण', 'जाम्बवतीविजय' आदि; परन्तु महत्सौभाग्य की बात है कि १९१२ ई० में ट्रावनकोर के पं० श्री टी० गणपति शास्त्री ने स्वप्नवासवदत्तम् आदि तेरह नाटकों का अन्वेषण कर अनन्तशयन-ग्रन्थमाला में प्रकाशित कराया और उन्हें भास की असंदिग्ध कृति बतलाया। उसी समय से भास और उनके रूपकों की चर्चा साहित्य-संसार एवं सहृदय विद्वानों में होने लगी। श्री शास्त्री जी द्वारा अनुसंधान किए गए तेरह नाटकों में केवल 'स्वप्नवासवदत्तम्' भासकृत हो सकता है, क्योंकि राजशेखर के पूर्वोक्त निर्देश के अतिरिक्त आचार्य अभिनव गुप्त ने भी 'अभिनवभारती' में इस नाटक का उल्लेख किया है(१)। किन्तु शेष रूपकों को भास की रचना स्वीकार करने में कोई भी उत्कृष्ट प्रमाण नहीं है ऐसा कुछ विद्वानों का मत है। किन्तु श्री शास्त्री जी ने इन रूपकों की प्रामाणिकता सिद्ध करने के लिये जो अकाट्य युक्तियाँ दी हैं, उनमें शंका का लेशमात्र भी कारण नहीं है। प्रकरणानुसार इसकी चर्चा आगे की जायगी।

## भास का समय

महाकवि कालिदास ने अपने नाटक 'मालविकाग्निमित्र' में भास का बड़े सम्मान से नामोल्लेख किया है जैसा कि ऊपर निर्देश किया जा चुका है। इससे यह सिद्ध एवं सुस्पष्ट हो जाता है कि भास कालिदास से प्राचीन थे। कालिदास के समय के विषय में विद्वानों में मतैक्य नहीं है। कुछ लोग महाकवि का समय ४०० ई० बताते हैं। उनके कथनानुसार भास ४०० ई० से प्राचीन होते हैं। कुछ विद्वान् कालिदास की स्थिति प्रथम शतक निश्चित करते हैं। उनके आधार पर भास ईसा के प्रथम शतक से प्राचीन होते हैं। भास को इतना सर्वमान्य होने में, कि कालिदास जैसे महाकवि भी उनका नाम गौरव एवं प्रतिष्ठा से लें, अवश्यमेव एक निश्चित समय लगा होगा। भास के १३ नाटकों के आविष्कारक एवं आश्रयदाता श्री गणपति शास्त्री ने भास को पाणिनि और चाणक्य से भी प्राचीन

---

(१) क्वचित् क्रीडा—यथा वासवदत्तायाम्।

बतलाने का प्रयत्न किया है। सैनिकों को लड़ाई के लिये प्रोत्साहित करने के प्रसङ्ग में चाणक्य ने अपने 'अर्थशास्त्र' नामक ग्रन्थ में 'अपीह श्लोकौ भवतः' का उल्लेख कर जिन दो श्लोकों को प्रमाणकोटि में स्थापित किया है उनमें से एक(१) भास के प्राप्त 'प्रतिज्ञायौगन्धरायणम्' में उपलब्ध होता है। ऐसा ज्ञात होता है कि उक्त श्लोक को चाणक्य ने भास के नाटक से लिया है। इतिहासकारों ने चाणक्य का समय ई० पू० ४०० निश्चित किया है। एतदर्थ भास ई० पू० ४०० से अर्वाचीन कदापि नहीं स्वीकार किए जा सकते।

भास के द्वारा रचित 'प्रतिमानाटक' में रावण के बृहस्पति(२)कृत अर्थशास्त्र में दक्षता प्राप्त करने का उल्लेख किया गया है। बार्हस्पत्य अर्थशास्त्र चाणक्य से भी पहले का है। यदि वे कौटिल्य से बाद के होते तो बृहस्पतिरचित अर्थशास्त्र की जगह चाणक्यरचित अर्थशास्त्र का नामोल्लेख मिलता। बार्हस्पत्य अर्थशास्त्र यह निर्देश करता है कि भास चाणक्य से भी प्राचीन थे। प्रयोगों की अपाणिनीयता यह बतलाती है कि पाणिनि के सर्वसम्मानित पद पर प्रतिष्ठित होने के पूर्व इन नाटकों का निर्माण हुआ था। कालिदास के प्राकृतों की अपेक्षा भास के प्राकृत अतीव प्राचीन प्रतीत होते हैं। भास के रूपकों से प्रतिभासित होनेवाली सामाजिक दशा मौर्यकालीन सामाजिक दशा के अनुरूप है। उक्त प्रमाणों के आधार पर भास का समय कम से कम ई० पू० पाँचवीं शताब्दी निश्चित होता है किन्तु अधिकांश समीक्षक इस सिद्धान्त से सहमत नहीं हैं। वे भास तथा चाणक्य के पद्य को किसी दूसरे ग्रन्थ का सङ्कलन बतलाते हुए उक्त मत को अप्रामाणिक सिद्ध करते हैं।

प्राकृतभाषा की आलोचना के आधार पर डा० लेस्नी, सुखथनकर इत्यादि पाश्चात्य और पौरस्त्य विद्वानों ने भास को कालिदास से तो प्राचीन बतलाया है, पर अश्वघोष से अर्वाचीन। साथ ही वे यह भी कहते हैं कि अश्वघोष की प्राकृत की छाया भास के रूपकों में पाई जाती है। उक्त विद्वानों की निजी धारणा के अनुसार कालिदास का समय पञ्चम शताब्दी था और वे अश्वघोष से बाद के कवि थे। अतएव वे कालिदास और अश्वघोष के मध्यकाल में भास की स्थिति मानकर उनका समय तृतीय शताब्दी स्वीकार करते हैं। भास के नाम के साथ जिन नाटकों का उल्लेख किया गया है उनका लेखक कोई अज्ञात दक्षिणी कवि होना चाहिये, जिसकी स्थिति ईसा के बाद सप्तम शताब्दी में ठहरती है। ऐसी किंवदन्ती है, पर इस मत में भी विद्वज्जन रुचि नहीं लेते। श्री टी०

---

(१) नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत्॥

(२) भोः काश्यपगोत्रोऽस्मि, साङ्गवेदमधीये, मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, प्राचेतसं श्राद्धकल्पञ्च।

गणपति शास्त्री जी ने अनेक प्रमाणों से यह प्रमाणित किया है कि भास कवि ई० पू० चौथी शताब्दी में हुए थे और जब शास्त्री जी के द्वारा दिये गये प्रमाणों का खण्डन करने के लिए कोई प्रबल प्रमाण उपलब्ध नहीं है तो ई० पू० चौथी शताब्दी को ही स्वीकार करना युक्तियुक्त होगा।

## जीवनी

भास के द्वारा रचित नाटकों के आदि या अन्त में कहीं भी लेखक का नामनिर्देश नहीं है। ऐसी स्थिति में महाकवि भास के जीवन का रहस्योद्घाटन करना सहज कार्य नहीं है। पर उनके ग्रन्थों का पर्यवेक्षण करने से जो निष्कर्ष निकलता है उसी के आधार पर कवि की जीवनसम्बन्धी घटनाओं पर किञ्चित् प्रकाश डाला जा सकता है। श्री पुसालकर जी की शब्दावली में 'भास धर्मभीरु ब्राह्मण थे'। वे दक्षिण के नहीं, बल्कि उत्तर भारत के अधिवासी थे। इसके प्रमाण में 'स्वप्नवासवदत्तम्' और 'बालचरित' का भरतवाक्य प्रस्तुत है—

**इमां सागरपर्य्यन्तां हिमवद्विन्ध्यकुण्डलाम्।**
**महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः॥**

प्रस्तुत भरतवाक्य में कवि परमात्मा से प्रार्थना करता है कि जिस पृथ्वी के दोनों हिस्सों में हिमालय तथा विन्ध्य पर्वत दो कुण्डलों की भांति सुशोभित हैं, हमारे राजा ससागरा उस वसुन्धरा के मध्य एकच्छत्र राज्य करें। प्रकृत श्लोक में हिमालय तथा विन्ध्य पर्वत को भगवती वसुन्धरा के कर्ण-कुण्डलों से उपमा दी है। भास ने दक्षिण कर्ण ( कान ) विन्ध्य तथा वाम कर्ण हिमगिरि कल्पित किया है। भास की वसुन्धरा का विस्तार पूर्व से पश्चिम पर्य्यन्त है। उनकी पृथ्वी उत्तर में हिमालय एवं दक्षिण में विन्ध्य पर्य्यन्त है। यही पृथ्वी भास की पृथ्वी थी। इसी सीमा के अन्दर कहीं कवि का स्थान था। भास वर्णाश्रम-धर्म के पक्षपाती थे। देवता तथा यज्ञ से सम्बन्धित स्तोत्रों में उनकी आस्था थी। गौ को भी वे सम्मान की दृष्टि से देखते थे। वे किसी राजा के राजपण्डित थे। भास ने अपने राजा को 'राजसिंह' शब्द से अभिहित किया है। यह शब्द किसी व्यक्ति की संज्ञा है या साधारणतः राजामात्र का बोधक, यह ज्ञात नहीं है। भास राजघरानों एवं राजकीय जीवन से सुपरिचित थे। वे हास्यप्रिय तथा नम्र प्रकृति के थे। वे बातचीत की कला में निपुण, मानव स्वभाव तथा प्राकृतिक सुन्दरता के प्रेमी एवं चतुर पारखी थे। सम्भव है कवि का पारिवारिक जीवन आनन्दपूर्ण एवं सुख-शान्तिदायक रहा हो। वे कर्तव्यपरायण पुत्र के पिता, साध्वी पत्नी के पति तथा संतानप्रिय पिता थे। अविभाजित-कुटुम्बप्रणाली के परिपोषक एवं गुरुजनों की प्रतिष्ठा करनेवाले थे। कवि के जीवन में आशा का प्रतिबिम्ब तथा राष्ट्रीय भावनाओं की अभिव्यक्ति उपलब्ध होती है। वे स्वतन्त्रता तथा न्यायपरायणता के पक्षपाती एवं वैष्णवधर्मावलम्बी थे। इन विशेषणों

के आधार पर यही कहना पड़ता है कि भास संस्कृत साहित्य के एक विशिष्ट अध्येता एवं सर्वतोमुखी प्रतिभासम्पन्न कवि थे।

## ग्रन्थ

महामहोपाध्याय गणपतिशास्त्री जी ने भास के जिन तेरह रूपकों की खोज की है वे निम्नलिखित हैं:—

१ प्रतिज्ञायौगन्धरायणम्, २ स्वप्नवासवदत्तम्, ३ प्रतिमानाटकम्, ४ पंचरात्रम्, ५ अभिषेकनाटकम्, ६ मध्यमव्यायोगः, ७ अविमारकम्, ८ चारुदत्तम्, ९ कर्णभारम्, १० दूतवाक्यम्, ११ दूतघटोत्कचम्, १२ ऊरुभङ्गम् तथा १३ बालचरितम्।

**प्रतिज्ञायौगन्धरायण**—प्रतिज्ञायौगन्धरायण में कौशाम्बी के राजा वत्सराज उदयन द्वारा उज्जयिनी के राजा प्रद्योत की पुत्री वासवदत्ता के हरण की कथा है। आखेट के प्रेमी राजा उदयन के कृत्रिम हाथी के छल से महासेन द्वारा पकड़े जाने पर उदयन का मन्त्री यौगन्धरायण राजा को बन्धन से मुक्ति दिलाने और कुमारी वासवदत्ता के साथ उनका पाणिग्रहण कराने की प्रतिज्ञा करता है। मन्त्री की दृढ़ प्रतिज्ञा तथा कुटिल नीति का यह सर्वोत्कृष्ट निदर्शन है। इसी के आधार पर इस रूपक का नाम 'प्रतिज्ञायौगन्धरायण' पड़ा है।

**स्वप्नवासवदत्तम्**—भास की सभी कृतियों में यह सर्वोत्तम रचना है। इसे 'प्रतिज्ञानाटिका' का उत्तरार्ध ही समझना संगत एवं उचित होगा। इस रूपक में राजा उदयन का वासवदत्ता के साथ स्वप्नावस्था में योग होता है। इसी आधार पर इस रूपक का नाम 'स्वप्नवासवदत्तम्' रखा गया है। प्रद्योत के राजमहल से वासवदत्ता का हरण कर लाने के बाद राजा उदयन विषयवासना में लिप्त हो जाता है और राजकीय कर्तव्यों में किसी प्रकार की रुचि नहीं लेता। ऐसी दशा में विरोधियों का होना स्वाभाविक ही है। राजा अरुणि को आक्रमण करने का सुअवसर मिल जाता है। उदयन को अपने शत्रुओं को परास्त करने के लिये मगधनरेश दर्शक की सहायता लेना अत्यावश्यक होता है। यौगन्धरायण वासवदत्ता के अग्नि में जल मरने का मिथ्या समाचार फैलाता है, परन्तु वास्तव में उसे ले जाकर मगध के राजा दर्शक की भगिनी पद्मावती के संरक्षण में रख आता है। कालान्तर में वत्सराज का पद्मावती के साथ शुभ विवाह हो जाता है। एक दिन राजा वासवदत्ता को स्वप्नावस्था में देखता है और उससे मिलने के लिये अत्यन्त उत्सुक हो जाता है। उसके जीवित होने में किंचित् विश्वास होने लगता है। बाद में वासवदत्ता राजा के समक्ष लाई जाती है और दोनों का आनन्द-मिलन होता है। इस विधि से इस रूपक का सुखमय पर्यवसान होता है।

**प्रतिमानाटक**—इस रूपक का आधार रामायण की कथा है। इसमें रामवनगमन, सीताहरण आदि अयोध्याकाण्ड से आरम्भ होकर रावणवध पर्यन्त की घटनाओं

का वर्णन किया गया है। इस नाटक के आधार पर अतीत भारत में ललितकला-सम्वन्धी नूतन वृत्त का मूल्याङ्कन किया जा सकता है। अतीत काल में भारतीय नरेशों के देवकुल होते थे, जिनमें मानवशरीर वदलने के वाद राजाओं की प्रस्तर की वड़ी मूर्तियाँ रखी जाती थीं। इक्ष्वाकुवंश के नरेशों का भी देवकुल था, जिसमें दिवंगत राजाओं की प्रतिमाएँ रखी जाती थीं। राजा दशरथ की भी मूर्ति देवकुल में रखी गई है। भरत ने अपने मामा के घर से लौटते समय नगर से वाहर देवकुल में रखी हुई अपने पिता दशरथ की प्रतिमा को देख कर उनकी मृत्यु का अनुमान स्वयं ही कर लिया। इसी प्रतिमा के आधार पर इस रूपक का नाम 'प्रतिमानाटक' है।

**पंचरात्र**—महाभारत की कथा की एक घटना को लेकर इस नाटक की रचना हुई है। दुर्योधन यज्ञ में गुरु द्रोणाचार्य को मनोवांछित दक्षिणा देने के लिये उद्यत होता है। द्रोणाचार्य ने पाण्डवों के निमित्त आधा राज्य देने के लिये कहा—इस शर्त पर कि पांच रात्रियों के भीतर पांडव मिल जायंगे तो वह उन्हें राज्य दे देगा। द्रोणाचार्य इस प्रतिज्ञा को स्वीकार करते हैं। वाद में गोहरण के उपलक्ष्य में कौरव राजा विराट की राजधानी पर आक्रमण करते हैं। राजकुमार उत्तर कौरवों से युद्ध करने के लिये चल देता है। ऐसी स्थिति में अज्ञातावस्था में स्थित अर्जुन की सहायता पाकर उत्तर की विजय होती है। पाण्डव समय के साथ प्रकाश में आते हैं। द्रोणाचार्य दुर्योधन को पूर्वकृत प्रतिज्ञा का स्मरण दिलाते हैं। दुर्योधन उन्हें आधा राज्य दे देता है। महाभारत की कथा से कोई संगति न मिलने से यह घटना अंशतः कविप्रतिभा की उपज प्रतीत होती है।

**अभिषेक**—इस नाटक में किष्किन्धाकाण्ड, सुन्दरकाण्ड, लंकाकाण्ड तथा राम के राज्याभिषेक पर्यन्त की कथा वर्णित है। इसी राज्याभिषेक के कारण उक्त नाटक का नाम 'अभिषेक' पड़ा है।

**मध्यमव्यायोग**—इस नाटक में पाण्डुपुत्रों के वनवास के समय घटोत्कच के हाथों से भीम द्वारा एक ब्राह्मणवालक की सुरक्षा की कथा वर्णित है। व्यायोग शब्द नाटकों का एक भेद है। मध्यम शब्द भीम और उस ब्राह्मण वालक के लिये प्रयुक्त हुआ है, जिसे भीम ने घटोत्कच के क्रूर हाथों से वचाया था। अतएव इसका नाम 'मध्यम-व्यायोग' रखा गया है।

**अविमारक**—इस रूपक में सौवीर राजा के पुत्र विष्णुसेन, जो अविमारक के नाम से प्रख्यात है तथा राजा कुन्तिभोज की लड़की कुरंगी के विवाह और प्रणय की घटना का उल्लेख किया गया है। संभव है किसी अतीत परम्परागत आख्यायिका को प्रकृत नाटक का रूप दिया गया है, जिसका निर्देश कामसूत्र में पाया जाता है। विष्णुसेन ने भेड़रूपधारी 'अवि' नामक दैत्य को मारा था। इसीलिये इस नाटक का नाम 'अविमारक' रखा गया है।

**दरिद्रचारुदत्त**—इस रूपक में ऐश्वर्यहीन पर चरित्रवान् विप्र चारुदत्त और गुण-ग्राहिणी वाराङ्गना वसन्तसेना की प्रेमलीला वर्णित है।

**कर्णभार, दूतवाक्य, दूतघटोत्कच तथा ऊरुभंग**—महाभारत के महत्त्वपूर्ण तत्त्व घटनाचक्रों से उक्त नाटक सम्बन्ध रखते हैं।

भास की कृतियों को विषयानुसार पांच भागों में बाँटा जा सकता है—रामायण पर आधारित नाटक, महाभारत पर आधारित नाटक, भागवत-कथाश्रित रूपक, लोक-प्रचलित कथा पर आश्रित नाटक और उदयन की कथा से सम्बन्धित नाटक।

**प्रामाणिकता**—श्री शास्त्रीजी द्वारा अनुसंधान किये गये तेरह नाटकों की प्रामाणिकता में विद्वानों में मतभेद है। कुछ लोग भासकृत प्रचलित नाटकों को उनकी वास्तविक कृति न मानकर उनके नाटकों का संक्षिप्त रूप मानते हैं। कुछ लोग उपलब्ध नाटकों के कुछ भागों को तो भास की रचना और कुछ अंश को किसी अन्य की कृति बतलाते हैं। साथ ही साथ यह भी कहते हैं कि भास के नाटक अपूर्ण अवस्था में मिले थे; संभव है किसी अन्य कवि ने उन्हें पूरा किया हो। कुछ विद्वान् 'स्वप्नवासवदत्तम्' को तो भासकृत मानते हैं, पर शेष नाटकों को, जो भास के नाम पर प्रचलित हैं, उनकी कृति मानने के लिये कदापि सहमत नहीं हैं। परन्तु इन बातों का उचित उत्तर देने के लिये (१)**शास्त्रीजी**, (२)**पूज्यपाद श्री बलदेव जी उपाध्याय** तथा (३)**श्री कान्तानाथ जी तैलंग** आदि विद्वानों ने अनेक प्रमाण एवं युक्तियाँ प्रस्तुत की हैं। उनका कहना है कि नाटकों के रचनासादृश्य, भाषाविन्यास तथा कुछ विशेषताओं आदि पर दृष्टिपात करने से यह प्रतीत होता है कि इन तेरह नाटकों का निर्माता एक ही कवि है। इन विद्वानों ने प्रामाणिकता के पक्ष में जो युक्तियाँ एवं सम्मतियाँ दी हैं उनका सारांश निम्नलिखित है—

( अ ) भास के नाम पर प्रख्यात एवं प्रचलित सब नाटक **'नान्द्यन्ते ततः प्रविशति सूत्रधारः'** से आरंभ होते हैं। अनन्तर सूत्रधार रंगमंच पर आता है और मंगलगान करता है।

( आ ) भास के नाटकों में सर्वत्र 'प्रस्तावना' के स्थान पर 'स्थापना' का प्रयोग किया गया है परन्तु न तो उनमें कवि का नामोल्लेख है और न नाटक का ही। ये विशेषताएँ भारतीय नाट्यशास्त्र की परम्परा की प्रसिद्धि होने से पूर्वकाल की ओर संकेत करती हैं।

( इ ) प्रत्येक ग्रन्थ की समाप्ति में भरतवाक्य के माध्यम से प्रार्थना में **'महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः'** या अन्य किसी तत्सम पद्य का प्रयोग किया गया है।

---

( १ ) इनके समाधान के लिये म. म. गणपति जी शास्त्री कृत 'स्वप्नवासवदत्तम्' आदि नाटकों की भूमिका देखिये।

( २ ) देखिये—संस्कृत साहित्य का इतिहास ( उपाध्याय जी कृत )।

( ३ ) देखिये—स्वप्नवासवदत्तम् की भूमिका ( श्रीतैलंगशास्त्रीजी कृत )।

नाटकों का आद्यन्त एक-सा है। बहुत से नाटकों के आरंभ में मुद्रालंकार के माध्यम से प्रमुख-प्रमुख पात्रों का नामनिर्देश किया गया है।

( ई ) भाषा, छन्द, पद्य, भाव, कल्पना और घटना आदि प्रायः सब नाटकों में समान हैं। बहुत से अलङ्कार-शास्त्र के रचयिताओं ने भी भास के नाटकों से पद्य उद्धृत करके अपने ग्रन्थों की प्रतिष्ठा बढ़ाई है। वामन, दण्डी, आचार्य अभिनव गुप्त आदि कवियों ने उनके किसी न किसी श्लोक आदि को उद्धरण की कोटि में रक्खा है।

( उ ) भासकृत नाटकों में प्रयुक्त अनेक अपाणिनीय प्रयोग भी इनकी रचनाओं की प्रामाणिकता एवं प्राचीनता में सहयोग देते हैं। डा० मैक्स लोन्डेनेष आदि का कथन है कि प्रचलित नाटकों में भरतमुनिप्रणीत नाट्यशास्त्र में वर्णित नाटक के नियमों का उल्लंघन किया गया है, जैसे—'ऊरुभङ्ग' में दुर्योधन की मृत्यु मञ्च के ऊपर दिखलाना, 'प्रतिमा' में राम के द्वारा वाली का वध रङ्गमञ्च के ऊपर दिखलाना आदि बातें शास्त्रीय परम्परा के विरुद्ध हैं। उक्त प्रथा उस युग की ओर संकेत करती है जब कि भरतमुनि का यह नाट्यशास्त्र साहित्यसमाज में पूर्णरूपेण प्रतिष्ठित एवं विकसित नहीं हो सका था। इस आधार पर यह भी कहना उचित होगा कि उक्त नाटकों का निर्माता एक ही कवि रहा होगा और वह भास के अतिरिक्त दूसरा नहीं है।

## नाट्यकला

भास के नाटकों में मनुष्य-जीवन के विविध रूपों का पर्यवेक्षण करने का भरपूर अवसर उपलब्ध होता है। अतएव उनके रूपकों में विविधता एवं सर्वतोमुखी प्रतिभा की झलक विशेषतः दिखाई पड़ती है। दूतवाक्य, मध्यमव्यायोग, दूतघटोत्कच, कर्णभार और ऊरुभङ्ग 'एकांकी' नाटक की श्रेणी में आते हैं, पर प्रतिज्ञायौगन्धरायण, स्वप्नवासवदत्तम्, प्रतिमा इत्यादि पूर्ण विकसित नाटक माने जाते हैं। इनके सब नाटक बड़ी सरलता से रङ्गमञ्च पर खेले जाने योग्य बने हैं। अभिनेयता इन रूपकों की सबसे बड़ी विशेषता है। इन नाटकों में न तो वर्णन की प्रचुरता पायी जाती, न अनावश्यक कथावस्तु का विस्तार ही, जो अभिनेताओं की अभिनय-कला की गतिविधि के प्रतिरोधक हैं। भिन्न-भिन्न अवस्था में भिन्न-भिन्न भावों और विषयों के सूक्ष्म वर्णन में भास सिद्धहस्त हैं। वाग्बाहुल्य से मानों उनका स्पर्श ही नहीं है। इनका नाटक सुव्यवस्थित, सुसंघटित और चुस्त है। पात्रों के संवाद भी नपे-तुले शब्दों में हैं। पात्र उपयुक्त बातों को चुने हुए शब्दों में कहना अधिक पसन्द करते हैं। वे अनुपयुक्त बकवाद नहीं करते। भास संवादकला के विशेषज्ञ हैं। वे भली-भाँति जानते हैं कि कौन व्यक्ति किस परिस्थिति में क्या कहेगा या करना चाहेगा। वे मनुष्य के अन्तर्द्वन्द्व को सीधी भाषा में सरलता से व्यक्त कर देते हैं। अतएव भास के नाटक शास्त्र की दृष्टि से सुबोध, अभिनेय और सरल हैं।

## शैली

भास की शैली अपने ढङ्ग की निराली है। भाषा प्रभावोत्पादक और मुहावरेदार है। इनकी भाषा में जगह-जगह स्वभावोक्ति का पुट भरा मिलता है। इन्हें लम्बे-लम्बे समस्त पदों का प्रयोग पसन्द नहीं है। यद्यपि गद्यकाव्यों और महाकाव्यों में क्लिष्ट भाषा एवं समासयुक्त पदों की प्रचुरता दृष्टिगोचर होती है तथापि नाटक के लिये वह सर्वथा अनुपयुक्त है। नाट्यशास्त्र के लिये भाषा की सरलता, सरसता, स्फुटता, प्रसन्नता, गम्भीरता, मधुरता, मनोरञ्जकता आदि अपेक्षित हैं। भास के विचार और भाव उच्च तथा हृदयङ्गम करने योग्य हैं। इनकी भाषा में सरलता है। कथोपकथन और कवित्व की दृष्टि से भी इनके नाटक संस्कृतसाहित्य के किसी भी सर्वसम्मानित कवि और नाटककार से कम नहीं हैं। कालिदास जैसे प्रख्यात महाकवियों में भी माधुर्य, प्रसाद आदि गुण उपलब्ध होते हैं, पर भास की रचना में वे गुण पूर्णरूपेण विकसित हुए हैं। इनके पद्य और गद्य दोनों प्रशंसनीय हैं। इनकी शैली और भाषा उस युग की ओर निर्देश करती है, जब संस्कृत जनसाधारण की भाषा थी।

भास की वर्णनकला बड़ी प्रौढ और अपने ढङ्ग की अनोखी है। जैसे नाटक का अङ्ग भाषा है वैसे ही उक्तिप्रकार भी। भास का उक्तिप्रकार भी विचित्र है, जैसे स्वीकृत्यर्थक 'आम्' तथा 'बाढम्' का प्रयोग, 'यदि' तथा 'चेत्' का प्रयोग, कुशल-प्रश्न के लिये 'सुखमार्यस्य' आदि का प्रयोग। कालिदास, भवभूति आदि कवियों ने इनके ग्रन्थों की छाया में स्वस्व-ग्रन्थों की प्रतिष्ठा बढ़ाई है। भासरचित 'अविमारक' नाटक में वर्णित मध्याह्न में भगवान् भास्कर के प्रखर ताप से तपे हुए संसार को देखिये—

अत्युष्णा ज्वरितेव भास्करकरैरापीतसारा मही
यक्ष्मार्ता इव पादपाः प्रसुपितच्छाया दवाग्न्याश्रयात्।
विक्रोशन्त्यवशादिवोच्छ्रितगुहाव्यात्ताननाः पर्वताः
लोकोऽयं रविपाकनष्टहृदयः संयाति मूर्च्छामिव॥

इस मध्यकालीन वर्णन को 'मालविकाग्निमित्र' के पत्रच्छायासु हंसा आदि कालिदास के मध्याह्नवर्णन से समता कीजिए। अन्तर इतना ही है कि कालिदास राजा के उद्यान में खड़े हैं और भास जंगल में।

भास ने अपने 'स्वप्नवासवदत्तम्' में तपोभूमि का वर्णन निम्नलिखित प्रकार से किया है—

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः॥

भास के द्वारा रचित तपोवन के वर्णन को पढ़कर 'अभिज्ञानशाकुन्तल' में वर्णित कालिदास के तपोवन के आभोग की स्मृति जागृत हो जाती है। स्वेच्छया इतस्ततः विचरण करनेवाले हरिण दोनों को आकर्षित कर रहे हैं।

भवभूतिरचित 'उत्तररामचरित' के दूसरे अंक का आत्रेयी-संवाद 'स्वप्नवासवदत्तम्' के प्रथम अंक के विद्याधरसंवाद की प्रतिकृति या छाया कहा जा सकता है। भास वहिर्जगत् और अन्तर्जगत् के चित्रों को चित्रित करने में सिद्धहस्त हैं। उदाहरणार्थ स्वप्न नाटक का प्रथमांक द्रष्टव्य है।

भास का हृदय कोमल तथा विशाल है। उनकी नाटकीय-शैली तथा कवित्व की चर्चा करना मादृश अल्पबुद्धि के लिये दुःसाहस एवं धृष्टता मात्र है। अतः प्रस्तुत पुस्तक (प्रतिज्ञा-यौगन्धरायण) से किंचित् उदाहरण उद्धृत कर मैं प्रकृत प्रसङ्ग का उपसंहार कर दूँगा।

वासवदत्ता के विवाह के निमित्त सुन्दर एवं सुयोग्य वर ढूँढ़ने के लिये राजा को जो चिन्ता होती है उसका चित्रण भास ने जिस रीति से किया है उससे ज्ञात होता है कि रमणीमानसतल तथा मानवस्वभाव का वर्णन करने में वे कितने प्रवीण थे।

कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान्।
ततो रूपे कान्तिं न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं नहि न परिपाल्या युवतयः॥ १॥

धर्मस्नेहान्तरे न्यस्ताः दुःखिताः खलु मातरः॥

भास की वर्णनशक्ति के कतिपय उदाहरण प्रस्तुत हैं। इनके रूपक अनेक मनोरम चित्रों से चित्रित एवं सुसज्जित हैं। अस्तु, इस लघु निबंध में महाकवि की बहुमुखी प्रतिभा एवं गुणों को लिपिबद्ध करना मादृश जन के लिये अशक्य है।

## पात्र-चरित्र-चित्रण

भास के पात्र प्राकारमात्र नहीं, अपितु सजीव प्राणी हैं। उनका चरित्र इतना विशद एवं उत्कृष्ट है कि वे साहित्यसंसार में सदैव अमर रहेंगे।

**उदयन**—उदयन वत्सदेश का राजा है। यह रूपवान् एवं गुणी भी है। वीणावादन और शिकार की कला का अद्वितीय पंडित है। इसकी इस कला की ख्याति चारों ओर फैल गई है। वासवदत्ता को वीणा सिखाने का श्रेय इसी को है। राजा उदयन गंभीर एवं धीरोदात्त नायक है। वह अपनी प्रियतमा के विनाश का अशुभ संवाद सुनकर व्यग्र तो होता है, पर धैर्य नहीं छोड़ता। इसकी समता में हर्ष द्वारा वर्णित ( रत्नावली और प्रियदर्शिका का) उदयन सर्वथा तटस्थ, कान्तिहीन और आकर्षणरहित पात्र है। नाटिका के लिये उसे धीरललित सिद्ध कर कवि ने उसके उज्ज्वल व्यक्तित्व की अपकृष्टता ही दिखलाई है।

**यौगन्धरायण**—यह वत्सनरेश उदयन का प्रधान अमात्य है। इसके व्यक्तित्व की सबसे बड़ी विशेषता स्वामिभक्ति है। यह अपनी बुद्धिमानी से उदयन के खोए हुए साम्राज्य को पुनः प्राप्त कर लेता है। यह राजा के सुख-दुःख का साथी है तथा सब प्रकार से राजा के कल्याण एवं अभ्युदय की कामना करता है। यह हास्यप्रिय मन्त्री है। इन सब गुणों के होने पर भी इसके मानस में अभिमान एवं अनुचित हठवादिता का अभाव है। प्रस्तुत नाटिका में कवि ने इसे एक आदर्श मन्त्री के रूप में चित्रित किया है।

**वसन्तक**—प्रतिज्ञायौगन्धरायण का विदूषक भी कम महत्त्व का नहीं है। यह 'वसन्तक' के नाम से अभिहित है। भारतीय नाट्यदृष्टि से यह हास्य रस का अभिनेता होता है। यह प्रायः विप्रवंश का होता है। इसका नाम प्रायः ऋतु या पुष्प का पर्यायवाची होता है। यह अवस्था में नायक से छोटा भी होता है। इसके शरीर की बनावट भी दर्शकों के लिये हास्यास्पद होती है। यह अपनी भाषा, कार्य तथा वेश के द्वारा सर्वसाधारण को हँसाता रहता है। इसे दो पक्षों के बीच कलह कराने में अपार हर्ष की अनुभूति होती है। नायिका के साथ नायक के मधुर मिलन की गांठ जोड़ने में यह अत्यन्त चतुर होता है। यह मानिनी नायिका को भी अपनी वाक्‌चातुरी के द्वारा नायक के अनुकूल बनाने में दक्ष होता है। इसका चारित्रिक बल इतना प्रौढ़ होता है कि यह स्वयं किसी अबला के प्रेम-पाश में नहीं बँधता। यह दूसरे के मनोरंजन का तो कार्य करता है, पर स्वयं शायद ही कभी हँसता हो। इसकी समझ में दूरदर्शिता पाई जाती है। देखने में भले ही मूर्ख जान पड़े, पर आन्तरिक दृष्टि से यह चतुर एवं बुद्धिमान् होता है। खाने-पीने की बातों से इसे विशेष अभिरुचि होती है। कवियोंने इसे 'भुक्खड़'की पदवी दी है। यह श्रद्धा एवं भक्ति से स्वामी की सेवा करता है।

**रुमण्वान्**—यौगन्धरायण के शब्दों में रुमण्वान् बहुत ही चतुर एवं प्रत्युत्पन्नमति है। आपत्ति-काल में भी उसकी बुद्धि स्थिर रहती है और परख की प्रतिभा का लोप नहीं होता। विजन अरण्य में सहसा अपरिचित व्यक्ति के मुख से नील हस्ती की सूचना पर उदयन विध्वस्त हो जाता है, परन्तु रुमण्वान् को यह बात खटकती है और वह महाराज को सचेत भी करता है। उसके चरित्र की दूसरी विशेषता यह है कि वह अपने स्वामी के प्रति पर्याप्त निष्ठासम्पन्न है। वह उज्जयिनी की कारा में निवास करनेवाले अपने स्वामी की सहायता करने के लिये एक आदर्शपूर्ण ढंग से यत्नशील है। अपनी उस विदग्धता के लिये, जिससे वह अपने स्वामी और प्रधान मन्त्री यौगन्धरायण की सहायता करता है, कालान्तर में यौगन्धरायण से प्रशंसित होता है।

रुमण्वान् वस्तुतः स्वभाव का बहुत ही सच्चरित्र व्यक्ति है। तृतीय अंक में हम देखते हैं कि सबकी सहायता करने के लिये उसने अपना हाथ खोल रखा है और

विदूषक को सलाह देता है कि वह ऐसा प्रबन्ध करे कि वत्सराज और वासवदत्ता कारागार से निकल सकें। यौगन्धरायण के मन्त्रित्व की सफलता का बीज रुमण्वान् की सहायता में निहित है। इस प्रकार हम देखते हैं कि योग्य, विदग्ध एवं उदात्तचरित्र रुमण्वान् प्रत्येक अवसर पर अपने स्वामी की सहायता के लिए बद्धपरिकर है।

**महासेन**—महासेन एक शक्तिशाली प्रभावोत्पादक व्यक्तित्व का राजा है। युद्ध के क्षेत्र में उसकी तुलना कार्तिकेय से की गई है। उसे अपनी विशाल सेना और प्रतिष्ठित सहायकों पर गर्व है, लेकिन ये सब बातें उसे इसलिये पर्याप्त सन्तोषकर नहीं होतीं कि उदयन उससे अपने को तटस्थ और स्वतन्त्र समझते हैं। यद्यपि उसे उदयन से कोई द्वेष नहीं है तथापि वह उदयन से अपनत्व स्थापित करना चाहता है। वह स्वयं उदयन को 'गुणशाली', 'कुञ्जरज्ञानदृप्तः', 'वीरमानी' आदि कहा करता है। स्वभावतः वह बहुत ही दयालु एवं उदात्तचरित्र का पात्र है। वह यह सुनकर बहुत ही प्रसन्न होता है कि वत्सराज उसका कैदी है और बुरे तौर पर आहत है। इसीलिये वह तुरंत आज्ञा प्रदान करता है कि उदयन की मार्मिक चोटें शीघ्रतातिशीघ्र ठीक की जायँ। वह अपने व्यक्तियों को स्वयं मना करता है कि वे वत्सराज से युद्ध का कोई प्रसङ्ग न छेड़ें। जब वह यह सुनता है कि उदयन निरापद ढंग से मयूरयष्टि के मुख पर खड़ा रहने को आज्ञप्त है तब वह बहुत अप्रसन्न होता है और आज्ञा देता है कि उसे सुसज्जित भवन में रखा जाय। अधोलिखित श्लोक में उसका दृष्टिकोण बहुत ही सुस्पष्ट है—

**पूर्वं तावद्वैरमस्यावलेपादानीतेऽस्मिन् स्यात्तु मध्यस्थता मे।**
**युद्धक्लिष्टं संशयस्थं विपन्नं श्रुत्वा त्वेनं संशयं चिन्तयामि॥**

**( अङ्क २ श्लोक १४ )**

उसमें रहनेवाली सरलता एक ध्यान देने योग्य वस्तु है। उसका वात्सल्य सराहनीय है, जैसा कि अधोलिखित श्लोक से सुस्पष्ट है—

**अदत्तेत्यागता चिन्ता ( लज्जा ) दत्तेति व्यथितं मनः।**
**धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः॥** **( अङ्क २ श्लोक ७ )**

उसकी यह उक्ति अपत्यस्नेह को व्यक्त करती है। वह अपने जनों के स्वभाव को परखने में पैनी प्रतिभा का व्यक्ति है। वासवदत्ता को वीणावादन में लगाता है। अपने दोनों पुत्रों को राजनीतिक क्षेत्र का योद्धा बनाता है और तीसरे को क्रीड़ा-क्षेत्र के लिये छोड़ देता है। अपने मंत्री के लिये कहता है **अस्यैष नीतेः परिश्रमः।**

ब्राह्मणों के प्रति उसे पर्याप्त निष्ठा है और वह विश्वास करता है कि ब्राह्मण कभी झूठ नहीं बोलते। कंचुकी द्वारा वत्सराज के पकड़े जाने की सूचना पर वह विश्वास नहीं करता, परन्तु जब कञ्चुकी कहता है कि **'वृद्धोऽस्मि ब्राह्मणः खल्वहम्'** तब महासेन ने कहा—**'आह ! अस्त्येतत्'**। सर्वाधिक आकर्षक व्यक्तित्व का पक्ष तब उभरता है जब वह

अपने शत्रु की विशेषताओं को विना हिचकिचाहट के स्वीकार करता है। उसके व्यक्तित्व की विशेषता यह है कि वह दुष्परिस्थिति में भी एक-सा रहता है, यहां तक कि जब उज्जयिनी से वत्सराज और वासवदत्ता के भागने की सूचना मिलती है तब भी उसे कोई चिन्ता नहीं है। वह इसे गान्धर्वविवाह का रूप देकर आत्महत्या के लिये उद्यत हुई राजमहिषी को स्वस्थ करता है। निष्कर्ष यह है कि महासेन प्रसन्न एवं प्रतिष्ठित व्यक्तित्व का पात्र है।

## स्त्री-पात्र

भास की नायिकाएँ भी मनोरंजक हैं और वे अपने क्षेत्र में महत्त्वपूर्ण स्थान रखती हैं। भारतीय दृष्टि से वासवदत्ता परिणीता होने के कारण राजा उदयन की पत्नी है। वासवदत्ता की उदारता का वर्णन पतिपरायणता के आदर्श रूप की झलक है। वह सती-साध्वी महिला के रूप में सामने आती है। वह अपने पतिदेव की सुख-शान्ति के लिये अद्भुत परित्याग का उदाहरण प्रस्तुत करती है। पद्मावती मगधनरेश दर्शक की बहन है। वह अत्यन्त रूपवती है। उसके लावण्य से वासवदत्ता स्वयं प्रभावित है। वासवदत्ता उसके साथ किसी प्रकार का नारीजनसुलभ सपत्नीद्वेष नहीं रखती, अपितु वह स्वयं पद्मावती के साथ राजा उदयन का पाणिग्रहणसंस्कार कराने में सहयोग प्रदान करती है। अङ्गारवती महासेन की पत्नी है। वह पतिपरायणा एवं गार्हस्थ्य-जीवन को स्वर्ग बनाने वाली नारी है।

उक्त विशेषताओं के आधार पर यह कहा जा सकता है कि भास कथाविन्यास तथा पात्रों के व्यक्तित्व एवं वास्तविक स्वरूपोद्घाटन में अद्वितीय प्रतिभावान् रूपककार हैं। इसमें विवाद का लेशमात्र भी स्थान नहीं है।

यौगन्धरायणः—नीतः स्वामी । एष सोऽनर्थः,

एतत् तन्न्यङ्गमस्माकमेष सोऽतिमनोरथः ।
प्रद्योतस्य मनस्वित्वात् स्वामी दुःखेषु वर्तते ॥ १० ॥

अथ,

कथमगणितपूर्वं द्रक्ष्यते तं नरेन्द्रः
कथमपुरुषवाक्यं श्रोष्यते सिद्धवाक्यः ।
कथमविषयवन्ध्यं धारयिष्यत्यमर्षं
प्रणिपतति निरुद्धः सत्कृतो धर्षितो वा ॥ ११ ॥

---

भणित्वा = उक्त्वा । गाढबहुप्रहारतया—गाढा = दृढाः बहवश्च प्रहाराः अभिघाताः यस्य तस्य भावस्तत्ता तया गाढबहुप्रहारतया । वाहनासने—अश्वाद्युपवेशे । स्कंधशयनम् = स्कन्धवाह्यम् शयनीयम् आरोप्य = उपवेश्य उज्जयिनीम् = प्रद्योतराजधानीम् एव नीतो भर्ता = स्वामी ।

एषः सोऽनर्थः—एषः = ग्रहीकृत्य स्वामिनो नयनम् इत्यर्थः ।

एतत् तत् अस्माकम् न्यङ्गम् = अपमानजनकम्, कलंकं वा एषः = ग्रहीकृत्य स्वामिनो नयनम् स अनर्थः पूर्वतर्कितोऽनर्थः । प्रद्योतस्य = महासेनस्य अतिमनोरथः = वांच्छितार्थः मनस्वित्वात् = धीरचित्तत्वात् स्वामी दुःखेषु ईदृशावसरसहजेषु व्यसनेषु वर्तते दुःखानि अनुभवति ॥ १० ॥

नरेन्द्रः = नृपतिः अगणितपूर्वम् = अवज्ञातपूर्वम् । तं = प्रद्योतम् । कथम्=केन प्रकारेण । द्रक्ष्यते = अवलोकयिष्यति । सिद्धवाक्यः = मङ्गलवचनः । अपुरुषवा-

---

यौग०—स्वामी को ले गये ? यह अनर्थ हुआ ।

यही तो ( स्वामी को पकड़ कर ले जाना ) हमलोगों के लिये अपमान था जो पहले ही विचार किये हुए थे । और यही प्रद्योत का अभीष्ट भी था । स्वामी अपनी मनस्विता एवं धीरता के ही कारण यह दुःख भोग रहे हैं ॥ १० ॥

राजा उस ( प्रद्योत ) को किस प्रकार देखेगा जिसे उसने पहले कभी नहीं जाना है । मङ्गल वचनों को श्रवण करनेवाला वह कायरवचनों को किस प्रकार सुनेगा । अभिप्राय पूर्ण न होने के कारण उत्पन्न क्रोध को वह किस प्रकार धारण करेगा । बन्दी किये हुए पुरुष का सत्कार हो या निरादर हो, वह हमेशा लज्जित ही रहता है ॥ ११ ॥

( प्रविश्य )

प्रतीहारी—अय्य ! एसा पडिसरा । [ आर्य ! एषा प्रतिसरा । ]

यौगन्धरायणः—

**एतानि तान्यापतितानि काले भाग्यक्षयान्निष्फलमुद्यतानि ।**
**तुरङ्गमस्येव रणे निवृत्ते नीराजनाकौतुकमङ्गलानि ॥ १२ ॥**

---

-च्यम् = कापुरुषसाधारणवचनम् कथं श्रोष्यते अर्थात् अपमानकारकं वचनं श्रवणपथं कथं आनयिष्यति इति भावः । अविपर्यवन्ध्यम्—अविपर्येण वन्ध्यम् = विजयत्वाभावेन निष्फलमनोरथम् अमर्षम् = क्रोधम् 'कथं' धारयिष्यति । निरुद्धः= बन्दीकृतो जनः सत्कृतः = पूजितः धर्षितः = तिरस्कृतः वा प्रणिपतति = निरोद्धरि प्रह्वो भवति ॥ ११ ॥

रणे = युद्धे । निवृत्ते = परिसमाप्ते जाते सति । तुरङ्गमस्य = अश्वस्य । नीराजनाकौतुकमङ्गलानि—नीराजना = आरार्तिकाख्यं आरोग्यबलाद्यर्थे युद्धात् प्राक् कर्तव्यं शान्तिकर्म तदेव कौतुकम् = उत्सवः तस्य मङ्गलानि इव तदुपयोग्यानि दीप-पुष्पादीनि मङ्गलद्रव्याणि इव उद्यतानि = यत्नसाधितानि । एतानि तानि = इमानि पूर्वप्रार्थितानि वस्तूनि । भाग्यक्षयात् = दैववैपरीत्यात् । काले = समये -गते सति निष्फलम्—यथा भवति तथा आपतितानि ॥ १२ ॥

---

( प्रवेश कर )

प्रतीहारी—आर्य यह प्रतिसरा है ।

यौग०—युद्ध समाप्त हो जाने पर घोड़े की नीराजना विधि के लिये लाई हुई मंगल सामग्रियाँ जैसे व्यर्थ हो जाती हैं, वैसे ही भाग्य के क्षय होने पर ( राजा के बन्दी हो जाने पर ) इस समय इन वस्तुओं का मिलना व्यर्थ है क्योंकि समय अब बीत गया ॥ १२ ॥

टिप्पणी—पहले यह नियम था कि युद्ध के पहले अश्वों की एक विशेष प्रकार से पूजा होती थी जिसे 'वाजिनीराजनाविधि' कहते थे । श्री महाकवि कालीदास ने भी रघुवंश में इसका उल्लेख किया है—

तस्मै सम्यग्धुतो वह्निर्वाजिनीराजनाविधौ ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनैव जयं ददौ ॥

प्रतीहारी—अय्य ! इमा पडिसरा। [ आर्य! इयं प्रतिसरा। ]

यौगन्धरायणः—विजये ! स्थाप्यताम्।

प्रतीहारी—किं त्ति भट्टिमादरं णिवेदेमि। [ किमिति भर्तृमातरं निवेदयामि। ]

यौगन्धरायणः—विजये ! एवमेतत्।

प्रतीहारी—किं एदं। [ किमेतत्। ]

यौगन्धरायणः—इदम्।

प्रतीहारी—भणादु भणादु अय्यो भणादु। [ भणतु भणत्वार्यो भणतु। ]

यौगन्धरायणः—अथवा नैतच्छक्यं परिहर्तुम्। निवेदयिष्याम्यत्रभवत्यै। विजये ! स्थिरीक्रियतामात्मा। ( कर्णे ) एवमिव।

प्रतीहारी—हा[1]।

यौगन्धरायणः—विजया खल्वसि।

प्रतीहारी—एसा गच्छामि मन्दभाआ। [ एषा गच्छामि मन्दभागा। ]

---

एतत् = स्वामिवृत्तकथनम्। परिहर्तुं न शक्यम्। तत्रभवत्यै = राजमात्रे।

खलु असि = सुप्रसिद्धधैर्या खलु भवसि।

---

प्रतीहारी—आर्य ! यह प्रतिसरा है।

यौग०—विजये ! रख दो।

प्रतीहारी—स्वामी की माता से क्या निवेदन करूं ?

यौग०—विजये ! इस प्रकार से।

प्रतिहारी—यह क्या ?

यौग०—यह—

प्रतीहारी—आर्य ! कहिये कहिये।

यौग०—अथवा इस बात को गुप्त रखना उचित नहीं है। स्वामी की माता को यह बताऊंगा। विजये ! आत्मा को दृढ़ करो ( कान में ) इस प्रकार।

प्रतीहारी—हाय !

यौग०—विजया धैर्य धारण करो।

प्रतीहारी—मैं मन्दभागिनी जाती हूँ।

---

१. हं।

यौगन्धरायणः—विजये ! न खलु त्वयात्रभवत्यै गृहीतः स्वामीति सहसा निवेदयितव्यम् । स्नेहदुर्बलं मातृहृदयं रक्ष्यम् ।

प्रतीहारी—कहं दाणि णिवेदेमि । [ कथमिदानीं निवेदयामि । ]

यौगन्धरायणः—शृणु—

पूर्वं तावद् युद्धसम्बद्धदोषाः
प्रस्तोतव्या भावनाः संशयानाम् ।
सन्दिग्धेऽर्थे चिन्त्यमाने विनाशे
रूढे शोके कार्यतत्त्वं निवेद्यम् ॥ १२ ॥

प्रतीहारी—घत्तिस्सं । [ ग्रहीष्यामि । ] ( निष्क्रान्ता । )

यौगन्धरायणः—हंसक ! त्वमिदानीं स्वामिना किं न गतः ।

हंसकः—अय्य ! ववसिदो खु अहं अत्ताणं अणुग्गहिदुं सालङ्काअणेण णिउत्तो-गच्छ इमं वुत्तन्तं कोसम्बीए णिवेदेहि त्ति । [आर्य! व्यवसितः खल्वहमात्मानमनुग्रहीतुं सालङ्कायनेन नियुक्तः—गच्छेमं वृत्तान्तं कौशाम्ब्यां निवेदयेति ।]

---

पूर्वम् = सर्वप्रथमम् । संशयानाम् भावनाः = उत्पादकाः । युद्धसंबन्धदोषाः= युद्धसंभाविता अनर्थाः । प्रस्तोतव्याः = कथनीयाः सन्दिग्धे अर्थे विनाशे चिन्त्यमाने शोके रूढे सति = विनाशचिन्ताजन्ये दुःखे प्रतिष्ठिते सति । कार्यतत्वम्—कार्यस्य= प्रधानार्थस्य तत्वम्=स्वरूपम् भर्त्रा गृहीतः इति निवेद्यम् = कथनीयमित्यर्थः ॥१२॥

व्यवसितः = उद्यतः । आत्मानम् अनुग्रहीतुम् = स्वाम्यनुगमनेन कृतार्थयितुम् ।

---

यौग०—विजये ! अकस्मात् जाकर स्वामी की माता से यह न कहना कि वे पकड़े गये हैं । स्नेह से दुर्बल माता के हृदय की रक्षा करनी चाहिये ।

प्रतीहारी—इस समय किस प्रकार कहूँ ?

यौग०—सुनो ।

पहले तो संशय को उत्पन्न करनेवाले युद्धसम्बन्धी अनर्थों का वर्णन करना । जब वह मन में सन्देह करने लगे और विनाश की चिन्ता करने लगे, तो शोक बढ़ जाने पर मुख्य कार्य ( स्वामी का पकड़ा जाना ) निवेदन करना ॥ १२ ॥

प्रतीहारी—ऐसा ही करूंगी ।

यौग०—हंसक ! तुम इस समय स्वामी के साथ क्यों नहीं गये ?

हंसक—आर्य ! मैं स्वामी के साथ जाकर अपने को अनुगृहीत करने को तत्पर था परन्तु शालङ्कायन ने मुझे आज्ञा दी कि जाकर यह वृत्तान्त कौशाम्बी में कहो ।

यौगन्धरायणः—किन्तु खल्विदानीं निराशमनुसारं कर्तुकामः, उताहो स्निग्धपुरुषसन्निकर्षं परिहरति।

हंसकः—अहइं। [ अथकिम् ]

यौगन्धरायणः—स स्वकं विस्मयादात्मानमाविष्करोति, उत सर्वारम्भसिद्धौ रमणीयं भवति। अथ मामन्तरेण स्वामी न किञ्चिदाह।

हंसकः—अय्य! अत्थि, पदक्खिणीकरअन्तो भट्टारं अन्तज्जलावगाढाए दिट्ठीए बहुकं सन्दट्ठुकामेण विअ म्हि भट्टिणा उत्तो—गच्छ।

नियुक्तः = आदिष्टः। स्निग्धपुरुषसन्निकर्षम्—स्निग्धस्य भृत्यस्य स्वामिसमीपस्थितिं परिहरति, परिहराभावे हि तन्मुखेन कमपि यत्नं स्वामी मोचनाय प्रच्छन्नमारभेति।

विस्मयात् = दर्पात्। 'चित्रे दर्पे च विस्मयः' इति यादवः। स्वकम् = वक्रकतया कुत्सितम्। आत्मानम् = स्वीयम् बुद्धिम्। 'आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि। धृतावपि मनीषायाम्' इति मेदिनी। आविष्करोति = प्रकाशयति। उत = अथवा। सर्वारम्भसिद्धौ—सर्वारम्भस्य सर्वविधस्य स्वस्य आरम्भस्य उद्यमस्य सिद्धौ स्वामिग्रहणरूपफलप्राप्तौ सत्याम्। रमणीयम् भवति = ईदृशम् रतिस्थानम् क्रीडास्थानम् प्रवर्तते किम्? स ह्यवाप्तकामः ईदृशस्वामिवार्ताप्रेषणलीलया किं क्रीडति इत्याशयः। ममान्तरेण = मामुद्दिश्येत्यर्थः।

यौग०—उसने ऐसा क्यों किया—क्या स्वामी की रक्षा की ओर से निराश होकर अथवा प्रेमी सेवक को दूर करने की इच्छा से।

हंसक—और क्या।

यौग०—वह अभिमान से अपनी बुद्धि का परिचय दे रहा है अथवा कार्य सिद्ध होने पर ( स्वामी को बन्दी बना लेने पर ) आनन्द मना रहा है। मेरे विषय में स्वामी ने क्या कहा?

हंसक—आर्य! है। जब मैं स्वामी की प्रदक्षिणा ( परिक्रमा ) करके चलने लगा तो उनकी आँखों में आँसू भर आये। ( अतः उनका कण्ठ अवरुद्ध हो गया )

१. निरागम।

जोअन्ध-[ आर्य ! अस्ति, प्रदक्षिणीकुर्वन् भर्तारमन्तर्जलावगाढया दृष्ट्या बहुकं[1] सन्देष्टुकामेनेवास्मि भर्त्रोक्तः—गच्छ यौगन्ध- ] ( इत्यर्धोक्ते तिष्ठति । )

यौगन्धरायणः—स्वैरमभिधीयतां, स्वामिवाक्यमेवत् ।

हंसकः—जोअन्धराअणं पेक्खेहि त्ति । [ यौगन्धरायणं प्रेक्षस्वेति । ]

यौगन्धरायणः—मा तावत् । सर्वसचिवमण्डलमतिक्रम्यैको यौगन्धरायणो द्रष्टव्य इत्याह ।

हंसकः—अहइं । [ अथकिम् । ]

यौगन्धरायणः—तेन हि अनर्हप्रतिक्रियमनिर्विष्टभर्तृपिण्डमनुपकृतराजसत्कारं यदि खलु मां द्रष्टव्यं मन्यते स्वामी ।

---

अन्तर्जलावगाढया = अन्तर्वाप्पपूर्णया दृष्ट्या । बहुकम् = बहुमर्थम् ।

स्वैरम् = निर्भयं यथा स्यात् तथा । अभिधीयताम् = कथ्यताम् ।

सर्वसचिवमण्डलम्—सर्वेषाम् सचिवानां मण्डलम् इति तयोक्तम् , सर्वमन्त्रिवर्गमित्यर्थः । अतिक्रम्य = त्यक्त्वा ।

अनर्हप्रतिक्रियम् = योग्यप्रतिक्रियारहितम् । अनागतायामे विपदि योग्यां प्रतिक्रियाम् अकृतवन्तामित्यर्थः । अनिर्विष्टभर्तृपिण्डम्—अनिर्विष्टं = कुत्सितं यथा

---

और बहुत कुछ कहने की अभिलाषा रखते हुए भी उन्होंने ( किसी प्रकार ) इतना ही कहा कि—'जाओ यौगन्ध...' इस प्रकार आधी बात कहकर रुक गये ।

यौग०—निर्भय होकर कहो । यह तो तुम स्वामी का सन्देश कह रहे हो; अपने मन से तो कह नहीं रहे हो ।

हंसक—यौगन्धरायण से मिलो ।

यौग०—ऐसी बात मत कहो । क्या सब अमात्यों को छोड़कर उन्होंने मुझसे ही भेंट करने को कहा ।

हंसक—और क्या ।

यौग०—तो स्वामी मुझको जिसने (विपत्ति पड़ने पर) उचित कार्य नहीं किया तथा स्वामी के अन्न को खाकर और उनके सत्कार को प्राप्तकर उसका कुछ नहीं चुकाया, क्या ( इतने अवगुणों से युक्त होते हुए भी ) देखना उचित समझते हैं ।

---

१. बहुकं इत्यस्याग्रे स्वयं इति पाठान्तरम् ।

हंसकः—बाढं । [ बाढम् । ]

यौगन्धरायणः—पुरुषान्तरितं मां द्रक्ष्यति स्वामी,

रिपुनृपनगरे वा बन्धने वा वने वा
समुपगतविनाशः प्रेत्य वा तुल्यनिष्ठम् ।
जितमिति कृतबुद्धिं वञ्चयित्वा नृपं तं
पुनरधिगतराज्यः पार्श्वतः श्लाघनीयम् ॥ १४ ॥

( नेपथ्ये )

हा हा भट्टा ! [ हा हा भर्तः ! ]

---

भवति तथा उपभुक्तः भर्तृपिण्डः = स्वाम्यन्नं येन स तथाभूतम् । अनुपकृतराजसत्कारम्—अनुपकृतः कुत्सितम् यथा भवति तथा उपयुक्तः राजसत्कारः = स्वामिकर्तृका अर्चना येन तम् ।

पुरुषान्तरितम् = परिगृहीतान्यपुरुषवेषमित्यर्थः ।

रिपुनृपनगरे = स्वावरोधस्थानभूते शत्रुभूपपुरे । बन्धने वा = कारागारे । वने वा = अरण्ये वा । समुपगतविनाशः—समुपगतः विनाशो यस्य सः समुपगतविनाशः । तुल्यनिष्ठम् = समानावस्थम् । प्रेत्य = यमपुरे इत्यर्थः । ( द्रक्ष्यति ) जीतमिति कृतबुद्धिं = वत्सराजछलेन मम जयः सिद्धः इति मन्यमानम् तं नृपं = राजानम् प्रद्योतम् वञ्चयित्वा = उपायैश्छलयित्वा । अधिगतराज्यः = प्राप्तराज्यस्तु स्वामी । श्लाघनीयम् = श्लाघितुं योग्यम् । मां पार्श्वतः=स्वपार्श्वे द्रक्ष्यति ॥१४॥

---

हंसक—हाँ ।

यौग०—अन्य वेष में रहूँगा तो भी स्वामी मुझको देखेंगे ।

स्वामी मुझको शत्रुओं के राजा की नगरी में, कारागार में तथा वन में अपने समीप ही पायेंगे । ( मरने पर भी स्वामी मुझको ) मरा हुआ स्वर्गलोक में प्राप्त करेंगे । उस राजा ( प्रद्योत ) को जो ( वत्सराज को ) छलकर अपनी विजय समझ रहा है, कपट द्वारा अपने राज्य को प्राप्तकर स्वामी मुझको अपने समीप पावेंगे ( अर्थात् वैभवकाल में भी मुझको स्वामी अपने पास ही पावेंगे ॥ १४ ॥

( नेपथ्य में )

हा, हा, हा, स्वामी !

यौगन्धरायणः—

एष शोकप्रतीकारो यथाशक्ति निवेद्यते।
एतत् स्त्रीभिरसामर्थ्यं मन्त्रिणामनुवर्ण्यते॥ १५॥

( प्रविश्य )

प्रतीहारी—अय्य ! भट्टिमादा । [ आर्य ! भर्तृमाता । ]

यौगन्धरायणः—किं किम् ।

प्रतीहारी—आह—

यौगन्धरायणः—किमिति ।

प्रतीहारी—एवंविहस्स सुहिज्जणेण परिगहीदस्स वच्छराअस्स अअं वुत्तन्तो ! किं सक्कं कत्तुं अन्तरेण विहाणं । ता सम्माणिअ सुहिज्जणं समत्थिअदु । जो खु दाणि सङ्कटेसु वा ण विसीददि, विसमगदो वा ण पय्यवच्चिट्ठदि, वाञ्छिदो वा ण णिव्वेदं गच्छदि, पडिघादेसु वा पाणा

एषः शोकप्रतीकारः = शोकप्रतिक्रिया । यथाशक्ति निवेद्यते = प्रकाश्यते । स्त्रीभिः एतत् ( परिदेवितम् ) मन्त्रिणाम् = सचिवानाम् । असामर्थ्यम् = निर्बलत्वम् । अनुवर्ण्यते = अनुवर्ण्यते । 'हा हा' एवंविधरोदनमेव शोकप्रतीकारः अस्ति अबलाजनानाम् । नान्यः पन्थेति भावः । इयमेव हि शोकस्य प्रतिक्रिया स्त्रीभिः कर्तुं शक्या यद् बन्धुजनं विपन्नं संस्मरन्त्य उच्चैः विलपन्ति ॥ १५ ॥

शोक को दूर करने का यही एक उपाय है ( जो इस समय ) यथाशक्ति किया जा रहा है। अबलाजनों का यह विलाप मन्त्रियों की निर्बलता प्रकट करता है॥ १५॥

( प्रवेशकर )

प्रतीहारी—आर्य ! स्वामी की माता ।

यौग०—क्या क्या ?

प्रतीहारी—कहा है ।

यौग०—क्या ?

प्रतीहारी—इस प्रकार के मित्रों से युक्त वत्सराज का यह वृत्तान्त है । शत्रु से बिना बदला लिये हुए क्या किया जा सकता है इसलिये मित्रों को लेकर ( उनके साथ ) कर्तव्य निश्चित किया जाय । हे पुत्र ! तुम जो आपत्ति में दुःखी

ण समुज्झदि, सो खु बुद्धिमन्तो पुच्छिज्जइ पढमं एव्व मे वच्छस्स वअस्सो पच्छा अमच्चो आणेदु मे पुत्तअं पुत्तओ त्ति । [ एवंविधस्य सुहृज्जनेन परिगृहीतस्य वत्सराजस्यायं वृत्तान्तः । किं शक्यं कर्तुमन्तरेण विधानम् । तत् सम्मान्य सुहृज्जनं समर्थ्यताम् । यः खल्विदानीं सङ्कटेषु वा न विषीदति, विषमगतो वा न पर्यवतिष्ठते, वञ्चितो वा न निर्वेदं गच्छति, प्रतिघातेषु वा प्राणान् न समुज्झति, स खलु बुद्धिमान् पृच्छयते प्रथममेव मे वत्सस्य वयस्यः पश्चादमात्य आनयतु मे पुत्रकं पुत्रक इति । ]

यौगन्धरायणः—अहो तु खल्वत्रभवत्या राजवंशाश्रितं धीरवाक्यमभिहितम् । अत्रभवत्या सम्भावनां पूजयामि । विजये ! आपस्तावत् ।

---

परिगृहीतस्य = युक्तस्य । विधानम् अन्तरेण = वैरनिर्यातनं विना इत्यर्थः । सम्मान्य = पूजयित्वा । समर्थ्यताम् = कर्तव्यं सम्प्रधार्यताम् । विषीदति = क्लेशमनुभवति । विषमगतो न पर्यवतिष्ठते = दुःखस्थानगतो वा न स्वस्थः तिष्ठति किन्तु विपद्योत्तरणायैव यतते इत्यर्थः । वञ्चितः = छलितः । निर्वेदम् = अनुत्साहम् । प्रतिघातेषु वा प्राणान् न समुज्झति = विघातेषु वा जायमानेषु प्रयत्नशक्तिर्न त्यजति । स खलु बुद्धिमान् अर्थात् भवान् पृच्छयते । मे = मम । वत्सस्य वयस्यः = सखा, पश्चात् अमात्यः = मन्त्री । 'पुत्रक' इति पदम् यौगन्धरायणाय प्रयुक्तम् । पुत्रकम् = वत्सराजम् ।

अत्रभवत्या = राजमात्रा । राजवंशाश्रितम् = राजकुलपरिशीलितम् । धीरवाक्यम् = सत्वयुक्तम् वाक्यम् । अभिहितम् = उक्तम् । सम्भावनाम्=मयि स्वाम्यानयनसामर्थ्याभिमानम् इत्यर्थः ।

---

नहीं होते, दुःखावस्था में पड़े रहने पर भी स्वस्थ होकर नहीं बैठते ( अर्थात् वत्सराज के मङ्गल की कामना करते ही रहते हो ) छले जाने पर खिन्न नहीं होते, बाधाओं में भी धैर्य नहीं छोड़ते, वह बुद्धिमान् यदि मुझसे पूछता है तो सर्वप्रथम मेरे पुत्र का मित्र तदुपरान्त मन्त्री है, मैं यही चाहती हूं कि मेरे पुत्र को ला दो ।

यौग०—राजमाता ने राजवंश के अनुकूल धैर्यपूर्ण बात कही है । मैं श्रीमती की इस अभिलाषा को पूर्ण करूंगा । विजये ! जल तो लाओ ।

प्रतीहारी—अय्य ! तह । ( निष्क्रम्य प्रविश्य ) इमा आवो । [ आर्य ! तथा । इमा आपः । ]

यौगन्धरायणः—आनय । ( आचम्य ) विजये ! किमाह तत्रभवती ।

प्रतीहारी—आणेदु मे पुत्तअं पुत्तओ त्ति । [ आनयतु मे पुत्रकं पुत्रक इति ]

यौगन्धरायणः—हंसक ! किमाह स्वामी ।

हंसकः—जोअन्धरायणं पेक्खेहि त्ति । [ यौगन्धरायणं प्रेक्षस्वेति । ]

यौगन्धरायणः—विजये !

यदि शत्रुबलग्रस्तो राहुणा चन्द्रमा इव ।
मोचयामि न राजानं नास्मि यौगन्धरायणः ॥ १६ ॥

प्रतीहारी—अय्य ! तह । ( निष्क्रान्ता । ) [ आर्य ! तथा । ]

( प्रविश्य )

---

राहुणा चन्द्रमा इव यदि ( स्वामी ) शत्रुबलग्रस्तः—शत्रूणां बलेन ग्रस्तः इति शत्रुबलग्रस्तः । ( तर्हि ) यदि राजानं न मोचयामि यौगन्धरायणः नास्मि । यथा राहुग्रस्तश्चन्द्रो न चिरं ग्रासमनुभवति किन्तु राहुसकाशान्मोचनं क्षिप्रं प्राप्नोति तथा शत्रुगृहीतः स्वामी न चिरं निरोधदुःखमनुभविष्यति किन्तु शत्रुसकाशान्मोचनं क्षिप्रम् प्राप्स्यतीत्यर्थः राहुग्रस्तचन्द्रोपमया द्योत्यते ॥ १६ ॥

---

प्रतीहारी—आर्य ! अच्छा । ( निकलकर, प्रवेशकर ) यह जल है ।

यौग०—लाओ । ( आचमन कर ) विजये ! राजमाता ने क्या कहा ?

प्रतीहारी—हे पुत्र ! मेरे पुत्र को लाओ ।

यौग०—हंसक ! स्वामी ने क्या कहा ?

हंसक—यौगन्धरायण से मुलाकात करो ।

यौग०—विजये !

राहु से ग्रसित चन्द्रमा के समान शत्रुओं से पकड़े गये स्वामी को यदि मुक्ति न दूँ तो मैं यौगन्धरायण नहीं ॥ १६ ॥

प्रतीहारी—आर्य ! अच्छा । ( निकल जाती है )

( प्रवेश कर )

निर्मुण्डकः—अय्य ! अच्छरिअं णिव्वुत्तं । भट्टिणो सन्तिणिमित्तं उवट्टिअभोअणं वम्हणजणं पेक्खिअ केण वि किल उन्मत्तवेसधारिणा वह्मणेण उच्चं हसिअ उत्तं—सेरं सेरं अण्हन्तु भवन्तो, अब्भुदअं खु इमस्स राअउलस्स भविस्सदि त्ति । तदो वअणसमआलं एव्व अदंसणं गदो । [ आर्य ! आश्चर्यं निर्वृत्तम् । भर्तुः शान्तिनिमित्तमुपस्थितभोजनं ब्राह्मणजनं प्रेक्ष्य केनापि किलोन्मत्तवेषधारिणा ब्राह्मणेनोच्चं हसित्वोक्तं—स्वैरं स्वैरमश्नन्तु भवन्तः, अभ्युदयः खल्वस्य राजकुलस्य भविष्यतीति ततो वचनसमकालमेवादर्शनं गतः । ]

यौगन्धरायणः—अपि सत्यम् ।

( ततः प्रविशति ब्राह्मणः )

ब्राह्मणः—इमेऽत्रभवता परिगृहीता आत्मप्रयोजनोत्सृष्टाः परिच्छद-

---

निर्वृत्तम् = निष्पन्नम् । शन्तिनिमित्तम् = शान्तिरूपं निमित्तम् दुर्दैवशमनरूपाय फलायेत्यर्थः । उपस्थितभोजनम्—उपस्थितं भोजनं यस्य तं तथोक्तम् = सन्निहितभोज्यम् । ब्राह्मणजनम् = ब्राह्मणसमूहम् । प्रेक्ष्य = दृष्ट्वा । उन्मत्तवेषधारिणा—उन्मत्तस्य वेषं धरतीति उन्मत्तवेषधारी, तेन तथोक्तेन । स्वैरम् = यथेष्टम् । अश्नन्तु=अदन्तु । खलु=निश्चयेन । अस्य राजकुलस्य = अस्य राजकुलस्य अभ्युदयः = वृद्धिः ऐश्वर्यो वा । वचनसमकालमेव = कथनकालम् अदर्शनं गतः = अदृश्यो बभूव ।

इमे = मत्करस्थिताः । अत्रभवता = उन्मत्तवेषधारिणा ब्राह्मणेन । परि-

---

निर्मुण्डक—आर्य ! आश्चर्य हो गया । स्वामी की शान्ति के निमित्त भोजन के लिये आये हुए ब्राह्मणसमूह को देखकर किसी ब्राह्मण ने जो उन्मत्तों का सा वेष किये हुये था, जोर से हँसकर कहा 'आप लोग पेट भर खायँ । इस राजकुल का ऐश्वर्य बढ़ेगा ( अभ्युदय होगा ) ।' और यह कहते हुए वह अन्तर्हित हो गया ।

यौग०—क्या यह सत्य है ?

( ब्राह्मण का प्रवेश )

ब्राह्मण—अपना कार्य पूर्ण हो जाने पर त्यागे हुए इन वस्त्रों को इन्होंने

---

१. उवहसिअ ।

विशेषाः । एभिः प्रच्छादितशरीरो भगवान् द्वैपायनः प्राप्तः ।

यौगन्धरायणः—एवं, द्वैपायनः प्राप्तः ।

ब्राह्मणः—बाढम् ।

यौगन्धरायणः—तेन हि पश्यामस्तावत् ।

ब्राह्मणः—पश्यतु भवान् ।

यौगन्धरायणः—कथमन्यद् रूपमिव मे संवृत्तम् । हन्त भोः ! गतोऽस्मि स्वामिसन्निकर्षमेव । इदानीं ममोपदेशार्थमिवोत्सृष्टाः ।

उन्मत्तसदृशो वेषो धारितस्तेन साधुना ।
मोचयिष्यति राजानं मां च प्रच्छादयिष्यति ॥ १७ ॥

---

गृहीताः = उपयुक्ताः । आत्मप्रयोजनोत्सृष्टाः = आत्मप्रयोजनेन निर्वृत्तेन परित्यक्ताः । परिच्छदविशेषाः = उपकरणविशेषाः । प्रच्छादितशरीरः—प्रच्छादितम् शरीरं यस्य सः प्रच्छादितशरीरः ।

द्वैपायनः = व्यासः ।

संवृत्तम् = सञ्जातम् । स्वामिसन्निकर्षम्=वत्सराजस्य अन्तिकम् । गतोऽस्मि = प्राप्तोऽस्मि । इदानीम्=अस्मिन्नवसरे ममोपदेशार्थमिव 'इमान् परिच्छदान् धारयन् शत्रुनगरसमीपमकुतोभयं सञ्चर इति' उपदेशाय उत्सृष्टाः = त्यक्ताः ।

तेन साधुना = सज्जनेन द्वैपायनेन उन्मत्तसदृशो=उन्मत्तानुरूपः वेषः धारितः=

---

( उन्मत्तवेषधारी ब्राह्मण ने ) धारण कर लिया । इनसे अपना शरीर आच्छादित कर भगवान् द्वैपायन ( व्यास ) पधारे हैं ।

यौग०—द्वैपायन इस प्रकार से आये हैं ?

ब्राह्मण—हाँ ।

यौग०—तो अब देखते हैं ।

ब्राह्मण—आप देखें ।

यौग०—मेरा रूप क्यों दूसरा हो गया । मैं तो स्वामी के समीप पहुँच सा गया हूँ । इस समय मुझे उपदेश देने के लिये अर्थात् 'इन सामग्रियों को धारण कर शत्रु के नगर में निर्भय होकर विचरण करो' यह शिक्षा देने के लिये ये (परिच्छद) छोड़ गये हैं ।

उस साधु ने उन्मत्तों (पागलों) का सा रूप धारण किया । और वह राजा को ( बन्धन से ) मुक्त करेगा तथा मुझे छिपावेगा ॥ १७ ॥

( प्रविश्य )

प्रतीहारी—अय्य ! भट्टिमादा आह—इच्छामि पुत्तअं पेक्खिदुं त्ति । [ आर्य ! भर्तृमाताह—इच्छामि मे पुत्रकं प्रेक्षितुमिति । ]

यौगन्धरायणः—अयमयमागच्छामि । आर्य ! शान्तिगृहे मां प्रतीक्षस्व ।

ब्राह्मणः—बाढम् । ( निष्क्रान्तः । )

यौगन्धरायणः—हंसक ! विश्रम्यतामिदानीम् ।

हंसकः—अय्य ! तह । [ आर्य ! तथा । ] ( निष्क्रान्तः )

यौगन्धरायणः—विजये ! गच्छाग्रतः ।

प्रतीहारी—अय्य ! तह । [ आर्य ! तथा । ]

यौगन्धरायणः—भोः !

---

कृतः, स राजानं मोचयिष्यति = बन्धनादुन्मुक्तं करिष्यति मां च प्रच्छादयिष्यति । च शब्दो हेतौ यास्यात्मां छन्नस्वरूपं करिष्यति ॥ १७ ॥

---

( प्रवेश कर )

प्रतीहारी—आर्य ! स्वामी की माता ने कहा है कि पुत्र ( यौगन्धरायण ) को देखना चाहती हूँ ।

यौग०—मैं अभी आता हूँ । आर्य शान्तिगृह में मेरी प्रतीक्षा कीजिये ।

ब्राह्मण—अच्छा ! ( निकल जाता है )

यौग०—हंसक ! तुम अभी आराम करो ।

हंसक—आर्य ! जो आज्ञा । ( जाता है )

यौग०—विजये ! आगे चलो ।

प्रतीहारी—आर्य ! अच्छा ।

यौग०—अरे !

काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥ १८ ॥

( निष्क्रान्तः )

इति प्रथमोऽङ्कः ।



मथ्यमानात् = संघर्षमाणात् काष्ठात् अत्र 'भुवः प्रभवः' इत्यनेन पञ्चमी । अग्निः = पावकः । जायते = प्रादुर्भवति । खन्यमाना = अवदार्यमाणा । भूमिः = पृथिवी । तोयं = जलं ददाति । सोत्साहानाम् = उत्साहसम्पन्नानाम् नराणाम् किञ्चिदपि असाध्यं कर्तुमशक्यं नास्ति । मार्गारब्धाः—मार्गेण = समुचितेन पथा आरब्धाः = कृताः । सर्वयत्नाः = उपायाः । फलन्ति = सफलीभवन्ति ॥ १८ ॥

अतिशय रगड़ करने पर काठ से भी आग पैदा हो जाती है । खोदने पर पृथ्वी से भी जल मिलता है । उत्साहसम्पन्न मनुष्यों के लिये कुछ भी असाध्य नहीं है । समुचित रीति से किये हुए प्रयत्न सफल होते हैं ॥ १८ ॥

( सब निकल जाते हैं )

॥ प्रथम अङ्क समाप्त ॥



# अथ द्वितीयोऽङ्कः

( ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः—आभीरक ! आभीरक ! गच्छ महासेनवचनात् प्रतीहाररक्षकं ब्रूहि—एष काशिराज्योपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तः। अस्य सामान्यदूतसत्कारं पृष्ठतः कृत्वा सुखमिव निवेश्यताम्। यथा चातिथिसत्कारं जानीयात् तथा प्रयतितव्यम् इति। भोः ! एवं नामाहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा

---

अङ्कान्तरस्य प्रारम्भं सूचयति–अथ इत्यादिना। अथ=अनन्तरम्, द्वितीयः=प्रथमानन्तरं क्रमोपस्थितः अङ्कः, प्रारभ्यत इति शेषः।

ततः = द्वितीयाङ्कप्रारम्भे, काञ्चुकीयः प्रविशति रङ्गमञ्चं समागच्छतीत्यर्थः।

महासेनवचनात्—महासेनस्य वचनात् इति महासेनवचनात् ( षष्ठीतत्पुरुषसमासः ) महासेनशासनात् इत्यर्थः। प्रतीहाररक्षकम्-प्रतीहारस्य=द्वारस्य रक्षकम् इति प्रतीहाररक्षकम् द्वारपालमिति यावत्। काशिराजोपाध्यायः—काशिराजस्य उपाध्यायः = पुरोहितः। दौत्येन-दूतस्य भावः दौत्यम् तेन दौत्येन ( ब्राह्मणादित्वात् ष्यञ् ) दौत्येन प्राप्तः। अस्य = उपाध्यायस्य। सामान्यदूतसत्कारं पृष्ठतः कृत्वा = सर्वसाधारणदूतसत्कारं दूरीकृत्य विशेषदूतं इव सत्कारं आतिथ्यं विधाय सुखमिव = सुखं यथा स्यात् तथा इति क्रियाविशेषणम् निवेश्यताम्। यथा च = येन विधिना अतिथिसत्कारं जानीयात् = अनुभवेत् तथा प्रयतितव्यम् = सैव सरणी अनुसर्तव्या इति भावः। अहनि अहनि ( अहन्शब्दस्य सप्तम्येकवचने रूपं भवति )। गोत्रानुकूलेभ्यः राजकुलेभ्यः = भिन्न-भिन्नगोत्रोत्पन्नेभ्यः राजवंशेभ्यः, कन्याप्रदानम्—कन्यायाः प्रदानम् इति कन्याप्रदानम् कन्यापरिणेतुम् इत्यर्थः।

---

( तब कञ्चुकी आता है )

कञ्चुकी—आभीरक, आभीरक ! जाओ, महासेन की ओर से द्वारपाल से कहो कि आज काशीनरेश के पुरोहित आर्य जैवन्ति दूत होकर आये हैं। सामान्य दूतों से अधिक इनका सत्कार करके इनको सुखपूर्वक ठहराओ। जिस विधि से यह

---

१. अन्यसामान्यदूत०।

वर्तते। न खलु महासेनः कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते। किन्तु खल्विदम्। अथवा दैवमत्र कन्याप्रदानेऽधिकृतम्। कुतः,

व्यक्तं न तावत् समुपैति तस्य दूतो वधूत्वे विहिता हि यस्य।
ततो नरेन्द्रेषु गुणान् नरेन्द्रो न वेत्ति जानन्नपि तत्प्रतीक्षः॥ १॥

अये संलीयमानान्तःपुरचरः सनाथीभवत्ययं देशः। अये अयं महासेनः, य एषः,

---

दूतसम्प्रेषणा–दूतानां सम्प्रेषणा इति दूतसम्प्रेषणा कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते। कन्यापाणिग्रहणाय दूताः इतस्ततः समागच्छन्ति प्रतिदिनम् इति भावः। न प्रत्याचष्टे = न निराकरोति। न अनुगृह्णीते = न चापि अंगीकरोति। इदं किन्तु खलु = अर्थात् इदं महदनुचितमस्ति। अत्र=अस्मिन् कन्याप्रदाने = कन्यापाणिग्रहणविषये दैवमधिकृतम् = दैवाधीनम् इति भावः।

व्यक्तमिति। यस्य हि वधूत्वे = सा वासवदत्ता विहिता यस्य एव वरस्य वधूभावविधिना सङ्कल्पिता तस्य दूतः न तावत् समुपैति = नैवायाति स समागतदूतमध्ये नास्तीत्यर्थः। व्यक्तम् नूनम्—इदं सुस्पष्टम् वर्तते यत् भगवता यस्मै संकल्पितं स नैव समागतः इति भावः॥ १॥

अये इति। संलीयमानान्तःपुरचरः—संलीयमानाः अन्तःपुरचराः यस्मिन् स

---

अतिथि-सत्कार को समझ ले (कि मेरा पूर्ण सत्कार हुआ है) वही तुम्हें करना चाहिए। इस प्रकार प्रतिदिन भिन्न-भिन्न राजकुलों से कन्या की शादी के लिये दूत आ जा रहे हैं। न तो महासेन किसी को इन्कार करते हैं और न किसी को अंगीकार ही करते हैं। यह क्या बात है? अथवा इस कन्या के विवाह में दैव ही सब कुछ है।

वह (वासवदत्ता) जिसकी स्त्री होने वाली है, उसका दूत अभी तक नहीं आया है। यह बात निश्चित है। इसलिये राजा (प्रद्योत) उसके दूत की प्रतीक्षा कर रहा है और राजाओं के गुणों को जानता हुआ भी उनके गुणों को नहीं समझता॥ १॥

इस देश में जहाँ पर अन्तःपुर के चर छिपकर रह रहे हैं, स्वामी भी होंगे। अरे यह तो महासेन हैं जो (भाव यह कि जहाँ नौकर-चाकर छिपे हैं वहाँ स्वामी का होना असम्भव नहीं।)

दुर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः
पीताङ्गदैः परिगतैः परिणीवितांसः।
अस्माद् घनात् कनकतालवनैकदेशा-
न्निर्धावितः शरवणादिव कार्त्तिकेयः॥ २॥

तथोक्तः अन्तःपुरचराणां स्वच्छन्दाचारपरिहारेण क्वचित् आत्मानं गोपयित्वा अवस्थानात् नायसान्निध्यमस्मिन् देशे इति अनुमानं भवति।

दूर्वाङ्कुरेति। दूर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः—दुर्वाङ्कुरा इव स्तिमिताः = स्निग्धाः, चिकण्णाः, नीलमणिप्ररोहाः=नीलरत्नाङ्कुराः येषु तैः। परिगतैः = परितो निविष्टैः। पीताङ्गदैः = पीतवर्णैः केयूरैः अर्थात् स्वर्णनिर्मितभुजदण्डैः अलंकार-विशेषैः। परिणीवितांसः—परिणीवितौ = स्थूलितौ परिबृंहणं प्राप्तौ इत्यर्थः, अंसौ स्कन्धौ यस्य सः तथोक्तः। य एषः (महासेनः) घनात् = सान्द्रात् अस्मात् कनकतालवनैकदेशात्–कनकः = चम्पकः, तालः = तृणराजः (लोके 'ताड' इति प्रसिद्धिः)। तदुभयाधिक्यस्य वनस्य एकदेशात् प्रदेशात् निर्गत्य तथा धावति यथा शरवणात् स्वामिकार्तिकेयः निर्धावितः=निर्गतवान्। अर्थात् भगवतः स्कन्दस्य शरवणात् उत्पत्तिः संयाता अतएव अत्र 'शरवणात्' इति शब्दः कविना प्रयुक्तः। तथैव महाकविकालिदासेनापि मेघदूते 'आराध्यैनं शरवणभवं देवमुल्लंघिताध्वा' इत्युक्तम्॥ २॥

दूब के अङ्कुर के समान चिकने नीलमणि जिनमें जड़े हैं ऐसे सुवर्ण के केयूरों (भुजबन्द) से इसके कन्धे मोटे पड़ गए हैं। जिस प्रकार कार्त्तिकेय शरवण (सरपत के वन) से निकले थे उसी प्रकार यह इस घने तथा चम्पक और ताल के वृक्षों में भरे हुए वनप्रदेश से निकलकर दौड़ रहा है॥ २॥

टिप्पणी—स्वामि कार्त्तिकेय की उत्पत्ति के विषय में निम्नलिखित पौराणिक कथायें उपलब्ध होती हैं—

ये शिव के पुत्र, देवताओं के सेनापति और युद्ध के देवता माने जाते हैं। ब्रह्मवैवर्त्त पुराण में लिखा है कि शिवजी एक बार पार्वती के साथ क्रीड़ा कर रहे थे। उस समय उनका वीर्य्य पृथ्वी पर गिर पड़ा। पर पृथ्वी उसे सहन न

१. परिणीहितांसः। २. निर्धारितः।

( निष्क्रान्तः । )

विष्कम्भकः ।

( ततः प्रविशति राजा सपरिवारः । )

निष्क्रान्त इति । एतेन ततः स्थानात् काञ्चुकीयस्य अपगमनं दर्शितम् । विष्कम्भक इति ।

कर सकी और उसने अग्नि को दे दिया जिससे इनकी उत्पत्ति हुई । एक और पुराण में लिखा है कि शिव और पार्वती के विहार के समय अग्नि-देवता ब्राह्मण का वेष धारण करके भिक्षा माँगने आए थे । शिव जी ने क्रोध में आकर अपना वीर्य उन्हें दे दिया । अग्नि-देवता वह वीर्य पी गए, पर सहन न कर सके; अतः उन्होंने उसे गंगाजी में वमन कर दिया । गंगा में वह वीर्य छः भागों में पड़ा था; पर पीछे से छः भाग मिलकर एक शरीर हो गया जिसमें छः मुख हुए । वहाँ से उन्हें छः कृत्तिकाएँ उठा लाईं और ये छः मुँहों से उन छः कृत्तिकाओं के स्तन-पान करने लगे । इसीलिये ये षडानन और कार्त्तिकेय कहलाये । इसी प्रकार और भी कथाएँ हैं जिन में शरवण ( सरपत ) से उत्पत्ति बताई गई है जिससे ये शरवणभव या शरजन्मा भी कहलाए । ये बहुत सुन्दर कहे गए हैं । और इनका वाहन मोर माना जाता है । इनके अस्त्र का नाम शक्ति है और इनकी कांति तपाए हुए सोने के समान कही गई है । इन्होंने तारक और क्रौंच आदि अनेक राक्षसों का वध किया था ।

विष्कम्भक—साहित्यदर्पण के अनुसार विष्कम्भक दृश्यकाव्य का एक सूच्य अंश है जो अंक के आरंभ में होता है । जो कथा पहले हो चुकी हो अथवा अभी होने वाली हो, उसकी इसमें मध्यम पात्रों द्वारा सूचना दी जाती है । यह दो प्रकार का होता है—शुद्ध और संकीर्ण । जब एक या अनेक मध्यम पात्र इसका प्रयोग करते हैं, तब यह शुद्ध कहलाता है । और जब मध्यम तथा नीच पात्रों द्वारा इसका प्रयोग होता है, तब इसे संकीर्ण कहते हैं । शुद्ध विष्कंभक में मध्यम पात्रों का वार्तालाप संस्कृत भाषा में और संकीर्ण विष्कम्भक में मध्यम तथा नीच पात्रों का वार्तालाप प्राकृत भाषा में होता है । शुद्ध का उदाहरण मालती-माधव में पाँचवे अंक में कुंडलाकृत प्रयोग और संकीर्ण का रामाभिनंद में क्षपणक और कापालिक कृत प्रयोग है ।

( अपने परिवार के साथ राजा आता है । )

राजा—

मम हयखुरभिन्नं मार्गरेणुं नरेन्द्रा
मुकुटतटविलग्नं भृत्यभूता वहन्ति ।
न च मम परितोषो यन्न मां वत्सराजः
प्रणमति गुणशाली कुञ्जरज्ञानदृप्तः ॥ ३ ॥

बादरायण !

( प्रविश्य )

काञ्चुकीयः—जयतु महासेनः ।
राजा—निवेशितो जैत्रन्तिः ।
काञ्चुकीयः—निवेशितोऽनुरूपतश्च सत्कृतः ।

---

मम हयखुरभिन्नम्—हयस्य = अश्वस्य खुरैः = शफैः भिन्नम् = विदारितम् उत्थापितं वा, मुकुटतटविलग्नम्—मुकुटतटे = किरीटदेशे विलग्नम् = संलग्नम्, मार्गरेणुम् = मार्गधूलिम्, नरेन्द्राः = अन्ये राजानः भृत्यभूताः = सेवकजना इव वहन्ति = धारयन्ति किन्तु एतावतापि राज्योचितसम्मानेन, गौरवेण वा मम परितोषो = तृप्तिः, मानसिकशान्तिर्वा नास्ति । यत् = यतः गुणशाली—गुणेन शाल्यते = शोभते इति तथोक्तः चतुरः । कुञ्जरज्ञानदृप्तः—कुञ्जरज्ञानेन = गजवशीकरणविद्यया दृप्तः = गर्वितः । वत्सराजः = वत्सराजनृपतिः मां न प्रणमति=ममाधिकारं न स्वीकरोति, न वा वशीभवति इत्यर्थः ।

---

मेरे अश्वों के खुरपुट से उठी हुई मार्ग की धूल जिन (राजाओं के) मुकुटों में लग जाती है, राजा लोग अनुचर की भांति धारण करते हैं। परन्तु मुझे इतने पर भी शांति नहीं है क्योंकि हाथियों की वशीकरण विद्या को जानने के गर्व से मदमत्त चतुर वत्सराज मुझसे दबता नहीं। ( अर्थात् उसने मेरी अधीनता को स्वीकार नहीं किया। ) ॥ ३ ॥

( प्रवेश कर )

कञ्चुकी—महासेन की जय हो।
राजा—जैवन्ति को बैठाया गया ?
कञ्चुकी—बैठाया और यथोचित आदर भी किया।

राजा—न्याय्यं कृतं राजवंश्यगुणाभिलाषिणा। समागतानां युक्तः पूजया प्रतिग्रहः। अथ सर्वोऽपि कन्याप्रदानं प्रति पृष्टश्चेत् परच्छन्देन तिष्ठति। ( काञ्चुकीयमवलोक्य ) बादरायण ! वक्तुकाममिव त्वां लक्षये।

काञ्चुकीयः—न खलु किञ्चित्। कन्याप्रदानं प्रति समुत्पन्नोऽभिमर्शः।

राजा—अलमलं परिहृत्य। सर्वसाधारणो ह्येष विधिः। अभिधीयताम्।

---

राजवंश्यगुणाभिलाषिणा—राजवंशभवस्य ( जैवन्तिप्रेषयितुः काशिनरेशस्य ) गुणाभिलाषिणा राजकीयगुणपक्षपातिना भवता न्याय्यं कृतं = उचितं सम्पादितं। समागतानाम् = अभ्यागतानां पूजया = अतिथिसेवया प्रतिग्रहः = स्वागतः युक्तः = उचितः। सर्वोऽपि = सचिवादिः, कन्याप्रदानं प्रति = स्वकीयकन्यायाः वासवदत्तायाः पाणिग्रहणं प्रति पृष्टश्चेत् परच्छन्देन = परार्थमिव अन्याभिप्रायप्रतीक्षया वा ( मदभिप्रायप्रतीक्षया ) तिष्ठति। स्वकीयाभिप्रायं लेशमात्रमपि न प्रकटयन्ति अपितु मन्मनोरथमेव वाञ्छन्ति इति भावः।

काञ्चुकीयेति—न खलु किञ्चित् = नहि खलु बहु वक्तव्यमस्ति, केवलं हि कन्याप्रदानं प्रति = स्वकीयकन्यायाः पाणिग्रहणसंस्कारविषये अभिमर्शः = विचारः समुत्पन्नः = मनसि समुपस्थितोऽस्ति इति भावः।

राजेति—परिहृत्य अलम् अलम् = यत् वक्तव्यमस्ति तत् मा परिहर मा गोपय। हि—यतः एष विधिः अयं लौकिको व्यवहारः सर्वसाधारणः = अतिसामान्यः, अर्थात् जगतितले निवासिनः सर्वे जनाः इत्थं सम्पादयन्ति। अतः त्वमपि स्वकीयं विचारं स्थापयितुं समर्थोऽसि इति भावः।

---

राजा—राजवंश के गुणों का सम्मान करनेवाले आपने अच्छा किया। अभ्यागत का सम्मानपूर्वक सत्कार करना ही उचित है। कन्या ( वासवदत्ता ) के स्वयंवर के विषय में जिस किसी से पूछता हूँ वह अपना विचार प्रकट नहीं करता ( मेरे मनोरथ को जानना चाहता है )। ( कंचुकी की ओर देखकर ) बादरायण, मैं देखता हूँ कि तुम कुछ कहना चाहते हो।

कंचुकी—कुछ नहीं। कन्या के विवाह के विषय में कुछ विचार उत्पन्न हुआ है।

राजा—छिपाओ मत। यह कार्य तो सर्वसाधारण का है। कहो।

---

१. समासन्नप्रीतिकारणागतानाम्। २. वक्तुकाम इव।

काञ्चुकीयः—महासेन ! एषा मे विवक्षा—एवं नामाहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते । न च महासेनः कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते । किन्तु खल्विदमिति ।

राजा—बादरायण ! एवमेतत् । अतिलोभाद् वरगुणानामतिस्नेहाच्च वासवदत्तायां न शक्नोमि निश्चयं गन्तुम् ।

**कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा**
**ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान् ।**
**ततो रूपे कान्तिं न खलु गुणतः स्त्रीजनभयात्**
**ततो वीर्योदग्रं न हि न परिपाल्या युवतयः ॥ ४ ॥**

---

काञ्चुकीयेति—एषा मे विवक्षा = अहं तु इदं वक्तुमिच्छामि ।

प्रथमम् = आदौ मनसा = चित्तेन श्लाघ्यम् प्रशंसनीयम् कुलम् = वंशम् अभिकाङ्क्षे = कामये । ततः = तदनन्तरम् सानुक्रोशम्—अनुक्रोशेन सहितम् सानुक्रोशम् अनुकम्पया सहितमित्यर्थः हि = यतः एष दयाभावात्मको गुणः मृदुः अपि प्रकृत्या कोमलवृत्तिरपि, बलवान् = सानुक्रोशेन परान् वशीकरोति, ततः = तदनन्तरम्, रूपे = आकृतौ कान्तिं = सुन्दरतां ( अभिकाङ्क्षे ) न खलु गुणतः ( अभिकाङ्क्षे ) रूपस्य गुणेषु गणना वर्तते, केवलं एतेनैव कारणेन सौन्दर्यसम्पन्नं वरं न वाञ्छामि अपि तु स्त्रियः रूपमेव अभिनन्दन्ति अत एव स्त्रीजनभयादपि रूपगुणसम्पन्नम् वरं इच्छामि । यथोक्तं केनापि 'कन्या वरयते रूप'मिति । ततः वीर्येण उदग्रम् परिवर्द्धितम् वीर्योदग्रम् परिपाल्या एव सामर्थ्य-

---

कंचुकी—महासेन, मैं यह कहना चाहता हूँ—( शेष अंश की संस्कृत एवं हिन्दी व्याख्या अंक के प्रारंभ में दी हुई है अतएव वही अवलोकन करें । )

राजा—बादरायण, जो कह रहे हो उचित है। वर में अधिक गुण होना चाहिए इसके लोभ से तथा पुत्री वासवदत्ता में अत्यन्त स्नेह होने के कारण मैं निश्चय नहीं कर पाता ।

सर्वप्रथम मैं मनसे ( वर के ) परिवार की कुलीनता चाहता हूँ; तत्पश्चात् चाहता हूँ कि वह दयावान्, मृदु और बलवान् हो । फिर उसमें सुन्दरता भी चाहता हूँ; यह ( सुन्दरता ) गुण के लिये ही नहीं चाहता बल्कि स्त्री समाज के भय से भी चाहता हूं । और यह भी चाहता हूँ कि वह पराक्रमशाली हो, क्योंकि नारियों की रक्षा सदा होनी ही चाहिये ॥ ४ ॥

काञ्चुकीयः—महासेनं वर्जयित्वा न हीदानीमेते गुणाः कचिदेकस्या दृश्यन्ते।

राजा—अतः खलु चिन्त्यते।

कन्याया वरसम्पत्तिः पितुः ( प्रायः ) प्रयत्नतः।
भाग्येषु शेषमायत्तं दृष्टपूर्वं न चान्यथा ॥ ५ ॥

दुहितुः प्रदानकाले दुःखशीला हि मातरः। तस्माद् देवी तावदाहूयताम्।

काञ्चुकीयः—यदाज्ञापयति महासेनः। ( निष्क्रान्तः )

---

सम्पन्नम् ( वरं ) हि=यतः युवतयः=स्त्रियः ( अभिकाङ्क्षे ) न परिपाल्याः=न इति न अपि तु ननु सर्वतोभावेन रक्षणीयाः=बलवद्भिः पुरुषैः इत्यर्थः ॥ ४ ॥

प्रायः कन्यायाः = विवाहसंस्कारयोग्यायाः बालायाः वरसम्पत्तिः वराय यावन्तः गुणाः अपेक्षिताः सन्ति तद्गुणवान् वरलब्धिः पितुः = जनयितुः प्रयत्नतः इतस्ततः अन्वेषणरूपोपायेन वरप्रयुक्तसम्पत्तिदानेन वा ( भवति ) शेषम् = वरसम्पत्त्यातिरिक्तम् लौकिकभोगभोग्यादिकम् भाग्येषु = कर्तव्येषु दैवेषु वा आयत्तम् = अधीनम्, लोके = संसारे दृष्टपूर्वम् = पूर्वालोचितं, इदम् करणीयं इदं अकरणीयं इति विविच्य कृतम् कार्यं अन्यथा न=निष्फलं न भवति इत्यर्थः ॥५॥

दुहितुः = कन्यायाः।

---

कंचुकी—महासेन के अतिरिक्त ये सब गुण किसी एक पुरुष में इस समय नहीं दिखाई पड़ते।

राजा—इसी से तो चिन्तित हूँ।

प्रायः कन्या के लिये सर्वगुणसम्पन्न वर पिता के प्रयत्न से उपलब्ध होता है। शेष बातें तो दैवाधीन हैं। क्योंकि अच्छी तरह विचार कर किया हुआ कार्य निष्फल नहीं होता ॥ ५ ॥

लड़की के विवाह के समय में माताओं को बड़ा दुःख होता है इसलिये देवी ( रानी ) को बुलाओ।

कंचुकी—जैसी महाराज की आज्ञा। ( निकल जाता है )।

राजा—भोः काशिराजदूतसम्प्रेषणेन वत्सराजग्रहणार्थं गतं शालङ्कायनं प्रति गता मे बुद्धिः । किन्तु खल्वद्यापि वृत्तान्तं न प्रेषयति स ब्राह्मणः ।

**कामं या तस्य सा लीला तत्रैवानुगतं मनः ।**
**ये त्वस्य सचिवाः सर्वे यत्नमास्थाय ते स्थिताः ॥ ६ ॥**

( ततः प्रविशति देवी सपरिवारा । )

देवी—जेदु महासेणो । [ जयतु महासेनः । ]

राजा—आस्यताम् ।

देवी—जं महासेणो आणवेदि । (उपविशति) । ) [यन्महासेन आज्ञापयति । ]

---

राजा इति । काशिराजदूतसम्प्रेषणेन—काशिराजस्य दूतः इति काशिराजदूतः तस्य सम्प्रेषणेन ।

या सा प्रसिद्धा तस्य = वत्सराजस्य लीला = गजाखेटरूपा क्रीडा, अस्ति तत्रैव = तस्यामेव क्रीडायाम् मनः = ( वत्सराजस्य ) चित्तम् कामम् = यथेष्टम्, अनुगतम् = संलग्नम् अस्ति । परंतु अस्य वत्सराजस्य सचिवाः राजमन्त्रिणः गुप्तचराः वा सन्ति ते यत्नम् = उपायम् आस्थाय-आश्रित्य स्थिताः सन्ति । एतेन अयमर्थो आयाति यत् वत्सराजस्य मन्त्रिणः स्वकीयकार्ये प्रवीणाः स्वामिभक्ताश्च आसन् ॥ ६ ॥

---

राजा—काशिराज के दूत भेजने से वत्सराज को पकड़ने के लिये गए हुए शालंकायन की ओर मेरा मन चला गया है। क्या बात है कि अभी तक वह ब्राह्मण कोई समाचार नहीं भेज रहा है ।

राजा वत्सराज का मन तो अपने प्रिय खेल ( हाथियों के शिकार ) में लगा रहता है । परन्तु उसके मंत्री भी नाना उपायों के द्वारा ( उसकी रक्षा करने के लिये ) सदा लगे रहते हैं ।

( तब रानी अपने परिवार के साथ आती है )

देवी—महाराज की जय हो ।

राजा—बैठो ।

देवी—जैसी महाराज की आज्ञा हो । ( बैठती है ) ।

राजा—वासवदत्ता क्व ।

देवी—उत्तराए वेदालिआए सआसे वीणं सिक्खिदुं णारदीअं गआ आसी । [ उत्तराया वैतालिक्याः सकाशे वीणां शिक्षितुं नारदीयां गतासीत् । ]

राजा—कथमुत्पन्नोऽस्या गान्धर्वेऽभिलापः ।

देवी—केण वि किल उग्घादेण कञ्चणमालं वीणाजोग्गं करअन्तिं पेक्खिअ सिक्खिदुकामा आसी । [ केनापि किलोद्घातेन काञ्चनमालां वीणा-योग्यां कुर्वतीं प्रेक्ष्य शिक्षितुकामासीत् । ]

राजा—सदृशं बाल्यस्य ।

देवी—महासेणं वि किं वि विण्णविदुकामा म्हि । [ महासेनमपि किमपि विज्ञापयितुकामास्मि । ]

---

उत्तराया वैतालिक्याः = उत्तरानाम्नी एका स्त्री अस्ति यस्याः मुख्यं व्यापारं वीणावादनमेव आसीत् । तस्याः सकाशे = समीपे, नारदीयाम् = नारदीय-पद्धतिविशिष्टाम् । वीणाम् = वीणावादनकलाम् , शिक्षितुम् = जानातुं गतासीत् ।

राजेति । अस्या = वासवदत्तायाः, गान्धर्वे = संगीतविद्यायाम् , अभिलापः = रुचिः, कथमुत्पन्नः = संजात इत्यर्थः ।

देवी—केनापि किल उद्घातेन = येन केनापि प्रसंगेन, काञ्चनमालां = वासवदत्तायाः सखीम् , वीणायोग्याम्—वीणायाः योग्याम् वीणायोग्याम् = वीणाभ्यासम् कुर्वतीं प्रेक्ष्य = अवलोक्य 'योग्याभ्यासः परिचयः' इति यादवः । शिक्षितुकामा—शिक्षितुं कामो = अभिलापो यस्याः सा तथोक्ता आसीत् इत्यर्थः ।

राजेति । बाल्यस्य = शैशवस्य सदृशम् = अनुरूपं अस्ति ।

देवी—विज्ञापयितुकामा—विज्ञापयितुं कामो यस्याः सा विज्ञापयितुकामा

---

राजा—वासवदत्ता कहाँ है ?

देवी—उत्तरा नामवाली वैतालिका के पास नारदीय वीणा सीखने गई है ।

राजा—इसकी रुचि गानविद्या में कैसे उत्पन्न हुई ?

देवी—किसी प्रसंग से (अपनी सखी) कांचनमाला के पास गई थी । उसको वीणा का अभ्यास करते हुए देखकर इसको भी सीखने की अभिलाषा हो गई ।

राजा—यह तो बचपन के योग्य ही है ।

देवी—महासेन को भी कुछ कहना चाहती हूँ ।

राजा—किमिति।

देवी—आअय्यं इच्छामि त्ति। [ आचार्यमिच्छामीति। ]

राजा—उपस्थितविवाहकालायाः किमिदानीमाचार्येण। पतिरेवैनां शिक्षयिष्यति।

देवी—हं एसो दाणि मे दारिआए कालो। [ हम् एष इदानीं मे दारिकायाः कालः ]

राजा—भोः! नित्यं प्रदीयतामित्यस्मानुपरुध्य किमिदानीं सन्तप्यसे।

---

अस्मि, अहमपि किञ्चित् निवेदयितुमिच्छामि इति भावः।

आचार्यम् = ( वीणा ) शिक्षकमित्यर्थः।

राजेति—उपस्थितविवाहकालायाः—उपस्थितः = प्राप्तः विवाहस्य = पाणिग्रहणस्य कालः = समयो यस्याः सा तयोक्ता तस्याः उपस्थितविवाहकालायाः। इदानीम् = साम्प्रतम्, आचार्येण किम् = किमप्यावश्यकमाचार्यस्येत्यर्थः, स्त्रीणाम् पतिरेव एको गुरुः अस्ति अतः पतिः एव एनां शिक्षयिष्यति।

हम् इति पदम् अस्वीकृतिसूचकम्। एष इदानीम् मे = मम, दारिकायाः = कन्यायाः; कालः = विवाहकालः वर्तते।

नित्यम् प्रतिदिनम् प्रदीयताम्—कन्यापाणिग्रहणम् क्रियताम् इति अस्मान् उपरुध्य अनुनयं कृत्वा उक्तवती, इदानीम् = अधुना, किं सन्तप्यसे = कथं शोकाकुलोऽसि।

---

राजा—क्या कहना चाहती हैं?

देवी—एक आचार्य ( वीणा-शिक्षक ) चाहती हूँ।

राजा—अब इसके विवाह का समय समीप आ गया है। इसको आचार्य से क्या प्रयोजन ( अर्थात् इसे आचार्य की आवश्यकता नहीं है )। इसका पति ही इसको सिखावेगा।

देवी—हूँ, (क्या) यही मेरी कन्या के विवाह का समय है ( अर्थात् नहीं है )।

राजा—तुम तो हमेशा कहती थीं कि इसका विवाह कर दो। अब क्यों ( उदास ) व्याकुल हो रही हो।

देवी—अभिप्पेदं मे पदाणं। विओओ मं सन्तावेदि। अह कस्स उण दिण्णा। [ अभिप्रेतं मे प्रदानम्। वियोगो मां सन्तापयति। अथ कस्मै पुनर्दत्ता। ]

राजा—न तावन्निश्चयो गम्यते।

देवी—इदाणिं पि ण दाव। [ इदानीमपि न तावत्। ]

राजा—

अदत्तेत्यागता लज्जा दत्तेति व्यथितं मनः।
धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ॥ ७ ॥

सर्वथा श्वशुरपरिचरणसमर्थे वयसि वर्तते वासवदत्ता। एष चापरः काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तो विलोभयति मां चारि-

---

मे = मम, कन्याप्रदानम् अभिप्रेतम् = इष्टम्, परंतु वियोगः = कन्यायाः पतिगृहगमनरूपवियोगः, मां सन्तापयति = व्यथयति।

निश्चयः = वरनिर्णयः।

अदत्ता—न दत्ता अदत्ता, वराय न दत्ता इति हेतोः लज्जा = व्रीडा, आगता, यदि समये कन्यादानं न करोमि तदा समाजे उपहासो भविष्यति इति भावः। दत्ता = विवाहे कृते सति मनः = हृदयम्, व्यथितम्, कन्यावियोगचिन्तया अतिदुःखितो भवति इत्यर्थः। धर्मस्नेहान्तरे न्यस्ताः = निवेशिताः, मातरः दुःखिताः खलु ॥ ७ ॥

विलोभयति मां चारित्रेण—काशिराजस्य सद्व्यवहारेण मां वशीकरोति एष

---

देवी—लड़की का विवाह करना तो मुझे स्वीकार है, परंतु वियोग मुझको कष्ट दे रहा है। किसके साथ विवाह करने का विचार किया है?

राजा—निश्चय नहीं हुआ है।

देवी—अभी तक निश्चय नहीं हुआ?

राजा—न देने पर ( कन्यादान न करने से ) तो लज्जा आती है और विवाह कर देने पर मन दुखी होता है। इस प्रकार धर्म और स्नेह के बीच में पड़कर माताओं को बड़ा कष्ट होता है ॥ ७ ॥

वासवदत्ता की अवस्था सब प्रकार से सास-ससुर की सेवा करने के योग्य है। और दूसरी बात यह है कि काशिराज का पुरोहित आर्य-जैवंति दूत होकर आया

त्रेण । ( आत्मगतम् ) न किञ्चिदाह । अश्रुपूर्वा व्याकुला कथं निश्चयं गमिष्यति । भवतु, निवेदयाम्यस्यै । ( प्रकाशम् ) श्रूयन्तेऽस्मत्सम्बन्धप्रयोजनायागता राजानः ।

देवी—किं दाणि वित्थरेण । जहिं दइअ ण सन्तप्पामो, तहिं दीअदु । [ किमिदानीं विस्तरेण । यत्र दत्त्वा न सन्तप्यामहे, तत्र दीयताम् । ]

राजा—अहो महान् खलु लीलाभिहितो दुःखविस्तर इदानीं पश्चादुपालम्भनं श्रोतुम् । तस्माद् देवी तावन्निश्चयं गच्छतु । श्रूयताम्—

---

जंवतिः । अर्थात् आर्यजैवन्तिना वर्णितं काशिराजस्य वृत्तान्तं श्रुत्वा मम मनः तत्रैव आकृष्टं भवति इत्यर्थः । अश्रुपूर्वा व्याकुला—कन्याविवाहप्रस्तावे पूर्वं अश्रु मुञ्चतीत्यर्थः । कथं निश्चयं गमिष्यति—केन प्रकारेण कन्यादानविषये निर्णयं करिष्यति ।

देवी—इदानीम् = अधुना । विस्तरेण किम् = विस्तारपूर्वकं कथनेन न किमपि प्रयोजनमित्यर्थः ।

राजा—अहो इति विस्मयेऽर्थे । महान् खलु = बृहद् दुःखविस्तरः, वरनिर्वारणविषयकः परिश्रमः इत्यर्थः । इदानीम् = साम्प्रतम् , अधुना । लीलया अभिहितः = मदेकवहनीयतया सरलेनोक्तः । पश्चादुपालम्भनम् श्रोतुम्—अधुना मन्निर्णीतः वरः यदि कालान्तरे कन्यायाम् स्नेहभावं न दर्शयिष्यति तर्हि तवापि उपालम्भम् , कटुवचनं वा मया श्रोतव्यं भविष्यति । अत एव उक्तादुःखविस्ताराद्नी-

---

है । वह तो ( राजा के ) सुन्दर चरित्र से मुझको लुभा रहा है । ( आप ही आप ) यह तो कुछ नहीं कहतीं, यह तो पहले से ही आँसू बहा रही हैं तो किस प्रकार निश्चय कर सकती हैं । जो हो, इससे निवेदन करता हूँ ( प्रकाश रूप से ) सुनते हैं कि हमसे संबंध करने के लिये ( अर्थात् वासवदत्ता के विवाह के लिये ) राजा लोग आ रहे हैं ।

देवी—इस समय बहुत विस्तारपूर्वक कहने से क्या प्रयोजन ? जिसको देकर पश्चात्ताप न करना पड़े उसे दीजिये ।

राजा—अहा ! कितना कठिन था जिसको ऐसा कह कर ( तुमने ) सरल बना दिया पर बाद में तो उसके लिये उपालम्भ (= उलाहना) ही सुनना होगा । अतएव हे देवी ! तुम्हीं इस विषय में विचार करो । सुनोः—

अस्मत्सम्बद्धो मागधः काशिराजो
वाङ्गः सौराष्ट्रो मैथिलः शूरसेनः ।
एते नानार्थैर्लोभयन्ते गुणैर्मां
कस्ते चैतेषां पात्रतां याति राजा ॥ ८ ॥

( प्रविश्य )

काञ्चुकीयः—वत्सराजः ।

राजा—किं वत्सराजः ।

काञ्चुकीयः—प्रसीदतु प्रसीदतु महासेनः । प्रियवचननिवेदनत्वरया क्रमविशेषो नावेक्षितः ।

---

कारस्य मम अनिष्टहेतुना स्वयं देवी एव तावत् निश्चयं गच्छतु—त्वमेव वरं निर्णेतुम् योग्यासि नाहमिति भावः ।

मागधः = मगधाधिपः, काशिराजः, अङ्गो वा = अङ्गाधिपः अङ्गदेशीयनरेशः इति यावत् । सौराष्ट्रः = सौराष्ट्राधिपो वा, मैथिलः = मिथिलानरेशो वा । शूरसेनः वा = शूरसेनाधिपो वा, अस्मत्सम्बन्धः = प्रत्येकः मया सम्बद्ध अस्ति । एते = राजानः । नानार्थैः = नानाविधैः प्रयोजनैः, गुणैः = राजकीयगुणैः, कुलशीलवयोरूपविद्यादिभिः मां लोभयन्ते । एतेषां समागतानां नृपतीनां मध्ये कः तव पात्रतां = योग्यताम् , जामात्रनुरूपतां वा । याति = भजति, अर्थात् त्वम् कम् वरं चिनोषीति ॥ ८ ॥

क्रमविशेषः = वत्सराजपदोच्चारणसम्बद्धो विशिष्टः क्रमः ।

---

मगधराज, काशिनरेश, अङ्गदेश का राजा, सौराष्ट्र का राजा, मिथिला का राजा और शूरसेन ये सब इससे संबंधित हैं। ये सब अनेक गुणों से मेरे मन को लुभा रहे हैं। इनमें से कौन राजा तुम्हारे विचार से ( विवाह के ) योग्य हो सकता है अर्थात् किसको चाहती हो ? ॥ ८ ॥

( प्रवेश कर )

कंचुकी—वत्सराज !

राजा—क्या कहा, वत्सराज ?

कंचुकी—महासेन प्रसन्न हों, प्रसन्न हों। प्रियवचन निवेदन करने की शीघ्रता में मैंने क्रमविशेष का विचार नहीं किया।

टिप्पणी—जिस समय महासेन अपनी रानी से यह विचार-विमर्श कर ही रहा था कि कौन सा राजा तुम्हारे मन के लायक है उसी समय कंचुकी वत्सराज के

राजा—प्रियवचनमिति ।

देवी—( उत्थाय ) जेदु महासेणो । [ जयतु महासेनः । ]

राजा—( सहर्षम् ) प्रियवचनपरिहार्या हि देवी । आस्यताम् ।

देवी—जं महासेणो आणवेदि । [ यद् महासेन आज्ञापयति । ] ( उपविशति । )

राजा—उत्तिष्ठोत्तिष्ठ, स्वैरमभिधीयताम् ।

काञ्चुकीयः—( उत्थाय ) तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा—( सहर्षम् ) किमाह भवान् ।

काञ्चुकीयः—तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा—उदयनः ।

काञ्चुकीयः—अथ किम् ।

---

स्वैरम् = निर्भयं यथा स्यात् तथा, अभिधीयताम् = उच्यताम् ।

---

बंदी होने का शुभ संवाद लाया और 'गृहीतो वत्सराजः' न कह कर आनंद के मारे केवल इतना ही कहा 'वत्सराजः' । इस पर राजा ने यही समझा कि मेरे प्रश्न का समाधान कर रहा है अर्थात् यह कह रहा है कि 'वत्सराज' ही वर के अनुरूप हैं ।

राजा—प्रिय वचन ?

देवी—( उठकर ) महासेन की जय हो ।

राजा—( हर्ष के साथ ) देवी भी प्रिय वचन सुन लें ।

देवी—जैसी आपकी आज्ञा । ( बैठती है । )

राजा—उठो, उठो ! निर्भय होकर कहो ।

कञ्चुकी—( उठकर ) आप के मंत्री शालंकायन ने वत्सराज को बंदी बना लिया है ।

राजा—क्या कह रहे हो ?

कंचुकी—आपके मंत्री शालंकायन ने वत्सराज को पकड़ लिया है ।

राजा—उदयन ?

कंचुकी—( हाँ ) और क्या ।

राजा—शतानीकस्य पुत्रः ।

काञ्चुकीयः—दृढम् ।

राजा—सहस्रानीकस्य नप्ता ।

काञ्चुकीयः—स एव ।

राजा—कौशाम्बीशः ।

काञ्चुकीयः—सुव्यक्तम् ।

राजा—गान्धर्ववित्तकः ।

काञ्चुकीयः—एवं ब्रुवन्ति ।

राजा—वत्सराजो ननु ।

काञ्चुकीयः—अथ किं, वत्सराजः ।

राजा—अथ किमुपरतो यौगन्धरायणः ।

काञ्चुकीयः—न खलु, कौशाम्ब्यां किल ।

राजा—यद्येवं, न गृहीतो वत्सराजः ।

---

नप्तृशब्दस्य प्रथमैकवचने नप्ता = पौत्रः ।
गान्धर्ववित्तकः = संगीतविद्याविशारदः ।
उपरतः = मृतः । श्रद्धताम् = विश्वस्यताम् ।

---

राजा—शतानीक का पुत्र ?

कंचुकी—हाँ ।

राजा—सहस्रानीक का पौत्र ?

कंचुकी—वही ।

राजा—कौशाम्बी का राजा ?

कंचुकी—अवश्य ।

राजा—संगीत विद्या का जाननेवाला ?

कंचुकी—कहते तो यही हैं । ( ऐसा ही कहते हैं । )

राजा—वत्सराज ?

कंचुकी—हाँ ! वत्सराज ।

राजा—क्या यौगन्धरायण मर गया ?

कंचुकी—नहीं, वह तो कौशाम्बी में ( रहता ) है ।

राजा—यदि ऐसी बात है तो वत्सराज पकड़ा नहीं गया ।

काञ्चुकीयः—श्रद्धत्तां महासेनः ।

राजा—

न श्रद्दधाम्युदयनग्रहणं त्वयोक्तं
व्यावर्तनं करतलैरिव मन्दरस्य ।
यस्याहवेषु रिपवः कथयन्ति शौर्यं
यौगन्धरायणमतानि च नः स्वनन्ति ॥ ९ ॥

काञ्चुकीयः—प्रसीदतु महासेनः । वृद्धोऽस्मि ब्राह्मणः खल्वहम् । न महासेनसमीपेऽनृतमभिहितपूर्वम् ।

राजा—आः अस्त्येतत् । अथ कः प्रियदूतः शालङ्कायनेन प्रेषितः ।

काञ्चुकीयः—न पुरुषः । जवातिशययुक्तेन खररथेन वत्सराजमग्रतः कृत्वा स्वयमेवामात्यः प्राप्तः ।

---

त्वया उक्तम् = कथितम् , उदयनस्य ग्रहणम्—राजा उदयनः ममाधीनं गतः इत्यर्थः । करतलैः = हस्तैः । मन्दरस्य = मन्दराचलस्य । व्यावर्तनम् = चक्रवत् भ्रामणम् , इव न श्रद्दधामि = न विश्वसिमि । यस्य आहवेषु=रणेषु । रिपवः= शत्रवः । शौर्यम् = पराक्रमम् , कथयन्ति । यौगन्धरायणमतानि = यौगन्धरायण-मन्त्रफलानि । नः = अस्माकम् ( कर्णे ) स्वनन्ति = गुंजन्ति ॥ ९ ॥

अनृतम् = असत्यम् । अभिहितपूर्वम् = पूर्वोक्तम् ।

जवातिशययुक्तेन = अतिशीघ्रगामिना, खररथेन = दृढरथेन ।

---

कंचुकी—महासेन विश्वास करें ।

राजा—उदयन के पकड़े जाने वाली तुम्हारी इस बात को मैं उसी प्रकार नहीं स्वीकार कर सकता जिस प्रकार 'मन्दराचल' पर्वत हाथ से घुमाया गया यह बात अविश्वसनीय है । शत्रु भी युद्धक्षेत्र में जिसके बल एवं पराक्रम की प्रशंसा करते हैं ( उसके मंत्री ) यौगन्धरायण की कूटनीति ( मन्त्रणाएँ ) हमारे कर्णकुहरों में आज भी गूँज रही है ॥ ९ ॥

कंचुकी—महासेन प्रसन्न हों । सर्वप्रथम तो मैं वृद्ध हूँ, दूसरे ब्राह्मण हूँ । मैंने महासेन के संमुख पहले कभी असत्य नहीं बोला ।

राजा—क्या यही बात है ? शालंकायन ने कौन सा प्रिय दूत भेजा है ?

कंचुकी—किसी को नहीं, बल्कि स्वयं मंत्री ( शालंकायन ) अतिशीघ्रगामी रथ पर चढ़कर वत्सराज को आगे कर यहां आए हैं ।

राजा—एवं प्राप्तः । हन्त भोः ! अद्य विमुक्तसन्नाहा सुखं विश्राम्यत्वक्षौहिणी । अद्यप्रभृति प्रच्छन्नकृतदूतसम्प्रेषणा अशङ्किताः स्थास्यन्ति राजानः । एष समासः—अद्यास्मि महासेनः ।

देवी—किं अमच्चेण आणीदो । [ किममात्येनानीतः । ]

राजा—अथ किम् ।

देवी—एद्दणिमित्तं कस्स वि ण दिस्सामो वासवदत्तं । [ एतन्निमित्तं कस्मा अपि न दित्सामो वासवदत्ताम् । ]

राजा—युद्धावर्जितशत्रुः खल्वेष मम । बादरायण ! शालङ्कायनः क ।

हन्त भो इति हर्षजनितसंतोषे प्रयुक्तः कविना । अद्य विमुक्तसन्नाहा—विमुक्तः सन्नाहो यया सा विमुक्तसन्नाहा परित्यक्तकवचा इत्यर्थः । महाबलशालिनः उदयनस्य ग्रहणेनैव अन्येऽपि शत्रवः वशीभूताः इत्येव अनुमिनोमि । अतः, अक्षौहिणी = सेना, सुखं = आनंदपूर्वकम्, विश्राम्यतु इत्यर्थः । अद्यप्रभृति = अद्यारभ्य, प्रच्छन्नकृतदूतसम्प्रेषणा = प्रच्छन्नम् गुप्तं यथा स्यात्तथा कृता दूतसम्प्रेषणा यैः ते प्रच्छन्नकृतदूतसम्प्रेषणाः = वत्सराजस्य भयेन मां प्रति अप्रकटकृतदूतप्रेषणाः, राजानः, शंका संजाता येषां ते शंकिताः 'तारकादिभ्य इतच्' इति इतच् । न शंकिता इति अशंकिताः = भयरहिताः, स्थास्यन्ति = भविष्यन्ति इत्यर्थः । एष समासः=संतोषवचनसंक्षेपः । अयमेव सारांशो वा, वत्सराजदर्शने—वत्सराजस्य दर्शने इति वत्सराजदर्शने । न उत्सारयितव्यः ।

राजा—इस प्रकार से आए हैं । अच्छा आज कवच उतार कर सेना विश्राम करे । आज से मेरे पास गुप्त रूप से दूत भेजने वाले राजा निःशंक हो जायँगे । सारांश यह है कि आज मैं ( वास्तव में ) महासेन कहलाने के योग्य हो गया हूँ ।

देवी—क्या अमात्य ही उसे लाए हैं ?

राजा—हां, और क्या ।

देवी—इसी कारण तो मैं वासवदत्ता को किसी को देना नहीं चाहती ( अर्थात् उसका विवाह किसी दूसरे से नहीं करना चाहती ) ।

राजा—यह मेरा शत्रु है जिसे जीतकर मैंने पकड़ा है । बादरायण, शालंकायन कहां है ?

काञ्चुकीयः—आहितो भद्रद्वारे।

राजा—गच्छ। भरतरोहकं ब्रूहि—कुमारविधिविशिष्टेन सत्कारेण वत्सराजमग्रतः कृत्वा प्रवेश्यताममात्य इति।

काञ्चुकीयः—यदाज्ञापयति महासेनः।

राजा—एहि तावत्।

काञ्चुकीयः—अयमस्मि।

राजा—वत्सराजदर्शने कश्चिन्नोत्सारयितव्यः।

शत्रुं पश्यन्तु मे पौराः श्रुतपूर्वं स्वकर्मभिः।
सिंहमन्तर्गतामर्षं यज्ञार्थमिव संयतम्॥ १०॥

काञ्चुकीयः—यदाज्ञापयति महासेनः। (निष्क्रान्तः।)

---

स्वकर्मभिः=स्ववीरताभिः, पुरुषार्थैः, बलाधिक्यैः वा। श्रुतपूर्वम्=प्राक्प्रसिद्धम्। मे = मम, शत्रुम् = रिपुम्, पौराः=पुरवासिनः जनाः (तथा) पश्यन्तु = अवलोकयन्तु, यथा यज्ञार्थम् यज्ञीयदेवोपहारार्थम् संयतम् = बद्धम्, अन्तर्गतामर्षम्—अन्तर्गतः = अन्तर्निगूढः अमर्षः = क्रोधः यस्य सः तम् तथोक्तम्, सिंहम् = मृगाधिराजम् इव पश्यन्तु। वत्सराजग्रहणम् सिंहग्रहणमिव मन्यन्ते इति भावः॥ १०॥

---

कंचुकी—भद्रद्वार पर खड़ा किया गया है।

राजा—जाओ, भरत रोहतक से जाकर कहो कि राजकुमार के अनुरूप सत्कार से विधिपूर्वक वत्सराज को आगे कर के अमात्य को भीतर लाओ।

कंचुकी—जैसी महासेन की आज्ञा।

राजा—आओ।

कंचुकी—मैं यहां हूँ।

राजा—वत्सराज के दर्शन से कोई वंचित न किया जाय।

अपने पराक्रम के कारण प्रसिद्ध मेरे शत्रु को पुरवासी लोग उस तरह (वैसे ही) देखें जैसे कि यज्ञ के लिये बँधे हुए सिंह को देखते हैं; जिसका क्रोध भीतर ही छिपा रहता है॥ १०॥

कंचुकी—जैसी महासेन की आज्ञा हो। (निकल जाता है।)

---

१. आस्थितो द्वारे।

देवी—बहूणि अब्भुदआणि इमस्सिं राअउले अणुभूदाणि। ण खु अहं ईदिसं पीदिजोग्गं महासेणस्स सुमरामि। [ बहवोऽभ्युदया अस्मिन् राजकुलेऽनुभूताः। न खल्वहमीदृशं प्रीतियोग्यं महासेनस्य स्मरामि। ]

राजा—अहमप्येतादृशं प्रीतिविशेषं न श्रुतपूर्वं स्मरामि, यथा गृहीतो वत्सराज इति।

देवी—वच्छराओ णं। [ वत्सराजो ननु। ]

राजा—अथ किम्।

देवी—बहूणि सम्बन्धप्पओअणागदाणि राअउलाणि सुदाणि। एदिणा ण पेसिदपुरुवो पुरुसो। [ बहूनि सम्बन्धप्रयोजनागतानि राजकुलानि श्रुतानि। एतेन न प्रेषितपूर्वः पुरुषः। ]

राजा—देवि! महासेनशब्दमपि न गणयति, किं सम्बन्धमभिलषति।

---

अस्मिन् राजकुले = राजवंशे, बहवः = नानाविधाः, अभ्युदयाः = ऐश्वर्याः, अतः प्रसन्नताया अवसराः अनुभूताः = दृष्टाः, परन्तु ईदृशम् एवंविधम् प्रीतियोग्यम् = वत्सराजग्रहणेन संजातहर्षम् संतोषस्थानम् वा महासेनस्य न खलु अहं स्मरामि इत्यर्थः।

बहूनि—राजकुलानि। सम्बन्धप्रयोजनाभिगतानि—सम्बन्धस्य प्रयोजनेन आगतानि इति सम्बन्धप्रयोजनागतानि राजकुलानि = राजपुत्राः इत्यर्थः। प्रेषितपूर्वः पुरुषः = दूतः पूर्वं न प्रेषितः इति भावः।

---

देवी—इस राजकुल में अनेक उत्कर्षपूर्ण घटनाएँ देखी गईं परंतु महासेन को इस प्रकार की आनन्ददायिनी कोई अन्य बात मुझे याद नहीं पड़ती।

राजा—मुझे भी इस प्रकार का संतोषजनक शुभ संवाद पहले कभी नहीं सुनने में आया था जैसा यह कि 'वत्सराज पकड़ा गया'।

देवी—वत्सराज!

राजा—हाँ।

देवी—( वैवाहिक ) संबन्ध करने के निमित्त बहुत से राजकुमार आए परन्तु इसने किसी भी दूत को नहीं भेजा।

राजा—देवि! जब यह महासेन शब्द को कुछ नहीं समझता, तो फिर सम्बन्ध करने की क्या बात है।

देवी—ण गणेदि । किं वालो अपण्डिदो वा । [ न गणयति । किं वालः अपण्डितो वा । ]

राजा—बालः, न त्वपण्डितः ।

देवी—किण्णु हु एणं उस्सेअआदि । [ किन्नु खल्वेनमुत्सेकयति । ]

राजा—उत्सेकयत्येनं प्रकाशराजर्षिनामधेयो वेदाक्षरसमवायप्रविष्टो भारतो वंशः । दर्पयत्येनं दायाद्यागतो गान्धर्वो वेदः । विभ्रमयत्येनं वयस्सहजं रूपम् । विस्रम्भयत्येनं कथमप्युत्पन्नोऽस्य पौरानुरागः ।

---

उत्सेकयति—उत्सेको = गर्वः तद्वन्तं करोति इत्यर्थः । राजेति । प्रकाशराजर्षिनामधेयः—प्रकाशानि प्रसिद्धानि राजर्षीणाम् नामधेयानि यस्मिन् ( राजकुले ) सः प्रकाशराजर्षिनामधेयः । वेदाक्षरसमवायप्रविष्टः—क्रमवान् क्रमशः वर्गसन्निवेशः 'अक्षरसमवायः' इति कथ्यते, वेदे = वेदरूपे अक्षरसमवाये प्रविष्टः प्रतिपाद्यतया प्रवेशं गतः । वेदः यस्य नामोच्चारणं करोति इत्यर्थः । एवंभूतो भरतवंशः एनम् = वत्सराजम् उत्सेकयति, तथा दायाद्यागतः—दायः = कुलधनम् , आद्यम् = भोज्यवस्तु—दायाद्यम् , दायाद्यत्वेन = वंशपरम्परया आगतः लब्धः गांधर्वो वेदः = सङ्गीतविद्या एनं दर्पयति । वयस्सहजम् = तारुण्यसचिवम् , रूपम् = सौन्दर्यम् एनं विभ्रमयति । अभिमाने सुन्दरता अपि कारणमस्तीत्यर्थः ।

---

देवी—नहीं समझता ! यह क्या बाल्यावस्था के कारण या मूर्खतावश ऐसा करता है ? ( आप के नाम के महत्त्व को कुछ नहीं समझता, इसका कारण या तो इसकी मूर्खता है या इसकी यह बाल्यावस्था ) ।

राजा—यह लड़का तो है पर मूर्ख नहीं है ।

देवी—इसे किस बात का अभिमान है ?

राजा—भरतवंश, जिसमें अनेक प्रसिद्ध राजर्षि हो गए हैं और जिसकी चर्चा वेदों में भी आई है, इसे अभिमानी बना रहा है । संगीत विद्या जो इसकी खानदानी ( बपौती ) है, इसके दर्प को बढ़ा रही है । अवस्था के योग्य इसकी सुन्दरता ने इसको अभिमानी बना रक्खा है और पुरवासियों का प्रेम इसे विश्वास दिला रहा है—अर्थात् अपनी प्रजावत्सलता का इसे बहुत बड़ा विश्वास है ।

---

१. प्रतिष्ठितः । देवान्वयसमवायप्रविष्टो ।

देवी—अभिलसणीआ वरगुणा। कस्स वामदाए दोसो संवुत्तो।
[ अभिलषणीया वरगुणाः। कस्य वामतया दोषः संवृत्तः। ]

राजा—देवि ! किमिदानीमस्थाने विस्मितासि।

पश्य—

अग्निः कक्ष इवोत्सृष्टो दहत् कार्त्स्न्येन मेदिनीम्।
अस्य मे शासनं दीप्तं विषयान्तेऽवसीदति ॥ ११ ॥

---

कथमपि उत्पन्नः अस्य पौरानुरागः—पौराणां पौरेषु वा अनुरागः इति पौरानुरागः प्रजावत्सलता एनं विलम्भयति = विश्वासयति।

वरगुणाः—वरस्य गुणाः अभिलषणीयाः = वाञ्छनीयाः सन्ति। कस्य गुणस्य वामतया = अनभिलषणीयतया दोषः संवृत्तः दूषितो भवतीत्यर्थः।

कक्षे = तृणगुल्मे तृणसमूहे वा, उत्सृष्टः = क्षिप्तः, अग्निः इव मेदिनीम् = वसुन्धराम्, पृथ्वीम्, कार्त्स्न्येन = कृत्स्नस्य भावः कार्त्स्न्यम् तेन तथोक्तेन सर्वतोभावेन, दहत् निखिले पृथ्वीमंडले प्रसरत् इत्यर्थः। दीप्तम् = ज्वलितम्, मे = मम, शासनम् = आज्ञा, अस्य=उदयनस्य, विषयान्ते=जनपदसीमायाम्, अवसीदति—न प्रसरति सर्वेषु राजसु मम शासनमनुत्सरत्सु अयमेको वत्सराजः ( शासनं ) लङ्घयति इति मां प्रति अप्रह्वत्वमेवास्य दूषणमिति भावः॥ ११ ॥

---

देवी—ये गुण तो वर में वांछनीय हैं। किस ( गुण ) की अवांछनीयता के कारण ये सब दूषित हो रहे हैं।

टिप्पणी—रानी के कहने का आशय यह है कि कुलीनता, सुन्दरता, कुशलता और प्रजा के प्रति वात्सल्य भाव ये सब तो ऐसे गुण हैं जो वर में होने चाहिए और ये सब वत्सराज में हैं भी। पर क्या बात है कि आप इनको दोषी ठहराते हैं ? निश्चय ही आप उसके प्रति ईर्ष्या रखते हैं। यह तो इसी से मालूम हो जाता है।

राजा—देवि ! तुम इस विषय में क्यों आश्चर्य करती हो ?

देखो—

तृणसमूह में फेंकी हुई आग के समान सारी पृथ्वी को जलाता हुआ मेरा शासन इसके देश में नहीं चलता। [ प्रद्योत के कहने का भाव यह है कि मैं इतना प्रतापी राजा हूँ कि सम्पूर्ण भूमंडल पर मेरा शासन मान्य है पर इसके देश में मेरा कुछ प्रभाव नहीं है ] ॥ ११ ॥

( प्रविश्य )

काञ्चुकीयः—जयतु महासेनः। यथाज्ञाप्रयुक्तसत्कारं प्रविष्टः शालङ्कायनः। स तु विज्ञापयति–इदं भरतकुलोपभुक्तं वत्सराजकुले द्रष्टव्यं घोषवती नाम वीणारत्नम्। महासेनः प्रतिग्राहयितव्य इति। (वीणां दर्शयति।)

राजा—प्रतिगृहीतं जयमङ्गलम्। ( वीणां गृहीत्वा ) इयं सा घोषवती नाम। यैषा,

**श्रुतिसुखमधुरा स्वभावरक्ता करजमुखोल्लिखिताग्रघृष्टतन्त्री।**
**ऋषिवचनगतेव मन्त्रविद्या गजहृदयानि बलाद्वशीकरोति ॥१२॥**

---

भरतकुलोपभुक्तम्—भरतकुलेन उपभुक्तम् इति तथोक्तम्, वत्सराजकुले द्रष्टव्यम् = दृष्टिप्रियम्, वीणारत्नम् = प्रशस्ता वीणा। प्रतिग्राहयितव्यः = दातव्यः।

जयमङ्गलम् = जयरूपस्य मङ्गलस्य ज्ञापकत्वात् जयमङ्गलम् वीणारत्नमित्यर्थः।

श्रुतिसुखमधुरा—श्रुतिसुखेन मधुरा निस्स्वनेन स्वकीयशब्देन वा कर्णसुखजननी अत एव मधुरा = दर्शनीया। स्वभावरक्ता—स्वभावेन रक्ता इति स्वभावरक्ता रागाख्यगीतिधर्मवती। करजमुखोल्लिखिताग्रघृष्टतन्त्री-करजाः नखाः, करजानाम् मुखैः इति करजमुखैः = नखाग्रभागैः यद् उल्लिखितम् = उल्लेखनम् ऊर्ध्वभागे स्पर्शनम् तेन अग्रघृष्टा अग्रे वादिता नादार्थम् तन्त्री यस्याः सा करज-

---

( प्रवेश कर )

कंचुकी—महासेन की जय हो। आपके आदेशानुसार सत्कार पाकर शालंकायन आए हैं। उनका कहना है—भरतवंशवालों से उपभुक्त वत्सराज के कुल में की प्रिय यह घोषवती नाम की श्रेष्ठ वीणा है। यह महासेन को दे दी जाय। ( वीणा दिखाता है )

राजा—जयमंगल ( वीणा रत्न ) ले लिया। ( वीणा लेकर ) यह वही घोषवती नाम की वीणा है जोः—

कानों को सुख देने वाली सुन्दर तथा स्वभाव से ही ( नानाविध ) रागों को निकालनेवाली और नख के अग्रभाग से जिसके तार बजाये जाते हैं ऐसी यह वीणा ऋषियों के वचन के अन्तर्गत मंत्रविद्या की तरह हाथियों के हृदय ( मन ) को वश में कर लेती है ॥ १२ ॥

भोः ! समरावजितानां रत्नानामिष्टजनसम्भोगः प्रीतिमुत्पादयति ।

अर्थशास्त्रगुणग्राही ज्येष्ठो गोपालकः सुतः ।
गान्धर्वद्वेषी व्यायामशाली चाप्यनुपालकः ॥ १३ ॥

क्व नु खल्वियं सुन्यस्ता भवेत् ? देवि ! वासवदत्ता वीणामुपक्रान्ता ननु ?

देवी—आम् ।

राजा—तेन हि इयमस्यै प्रदीयताम् ।

---

मुखोल्लिखिताग्रपृष्ठतंत्री, वीणायाः विशेषणमस्ति । अपिवचनगता मंत्रविद्या इव गजहृदयानि—गजानां हृदयानि=मनांसि बलात्=हठात् वशीकरोति इत्यर्थः ॥१२॥

समरावजितानाम्—समरे = संग्रामे अवजितानाम् = वशीकृतानाम् रत्नानाम् इष्टजनसंभोगः—इष्टेन = श्रेष्ठजनेन, संभोगः = श्रेष्ठजनकर्तृकोऽनुभवः प्रीतिमुत्पादयति आनन्दं जनयतीत्यर्थः ।

कस्मै वीणा दातव्या, एतदेव स्पष्टीकरोति—अर्थशास्त्रेत्यादिना ।

मम ज्येष्ठः=अग्रजः, सुतः = पुत्रः, गोपालकः ( गोपालक इति तस्य ज्येष्ठपुत्रस्य नाम आसीत् ) अर्थशास्त्रगुणग्राही—अर्थशास्त्रम् = राजविद्या, तस्य गुणग्राही = ज्ञाता अस्ति ( नहि खलु संगीतविद्यायाः इति ध्वन्यते ) । अनुपालकः = गोपालकानुजन्मा ( मम सुतः ) व्यायामशाली = मल्ल-विद्याप्रेमी, अत एव गान्धर्वद्वेषी = संगीतविद्यायामरसिकः इति भावः ॥ १२ ॥

सुन्यस्ता = सुष्ठु निक्षिप्ता । उपक्रान्ता=अभ्यसितुमारब्धवती । क्व नु खलु= कस्मिन्निष्टजने ।

---

समर में जीते हुए रत्नों का श्रेष्ठ जन द्वारा उपभोग आनन्द का देने वाला है ।

मेरा ज्येष्ठ पुत्र गोपाल तो अर्थशास्त्र का जाननेवाला है, उससे छोटा व्यायाम का प्रेमी है और गानविद्या में उसकी स्पृहा नहीं है ॥ १३ ॥

यह वीणा किसको दूँ ? देवि ! क्या वासवदत्ता वीणा का अभ्यास करने लगी है ?

देवी—हाँ ।

राजा—इस लिये उसी को यह वीणा दी जाय ।

देवी—वीणाप्पदाणेण भूओ वि उम्मत्ता विअ चिट्ठदि । [ वीणाप्रदानेन भूयोऽप्युन्मत्तेव तिष्ठति । ]

राजा—क्रीडतु क्रीडतु । नैतत् सुलभं श्वशुरकुले । बादरायण ! क्व सा ?

काञ्चुकीयः—अमात्येन सहोपविष्टा ।

राजा—अथ वत्सेष्वधिकृतः ।

काञ्चुकीयः—आहितविनयत्वात् पादयोरङ्गे तस्य बहुप्रहारत्वाच्च स्कन्धवाह्येन शयनीयेन मध्यमगृहे प्रवेशितः ।

राजा—हा धिग् !! बहुप्रहारः । एष इदानीं निरुपस्कृतस्य तेजसो दोषः । नृशंसः खल्वस्मिन् काल उपेक्षितवान् । बादरायण ! गच्छ । भरतरोहकं ब्रूहि—क्रियतामस्य व्रणप्रतिकर्मेति ।

---

काञ्चुकीयः—पादयोः = चरणयोः आहितविनयत्वात्—विनीयतेऽनेनापराधीति विनय इह निगडः 'बेडी' इति लोके प्रसिद्धः, स आहितो = निवेशितो यस्य स आहितविनयः, तस्य भावस्तत्त्वम्, तस्मात् ।

राजेति—हा धिगिति बहुप्रहारतानुशोचनम् । निरुपस्कृतस्य = अनाहितसंस्कारस्य तेजसः अयं दोषः । अस्मिन्=व्रणप्रतिकर्मार्हे समये एतस्य उपेक्षां कुर्वन् जनः नृशंसः घातुकः खलु भवति । व्रणप्रतिकर्म = व्रणचिकित्सा ।

---

देवी—वीणा पाने से तो वह और भी उन्मत्त हो जायगी । तात्पर्य यह है कि वीणा के बिना ही वह संगीत में इतना रम गई है, यदि उसे वीणा दे दी जाय तो वह और भी उन्मत्त हो जायगी ।

राजा—खेलने दो, खेलने दो । यह तो ससुराल में नहीं सुलभ हो सकती । बादरायण ! वह कहाँ है ?

कंचुकी—मंत्री के साथ बैठी है ।

राजा—वत्सराज कहाँ है ?

कंचुकी—पैर में बेड़ी पड़ी रहने से और शरीर में बहुत चोट लगने के कारण पालकी में बैठा कर उसे मध्यम गृह में ठहरा दिया है ।

राजा—हाय ! इतनी अधिक चोट ! यह तो उद्धत तेज का दोष है । ऐसे समय में इसकी उपेक्षा कर के बहुत अनुचित किया । बादरायण ! भरतरोहक से जाकर कहो कि इसके घावों में मलहम-पट्टी बाँधे ।

काञ्चुकीयः—यदाज्ञापयति महासेनः।

राजा—अथवा एहि तावत्।

काञ्चुकीयः—अयमस्मि।

राजा—अस्य सर्वदर्शनमविमुक्तसत्कारमवगन्तव्यम्। आकारसूचिता अस्य प्रीतयो विज्ञेयाः। अतिक्रान्तविग्रहाश्रिताः कथा न कथयितव्याः। क्षुतादिप्रयोगेष्वाशिषोऽभिधेयाः। कालसंवादिना स्तवेनाच्र्यः।

काञ्चुकीयः—यदाज्ञापयति महासेनः। (निष्क्रम्य प्रविश्य) जयतु महासेनः। पथ्येव कृतव्रणप्रतिकर्मा वत्सराजः। अकालस्तावदिदानीं

---

सर्वदर्शनम्=अन्तर्गताभिलापसूचनी सर्वविषयादृष्टिः, अविमुक्तसत्कारम्—यथा स्यात्तथा बहुमानपूर्वकम् अवगन्तव्यम्=अवगम्य सफलयितव्यम्। आकारसूचिताः=चेष्टाभिव्यक्ताः प्रीतयः=प्रीतिविषयाः, विज्ञेयाः=ज्ञातव्याः। अतिक्रान्तविग्रहाश्रिताः—अतिक्रान्तः विग्रहः=युद्धम्, अतिक्रान्तविग्रहः तमाश्रिताः इति अतिक्रान्तविग्रहाश्रिताः। कालसंवादिना स्तवेन = स्नानजागरणभोजनादिसमये उचितस्तुत्या, समयानुसारप्रशंसया इति भावः।

पथ्येव—पथि एव = मार्गे एव। कृतं व्रणप्रतिकर्म यस्य सः कृतव्रणप्रतिकर्मा।

---

कंचुकी—जैसी महासेन की आज्ञा।

राजा—अथवा यहाँ आओ।

कंचुकी—मैं यहाँ हूँ।

राजा—इसका सब प्रकार से सत्कार करना। इसकी आकृति (रुख) से ही समझ लेना कि यह क्या चाहता है। बीते हुए युद्ध की चर्चा न करना। जब इसको जमुहाई अथवा छींक इत्यादि आवे तो आशीर्वादात्मक वचन का प्रयोग करना। समयानुसार पूजा की सामग्री से इसकी पूजा करना।

टिप्पणी—लोक में प्रचलित है कि जब किसी को छींक या जमुहाई आती है तो अक्सर लोग कहते हैं 'शतं जीव'। उसी बात से महासेन का तात्पर्य है। राजाओं की स्तुति भिन्न-भिन्न समय पर भिन्न-भिन्न रीति से वंदीजन करते हैं। महासेन के कहने का यही अभिप्राय है कि इसी प्रकार इसकी भी स्तुति की जाय।

कंचुकी—जैसी महासेन की आज्ञा—(जाकर प्रवेश कर) महासेन की जय हो। वत्सराज की मलहम-पट्टी मार्ग में ही हो गई। अब दूसरी पट्टी बांधने का

द्वितीयस्य प्रतिकर्मण इति। मध्याह्नमारोहति दिवाकरः।

राजा—अथ कस्मिन् प्रदेशे वीरमानी ?

काञ्चुकीयः—मयूरयष्टिमुखे।

राजा—हा धिग्, अनाश्रयणीयः खल्वयं देशः। आतपप्रातिकूल्यार्थं मणिभूमिकायां प्रवेशयेत्याज्ञापय।

काञ्चुकीयः—यदाज्ञापयति महासेनः। (निष्क्रम्य प्रविश्य) यदाज्ञप्तं महासेनेन तत् सर्वमनुष्ठितम्। अमात्यस्तु भरतरोहको महासेनं द्रष्टुमिच्छति।

राजा—व्यक्तं न रोचते तस्मै वत्सराजसत्क्रिया। अस्यैष नीतेः परिश्रमः। अहमेवैनमनुनयामि।

---

मयूरयष्टिमुखे—मयूरस्थित्यर्थम् यष्ट्यो यत्र स्थापिताः स सौधविशेषः, तस्य मुखे अग्रिमकक्ष्यायामित्यर्थः।

अनाश्रयणीयः न आश्रयणीयः इति अनाश्रयणीयः = अधिवस्तुमयोग्यः, आतपप्रातिकूल्यार्थं—आतपसन्निकर्षाद् इत्यर्थसिद्धम्, तद्वारणाय इति भावः।

मणिभूमिकायाम् = मणिप्रचुरकक्ष्यायाम्।

व्यक्तम्=नूनम्, अवश्यम्। एषः=वत्सराजग्रहणरूपकार्यविशेषः; अस्य नीतेः

---

यह समय नहीं है। सूर्य भी चढ़ आया है और दोपहर हो गया है।

राजा—वह मानी वीर कहां है ?

कंचुकी—मयूरयष्टि नामक (महल) के अगले भाग में।

राजा—यह स्थान रहने योग्य नहीं है, क्योंकि यहां धूप अधिक आती है। धूप से बचने के लिये मणिमय भाग में उसे स्थान दो।

कंचुकी—महासेन की जैसी आज्ञा (निकल कर फिर प्रवेश कर) जो कुछ महासेन ने आज्ञा दी थी वह सब कर दिया गया। मंत्री भरतरोहक महासेन का दर्शन करना चाहते हैं।

राजा—अवश्य, वत्सराज का यह सत्कार उसे अच्छा नहीं लग रहा है। उसी की नीति का यह फल है (कि वत्सराज पकड़ा गया)। मैं ही इसको समझाऊँगा।

देवी—किं सम्बन्धो णिच्चिदो ? [ किं सम्बन्धो निश्चितः ? ]

राजा—न तावन्निश्चयो गम्यते ।

देवी—अलं दाणि तुवरिअ । बाला मे दारिआ । [ अलमिदानीं त्वरित्वा । बाला मे दारिका । ]

राजा—यदभिरुचितं भवत्यै । प्रविशत्वभ्यन्तरम् ।

देवी—जं महासेणो आणवेदि । ( निष्क्रान्ता सपरिवारा । ) [ यन्महासेन आज्ञापयति । ]

राजा—( विचिन्त्य )

पूर्वं तावद् वैरमस्यावलेपादानीते-
ऽस्मिन् स्यात् तु मध्यस्थता मे ।

---

परिश्रमः = भरतरोहकनीतिप्रयोगप्रयासः ।

पूर्वं तावत् = ग्रहणात् पूर्वम् आनयनात् प्राक् इत्यर्थः । अस्य = वत्सराजस्य, अवलेपात् = अभिमानात्, दर्पात् मम वैरम् = शत्रुता, विरोधः आसीत् । अस्मिन् वत्सराजेऽत्र आनीते सति मे मध्यस्थता = उदासीनता, शत्रुमित्रभाव-

---

देवी—क्या ( विवाह ) सम्बन्ध ठीक हो गया ?

राजा—अभी तो निश्चय नहीं हुआ ।

देवी—अब शीघ्रता न कीजिये । मेरी लड़की अभी छोटी है ।

राजा—जो तुम्हें अच्छा लगे ( वही करो ) । अन्दर चलो ।

देवी—जैसी महासेन की आज्ञा ( परिचारकों-पारिचारिकाओं के साथ निकल जाती है ) ।

राजा—( चिन्ता करके )

पहले तो इसके अभिमान के कारण मेरी इसकी शत्रुता थी । इसके यहाँ ( वन्दी बनाकर ) ले आने पर मैं तटस्थ हो गया । परन्तु युद्ध में व्यग्र और

युद्धक्लिष्टं संशयस्थं विपन्नं श्रुत्वा
त्वेनं संशयं चिन्तयामि ॥ १४ ॥

( निष्क्रान्तौ । )

इति द्वितीयोऽङ्कः ।



रहिता । स्यात् = भवेत्; अहम् तटस्थो जातः इत्यर्थः । किन्तु युद्धक्लिष्टम्— युद्धे क्लिष्टम् संग्रामपीडितं विपन्नम् = ग्रहणरूपां विपत्तिं प्राप्तम् । एनम् संशयस्थम् = 'जीवति वा न वा ?' इति संदेहस्य विषयभूतम् श्रुत्वा = निशम्य संशयम् चिन्तयामि = तज्जीवितसन्देहं स्मरन्नाधिमान् भवामीत्यर्थः । चिन्तिरिह मनोव्यथाकरे स्मरणे वर्तते । स्निग्धचेष्टितं खलु तदेतच्चिन्तनमित्यभिप्रायः । अथवा संशयं चिन्तायामीत्यस्यायमर्थः—संशयं संशयहेतुं रुजाम्, चिन्तयामि चिकित्सारम्भणैः प्रत्यवेक्षे इति ॥ १४ ॥

आपद्ग्रस्त तथा संशय में पड़े हुए ( कि जीवित है या मर गया ) इसको सुनकर मैं भी चिन्ता में पड़ गया हूं।

( दोनों निकल जाते हैं )

॥ दूसरा अङ्क समाप्त हुआ ॥



# अथ तृतीयोऽङ्कः

( ततः प्रविशति डिण्डिकवेषो विदूषकः । )

विदूषकः—( निरूप्य ) भो ! देवउलपीठिआए मम मोदअमल्लअं णिक्खिविअ दक्खिणामासआणि गणिअ बन्धिअ पडिणिवुत्तो दाणि मोदअमल्लअं ण पेक्खामि । ( विचिन्त्य ) आ ! एकमोदअपरितोसिदो ण दाव ओलग्गो मं अणुसरदि । उच्चदाए पाआरस्स अगई कुक्कुराणं । अक्खदभत्तदाए अलोहणीअं पहिआणं । आदु अपि णं खाआमि । भोदु ओग्गारइस्सं दाव अहं । ही ही वुड्ढो विअ सूअरवत्थी सुद्धवादं एव्व उग्गिरामि । अहव लोहिदकच्चाअणीए केरअं मम केरअं त्ति करिअ सिवेण पडिहत्थीकिदं भवे । ( निरूप्य ) जदि वि एसो बम्हआरी बहुकेहि रूवेहि अविणअं करेदि । भोदु पेक्खिस्सं दाव अहं । भो ! एदं खु मम मोदअमल्लअं सिवस्स पादमूले चिट्ठइ । जाव णं गह्लामि । देहि भट्टा ! देहि मे मोदअमल्लअं । भट्टा ! तुवं वि मम चोरो सि । अविहा ! आलिहिदं खु मम मोदअमल्लअं संदावतिमिरेण सुट्ठु ण पेक्खामि ।

---

डिण्डिकवेषः = डिण्डिको नाम यो विकृतवेषभाषणादिना जनस्य हास्यं जनयन् भिक्षामर्जयति स उच्यते । तस्येव वेषो यस्य स डिण्डिकवेषः ।

---

( टिण्डिक वेष में विदूषक का प्रवेश )

विदूषक—अरे ! शिवालय के चबूतरे पर मैं अपना सुन्दर मोदक ( लड्डू ) रखकर दक्षिणा में पाये हुए सुवर्ण-खण्डों को गिनकर और बाँधकर ( चला गया था ), पर लौटने पर मैं अपने लड्डुओं को नहीं देखता हूँ । ( यह भिक्षु भी ) तो जो एक लड्डू खाकर सन्तुष्ट हो गया था, मेरे पीछे-पीछे नहीं आया । चहार दिवाली के ऊँचे होने से कुत्ते भी नहीं आ सकते । पथिक भी इसे न लेंगे, क्योंकि उनके पास खाने की सामग्री पर्याप्त है अथवा मैंने ही इनको न खा डाला हो । अच्छा, अब मैं उगलता हूँ । अरे मेरे उगलने से केवल शुद्ध वायु ही निकल रही है जैसे कि फूले हुए सूकर ( सूअर ) के पेडू से । अथवा रक्त-चामुण्डा की वस्तुओं को अपनी समझ कर शंकर ने ही उसे ले लिया हो । अथवा इस ब्रह्मचारी ( गणेश ) ने तो यह अनर्थ ( मोदक की चोरी ) नहीं किया ? अच्छा देखता हूँ । अरे ! यह मेरा लड्डू शिव जी के चरण के पास है ।

भोदु पमज्जिस्सं दाव अहं। ही ही साहु ले चित्तअर! भाव! साहु! जुत्तलेहदाए वण्णाणं जह जह पमज्जामि, तह तह उज्जलदरं होइ। भोदु, उदएण पमज्जिस्सं। कहिं णु हु उदअं? इदं सोहणं सुद्धतडाअं। अहं विअ सिवो वि दाव एदस्सिं मोदअमल्लए णिरासो होदु। [ भोः! देवकुलपीठिकायां मम मोदकमल्लकं निक्षिप्य दक्षिणामापकान् गणयित्वा बद्ध्वा प्रतिनिवृत्त इदानीं मोदकमल्लकं न प्रेक्षे। आ! एकमोदकपरितोषितो न तावदवलग्नो

---

देवकुलपीठिकायां—देवकुलस्य = शिवालयस्य पीठिकायाम् अलिन्दे। मोदकमल्लकम्—मोदकाः = अपूपविशेषाः तद्युक्तं मल्लकं = पात्रम्, 'मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि' इति मेदिनी। निक्षिप्य = स्थापयित्वा। दक्षिणामापकान् = ऋत्विजे दीयमाना भृतिः दक्षिणा दक्षिणात्वेन लब्धान् हेमलवान्। गणयित्वा बद्ध्वा प्रतिनिवृत्तः—प्रतिनिवृत्त्येत्यर्थः, मोदकमल्लकं न प्रेक्षे इति वाह्यः अर्थः। द्वितीयार्थः—देवस्य = महासेनदेवस्य कुलपीठिकायां = वंशपीठिकायां मालिकायाम् कीर्तिगौरवाधिष्ठानभूतायाम् वासवदत्तायामित्यर्थः। मम मोदकमल्लकम् = प्रियश्रेष्ठम् वत्सराजम् निक्षिप्य तस्मिन् दृष्टानुरागा सा तमवश्यं चिन्तयिष्यति इति विस्रम्भात् अर्पयित्वा इत्यर्थः। अथवा अर्पितम् आत्मानम् विज्ञाय इत्यर्थः। दक्षिणामापकान् गणयित्वा = वत्सराजदत्तानि प्रतिसन्देशवाक्यानि ज्ञात्वा बुद्ध्वा मनसि स्थिरीकृत्य प्रतिनिवृत्तः अहम् इदानीं मोदकमल्लकम् = मोदकस्य सन्तोषस्य वासवदत्ताहरणरूपस्य कार्यस्य मल्लकम् निर्वहणसमर्थम् पात्रम् यौगन्धरायणं मन्त्रार्थम् कृतसमयम् न पश्यामि इत्यभिप्रायः। अवलग्नः = अवसक्तः मोदकखादनसक्तः मोदकानयनवेलायां तदाशया पथि सङ्गतो वा भिक्षुक इत्यर्थः।

---

इनको लेता हूँ। ऐ स्वामी! मेरा मोदक दो; मेरा लड्डू दो। अरे स्वामी! तुम्हीं ने लड्डू चुराया है। स्वामी! तुम्हीं तो मेरे चोर हो। चित्र में चित्रित अपने मोदक को मैं तेज धूप के कारण चकाचौंध हुई अपनी आँखों से नहीं देख रहा हूं। अब मैं इनको ढूँढूँगा। धन्य रे चित्रकार! धन्य! रङ्ग इसमें इस प्रकार से भरे गए हैं कि जसे जैसे साफ करता हूँ वैसे-वैसे वह अधिक सफेद होता जा रहा है। तथापि, जल से साफ करूंगा। जल कहां है। यह स्वच्छ सरोवर है। मेरी तरह महादेव जी को भी इस लड्डू के विषय में निराश होना पड़े।

मामनुसरति । उच्चतया प्राकारस्यागतिः कुक्कुराणाम् । अक्षतभक्ततयालोभनीयं पथिकानाम् । अथवा अप्येनं खादामि ? भवतु, उद्गिरिष्यामि तावदहम् । ही हीं वृद्ध इव सूकरवस्तिः शुद्धवातमेवोद्गिरामि । अथवा लोहितकात्यायन्याः सम्बन्धि मम सम्बन्धीति कृत्वा शिवेन प्रतिहस्तीकृतं भवेत् । यद्यप्येष ब्रह्मचारी बहुकै रूपैरविनयं करोति । भवतु, प्रेक्षिष्ये तावदहम् । भोः ! एष खलु मम मोदकमल्लकः शिवस्य पादमूले तिष्ठति । यावद् एनं गृह्णामि । देहि भर्तः ! देहि मे मोदकमल्लकम् ।

हीशब्दो हर्षे । वृद्धः = आध्मातः । सूकरवस्तिः—सूकरस्य वस्तिः इति सूकरवस्तिः = वराहमूत्राशय इवेत्यर्थः । शुद्धवातम् = मोदकगंधशून्यम् वायुमेव निस्सारयामि इति वाच्योऽर्थः । द्वितीयाभ्यन्तरार्थः—केवलम् शुद्धवाक्यमेव. उद्गिरामि = उक्तवान् ।

लोहितकात्यायन्याः सम्बन्धि तन्मन्दिरलब्धत्वात् तदीयमित्यर्थः, मम सम्बन्धीति कृत्वा स्वपरिचारदैवतस्वामिकम् द्रव्यम् स्वीयमिति मत्वा । लोहित-कात्यायन्याः—इति लोहितकात्यायनी = चामुण्डा, देवी । प्रतिहस्तीकृतम् भवेत् = स्वहस्तगतम् कृतम् स्यात् । द्वितीयार्थः—अथवा लोहितकात्यायन्याः सम्बन्धि = वासवदत्तायाः सम्बन्धि वत्सराजरूपम् वस्तु मत्सम्बन्धीति कृत्वा मद्वश्यमनायासेन कौशाम्बीं नेतुं शक्यमिति मत्वा मोदकं प्रियं कर्तुम् संकेतितपूर्वम् कौशाम्बीप्रयाणविषयम् मंत्रणकर्म प्रतिहस्तीकृतम् भवेत्–अप्रधानी-कृतम् भवेत् । यद्यप्येष ब्रह्मचारी—यद्यपि = अथवा एकस्मिन् निर्जने देवालये प्रतिष्ठितः गणेश इति भावः । एष ब्रह्मचारी = ब्रह्म चरतीति ब्रह्मचारी बहुकैः रूपैः = अनेकप्रकारैः अविनयम् = दुर्वृत्तम् मोदकापहाररूपम् करोति = कृतवान् । भवतु प्रेक्षिष्ये तावत् अहम् । द्वितीयार्थः—शिवस्यार्चनां करिष्यामि अथवा यावत् कालं यौगन्धरायणः न आगमिष्यति तावत् प्रेक्षिष्ये इत्यर्थः । मोदकमल्लकः शिवस्य पादमूले तिष्ठति । द्वितीयार्थः—मोदकमल्लकवासवदत्ता-सहितवत्सराजहरणरूपम् शिवस्य यौगन्धरायणस्य पादमूले तिष्ठति यौगन्धराय-णैकसाध्यत्वात् तदधीनमित्यर्थः । एनम् गृह्णामि स्पष्टार्थः । द्वितीयार्थः—'वासव-दत्तासहितवत्सराजपलायनरूपाभिलाषः पूर्णो भवेत्' इत्येवं याचनां करोमि ।

आभ्यन्तरार्थः—प्राकारस्य प्राकारतुल्यस्य यौगन्धरायणस्य उच्चतया प्रणी-तत्त्वेन हेतुना कुक्कुराणां नीचबुद्धित्वेन श्वतुल्यानां महासेनसचिवानाम् अगतिः,

भर्तः! त्वमपि मम चोरोऽसि। अविधा! आलिखितं खलु मम मोदकमल्लकं सन्तापतिमिरेण सुष्ठु न प्रेक्षे। भवतु, प्रमार्जिष्यामि तावदहम्। ही ही साधु रे चित्रकर! भाव! साधु। युक्तलेखतया वर्णानां यथा यथा प्रमार्ज्मि, तथा तथो-

---

गतिरुपायो नास्ति, अर्थात् यौगन्धरायणम् विग्रहीतुम्। अतो महासेनसचिवैः स विज्ञाय निगृहीत इति शङ्काया नावकाशः। अक्षतभक्ततया=अहीनान्नतया पाथेयसम्पन्नतया हेतुना। अलोभनीयम्=अभिलपणीयम् न भवति, अध्वगानाम्=पथिकानाम्। आभ्यन्तरार्थः—पथिकानाम्=नित्यसंचारितया पथिकतुल्यानाम् चाराणाम्। अक्षतभक्ततया=भोगोपभोगवस्तुसम्पन्नतयेति भावः। अतएव अलोभनीयम्—स्वामिसकाशात् प्राप्तव्यं किमपि नास्ति एवञ्च पूर्णकामताहङ्कारग्रस्ततया महासेनचाराणाम् स्वकर्मणि यथावद् व्यापाराभाव इति भावः। अतः यौगन्धरायणः चारैः विज्ञाय गृहीतो भविष्यति इति आशङ्कायाः अनवकाशः। अथवा पथिकानाम्=अस्मद्भृत्यानाम् गूढचारिणाम्, अक्षतभक्ततया=अक्षतया अनपायया भक्तया स्वाम्यनुरागेण हेतुना अलोभनीयम् शत्रुपक्षसकाशात् स्पृहणीयं किमपि नास्ति। तेनास्मदीयैः भृत्यैः परप्रलोभनदूषितैः यौगन्धरायणो ग्राहित इति न शङ्कनीयम्।

अथवा अपि एनम्—अथवा एनम् मोदकम् अपि खादामि? भक्षितवान् किम् इति वाह्योऽर्थः। अथवा अहमेव प्रमादयुक्तं वचनमभिधाय यौगन्धरायणं नाशितवानिति आभ्यन्तरार्थः।

उद्गरिष्यामि तावत्—उदरात् वहिः करिष्यामि इति वाह्यार्थः। प्रमादयुक्तवचनं आलोचयिष्यामीति आभ्यन्तरार्थः। अविधा—इति खेदे, दुःखसूचकं अव्ययपदम्। आलिखितम्—आलेख्ये=चित्रेऽर्पितम् न तु सत्यम्। सन्तापतिमिरेण—सन्ताप एव तिमिरम्, तेन सन्तापतिमिरेण=उग्रतापाभिघातजनितेन चक्षुर्जडिम्ना। प्रमार्जयिष्यामि=करेणाभिमृश्य शोधयिष्यामि।

ही हीति शब्दो हर्षसूचकः। चित्रकर!=आलेख्यशिल्पिन्। वर्णानाम्=शुक्लनीलादीनां वर्णानाम्। युक्तलेखतया=पर्याप्तनिवेशितया हेतुना। यथा यथा प्रमार्ज्मि तथा तथा उज्ज्वलवर्णम् भवति। द्वितीयार्थः—हे चित्रकर!=अद्भुतनीतिप्रयोगकुशल! (यौगन्धरायण)। युक्तलेखतया=यथार्हं प्रणयनतया। वर्णानाम्=प्रकाराणाम् त्वदीयकार्यविधानानाम् इत्यर्थः। प्रमार्ज्मि=सारतां

उज्वलतरं भवति। भवतु, उदकेन प्रमार्जिष्यामि। कुत्र नु खलूदकम्? इदं शोभनं शुद्धतटाकम्। अहमिव शिवोऽपि तावद् एतस्मिन् मोदकमल्लके निराशो भवतु। ]

( नेपथ्ये )

मोदआ! मोदआ! हहह। [ मोदकाः! मोदकाः! हहह। ]

विदूषकः—अविहा! एसो उन्मत्तओ मम मोदअमल्लअं गहिअ हसमाणो फेणायमाणमलिणवरिसारच्छोदअं विअ इदो एव्वाहावइ। चिट्ठ चिट्ठ उम्मत्तअ! चिट्ठ। इमिणा दण्डअट्ठेण सीसं दे भिन्दामि। [अविधा! एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा हसमानः फेनायमानमलिनवर्षारथ्योदकमिवेत एवाधावति। तिष्ठ तिष्ठोन्मत्तक! तिष्ठ। अनेन दण्डकाष्ठेन शीर्षं ते भिनद्मि। ]

( ततः प्रविशत्युन्मत्तकः। )

---

तथा असारतां च विवेचयामि। उज्ज्वलतरम् = सारतरम्, उदकेन प्रमार्जिष्यामि स्पष्टोऽर्थः। द्वितीयार्थः—उदकव्याजेन इदं सूचयति यत् क्वचित् कश्चिन् जले आत्मानं गोपयित्वा मम गोपनीयवचनं श्रृणोति नवेति भावः। शोभनतटाकम्—शुद्धं निर्मलजलम् अथ च जनसान्निध्यदोषरहितम् तटाकं यस्मिन् तत् तथाभूतम्—अतएव शोभनम् मङ्गलकरम्।

अहमिव भवतु—स्पष्टोऽर्थः। द्वितीयार्थः—शिवोऽपि यौगन्धरायणोऽपि। एतस्मिन् मोदकमल्लके = वासवदत्तारहितवत्सराजहरणे। निराशो भवतु=त्यक्ताभिलाषो भवतु।

गृहीत्वा=अपहृत्य। रथ्योदकमिव=प्रतोलीजलवत् इत एव=अत्रैव, आधावति=द्रुतमागच्छति। द्वितीयार्थः—उन्मत्तकः=उन्मत्तसदृशः यौगन्धरायणः। मोदकमल्ल-

---

( नेपथ्य में )

मोदक, मोदक, ह ह ह!

विदूषक—यह उन्मत्तक मेरे मोदक को लेकर हँसता हुआ वर्षा के समय गली के गन्दे फेनयुक्त जल के समान इधर ही आ रहा है। उन्मत्तक! ठहरो ठहरो। इस डण्डे से तुम्हारा सिर फोड़ूँगा।

( इसके बाद उन्मत्तक ( यौगन्धरायण ) का प्रवेश। )

उन्मत्तकः—मोदआ ! मोदआ ! अहह । [मोदकाः ! मोदकाः ! हहह । ]

विदूषकः—भो उन्मत्तअ ! आणेहि मम मोदअमल्लअं । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । ]

उन्मत्तकः—किं मोदआ । कहिं मोदआ । कश्श मोदआ । किं इमे मोदआ उज्झन्ति, आदु पिणज्झन्ति, उदाहो खज्जन्ति । [ किं मोदकाः ? कुत्र मोदकाः ? कस्य मोदकाः ? किमिमे मोदका उज्झ्यन्ते, अथवा पिनह्यन्ते उताहो खाद्यन्ते ? ]

विदूषकः—ण खज्जन्ति ण खज्जन्ति ण उज्झन्ति अ । [ न खाद्यन्ते न खाद्यन्ते नोज्झ्यन्ते च । ]

---

कम् = मम प्रियतरं मन्त्रावसरम् गृहीत्वा=अपहृत्येति भावः ।

वाह्योऽर्थः स्पष्ट एव । आभ्यन्तरार्थः—मोदकाः = मंत्रा अज्ञाताः किम् । किम्शब्दः अज्ञातार्थे ।

कुत्र मोदकः—किं स्वपक्षोत्थदोपप्रतीकारविषये अथवा परपक्षोत्थदोपप्रतीकारविपये मंत्राः कर्तव्याः ।

कस्य मोदकाः—मोदकाः = अस्मत्स्वामिनः । 'आत्मनि गुरौ च वहुत्वम्' इति वचनवलेन आदरार्थे वहुवचनम् प्रयुक्तम् । मोदकः कस्य—किंसम्बन्धी; किमस्माकं वश्य उत परवश्यः ? परवश्यत्वपक्षे आह—मोदकाः = स्वामिप्रत्यानयनार्थे धार्यमाणाः वेपाः किम् उज्झ्यन्ते = फलनैराश्यात् किं त्यज्यन्ते । अथवा किं पिनह्यन्ते = यावत् फलोदयं किं वध्यन्ते । फलप्रत्याशावीजं किञ्चिदस्ति किमित्यभिप्रायः । उताहो किं खाद्यन्ताम् किं हन्यन्ताम् ! अर्थात् स्वामिमोचनवामचेष्टिताः शत्रवः ।

---

उन्मत्तक—मोदक, मोदक, ह ह ह !

विदूषक—ऐ उन्मत्तक ! मेरा मोदक लाओ ।

उन्मत्तक—कैसे लड्डू; कहाँ के लड्डू ? किसके लड्डू ? क्या ये लड्डू फेंके जायँगे अथवा बाँधे जायँगे या खाये जायँगे ?

विदूषक—न तो खाये जायँगे और न तो त्यागे जायँगे ।

उन्मत्तकः—एसा खु मम रसणा खाइदुकामा लिङ्गाणि करेदि । [ एषा खलु मम रसना खादितुकामा लिङ्गानि करोति । ]

विदूषकः—भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । मा परकेरए सिणेहं करिअ ओवज्झेहि । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । मा परकीये स्नेहं कृत्वा अववध्यस्व । ]

उन्मत्तकः—के के मं वज्झन्ति ? मोदआ खु मं रक्खन्ति ।
[ के के मां वध्नन्ति ? मोदकाः खलु मां रक्षन्ति । ]

णेवच्छविसेसमण्डिदा पीदिं उवदेदुं उवट्ठिआ ।
लाअगिहे दिण्णमुल्लिआ कालवसेण मुहुत्तदुब्बला ॥ १ ॥
[ नेपथ्यविशेषमण्डिताः प्रीतिमुपदातुमुपस्थिताः ।
राजगृहे दत्तमूल्या कालवशेन मुहूर्तदुर्बलाः ॥ ]

---

उन्मत्तक इति । वाह्योऽर्थः स्पष्ट एव । मम रसना=बुद्धिः, खादितुकामा=शत्रून् हन्तुकामा लिङ्गानि = जिघांसुचिह्नानि करोति । इति आभ्यन्तरोऽर्थः ।

विदूषक इति । आभ्यन्तरोऽर्थः=मोदकमल्लकम् = मंत्रावसरम् आनय = देहि । वृत्तान्ततत्त्वं ते निवेदयामि इति । परकीये = वत्सराजे पराधीने सति यथानिश्चित-तत्कौशाम्बीप्रयाणाय निवेशं कृत्वा शत्रुवद्धो मा भव ।

उन्मत्तक इति । मोदकाः = स्थानस्थानेषु स्थापिताः, नियुक्ताः छन्नचारिणः; गुप्तपुरुषाः, वत्सराजभटाः वा रक्षन्ति रक्षिष्यन्ति मद्बन्धनोद्यतेभ्यः शत्रुभ्यः इति आभ्यन्तरोऽर्थः ।

नेपथ्येति । नेपथ्यविशेषमण्डिताः—नेपथ्यविशेषैः = अलंकारविशेषैः गुल्म-चणकनालिकेरादिभिरुपस्कारभेदैः मण्डिताः = अलंकृताः पूरितोदराः । राजगृहे

---

उन्मत्तक—मेरी जीभ तो खाने की इच्छा से भूखे का सा लक्षण दिखा रही है ।

विदूषक—ऐ उन्मत्तक ! मेरे मोदक को लाओ । पराये की वस्तु में प्रेम करके मत फँसो ।

उन्मत्तक—कौन, कौन मुझे बाँध सकता है ? मोदक मेरी रक्षा करेंगे ।

विशेष सामग्रियों से बने हुए, राजगृह में खरीदे हुए और समय पाकर सूखे हुए ये मोदक मेरी तृप्ति के लिए मुझे मिले हैं ॥ १ ॥

विदूषकः—भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । इमिणा पच्चएण उवज्झाअउलं गन्तव्वं । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । अनेन प्रत्ययेनोपाध्यायकुलं गन्तव्यम् । ]

उन्मत्तकः—मए वि इमिणा पच्चएण जोअणसदं गन्तव्वं । [ मयाप्यनेन प्रत्ययेन योजनशतं गन्तव्यम् । ]

---

दत्तमूल्या दत्तं मूल्यं येषां ते दत्तमूल्याः । मूल्यं दत्त्वा गृहीताः नतु चोरिताः । कालवशेन = समयाधीनतया । मुहूर्तदुर्बलाः—क्षणेन नीरसाः मुहूर्ताधिककालपरिवासमसहमाना इत्यर्थः । मोदकाः मम प्रीतिं = तृप्तिम् , उपदातुम् उपस्थिताः = मम करे प्राप्ताः । इति बाह्योऽर्थः ।

आभ्यन्तरोऽर्थः—नेपथ्यविशेषमण्डिताः = बधिरपंगुमूकादिभिन्नवेषालंकृताः । राजगृहे दत्तमूल्याः = मया स्वामिना च दत्तभोग्याः वत्सराजगृहे, अत एव प्रीतिम् = संतोषम् आनंदम् वा उपदातुम् = जनयितुम् उपस्थिताः=समीपे उज्जयिन्यामेव गूढस्थिताः ।

मोदकाः = स्वामिसेवकाः कालवशेन—कालानुसारेण मुहूर्तदुर्बलाः मुहूर्तं दुर्बलाः कियन्तं कालम् अप्रकाशमानशौर्याः सन्ति, परन्तु समये स्वस्वसामर्थ्यम् अवश्यमेव प्रकटयन्ति मम स्वामिनश्च रक्षां च करिष्यन्ति इत्यर्थः ॥ १ ॥

विदूषक इति । मम मोदकमल्लकम् आनय अनेन मोदकेन प्रत्ययेन हेतुना अर्थात् पाथेयेन उपाध्यायकुलम् आचार्यगृहम् गन्तव्यम् इति बाह्योऽर्थः । आभ्यन्तरोऽर्थः—उन्मत्तक ! यौगन्धरायण ! मम मोदकम् मंत्रावसरं देहि । अनेन प्रत्ययेन भवता सह मन्त्रयित्वा कर्तव्यपथं निश्चित्य च उपाध्यायकुलम् = स्वामिवासस्थानम् गन्तव्यम् स्वामिने मन्त्रार्थम् निवेदयितुं तस्मान्मंत्राय त्वरस्वेत्यभिप्रायः ।

उन्मत्तक इति । बाह्यार्थः स्फुटः । मयापि = स्वामिसहितेन अथवा लक्षणया मत्स्वामिनापि । अनेन प्रत्ययेन मदुल्लिखितपूर्वेण रंध्रेण उपायेन वा योजनशतम्= योजनशतविप्रकृष्टम् कौशाम्बीनगरं गन्तुं शक्यम् इति भावः ।

---

विदूषक—ऐ उन्मत्तक ! मेरे मोदक को लाओ । इसी पाथेय की सहायता से आचार्य के घर जाऊंगा ।

उन्मत्तक—मैं भी तो इसी से ( इसी को खाकर ) सौ योजन जाऊंगा ।

विदूषकः—किं एलावणे तुवं ? [ किमैरावणस्त्वम् । ]

उन्मत्तकः—आम एलावणे अहं। ण हु दाव देवलाजो मं आशणं आलुहदि। शुदं च मया पादपाशिएहि इन्दे वज्झ त्ति। धाराणिअलेहि विज्जुम्मईहि कशाहि तालिअ वाउब्भामेण परिब्भमन्तेण भिन्दीअदि मेहवन्धणं। [ आम् ऐरावणोऽहम्। न खलु तावद्देवराजो मामासनमारोहति। श्रुतं च मया पादपाशिकैरिन्द्रो बद्ध इति। धारानिगलैः विद्युन्मयीभिः कशाभिस्ताडयित्वा वातोद्भ्रामेण परिभ्रमता भिद्यते मेघवन्धनम्। ]

---

आभ्यन्तरोऽर्थः—पूर्वमन्त्ररीत्या कार्याणि साधयितुं किं ते दिव्यशक्तिररित ?

वाह्योऽर्थः स्पष्ट एव।

आभ्यन्तरोऽर्थः—देवराजः–देवानां राजा देवराजः वत्सराजः राजश्रेष्ठ अस्मत्स्वामी आसनम् किङ्करं मां न आरोहति न नियुङ्क्ते। यदि नियुङ्क्ते मन्त्रितपूर्वम् ततोऽधिकम् वा कर्म कर्तुमहं समर्थः।

वाह्योऽर्थः—पादपाशिकैः–पादपाशः चरणवन्धनरज्जुः प्रहरणमेषामिति तैः पादपाशिकैः क्षुद्रायुधयोधिभिः इत्यर्थः। द्वितीयार्थः—इन्द्रः = वत्सराजः पादपाशिकैः = क्षुद्रैः शालङ्कायनादिभिः।

वाह्यः—धारानिगलैः–धारायाः वृष्टिजलप्रपातस्य निगलैः प्रतिवन्धकैः विद्युन्मयीभिः कशाभिः = प्रतोदैः ताडयित्वा मेघान् ताडयित्वा मेघवन्धनम् = मेघैः वन्धनम् अन्तरिक्षावरोधनं भिद्यते।

आभ्यन्तरोऽर्थः—धारानिगलैः = शत्रुसेनाप्रतिरोधिकाभिः 'धाराप्रवाहे नद्यादेः सैन्याग्रे द्रवसन्ततौ' इति केशवः। विद्युन्मयीभिः कशाभिः ताडयित्वा विद्युद्भिः इव अतर्कितमाविर्भवन्तीभिः कशाभिः। कशासदृशैः अस्माकं गूढभटैः शत्रून् ताडयित्वा मेघवन्धनम् भिद्यते=मेघवत् जगति प्रयस्य स्वामिनो वन्धनं भेत्स्यते।

---

विदूषक—क्या तुम ऐरावत हो ?

उन्मत्तक—हाँ, मैं ऐरावत हूँ, परन्तु इन्द्र मेरी सवारी नहीं करते। मैंने सुना है कि इन्द्र को पादपाशिकों (शालङ्कायन आदिक तुच्छ लोगों) से बाँध लिया गया था। वृष्टि को रोकनेवाली विजली के कोड़े से मारकर चारों तरफ वहता हुआ प्रचण्ड वायु मेघवन्धन को भेदन कर रहा है।

विदूषकः—भो उम्मत्तअ ! ण तुवं मम दइस्सिसि, विलविस्सं दाव अहं। [ भो उन्मत्तक ! न त्वं मम दास्यसि, विलपिष्यामि तावदहम्। ]

उन्मत्तकः—विलव विलव विक्कोस वा विलव। [ विलप विलप विक्रोश वा विलप। ]

विदूषकः—अव्वम्हणं भो ! अव्वम्हणं। [ अब्रह्मण्यं भोः ! अब्रह्मण्यम्। ]

उन्मत्तक—अहं पि विलविस्सं। इन्दे वज्झे भो ! इन्दे वज्झे भो !। [ अहमपि विलपिष्यामि। इन्द्रो वद्धो भोः! इन्द्रो वद्धो भोः!। ]

विदूपकः—अव्वम्हणं भो ! अव्वम्हणं। [ अब्रह्मण्यं भोः ! अब्रह्मण्यम्। ].

( नेपथ्ये )

मा भाआहि मा भाआहि वम्हणाउस ! मा भाआहि। [ मा विभीहि मा विभीहि ब्राह्मणोपासक ! मा विभीहि। ]

विदूषकः—( सहर्पम् ) आअदे चन्दे समाअदाणि सव्वणक्खत्ताणि। अघं बह्मणभावं। ईहामत्तएण समणएण अभअं दीअदि।

---

विदूपक—ऐ उन्मत्तक ! यदि तुम न दोगे तो मैं विलाप करूंगा। ( दूसरा, यदि तुम अकेले मुझसे सलाह न करोगे और रुमण्वान् की भी प्रतीक्षा करोगे तो मैं उसे पुकारूंगा )।

उन्मत्तक—हे विक्रोश (विक्रोशक, रोने वाले ) रुदन करो। रुदन करो! चिल्लाओ।

विदूपक—अधर्म, अधर्म!

उन्मत्तक—मैं भी विलाप करूंगा इन्द्र बांधा गया, इन्द्र बांधा गया।

विदूपक—अधर्म, अधर्म!

( नेपथ्य में )

ऐ ब्राह्मणभक्त ! मत डरो, मत डरो ( अर्थात् मैं तुम्हारी रक्षा के लिए हूँ। ) दूसरा अर्थ—मैं तुमसे सलाह करने आया हूँ।

विदूपक—( सहर्ष ) चन्द्रमा ( यौगन्धरायण ) के आ जाने पर सब नक्षत्र ( उनके समान और भी सज्जन ) आ गये। ब्राह्मणत्व पाप ( दुःखदायी ) है।

[ आगते चन्द्रे समागतानि सर्वनक्षत्राणि । अघं ब्राह्मणभावः । ईहामात्रकेण श्रमणकेनाभयं दीयते । ]

( ततः प्रविशति श्रमणकः । )

श्रमणकः—मा भाआहि मा भाआहि वह्मणाउस ! मा भाआहि। के के इह, किं कय्यं, विलवन्दि । [ मा विभीहि मा विभीहि ब्राह्मणोपासक ! मा विभीहि । के के इह, किं कार्यं, विलपन्ति । ]

विदूषकः—अविहा पडिहारक्खअउत्तिं खु समणओ अणुहोदि । भो समणअ ! भअवं ! एसो उन्मत्तओ मम मोदअमल्लअं गहणिअ ण देदि । [ अविधा प्रतिहाररक्षकवृत्तिं खलु श्रमणकोऽनुभवति । भोः श्रमणक ! भगवन् ! एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा न ददाति । ]

---

वाह्योऽर्थः—ब्राह्मणभावः = ब्राह्मणत्वम् अघम् = शोकहेतुः निर्गुणत्वादशोभनीयमित्यर्थः । ईहामात्रकेण = ईहाकर्ममात्रा परिच्छेदो यस्य तेन सत्कर्मप्रधानेन इत्यर्थः । अथवा ईहामात्रकेण—मामकाभयेच्छाप्रकाशनमात्रेणेति भावः । श्रमणकः=भिक्षुकवेषधारी रुमण्वान् । चन्द्रे = दयालौ श्रमणके आगते । सर्वनक्षत्राणि = तत्समाना अपरेऽपि सत्पुरुषाः ।

आभ्यन्तरोर्थः—चन्द्रे यौगन्धरायणे आगते तत्सहचरावावामपि समागतौ इति भावः ।

अविधा इति अव्ययपदम् । प्रतिहाररक्षकस्य = द्वारपालस्य वृत्तिम् = जीविकाम् इति प्रतिहाररक्षकवृत्तिम् अनुभवति = अनुसरति । मोदकमल्लकम् = मन्त्रणावसरम् ।

---

इच्छा प्रकट करते ही श्रमणक मुझे अभय देने को उपस्थित हो गया ।

( श्रमणक का प्रवेश )

श्रमणक—मत डरो, मत डरो । ऐ ब्राह्मणक भक्त, मत डरो । कौन कौन और किसलिये यहां विलाप कर रहे हैं !

विदूषक—श्रमणक तो चौकीदार की वृत्ति अनुभव कर रहा है ( चौकीदार का काम कर रहा है ) ऐ श्रमणक, भगवान् यह उन्मत्तक मेरे बहुमूल्य मोदक को लेकर अब देता नहीं ।

श्रमणकः—मोदअं पेक्खामि दाव। [ मोदकं प्रेक्षे तावत्। ]

उन्मत्तकः—पेक्खदु पेक्खदु शमणअ ! भवं ! [प्रेक्षतां प्रेक्षतां श्रमणक ! भवान्। ]

श्रमणकः—थु थु। [ थु थु। ]

विदूषकः—हद्धि उन्मत्तअस्स हत्थे ईहामत्तएण समणएण थुथूकिदा अधण्णस्स मम मोदआ दिट्ठपुरुवा एव्व संवुत्ता। [ हा धिग् उन्मत्तकस्य हस्ते ईहामात्रकेण श्रमणकेन थुथूकृता अधन्यस्य मम मोदका दृष्टपूर्वा एवं संवृत्ताः।]

श्रमणकः—भो उम्मत्तआउस ! णीआदेहि णीआदेहि एदाणि मोदआणि कत्थूलि आफेणपण्डराणि बहुपिट्ठसमिद्धकोमलाणि णिट्ठाणिआ सुरा विअ महुराणि। मा दे खाईदाणि खत्रं उप्पादन्ति। [ भो उन्मत्तकोपासक ! निर्यातय निर्यातय एतानि मोदकानि कस्थूलिकाफेनपाण्डराणि

अधन्यस्य = भाग्यहीनस्य। श्रमणकेन शाल्यभिक्षुणा थुथू कृताः—थु थू करणेन अशुद्धीकृताः। अदृष्टपूर्वाः एव सञ्जाताः—पूर्वं दृष्टाः केवलं जाताः न तु मम इदानीं खादनयोग्याः। हा धिक् = कष्टम्।

आभ्यन्तरोऽर्थः—अधन्यस्य—न विद्यते धन्यो यस्मात् स अधन्यः तस्य दृष्टपूर्वाः = ज्ञातपूर्वाः। मोदकाः = स्वामिसंदेशाः। श्रमणकेन थु थू कृताः = अनुमोदिताः।

बाह्योऽर्थः—उन्मत्तकोपासक = उन्मत्तकस्य भक्त इति भावः। कस्थूलिकाफेनपाण्डराणि—कस्य जलस्य स्थूलिका परिबृंहणम्, कस्थूलिका इव फेनानि

श्रमणक—मोदक तो देखूं ( दूसरा अर्थ यह है कि मैं भी सलाह चाहता हूं )!

उन्मत्तक—आप देखिये, देखिये।

श्रमणक—थू थू।

विदूषक—हाय बड़े दुःख की बात है कि मुझ भाग्यहीन के मोदक को जो उन्मत्त के हाथ में रक्खे हुए थे, श्रमणक ने थू थू करके ( अशुद्ध कर दिया ) इससे वे अब केवल देखे हुए के ही समान हो गए (खाने के योग्य नहीं रह गए)।

श्रमणक—हे उन्मत्तकोपासक, उन्मत्तक के भक्त निकालो, निकालो ( फेंक दो ) ये। मोदक पाला और फेन की तरह सफेद हैं और अनेक पिसी हुई ( तण्डुलचूर्ण

वहुपिष्टसन्मृद्धकोमलानि निष्टानिताः सुरा इव मधुराणि। मा ते खादितानि क्षयमुत्पादयन्तु। ]

विदूषकः—अविहा मोदआणि त्ति करिअ कण्डिललड्डुआ मे पडिच्छिदा। [ अविधा मोदका इति कृत्वा कण्डिललड्डुका मे प्रतीष्टाः। ]

श्रमणकः—उन्मत्तआउस ! णीआदेहि णीआदेहि। जदि ण णीआदेसि, एवं सवेमि। [ उन्मत्तकोपासक ! निर्यातय निर्यातय। यदि न निर्यातयसि, त्वां शपामि। ]

---

इव च पाण्डराणि धवलानि तानि तथोक्तानि। वहुपिष्टसन्मृद्धकोमलानि—वहुभिः पिष्टैः मृदिततण्डुलचूर्णैः सन्मृद्धानि कोमलानि च। सुरा = मदिरा।

आभ्यन्तरोऽर्थः—हे यौगन्धरायण ! विदूषकस्य कथनेन मन्त्रणावसरम् देहि। मोदकानि = उपायाः। पाण्डराः—अनिष्टशङ्काकलङ्कव्यपोहशुद्धाः; अनिष्टशंकारहिताः इत्यर्थः। वहुपिष्टसन्मृद्धकोमलाः = वहुपिष्टाः वहुभिः सह वहुकृत्वो विमृष्टाः अतएव सन्मृद्धाः = प्रचुरदोहन क्षमाः। कोमलाः = अक्लेशसाध्याः मधुराः = रमणीयाः। ते त्वया एकाकिना स्ववुद्ध्यनुसारेण इति भावः। खादितानि = निर्णीतानि। क्षयम् उत्पादयन्तु = कुर्युः। अतः विदूषकवचनमपि त्वया श्रोतव्यमिति अभिप्रायः।

अविधा = कष्टम्। मोदका इति कृत्वा = मोदकानि इति कृत्वा कण्डिललड्डुकाः = कण्डिलः सुराकारः तत्सम्वन्धिनो लड्डुकाः। मे प्रतीष्टाः = मया प्रतीक्षिताः।

---

इत्यादि ) वस्तुओं से निर्मित हैं और सिखरन युक्त सुरा के समान मधुर हैं। खाने पर ये कहीं तुम्हें क्षयरोग न पैदा कर दें अर्थात् इनके खाने से कहीं तुम्हें क्षयरोग न हो जाय।

विदूषक—हाय ! मैंने लड्डू खाने की इच्छा से मदिरा वनाने वाले के लड्डुओं की प्रतीक्षा की। [ आभ्यन्तर—मैं मन्त्री का यह शुभ समाचार कहने गया था कि कौशाम्वी को शीघ्र चलना चाहिये। पर स्वामी ने मुझसे कहा कि समय पाकर और वासवदत्ता को लेकर चलूंगा। यह स्वामी का आदेश मैंने अङ्गीकार कर लिया। यही एक कठिन समस्या उपस्थित हो गई। ]

श्रमणक—हे उन्मत्तकोपासक, दे दो, दे दो; यदि न दोगे तो तुम्हें शाप दूँगा। ( द्वितीय अर्थ—यदि मन्त्रावसर न दोगे तो तुम्हारी वुराई होगी। )

उन्मत्तकः—पशीददु पशीददु शमणअ! भअवं। मा खु मा खु मं शविदं। गह्ण गह्ण। [प्रसीदतु प्रसीदतु श्रमणक! भगवन्! मा खलु मा खलु मां शप्तुम्। गृहाण गृहाण।

श्रमणकः—बम्हणाउस! पेक्ख पेक्ख मम प्पभावं। [हे ब्राह्मणोपासक! प्रेक्षस्व प्रेक्षस्व मम प्रभावम्।]

विदूषकः—एसो उन्मत्तओ एदेण ईहामत्तएण समणएण उज्झिदं सावं पेक्खिअ मोदअमल्लअं भीदभीदं अग्गङ्गुलिआए पसारिदाए ठाविअ चिट्ठई। भो उन्मत्तअ! आणेहि मम मोदअमल्लअं। [एष उन्मत्तक एतेनेहामात्रकेण श्रमणकेन उज्झितं शापं प्रेक्ष्य मोदकमल्लकं भीतभीतमग्राङ्गुल्यां प्रसारितायां स्थापयित्वा तिष्ठति। भो उन्मत्तक! आनय मम मोदकमल्लकम्।]

श्रमणकः—एदु एदु भवं। एदेहि मोदएहि मं सोत्थि वाअइस्ससि। [एतु एतु भवान्। एतैर्मोदकैर्मां स्वस्ति वाचयिष्यसि।]

विदूषकः—ही ही ममकेरएहिं सोत्थि वाएमि। मए वि कोडुम्बिअस्स

---

श्रमणकेति। वाह्योऽर्थः—प्रभावम् = निग्रहानुशक्तिमिति भावः।

विदूषकेति। वाह्योऽर्थः—ईहामात्रकेण = चेष्टामात्रकेणेत्यर्थः। उज्झितम् = दत्तम्। आभ्यन्तरः—एषः = यौगन्धरायणः रुमण्वद्वाक्यबहुमानान्मह्यं मंत्रावसरं दातुं दानोन्मुखकराङ्गुल्यग्रवातमिव सज्जं कृत्वा तिष्ठति।

एतु एतु = अत्रागच्छ, अत्रागच्छ। एतैः मोदकैः करणैः। मुष्टमोदकदर्शयित्रे मह्यं तानिमान् मोदकान् उपायनीकृत्य मां 'स्वस्ति तेऽस्तु' इत्याशिषं ब्रुवन्तं प्रयोजयत। मोदकैः—स्वामिसंदेशैः मां स्वस्ति वाचय प्रीणयेत्यर्थः।

---

उन्मत्तक—प्रसन्न हो, प्रसन्न हो। भगवान् मुझे शाप न दीजिये। लीजिये, लीजिये। (तात्पर्य यह कि मन्त्रणा आरंभ करो।)

श्रमणक—हे ब्राह्मणोपासक, मेरे प्रभाव को देखो।

विदूषक—यह उन्मत्तक तो श्रमणक की शाप देने की इच्छा का ही स्मरण करके भयभीत हो मोदक को फैली हुई अंगुली के अग्रभाग पर रखकर बैठा है। रे उन्मत्तक! मेरा लड्डू लाओ।

श्रमणक—आओ आओ। इन मोदकों द्वारा मुझसे 'स्वस्ति' कहलावोगे।

विदूषक—ह ह, अपने मोदकों से स्वस्ति वचन कहूँगा। मैंने भी गृहस्थ के

हत्थादो पडिग्गहग्गहीदाणि । ताणि भवदो वि उवाअणं भविस्सदि । सो वि समिद्धो होदु । एसो उन्मत्तओ अग्गिगिहं अहिमुहो गच्छइ । ट्ठिदो मज्झण्हो । पुव्वण्हे वि दाव अअं देसो सुण्णो भविस्सदि । जाव अहं वि इमाणि दक्खिणामासआणि मग्गगेहे णिक्खिविअ गच्छामि । एकस्स शाडिआए कज्जं अवरस्स मुल्लेण । [ ही ही मदीयैः स्वस्ति वाचयामि । मयापि कौटुम्बिकस्य हस्तात् प्रतिग्रहगृहीतानि । तानि भवतोऽप्युपायनं भविष्यति । सोऽपि समृद्धो भवतु । एष उन्मत्तकोऽग्निगृहमभिमुखो गच्छति । स्थितो मध्याह्नः । पूर्वाह्णेऽपि तावदयं देशः शून्यो भविष्यति । यावदहमपीमान् दक्षिणामापकान् मार्गगेहे निक्षिप्य गच्छामि । एकस्य शाटिकया कार्यमपरस्य मूल्येन । ]

( सर्वे अग्निगृहं प्रविशन्ति । )

---

विदूषकेति । ही शब्दः संतोषे । कौटम्बिकस्य = गृहस्थस्य । प्रतिग्रहगृहीतानि = प्रतिग्रहलब्धानि । स कौटुम्बिकः = गृहस्थः । समृद्धः = कृतार्थः । एषः = उन्मत्तकः । स्थितः = निष्पन्नः । मार्गगेहे = पुरोवर्तिनि गेहे ।

आभ्यन्तरोऽर्थः—मदीयैः = मन्मनोगुप्तैः संदेशैः । स्वस्ति वाचयिष्यामि = प्रीणयिष्यामि । ते संदेशाः स्वामिसकाशात् मया प्रतिग्राह्यश्चव्यवत् प्रीतिपूर्वं गृहीताः श्रुताश्च मन्मुखात् उपहारपदार्था इव तव प्रमोदावहा भविष्यन्ति । समृद्धो भवतु—अस्मत्स्वामी युवयोरुभयोरनुकूलवृत्त्या निर्विघ्नसंसिद्धमनोरथो भवतु । इमान् दक्षिणामापकान् = स्वामिसंदेशान् । मार्गगृहे = मार्गाणाम् उपायानाम् गेहे निकेतनभूते । अर्थात् सर्वप्रकारप्रवीणे यौगन्धरायणे इत्यर्थः । निक्षिप्य = त्यक्त्वा । अहमपि इमम् संदेशं यौगन्धरायणाय निवेद्य गच्छामीति भावः । एकस्य—शाटिकया दक्षिणामापकाः—आत्मप्रयोजनाय रक्षणीयाः इति अप्रस्तुतप्रशंसाभङ्ग्याह—एकस्य शाटिकया=वस्त्रेण कार्यम् । शाक्यभिक्षोः=बुभुक्षोः

---

हाथ से प्राप्त किया । वे आपके लिए उपहार हो जायँगे । वह ( गृहस्थ ) भी कृतार्थ हो । यह उन्मत्तक तो अग्निगृह के सामने जा रहा है । मध्याह्न काल हो गया । मध्याह्न के पहले ही यह स्थान शून्य रहेगा । मैं भी दक्षिणा में प्राप्त इन स्वर्ण के टुकड़ों को ( इस ) मार्ग वाले घर में रखकर जाता हूँ । एक को शाटिका ( साड़ी ) से प्रयोजन रहता है, दूसरे ( बेचने वाले ) को मूल्य से ।

( सभी अग्निगृह में प्रवेश करते हैं )

यौगन्धरायणः—वसन्तक ! शून्यमिदमग्निगृहम्।

विदूषकः—आम भो ! सुण्णं खु इदं। [ आम् भोः ! शून्यं खल्विदम्। ]

यौगन्धरायणः—तेन हि परिष्वजेतां भवन्तौ।

उभौ—बाढम्। ( परिष्वजेते )

यौगन्धरायणः—भवतु भवतु। तुल्यपरिश्रमौ भवन्तौ। आस्तां भवान्। भवानप्यास्ताम्।

उभौ—बाढम्।

( सर्वे उपविशन्ति )

यौगन्धरायणः—वसन्तक ! अपि दृष्टस्त्वया स्वामी ?

विदूषकः—आम भो ! दिट्ठो तत्तभवं। [ आम् भोः ! दृष्टस्तत्रभवान्। ]

यौगन्धरायणः—हन्त भोः अतिक्रान्तयोगक्षेमा रात्रिः। दिवस इदानीं प्रतिपाल्यते।

---

मोदकेन प्रयोजनम्। अतो मोदकं तस्मै दास्यामि न रक्षिष्यामि, अपरस्य मम दक्षिणामापकैः प्रयोजनम्। अतः तान् रक्षितुमिच्छामि इत्यर्थः।

आभ्यन्तरोऽर्थः—एकस्य = स्वामिनः शाटिकया वासवदत्तया कार्यम् = प्रयोजनम्। अपरस्य यौगन्धरायणस्य स्वामिना प्रयोजनम्।

यौगन्धरायणेति। अतिक्रान्तयोगक्षेमा—अतिक्रान्तः अतीतः योगक्षेमः

---

यौग०—वसन्तक ! यह अग्निगृह शून्य है।

विदूषक—हाँ, यह तो निश्चय ही शून्य है।

यौग०—तुम दोनों मुझे आलिङ्गन करो।

दोनों—अच्छा ( दोनों आलिङ्गन करते हैं )।

यौग०—अच्छा, अच्छा आप दोनों ने तुल्य परिश्रम किया है आप बैठें। आप भी बैठें।

दोनों—अच्छा।

( सब बैठ जाते हैं )

यौग०—क्या तुमने स्वामी को देखा ?

विदूषक—हाँ, स्वामी से भेंट की।

यौग०—बड़े खेद की बात है। रात्रि तो कुशलपूर्वक बीत गई। परन्तु दिन की प्रतीक्षा हो रही है।

अहः समुत्तीर्य निशा प्रतीक्ष्यते शुभे प्रभाते दिवसोऽनुचिन्त्यते ।
अनागतार्थान्यशुभानि पश्यतां गतं गतं कालमवेक्ष्य निर्वृतिः ॥२॥

रुमण्वान्—सम्यग् भवानाह । तुल्येऽपि कालविशेषे निशैव बहुदोषा बन्धनेषु । कुतः,

व्यवहारेष्वसाध्यानां लोके वा प्रतिरज्यताम् ।
प्रभाते दृष्टदोषाणां वैरिणां रजनी भयम् ॥ ३ ॥

विनानर्थम् देहयात्रा यस्यां ( रात्रौ ) सा, अतिक्रान्तयोगक्षेमा दिवस इदानीं प्रतिपाल्यते = दिवसः सुसम्पन्नयोगक्षेमो भवेन्न वेत्यनुचिन्त्यते ।

अहः = दिनम् समुत्तीर्य = कथमपि विनानिष्टम् अतिवाह्य । निशा = रात्रिः । प्रतीक्ष्यते = प्रतिपाल्यते । शुभे प्रभाते = प्रत्यूषे मंगले दृष्टे सति दिवसोऽनुचिन्त्यते । अनागतार्थानि = भविष्यत्कालसम्बन्धीनि । अशुभानि = अनिष्टानि, अनर्थानि । पश्यताम् = चिन्तयताम् । अस्माकं गतं गतं कालम् अवेक्ष्य शुभेन अतीतं सर्वकालं स्मृत्वैव । निर्वृतिः शान्तिः, सुखं वा भवति ॥ २ ॥

कालविशेषे = कालगते भेदे तुल्येऽपि निशादिवसयोः समाने सत्यपि । बंधनेषु निशा एव = रात्रिः एव बहुदोषा = शङ्कनीयबह्वनर्था ।

व्यवहारेषु = कार्येषु । असाध्यानाम् = गुणतो निर्णेतुमशक्यानाम् , व्यवहारित्वात् ईदृशं हृदयमेषामिति असंप्रधारणीयहृदयानाम् इत्यर्थः । लोके = जने अप्रतिरज्यताम् वा = उदासीनवृत्तिस्वीकारात् स्नेहमकुर्वताम् । प्रभाते दृष्टदोषाणाम् = दिवा कथञ्चित् परविज्ञातचर्याच्छलानाम् । अतएव वैरिणाम् = शत्रूणाम्

दिन बीत जाने पर रात्रि की प्रतीक्षा की जाती है। कुशलपूर्वक प्रभात होने पर फिर दिन की चिन्ता होती है। भविष्य के अनिष्टों की चिन्ता करने वालों को शान्ति बीते हुए ( शुभ ) समय को स्मरण करके ही मिलता है ॥ २ ॥

रुमण्वान्—आपने उचित कहा। रात्रि और दिन दोनों के एक-सा होने पर भी कैदियों को रात्रि ही अधिक कष्ट देनेवाली होती है। क्यों कि—

दैनिक व्यवहार में जिन लोगों के हृदय का पता नहीं चलता और जो संसार के लोगों से स्नेह नहीं रखते तथा दिन में जिनकी कपटयुक्त भावनायें प्रकट हो जाती हैं ऐसे शत्रुओं की रात्रि भयदायक होती है ॥ ३ ॥

यौगन्धरायणः—वसन्तक ! स्वामिना सह कथितं ननु ?

विदूषकः—आम भो ! चिरं एव्व च म्हि तत्तहोद ओवद्धो। अज्ज चउद्दसीं ण्हाअमाणो पडिवालिदो अ। [ आम् भोः ! चिरमेव चास्मि तत्रभवतावबद्धः। अद्य चतुर्दशीं स्नायमानः प्रतिपालितश्च। ]

यौगन्धरायणः—स्नातः स्वामी ?

विदूषकः—ण्हादो अत्तभवं। [ स्नातोऽत्रभवान्। ]

यौगन्धरायणः—कृतं देवकार्यम् ?

विदूषकः—आम भो ! पणाममत्तेण पूइदा देवदा। [ आम् भोः ! प्रणाममात्रेण पूजिता देवताः। ]

यौगन्धरायणः—एतामपि बहुमतामवस्थां प्राप्तः स्वामी। कुतः,

---

स्पष्टीभूतशत्रुभावानां पुंसाम्। रजनी = रात्रिः। भयम् = प्राणभयहेतुः छलव्यवहारिणः जनेष्वस्निग्धवृत्तयश्च पुरुषाः यदि कदाचित् दिवा केनचित् उपलब्धच्छलदोषाः स्युः तान् स शत्रून् निश्चित्य रात्राववि‍ज्ञातोऽवश्यम् हन्यादिति भावः॥ २॥

स्वामिना कथितम् = स्वामिसंभाषणम् ते जातं किम् ? अस्मत्संदेशः स्वामिने निवेदितः किम् ?

विदूषकेति। अवबद्धः = कथयानुबद्धः। स्नायमानः प्रतिपालितश्च = मयान्वासनेन प्रतीक्षितश्च।

---

यौग०—वसन्तक ! क्या स्वामी की और तुम्हारी बातचीत हुई न ?

विदूषक—हाँ, स्वामी ने बड़ी देर तक रोका। वह चतुर्दशी पूजन के लिये स्नान कर रहे थे, इससे बहुत देर तक उनकी प्रतीक्षा की।

यौग०—क्या स्वामी ने स्नान किया ?

विदूषक—स्वामी ने स्नान किया।

यौग०—क्या देवताओं की पूजा की ?

विदूषक—हाँ, केवल प्रणाम करके देवताओं की पूजा की।

यौग०—क्या, स्वामी ऐसी अच्छी अवस्था को प्राप्त हो गये हैं ? ( यह बात व्यङ्ग्य विधि से कही गई है। तात्पर्य यह कि स्वामी ऐसी बुरी अवस्था को प्राप्त हो गये हैं )। क्योंकि—

स्नातस्य यस्य समुपस्थितदैवतस्य
पुण्याहघोषविरमे पटहा नदन्ति ।
तस्यैव कालविभवात् तिथिपूजनेषु
दैवप्रणामचलिता निगलाः स्वनन्ति ॥ ४ ॥

रुमण्वान्—भवत इदानीं प्रयत्न उचितं तिथिसत्कारमानेष्यति स्वामिनः ।

यौगन्धरायणः—वसन्तक ! गच्छ भूयः स्वामिनं पश्य । विज्ञाप्यतां च स्वामी—या सा प्रयाणं प्रतीह प्रस्तुता कथा, तस्याः श्वः प्रयोगकाल इति । कुतः, स्थानावगाहयवसशय्याभागेष्वाश्रयेषूपन्यस्तौपधिव्याजो

---

स्नातस्य यस्य समुपस्थितदैवतस्य = पूजितदैवतस्य । पुण्याहघोषविरमे = पूजाङ्गपुण्याहवाचनकर्मावसाने । पटहाः वाद्यविशेषा (नगाड़ा) इति लोके विख्याताः नदन्ति । कालविभवात् = कालप्रभावात् । तस्यैव = राज्ञः तिथिपूजनेषु = चतुर्दश्यादितिथिविशेषनिमित्तेषु देवपूजनेषु । दैवप्रणामचलिताः निगलाः एव स्वनन्ति ॥४॥

उचितम्=पुण्याहवाचनपटहवादनानि मङ्गलघोषानुयानम् तिथिसत्कारम् तिथिनिमित्तम् देवपूजनम् इदानीम् आनेष्यति इत्यर्थः ।

प्रयाणं प्रति = कौशाम्बीप्रयाणं प्रति । स्थानावगाहयवसशय्याभागेषु आश्रयेषु = स्थानम् यत्र नलागिरिः तिष्ठति । अवगाहः = यत्र नलागिरिः स्नाति । यवसभगः = यत्र नलागिरिः तृणादि ग्रसते । शय्या = यत्र शेते । उपन्यस्तौपधिव्याजः = उपन्यस्तः औपधिव्याजः यस्य स उपन्यस्तौपधिव्याजः उपस्थितौपधि-

---

स्नान करके देवताओं की पूजा करने के बाद मङ्गल वचन के उपरान्त जिस (राजा) के लिए पटह (नगाड़ा) बजते थे उसी के लिये काल के प्रभाव से विशेष तिथि पर भी देवताओं को प्रणाम करने के लिए हिलती हुई बेड़ियाँ ही बज रही हैं ॥ ४ ॥

रुमण्वान्—आपके प्रयत्न से तिथियों पर स्वामी उचित रीति से देवताओं की पूजा कर सकेंगे ।

यौग०—वसन्तक ! जाओ, स्वामी से पुनः मुलाकात करो और उनसे कहो कि चलने के विषय में यहां जो बात हो रही थी उसको कार्यरूप में परिणत करने का समय कल है । नलागिरि के रहने, स्नान करने, भोजन करने और

नलागिरिर्मन्त्रौषधिनियमसम्भृतः पुराणकर्मव्यामोहितः। अनुकूलमारुतमोक्तव्यः सज्जितो धूपः। रोषप्रतिकूलोऽस्य सज्जितः प्रतिगजमदः। शालासन्निकृष्टमल्पसाधनं गृहमादीपयितुमग्नित्रासित्वाद् वारणानाम्। गजपतिचित्तोद्भ्रमणार्थं देवकुलेषु स्थापिताः शङ्खदुन्दुभयः। तेन नादेन सर्वसाधनपरिगतशरीरेणावश्यं श्वः प्रद्योतेन स्वामी शरणमुपगन्तव्यः। ततः स्वामिना शत्रोरनुमतेनैव बन्धनान्निष्क्रम्य सहव्यापन्नां घोषवतीं हस्तगतां कृत्वा नलागिरिः स्वाधीनः कर्तव्यः। ततो व्यवस्थितासनस्तदानीं स्वामी नलागिरौ,

---

च्छलः। मन्त्रौषधिनियमसम्भृतः = मन्त्रौषध्योः नियमेन नियतकालप्रयोगेण संभृतः = पुष्टः कृतविशेष इत्यर्थः, पुराणकर्मव्यामोहितः = पुराणे नित्ये अनूतने कर्मणि व्यामोहितः। रोषप्रतिकूलः = रोषे सति तद्वृद्धिकरत्वात् रुष्टं प्रत्यहितः पिपासाप्रतिकूलं लवणमितिवत् प्रयोगः। रोषप्रतिकूलः गणमदः। मदः तु रोषं वर्द्धयत्येव परन्तु रोषप्रतिकूलः अत्र उपहासार्थे उक्तः। शालासन्निकृष्टम् = देवालयसमीपम्। सर्वसाधनपरिगतशरीरेण = पूर्वोक्तैः मन्त्रौषधिधूपप्रतिगजमदगजशालासन्नगृहप्रदीपनञ्च सर्वैः मोहमदमत्सरत्रासहेतुभूतैः परिगतशरीरेण = परिवेष्टितात्मना। व्यवस्थितासनः = व्यवस्थितम् आसनं येन सः व्यवस्थितासनः।

---

सोने के स्थान में औषध रूपी छल रख दिया गया है। और (नलागिरि को भी) मंत्र व ओषधियों से ठीक कर लिया गया है।

वह अपने प्रतिदिन के काम में आसक्त रहेगा। धूप भी तैयार कर ली गई है जो कि अनुकूल हवा होने पर छोड़ दी जायगी। रोष को बढ़ानेवाला प्रतिगज मद भी तैयार कर लिया गया है। देवालय के समीप का घर भी जलाने के लिये अल्पसाधन कर लिया गया है (उस मकान की सब सामग्रियां हटा दी गई हैं), क्योंकि हाथी आग से डरते हैं।

इस गजराज के चित्त को पागल करने के लिए मन्दिरों में शंख और नगाड़े रख दिये गये हैं। उस शब्द को सुनकर प्रद्योत उसके लिए (उपरोक्त) सब सामग्रियां तैयार कर दी गई हैं, अवश्य कल स्वामी की शरण में जायगा। तब शत्रु की ही आज्ञा से स्वामी बंधन से निकलकर घोषवती को; जो उनके साथ ही विपत्ति में पड़ गई है, लेकर नलागिरि को अपने अधीन कर लेंगे। तब उस नलागिरि पर सवार होकर स्वामी—

सेनाभिर्मनसानुबद्धजघनं कृत्वा जवे वारणं
 सिंहानामसमाप्त एव विरुते त्यक्त्वा सविन्ध्यं वनम्।
एकाहे व्यसने वने स्वनगरे गत्वा त्रिवर्णां दशां
 येनैव द्विरदच्छलेन नियतस्तेनैव निर्वाह्यते ॥ ५ ॥

इति।

रुमण्वान्—वसन्तक ! किमिदानीं चिन्त्यते ?

विदूषकः—एव्वं चिन्तेमि महन्तो खु भवदो पयत्तो विवज्जिस्सदि त्ति। [ एवं चिन्तयामि महान् खलु भवतः प्रयत्नो विपत्स्यत इति। ]

उभौ—न खलु वयं विज्ञातारः।

विदूषकः—अहं पुठमं पच्चा भवन्तो। [ अहं प्रथमं पश्चाद् भवन्तौ। ]

---

सेनाभिः = अर्थात् प्रस्थितम् स्वामिनम् अनुधाव्य जिघृक्षुभिः मनसानुबद्धजघनम्—मनसैव अनुबद्धम् जघनम् यस्य तं मनसानुबद्धजघनम् = मनसैव अनुसृतपृष्ठम्। वारणम् = हस्तिनम् जवे कृत्वा = यथा मनसा संकल्पितमनुसरणं कृत्वा सद्यः कायेन कर्तुम् यतमाना अपि सेनाः कथमपि पृष्ठं न लभेरन् तथा वेगातिशययुक्तम् इत्यर्थः। सिंहानां विरुते असमाप्त एव सविन्ध्यम् वनम्=विन्ध्याद्रिसहितमरण्यम्। त्यक्त्वा = पारं कृत्वा। एकाहे = एकस्मिन्नेव दिवसे व्यसने स्वनगरे वने वा इति त्रिवर्णां दशाम् = बन्धनावस्थां, वनगमनावस्थां स्वपुरप्रवेशावस्थाञ्च गत्वा = प्राप्य येनैव द्विरदच्छलेन—द्विरदस्य छलेन इति द्विरदच्छलेन नियतः = शत्रुवशीभूतः तेनैव निर्वाह्यते ॥ ५ ॥

---

अपने हाथी को, जिसका पीछा शत्रुसेना मन के समान वेग से कर रही है, शीघ्र भगाकर विन्ध्यगिरि समेत वन को पारकर सिंहों की गर्जना समाप्त होने से पहले ही एक ही दिन में तीन अवस्था को प्राप्त होकर ( अर्थात् बन्धनावस्था, जंगल, तथा अपने पुर में पहुँचना ) जिस कपट से वह पकड़ा गया था उसी कपट से उसकी मुक्ति भी हुई ॥ ५ ॥

रुमण्वान्—वसन्तक ! इस समय क्या सोच रहे हो ?

विदूषक—यही सोच रहा हूँ कि आपका यह महान् प्रयत्न विफल जायगा।

दोनों—हम लोग तो (कारण) नहीं जानते।

विदूषक—पहले तो हम जानेंगे फिर आप लोग जानियेगा।

यौगन्धरायणः—अथ किंकृता कार्यविपत्तिः ?

विदूषकः—वच्छराअस्स अण्णकय्यदाए[1]। [ वत्सराजस्यान्यकार्यतया। ]

यौगन्धरायणः—कथमिव ?

विदूषकः—सुणह भवन्तो। [ शृणुतां भवन्तौ ]

उभौ—अवहितौ स्वः।

विदूषकः—जा सा कालट्ठमी अदिक्कन्दा, तहिं तत्तहोदी वासवदत्ता णाम राअदारिआ धत्तीदुदीआ कण्णआदंसणं णिद्दोसं त्ति करिअ अवणीदकञ्चुआए सिविआए ओघट्टिदपणालीपस्सुदसलिलविसमं राअमग्गं परिहरिअ जं तं बन्धणदुवारस्स अग्गदो भअवदीए[2] जक्खिणीए ट्ठाणं, तस्सिं देवकय्यं कत्तुं गआ आसी। [ या सा कालाष्टमी अतिक्रान्ता, तस्यां तत्रभवती वासवदत्ता नाम राजदारिका धात्रीद्वितीया कन्यकादर्शनं निर्दोषमिति कृत्वाऽपनीतकञ्चुकायां शिविकायामवघट्टितप्रणालीप्रलुतसलिलविषमं राजमार्गं परि-

---

अन्यकार्यतया = आत्ममोचनकौशाम्बीप्रयाणातिरिक्तम् कार्यं यस्य तस्य भावस्तत्ता तया।

कालाष्टमी = कालीदेव्याः पूजनार्थं अष्टमी तिथिविशेषः इत्यर्थः। अतिक्रान्ता = व्यतीता। धात्रीद्वितीया = धात्री एव द्वितीया ( सहगामिनी ) यस्याः सा धात्रीद्वितीया। अवघट्टितप्रणालीप्रलुतसलिलविषमम्—अवघट्टितायाः अवरु-

---

यौग०—कार्य क्यों असफल होगा ?

विदूषक—वत्सराज के दूसरे कार्य में आसक्त होने के कारण।

यौग०—कैसे ?

विदूषक—आप लोग सुने।

दोनों—हम लोग ध्यान दे रहे हैं।

विदूषक—जो कालाष्टमी बीत गई उसी दिन राजकुमारी वासवदत्ता धात्री (दाई) को साथ लेकर कन्यादर्शन को निर्दोष समझकर शिविका ( पालकी ) में, जिसका परदा हटा दिया गया था, बैठकर राजमार्ग को, जो कि नाली के जल का प्रवाह रुक जाने के कारण दुर्गम हो गया था, छोड़कर उसके कारागार के द्वार के

---

१. अत्तकय्यदाए। २. भअवदीए. अवान्तसुन्दरीए।

हृत्य यत्तद् बन्धनद्वारस्याग्रतो भगवत्या यक्षिण्याः स्थानं, तस्मिन् देवकार्यं कर्तुं गतासीत्। ]

यौगन्धरायणः—ततस्ततः ?

विदूषकः—तदो तत्तभवं तं दिअसं अब्भन्तरबन्धणपरिरक्खअं सिवअं णाम राअदासं अणुमाणिअ बन्धणदुवारे णिक्कन्तो। [ ततस्तत्रभवान् तं दिवसमभ्यन्तरबन्धनपरिरक्षकं शिवकं नाम राजदासमनुमान्य बन्धनद्वारे निष्क्रान्तः। ]

उभौ—ततस्ततः ?

विदूषकः—तदो पुरुसक्खन्धपरिवट्टणट्ठिदाए सिविआए पकामं दिट्ठा सा राअदारिआ। [ ततः पुरुषस्कन्धपरिवर्तनस्थितायां शिविकायां प्रकामं दृष्टा सा राजदारिका। ]

यौगन्धरायणः—ततस्ततः ?

---

द्वायाः प्रणाल्याः जलमार्गात् प्रसृतैः अभिष्यन्दमानैः सलिलैः जलैः विपन्नम् दुर्गमम्, राजमार्गम् = राजपथम् परिहृत्य = त्यक्त्वा देवकार्यम् = देवार्चनाम् कर्तुं गतासीत् = गतवती।

अभ्यन्तरबंधनपरिरक्षकम् = अन्तःकारागृहपालकम्।

पुरुषस्कंधपरिवर्तनस्थितायाम् = पुरुषाणां शिविकावाहिनां स्कंधपरिवर्तने श्रमपरिहारार्थांसविनिमये स्थितायाम् प्रकामम् = यथेष्टम्।

---

आगे जो भगवती 'यक्षिणी' का स्थान है उसमें देवता की पूजा करने के लिये गई थी।

यौग०—तब क्या हुआ ?

विदूषक—तब राजा ( वत्सराज ) कारागार के अन्दर की रक्षा करनेवाला शिवक नामक राजा के कर्मचारी को, प्रसन्न कर कारागार के द्वार पर लाये।

दोनों—तब क्या हुआ ?

विदूषक—जब पालकी ढोनेवाले ( थकावट दूर करने के लिए ) एक कन्धे से दूसरे कंधे पर पालकी रख रहे थे उसी समय राजकुमारी को ( स्वामी ने ) खूब अच्छी तरह देखा।

यौग०—तब क्या हुआ ?

विदूषकः—किं तदो तदो त्ति। वन्धणं दाणिं पमदवणं सम्भाविअ पउत्तो राअलीलं कत्तुं। [ किं ततस्तत इति? वन्धनमिदानीं प्रमदवनं संभाव्य प्रवृत्तो रागलीलां कर्तुम्। ]

यौगन्धरायणः—न खलु तां प्रति समुत्पन्नाभिलाषः स्वामी?

विदूषकः—भो! सङ्कआरिणो अणत्थ त्ति ईदिसं एव्व। [ भोः! सङ्क-चारिणोऽनर्था इतीदृशमेव। ]

यौगन्धरायणः—सखे! रुमण्वन्! स्थिरीक्रियतामात्मा। अनेनैव वेषेण जरा गन्तव्या।

विदूषकः—भो! अहं च एदेण उत्तो—भणेहि जोअन्धराअणस्स जहसमत्थिदा समत्थणा ण रोअदे मे। समाणे गमणे पज्जोदस्स अवमाणविसेसो चिन्तीअदि। मा कामप्पधाण त्ति मं अवमण्णेहि। अवमाणस्स अवजिदिं अण्णेसामि त्ति। [ भोः! अहं चैतेनोक्तः-भण यौगन्धरायाणाय यथासमर्थिता समर्थना न रोचते मे। समाने गमने प्रद्योतस्यावमानविशेषश्चिन्त्यते। मा कामप्रधान इति मामवमन्यस्व। अवमानस्यापचितिमन्विष्यामिति। ]

---

प्रमदवनम् सम्भाव्य = क्रीडोद्यानं मत्वा। रागलीलाम् = कामचेष्टाम्।

समुत्पन्नाभिलाषः = उपजातरागः।

एतेन = स्वामिना। यथासमर्थिता समर्थना = त्वत्समर्थितप्रकारा कार्यसंप्रधारणा। प्रद्योतस्यावमानविशेषः चिन्त्यते—तत्कन्याहरणरूपः चिन्त्यते कार्यत्वेन विचार्यते। अवमानस्य = स्वकीयापमानस्य। अपचितिम् = निष्क्रयम् अन्विष्याम् = गवेषयेयम्।

---

विदूषक—बार-बार 'तब क्या, तब क्या' कहते हो। वन्धन को प्रमदवन समझकर कामातुर हो गया।

यौग०—क्या उसे देखकर स्वामी को उसके प्रति अनुराग तो नहीं उत्पन्न हुआ?

विदूषक—विपत्तियां अकेले नहीं आतीं। बात ऐसी ही हुई।

यौग०—मित्र रुमण्वान्! मन को स्थिर करो। इसी रूप में वृद्धावस्था आवेगी।

विदूषक—स्वामी ने मुझसे कहा था कि यौगन्धरायण से जाकर कहो कि तुम्हारी मन्त्रणा मुझे पसन्द नहीं है। कौशाम्बी तो जाना ही है, पर मैं तो प्रद्योत

यौगन्धरायणः—अहो शत्रुजनाप्रहास्यमभिधानम्! अहो निरपत्रपता खलु बुद्धेः! अहो सुहृज्जनसन्तापकारणम्! अदेशकाले ललितं कामयते स्वामी। कुतः,

शक्ता दर्पयितुं स्वहस्तरचिता भूमिः कटप्रच्छदा
पर्याप्तो निगलस्वनश्चरणयोः कन्दर्पमालम्बितुम्।
कः श्रुत्वा न भवेद्धि मन्मथपटुः प्रत्यक्षतो बन्धने
रक्षार्थं परिगण्यमानपुरुषै राजेति शब्दापनम्॥ ६॥

अहो = इति कष्टे। शत्रुजनाय हास्याभिधानमित्यर्थः। निरपत्रपता = निर्लज्जता। सुहृज्जनसंतापकारणम् = सहृज्जनानाम् संतापस्य कारणम्। अदेशकाले अदेशे स्वकीयदेशरहिते इति भावः। अकाले = असमये। ललितं=काम-वासनाम्। कामयते = चेष्टते।

स्वहस्तरचिता = स्वहस्तेन निर्मिता। कटप्रच्छदा = तृणमयास्तरणा न तु राजार्हदुकूलहंसतूलशयनाद्यास्तरणा इत्यर्थः। भूमिः दर्पयितुं = मदयितुम्। शक्ता= समर्था योग्या। चरणयोः निगलस्वनः—निगलस्य स्वनः = शब्दः। कन्दर्पम् = कामम् आलम्बितुम् पर्याप्तः = शक्तः। बन्धने = कारागृहे। रक्षार्थम् परिगण्यमानपुरुषैः = निगडितजननाम् रक्षणकर्मणि ,नियुक्तैः प्रद्योतदासैः इत्यर्थः। राजेति शब्दापनम् = व्रीडावहम् आह्वानम् प्रत्यक्षतः श्रुत्वा कः = हि निगडितः पुरुषः

का जिसमें अपमान हो वही सोच रहा हूँ। मुझे कामी जानकर मेरा अपमान मत करो। मैं तो अपमान की प्रतिक्रिया सोच रहा हूँ।

यौग०—अहा, शत्रुजनों की हँसी की बात। इस निर्लज्जता को धिक्कार है। मित्रों को दुःख देनेवाली इस बात पर शोक है। स्वामी अकाल में और परदेश में कामविलास की वासना प्रकट कर रहे हैं। क्योंकि—

अपने हाथों से बनाई हुई चटाई ही है बिस्तर जिस पृथ्वी पर वह पृथ्वी अवश्य ही मद उत्पन्न करने में समर्थ है। पैर में पड़ी हुई बेड़ियों का ध्वनि कामोद्दीपन कर सकती है। कारागार में अपनी रक्षा के लिए नियुक्त पुरुषों से 'राजा' शब्द से संबोधित होकर भला कौन पुरुष कामातुर होगा? ॥ ६ ॥

विदूषकः—भो ! दंसिदो सिणेहो। णिव्विट्ठं पुरुसआरं। साहु उज्झिअ णं गच्छामो। [ भोः ! दर्शितः स्नेहः। निर्विष्टः पुरुषकारः। साधूज्झित्वैनं गच्छामः। ]

यौगन्धरायणः—वसन्तको भवान् ननु। वसन्तक ! मा मैवम्।

परित्यजाम सन्तप्तं दुःखेन मदनेन च।
सुहृज्जनमुपाश्रित्य यः कालं नावबुध्यते॥ ७॥

विदूषकः—एव्वं एव्व जरं गमिस्सामो। [ एवमेव जरां गमिष्यामः। ]

यौगन्धरायणः—तन्ननु श्लाघ्यम्।

विदूषकः—सिलाघणीओ भवे, जदि लोओ जाणादि। [ श्लाघनीयं भवेद्, यदि लोको जानाति। ]

यौगन्धरायणः—न नः कार्यं लोकेन, स्वामिप्रियार्थोऽयमारम्भः।

---

मन्मथपटुः = कामातुरः न भवेत्। सर्वोऽपि भवेत् इति उपहासे अत्र काकुः। वस्तुतः न कोऽपि भवेत्। अस्मत्स्वामी तथाविधो यद् भवति तत् अस्मद्भाग्यदोषात् भवति॥ ६॥

भो इति विषादे। स्नेहः = स्वामिभक्तिः। पुरुषकारः = पुरुषार्थः, प्रयत्नः। निर्दिष्टः = यावच्छक्ति कृतः। उज्झित्वा = त्यक्त्वा।

दुःखेन = बंधनव्यसनेन। मदनेन = कन्दर्पेण च सन्तप्तम् = पीडितम् परित्यजाम यः सुहृज्जनम् उपाश्रित्य = मित्रजनवाक्यमनुसृत्य कालं न अवबुद्धयते = कालानुगुणं कर्म कर्तुं न जानाति संतप्तत्वादेव॥ ७॥

---

विदूषक—हम लोगों ने अपना प्रेम दिखा दिया। यथाशक्ति प्रयत्न भी कर चुके। अब इसको छोड़कर हम लोगों को चल देना चाहिये।

यौग०—ऐसा मत कहो। आप वसन्तक हैं।

दुःख और काम से पीड़ित होने से जो मित्रों की बातों को मानकर समयानुसार कार्य नहीं कर सकता क्या उसको त्याग दें ( अर्थात् कदापि नहीं )॥ ७॥

विदूषक—इसी वेप में वृद्धत्व को प्राप्त होंगे।

यौगन्धरायण—यह तो प्रशंसनीय है।

विदूषक—यदि लोग जान जायँ तो यह प्रशंसनीय हो सकता है।

यौगन्धरायण—हमें संसार से क्या प्रयोजन ? हमारा कार्य तो स्वामी को प्रसन्न करने के लिये है।

विदूषकः—सो वि दाव ण जाणादि । [ सोऽपि तावन्न जानाति । ]

यौगन्धरायणः—काले ज्ञास्यति ।

विदूषकः—कदमो दाणि सो कालो । [ कतम इदानीं स कालः । ]

यौगन्धरायणः—यदेयमारम्भसिद्धिः ।

विदूषकः—तदो तादिसो भवं बन्धणादो राआणं अन्तेउरादो राअदारिअं उभे णिय्यादेदु । [ ततस्तादृशो भवान् बन्धनाद्राजानमन्तःपुराद्राजदारिकामुभे निर्यातयतु । ]

रुमण्वान्—इह भवता द्रष्टव्यम् ।

यौगन्धरायणः—उभयमिति । बाढम् । इयं द्वितीया प्रतिज्ञा—

**सुभद्रामिव गाण्डीवी नागः पद्मलतामिव ।**
**यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ८ ॥**

---

आरम्भसिद्धिः = स्वामिकौशाम्बीप्रापणप्रयत्नस्य फलप्राप्तिः ।

तादृशः = स्वप्रयत्नफलदर्शनाभिनिवेशी । निर्यातयतु = हरतु ।

इह = वसन्तकेन ( = विदूषकेण ) निर्दिष्टेऽर्थे भवता द्रष्टव्यम् = विवेचनीय न तूदासितव्यमित्यर्थः ।

उभयमिति = कार्यद्वयम् साधनीयमिति । युवां मन्येथे इति शेषः ।

सुभद्रां = श्रीकृष्णस्य भगिनीम् । गाण्डीवी—गाण्डीवं नाम धनुः अस्ति यस्य

---

विदूषक—वे भी नहीं जानते ।

यौगन्धरायण—समय पर जान जायँगे ।

विदूषक—वह समय कब आयेगा ?

यौगन्धरायण—जब हम लोगों का कार्य सिद्ध हो जायेगा ।

विदूषक—तो आप यदि यह चाहते हैं तो कारागार से राजा और अन्तःपुर से वासवदत्ता—दोनों को हर ले चलें ।

रुमण्वान्—इस बात पर आप को विमर्श करना चाहिये ।

यौगन्धरायण—दोनों । ( अर्थात् वासवदत्ता और वत्सराज को लेकर भागना ) अच्छा यह मेरी दूसरी प्रतिज्ञा है ।

जिस प्रकार कमलवल्ली को हाथी सहज ही तोड़ डालता है और सुभद्रा को अर्जुन लेकर भागे थे उसी प्रकार यदि राजा उस ( वासवदत्ता ) को न हर ले तो मैं यौगन्धरायण नहीं ॥ ८ ॥

अपि च,

यदि तां चैव तं चैव तां चैवायतलोचनाम् ।
नाहरामि नृपं चैव नास्मि यौगन्धरायणः ॥ ६ ॥

( कर्णं दत्त्वा ) अये शब्द इव । ज्ञायतां शब्दः ।

विदूषकः—भो ! तह । ( निष्क्रम्य प्रविश्य ) भो ! पडिउत्तदिवसविस्सम्भेण अविरलं सञ्चरन्तो जणो दीसइ । किं दाणि करम्ह ? [ भोस्तथा । भोः ! परिवृत्तदिवसविलम्भेणाविरलं सञ्चरन् जनो दृश्यते । किमिदानीं कुर्मः ? ]

रुमण्वान्—तेन हि चतुर्द्वारमग्निगृहं, भिद्यतां नः सङ्घातः ।

---

स गाण्डीवी = अर्जुनः इव । पद्मालताम् = कमलवल्लीम् , नाग इव = गज इव यदि ताम् = वासवदत्ताम् न हरेत् ( अहम् ) यौगन्धरायणः न अस्मि ॥ ८ ॥

यदि तां च = घोषवतीं वीणामित्यर्थः । तं = नलागिरिं हस्तिनम् । ताम् आयतलोचनाम् = विशालनयनाम् वासवदत्ताम् च नृपम् = वत्सराजम् न आहरामि = प्रद्योतसकाशात् आहृत्य कौशाम्बीं न प्रापयामि चेदित्यर्थः । यौगन्धरायणः न अस्मि ॥ ९ ॥

परिवृत्तदिवसविलम्भेण—परिवृत्तः प्राच्याः प्रतीच्यभिमुखम् निवृत्तः यो दिवसः अपराह्णः इत्यर्थः, तस्मिन् विलम्भात् आतपोष्मशान्तिनिमित्तात् , अविरलम् यथा स्यात्तया अविरलम् सञ्चरन् जनः दृश्यते = अवलोक्यते ।

भिद्यताम् = विश्लिष्यताम् । संघातः = समुदायः ।

---

और भी—

यदि उस ( घोषवती वीणा ) को, नलागिरि हाथी को, उस विशाल नयन वाली ( वासवदत्ता को ) तथा राजा ( वत्सराज ) को हर कर ( कौशाम्बी ) न न ले जाऊँ तो मेरा यौगन्धरायण नाम नहीं ॥ ९ ॥

( कान लगाकर ) अरे ! कुछ आवाज हो रही है । इसका पता लगाओ ।

विदूषक—अच्छा । ( बाहर जाकर, फिर प्रवेश कर ) मध्याह्न ( दोपहर ) का समय बीत जाने से ( धूप की कमी से ) लोग चल फिर रहे हैं । अब क्या करूँ ?

रुमण्वान्—अग्निगृहसे हम लोगों को पृथक् पृथक् चार रास्तों से चलना चाहिये ।

यौगन्धरायणः—न न । अभिन्नो नः सङ्घातः । भिद्यतामरिसङ्घातः । स्वकार्यमनुष्ठीयताम् ।

उभौ—तह । [ तथा ] ( निष्क्रान्तौ । )

उन्मत्तकः—ही ही चन्दं गिलदि लाहू । मुञ्च मुञ्च चन्दं । यदि ण मुञ्चेशि, मुहं दे पाडिअ मुञ्चावइस्सं । एशे एशे दुट्ठअश्शे परिब्भट्टे आअच्छदि । एशे एशे चउप्पहवीहिआअं । जाव णं आलुहिअ बलिं भक्खिस्सं । एशे एशे दालअभट्टा ! मं तालेह । माखु माखु मं तालेह । किं भणाशि–अम्हाणं किं पि णच्चेहि त्ति । दक्खह दक्खह दालअभट्टा ! एशे दालअभट्टा ! पुणो वि मं तालेह इट्टिआहि । मा खु मा खु तालेह । तेण हि अहं पि तुम्हे तालेमि । [ ही ही चन्द्रं गिरति राहुः । मुञ्च मुञ्च चन्द्रम् । यदि न मुञ्चसि, मुखं ते पाटयित्वा मोचयिष्यामि । एष एष दुष्टाश्वः परिभ्रष्ट आगच्छति । एष एष चतुष्पथवीथिकायाम् । यावदेनमारुह्य बलिं भक्षयिष्यामि । एते एते दारकभर्तारः । मां ताडयथ । मा खलु मा

---

अरिसंघातः = शत्रुसमूहः । स्वकार्यम् = अग्निगृहात् निस्सृत्य स्वामिसमीपगमनमित्यर्थः ।

राहुः = प्रद्योतः । चन्द्रं = वत्सराजं । गिरति = परिभवति । दुष्टाश्वः = दुष्टश्चासौ अश्वश्चेति दुष्टाश्वः ( कर्मधारय ), परिभ्रष्टः = बंधनच्युतः । बलिम् = भिक्षाम् ।

द्वितीयाभ्यन्तरोऽर्थः—दुष्टः प्रद्योतः परिभ्रष्टः सन्मार्गभ्रष्टः छलप्रयोक्तृत्वात्

---

यौगन्धरायण—नहीं नहीं; हमारे समूह का भेदन न किया जाय, बल्कि शत्रुसमूह का भेदन किया जाय । हमें अपना कार्य करने चाहिये ।

दोनों—अच्छा । ( निकल जाते हैं । )

उन्मत्तक—ही ही ही, चन्द्रमा को राहु निगल रहा है । चन्द्रमा को छोड़ो, छोड़ो । यदि न छोड़ोगे तो तुम्हारा मुँह फाड़कर छुड़ा लूँगा । यह दुष्ट घोड़ा

खलु मां ताडयत। किं भणथ—अस्माकं किमपि नृत्येति। पश्यत पश्यत दारकभर्तारः! एते दारकभर्तारः! पुनरपि मां ताडयथ यष्टिभिः। मा खलु मा खलु ताडयत। तेन ह्यहमपि युष्मान् ताडयामि। ]

( निष्क्रान्तः। )

तृतीयोऽङ्कः।



चतुष्पथवीथिकायाम् = चतुष्पथवीथिकावत् काञ्चिदस्वत्वमपरिणीतत्वात् अप्राप्तायाम् अर्थात् तत्कन्यायां वासवदत्तायाम् विषये एनं प्रद्योतम् आरुह्य न्यक्कृत्य वासवदत्ताहरणेन परिभूय बलिं उपहारवत् प्रियम् कौशाम्बीप्रयाणम् भक्षयिष्यामि साधयिष्यामि। दारकभर्तारः—दारकाश्च ते भर्तारः इति दारकभर्तारः।

( बन्धन ) छुड़ा कर भाग रहा है। लो, यह तो चौराहे की गली में आ गया है। इस पर चढ़कर बलि खाऊँगा। ये मालिक लड़के मुझे मार रहे हैं। मुझे मत मारो, मत मारो। क्या करते हो कुछ नाच करो। बालक स्वामियों! देखो। ये मालिक लड़के मुझे छड़ी से मार रहे हैं। मत मारो, मत मारो। मैं भी उस ( छड़ी ) से आप लोगों को मारूँगा।



# अथ चतुर्थोऽङ्कः

( ततः प्रविशति भटः । )

भटः—को कालो अहं भट्टिदारिआए वासवदत्ताए उदए कीलिदु-कामाए भद्दवदीपरिचारअं गत्तसेवअं ण पेक्खामि। भाव पुप्फदन्तअ ! गत्तसेवअं ण पेक्खसि । किं भणासि-एसो गत्तसेवओ कण्डिलसुण्डिगिणीए गेहं पविसिअ सुरं पिवदि त्ति । गच्छदु भावो । ( परिक्रम्य ) इदं कण्डिलसुण्डिगिणीए गेहं । जाव णं सद्दावेमि । भो गत्तसेवअ ! गत्तसेवअ ! । [ कः कालोऽहं भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवतीपरिचारकं गात्रसेवकं न प्रेक्षे । भाव पुष्पदन्तक ! गात्रसेवकं न प्रेक्षसे ? किं भणसि—एष गात्रसेवकः कुण्डिलशौण्डिक्या गेहम् । यावदेनं शब्दापयामि । भो गात्रसेवक ! गात्रसेवक !! ]

( नेपथ्ये )

---

क्रीडितुं कामो यस्याः सा तस्याः क्रीडितुकामायाः । भद्रवतीपरिचारकम्—भद्रवत्याः परिचारकं इति भद्रवतीपरिचारकम् । कण्डिलशौण्डिक्याः—कण्डिलायाः मत्तायाः शौण्डिक्याः मद्यविक्रयिण्याः, शुण्डा ( मद्यं ) पण्यम् अस्य इति शौण्डिकी, तदस्य पण्यम् इति ठक् । गेहम् = गृहम् सुराम् = मदिराम् । शब्दापयामि = आह्वयामि । भाव इति पदम् नाटकेषु सम्बोधयितुं प्रयुज्यते ।

---

जल में क्रीड़ा करने को उत्सुक स्वामी की कन्या (राजकुमारी) की (हथिनी) भद्रवती के महावत गात्रसेवक को कितनी देर से नहीं देख रहा हूँ । ( अर्थात् बड़ी देर से नहीं देख रहा हूँ ) । भाव पुष्पदन्तक ! गात्रसेवक को नहीं देख रहे हो ? क्या कहा—यह गात्रसेवक मदिरा बेचने वाली के घर में घुस कर मदिरा पी रहा है । भाग जाओ । यह मदिरा बेचने वाली का घर है । अब इसको पुकारता हूँ । ऐ गात्रसेवक, ऐ गात्रसेवक !

भद्रवती उस हथिनी का नाम था जिस पर वासवदत्ता सवारी करती थी ।

गात्रसेवक—गुप्तरूपधारी वत्सराज का चर है जो भद्रवती की देखभाल करता था ( है ) ।

( नेपथ्य में )

को दाणिं एसो एत्थ राअमग्गे 'गत्तसेवअ ! गत्तसेवअ !' त्ति मं सद्दावेदि। [ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक ! गात्रसेवकेति मां शब्दापयति। ]

भटः—एसो गत्तसेवओ सुरं पिबिअ पिबिअ हसिअ हसिअ मदिअ मदिअ जवापुप्फं विअ रत्तलोअणो इदो एव्व आअच्छदि। एदस्स पुरदो ण चिट्ठिस्सं। [ एष गात्रसेवकः सुरां पीत्वा पीत्वा हसित्वा हसित्वा मदित्वा मदित्वा जपापुष्पमिव रक्तलोचन इत एवागच्छति। एतस्य पुरतो न स्थास्यामि। ] ( निवृत्य स्थितः। )

( ततः प्रविशति यथानिर्दिष्टो गात्रसेवकः। )

गात्रसेवकः—को दाणिं एसो एत्थ राअमग्गे गत्तसेवअ ! गत्तसेवअ ! त्ति मं सद्दावेदि। पाणागारादो णिक्कन्तो दिट्ठ म्हि मम सुसुरेण सुरुट्ठेण। अमुदअमल्लएण धिदमरिअलोणरूशिदे मंशखण्डे मुहे पक्खित्ते अ। गुसा रज्जइ पीदा जइ। अत्ता णं दण्डुज्जुआ होइ।

धण्णा सुराहि मत्ता धण्णा सुराहि अणुलित्ता।
धण्णा सुराहि ण्हादा धण्णा सुराहि संजविदा ॥ १ ॥

अधण्णा अत्तणो पुत्तदाराणं कट्ठं पिट्ठं सुणन्ता जे मूढा णरा सुसमिद्धा सुरातटाअं ण जोजअंति। ता जाणे जमलोए वा णरअं अत्थि ण त्थि अ।

[ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक ! गात्रसेवक ! इति मां शब्दाप-

---

रक्तलोचनः—रक्ते लोचने नयने यस्य स रक्तलोचनः।

---

कौन है ? जो मुझे इस समय राजमार्ग पर गात्रसेवक गात्रसेवक ! कह कर पुकार रहा है !

भट—यह तो गात्रसेवक है जो सुरापान कर के हँसता हुआ मदोन्मत्त मस्त होकर 'जपापुष्प' के सदृश लाल लाल आँखें कर के इधर ही आ रहा है। मैं तो इसके सामने न खड़ा रहूँगा। ( घूमकर बैठ जाता है )।

( उक्त वेष में गात्रसेवक का प्रवेश )

गात्रसेवक—इस समय राजमार्ग पर कौन मुझे 'गात्रसेवक, गात्रसेवक' कहकर पुकार रहा है ? मद्यशाला से निकलते समय मेरे क्रोधी ससुर ने मुझे देख लिया

यति। पानागाराभिष्क्रान्तो दृष्टोऽस्मि मम श्वशुरेण सुरुष्टेन। अमृतमल्लकेन घृतमरिचलवणस्वपितो मांसखण्डो मुखे प्रक्षिप्तश्च। स्नुषा रज्यति पीता यदि। श्वश्रूर्ननु दण्डोद्यता भवति।

धन्याः सुराभिर्मत्ता धन्याः सुराभिरनुलिप्ताः।
धन्याः सुराभिः स्नाता धन्याः सुराभिः संज्ञापिताः॥ १॥

अधन्या आत्मनः पुत्रदाराणां कष्टं पिष्टं शृण्वन्तो ये मूढा नराः सुसन्नद्धाः

---

पानागारात् = मद्यशालायाः। सुरुष्टेन-सम्यु कोधितेनेत्यर्थः। अमृतमल्लकेन = अमृतमिव माधुर्यातिशयात् मद्यं तत्पूर्णेन मल्लकेन पात्रविशेषेण सहेत्यर्थः। स्नुषा = पुत्रवधूः। पीता = कृतमद्यपाना रज्यति = श्वशुरे रागवती स्यात्। गम्यागम्यपुरुषविवेकस्य सुरामदेन निमीलनादिति भावः। ये खलु सुरां पिबन्ति ते विवेकरहिता भवन्ति एवं लोकलज्जादिकं त्यक्त्वा शिष्टाचारं उल्लंघयन्ति च। अत एव पुत्रवधूरपि सुरां पीत्वा स्वकीयश्वशुरेण सह अनुरागं करोति इत्याशयः। दण्डोद्यता-दण्डाय उद्यता दण्डोद्यता। श्वशुरकामां स्नुषां दमयितुमुद्यतदण्डा भवति श्वश्रूः।

सुराभिः मत्ताः धन्याः, सुराभिः अनुलिप्ताः धन्याः, सुराभिः स्नाताः धन्याः, सुराभिः संज्ञापिताः = अतिपानवशान्मारिताः मृत्युं प्राप्ता इत्यर्थः धन्याः हृदयेन सम्मान्याः सन्ति॥ १॥

अधन्येति। ये मूढाः = अविवेकिनः सुसन्नद्धाः सन्तः स्फीतधनाश्च सन्तः नराः पुरुषाः आत्मनः = स्वस्य पुत्रदाराणां = स्त्रीपुत्राणां पिष्टम् अर्थात् नूतनम् अहर्निशानुभूतमित्यर्थः, कष्टम् = दुखम् शृण्वन्तः सन्तः पुत्राणां दुखं निवारयितुमे-

---

है। (अमृत तुल्य) मद्य के पात्र के साथ-साथ मैंने घी, मिरचा और नमक से तले हुए मांस के टुकड़ों को भी मुख में डाल लिया। मधु पीकर पुत्रवधू भी ससुर से प्रेम करने लगती है। उस समय सास पुत्रवधू को दण्ड देने के लिये उद्यत हो जाती है।

मदिरा से जो मस्त हो जाते हैं वे धन्य हैं। सुरा से अनुलिप्त पुरुष भी धन्य हैं। सुरा से स्नान किये हुए भी धन्य हैं और जो मदिरा पीकर मर जाते हैं वे भी धन्य हैं॥ १॥

जो मूर्ख धनी स्त्री पुत्र के रात दिन के कष्ट को सुनते हुए सुरारूपी सरोवर में

सुरातटाकं न योजयन्ति । ततो जाने यमलोके वा नरकोऽस्ति नास्ति च । ]

भटः—( उपसृत्य ) भो गत्तसेवअ ! को कालो तुमं अण्णेसामि । भट्टिदारिआए वासवदत्ताए उदए कीलिदुकामाए भद्दवदी ण दिस्सदि । तुमं दाव मत्तो एत्थ आहिण्डसि । [ भो गात्रसेवक ! कः कालस्त्वामन्विष्यामि । भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवती न दृश्यते । त्वं तावन्मत्तोऽत्राहिण्डसे । ]

गात्रसेवकः—जुज्जइ । सा अ णं मत्ता, सो पुरुसो वि मत्तो, अहं वि मत्तो, तुमं वि मत्तो, सव्वं मत्तसमं होइ । [ युज्यते । सा च ननु मत्ता, स पुरुषोऽपि मत्तोऽहमपि मत्तः, त्वमपि मत्तः, सर्वं मत्तसमं भवति । ]

भटः—सव्वं दाव चिट्ठदु । राअउले भद्दपीठिअं णणिक्कमिअ कुदो अअं आहिण्डदि त्ति । [ सर्वं तावत् तिष्ठतु । राजकुले भद्रपीठिकां ननिष्काम्य

वेत्यर्थः । सुरातटाकं-सुरायाः तटाकम् सुरातटकम् । 'सुरातटाकम्' इति पदेन इच्छानुरूपमधुपानार्थे वक्तुः तात्पर्यमस्ति । न योजयन्ति नोत्पादयन्ति ते अधन्याः भाग्यहीनाः सन्ति । नरकः = दुःखम् ।

आहिण्डसे = परिभ्रमसि ।

सा = हस्तिनी ( भद्रवती ) ।

राजकुले = राजभवनसमीपे इति भावः ।

गोता नहीं लगाते वे अभागे हैं । पुत्र कलत्र के पालन-पोषण को कष्टों को छोड़कर यमलोक में और कोई दुःख है या नहीं इसमें सन्देह है ।

भट—( समीप जाकर ) ऐ गात्रसेवक ! कितनी देर से तुम्हे खोज रहा हूँ । जल में क्रीड़ा करने को इच्छुक राजकुमारी वासवदत्ता की भद्रवती ( हथिनी ) नहीं दिखाई पड़ रही है और तुम नशे में चूर होकर यहाँ घूम रहे हो ।

गात्रसेवक—ठीक है । वह ( हथिनी ) भी मस्त है । वह पुरुष भी मस्त है । मैं भी मदोन्मत्त हूँ । तुम भी मदोन्मत्त हो । सभी नशे में चूर हो रहे हैं ।

भट—यह सब रहने दो । राजमहल के समीप भद्रवती को न ले जाकर तुम

१. भद्दपीठिआ ण णिक्कमदि । कुदो अअं भिवदि त्ति ।

कुतोऽयमाहिण्डत इति । ]

गात्रसेवकः—इदो आहिण्डामि, एत्थ पिबामि, एदेण पिबामि, मा संरम्भेण । किं करीअदु । [ इत आहिण्डे, अत्र पिबामि, एतेन पिबामि, मा संरम्भेण । किं क्रियताम् ? ]

भटः—हिज्जउ असम्वन्धप्पलावो । सिग्घं भद्दवर्दि पवेसेहि । [ भवत्व-सम्बन्धप्रलापः । शीघ्रं भद्रवतीं प्रवेशय । ]

गात्रसेवकः—पविसदु पविसदु भद्दवदी । अंघो मए भद्दवदीए अङ्कुसं आदत्तं । [ प्रविशतु प्रविशतु भद्रवती । अङ्घो मया भद्रवत्या अङ्कुशमाहितम् ? ]

भटः—सभावविणीदाए भद्दवदीए अङ्कुसेण किं कय्यं ? गच्छ, सिग्घं भद्दवर्दि पवेसेहि [ स्वभावविनीताया भद्रवत्या अङ्कुशेन किं कार्यम् ? गच्छ, शीघ्रं भद्रवतीं प्रवेशय । ]

---

ननिष्काम्य = अप्रवेश्येत्यर्थः । भद्रपीठिका = हस्तिनी, यस्योपरि वासवदत्ता आरोहतिस्म ।

इत आहिण्डे = अत्र भ्रमामि इत्यर्थः । मा संरम्भेण = क्रोधेन अलम् ।

प्रविशतु प्रविशतु = स्वयमेव प्रवेशं करोतु न तु तामहं प्रवेशयामीत्यर्थः । तत्र कारणमाह-अंघो-इति भयध्वनिः भयसूचकशब्दः, 'अरे' इति व्यवहरति लोकः । आहितम् = आधीकृतम् । निःस्वेन मया मद्यमूल्यार्थेऽङ्कुशमाधित्वेन शौण्डिकी-हस्तेऽर्पितम् । अतोऽङ्कुशरहिता भद्रवती कथमहं प्रवेशयेयमित्याशयः ।

---

यहाँ क्यों घूम रहे हो ?

गात्रसेवक—यहां घूमता हूँ । यहां पीता हूँ; और इसके साथ सुरा पीता हूँ । क्रोध मत करो । क्या करूं ?

भट—व्यर्थ की बातें रहने दो । भद्रवती को शीघ्र ले आओ ।

गात्रसेवक—भद्रवती प्रवेश करो, प्रवेश करो । अरे मैंने तो भद्रवती के अङ्कुश को वंधक रख दिया है ।

भट—भद्रवती स्वभाव से ही नम्र है । उसको अंकुश से क्या प्रयोजन ? ( अर्थात् उसके लिए अकुश की कोई आवश्यकता नहीं है । )

गात्रसेवकः—पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीए खुरप्पमाला आढत्ता। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्याः क्षुरप्रमालाऽऽहिता। ]

भटः—पुप्फबन्धिआए भद्दवदीए खुरप्पमालाए किं कय्यं? सिग्घं भद्दवर्दि पवेसेहि। [ पुष्पवन्ध्याया भद्रवत्याः क्षुरप्रमालया किं कार्यम्? शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः—पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदी एघण्टा आढत्ता! [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्या घण्टाहिता। ]

भटः—उदए कीलिदुकामाए भद्दवदीए घण्टाए किं कय्यं? सिग्घं भद्दवर्दि पवेसेहि। [ उदके क्रीडितुकामाया भद्रवत्या घण्टया किं कार्यम्? शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः—पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीए कसिअं आढत्तं। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्याः कशिका आहिता। ]

भटः—कसिएण किं कय्यं? सिग्घं भद्दवर्दि पवेसेहि। [ कशिकया किं कार्यम्? शीघ्रं भद्रवतीं प्रवेशय। ]

---

क्षुरप्रमाला = अर्धचन्द्रमाला, आहिता = आधीकृता इत्यर्थः।

पुष्पवंध्यायाः = पुष्पेण वन्धुं, वशीकर्तुं योग्यायाः।

---

गात्रसेवक—भद्रवती प्रवेश करो, प्रवेश करो। अरे मैंने तो भद्रवती की अर्धचन्द्रमाला भी बंधक रख दी है।

भट—भद्रवती तो फूलों से ही बांधी जा सकती है। उसको अर्धचन्द्रमाला से क्या प्रयोजन? शीघ्र उसे प्रवेश कराओ।

गात्रसेवक—भद्रवती प्रवेश करो, प्रवेश करो। मैंने तो भद्रवती के घण्टे को भी बधक रख दिया है।

भट—जल क्रीड़ा करने को इच्छुक भद्रवती को घण्टे से क्या काम? शीघ्र भद्रवती को ले आवो।

गात्रसेवक—भद्रवती प्रवेश करो, प्रवेश करो। अरे! मैं तो उसके कशा (कोड़ा, चाबुक) को भी बंधक रख आया हूँ।

भट—कोड़े की क्या आवश्यकता है? शीघ्र भद्रवती को ले आओ।

गात्रसेवकः—पविसदु पविसदु भद्दवदी। अंघो। [ प्रविशतु प्रविशतु भद्रवती। अह्घो। ]

भटः—किं अंघो ? [ किम् अह्घो ? ]

गात्रसेवकः—अंघो मए। [ अह्वो मया ? ]

भटः—किं तुए। [ किं त्वया ? ]

गात्रसेवकः—अंघो भद्द। [ अह्वो भद्र। ]

भटः—किं भद्दत्ति। [ किं भद्रेति। ]

गात्रसेवकः—अंघो भद्दवदी। [ अह्वो भद्रवती। ]

भटः—किं भद्दवदी। [ किं भद्रवती ? ]

गात्रसेवकः—भद्दवदी पि आढत्ता। [ भद्रवत्यप्याहिता। ]

भटः—ण तुवं एत्थ अवरज्झो। कण्डिलसुण्डिकिणी खु अवरज्झा, जा राअवाहणं गण्हिअ सुरं देदि। [ न त्वमत्रापराद्धः। कण्डिलशौण्डिकी खल्वपराद्धा, या राजवाहनं गृहीत्वा सुरां ददाति। ]

गात्रसेवकः—अंघो मए उत्तं—मा मूलविद्धिं विणासेहि त्ति। [ अंघो मयोक्तम्—मा मूलवृद्धिं विनाशयेति। ]

---

उक्तम् = कथितम्, अर्थात् कण्डिलशौण्डिक्यै इत्यर्थः। मूलवृद्धिं मा विनाशय = स्थितायां मूलधनस्थानीयायां भद्रवत्यां तत्परिचरणभृतिभाजो मम सका-

---

गात्रसेवक—भद्रवती प्रवेश करो, प्रवेश करो। अरे!

भट—अरे क्या ?

गात्रसेवक—अरे मैंने।

भट—तुमने क्या ?

गात्रसेवक—अरे भद्र।

भट—क्या भद्र ?

गात्रसेवक—अरे भद्रवती।

भट—क्या भद्रवती ?

गात्रसेवक—भद्रवती को भी बंधक रख दिया।

भट—इसमें तुम्हारा अपराध नहीं है। मदिरा बेचनेवाली का अपराध है, जो राजा की सवारी को लेकर सुरा देती है।

गात्रसेवक—अरे मैंने उससे कहा है कि मूलवृद्धि का नाश मत करो।

भटः—हं सद्दो विअ। [ हं शब्द इव। ]

गात्रसेवकः—अंघो जाणामि जाणामि, कण्डिलसुण्डिकिणीए गेहं भिन्दिअ भद्दवदी पलाअदि। [ अङ्घो जानामि जानामि, कण्डिलशौण्डिक्या गेहं भित्त्वा भद्रवती पलायते। ]

भटः—किं भणासि ? ( आकाशे ) एसो भट्टा वच्छराओ वासवंदत्तं गण्हिअ णिग्गदो त्ति। [ किं भणसि ? एष भर्ता वत्सराजो वासवदत्तां गृहीत्वा निर्गत इति। ]

गात्रसेवकः—( सहर्षम् ) अविघ्नमस्तु स्वामिनः।

भटः—पिव पिव। अज्ज वि तुमं मत्तो आहिण्डेहि। [ पिव पिव। अद्यापि त्वं मत्त आहिण्डस्व। ]

---

शात् किमपि मद्यमूल्यं प्रतिदिनम्, वृद्धिस्थानीयं ते सुलभं भवेत् तदेतद् मूलनाशनेन मा नाशय इत्यभिप्रायः।

पलायते = परिधावति।

अविघ्नम् = विघ्नरहितम्, मङ्गलमित्यर्थः।

---

भट—कुछ शब्द ( आवाज ) हो रहे हैं।

गात्रसेवक—अरे जानता हूँ, जानता हूँ, मदिरा बेचनेवाली के घर को तोड़कर भद्रवती भाग रही है।

टिप्पणी—अब यह बतलावेंगे कि वत्सराज वासवदत्ता को लेकर भाग गया है और उसी के कारण से बड़ा शोर हो रहा है।

गात्रसेवक जानता था कि वासवदत्ता को लेकर वत्सराज भाग रहा है और इसलिए यह आवाज हो रही है। परन्तु सच्ची बात को छिपाने के वास्ते वह ऐसा कर रहा है।

भट—क्या कहते हो ?—( ऊपर की ओर देखते हुए ) स्वामी वत्सराज वासवदत्ता को लेकर भाग गए।

गात्रसेवक—( सहर्ष ) स्वामी का मङ्गल हो अर्थात् स्वामी का कार्य निर्विघ्न समाप्त हो। ( यहां पर अपने रूप को छिपाने के लिए अब गात्रसेवक संस्कृत भाषा का प्रयोग करता है जो मध्यम श्रेणी के पात्रों के अनुकूल है )।

भट—पीओ, पीओ। आज भी तुम मस्त होकर घूमो।

गात्रसेवकः—आः को मत्तः, कस्य वा मदः, वयं खल्वार्ययौगन्धरायणेन स्वेषु स्वेषु स्थानेषु स्थापिताश्चारपुरुषाः। यावदहमपि सुहृज्जनस्य संज्ञां करोमि। एते ते सुहृदो निरोधमुक्ता इव कृष्णसर्पा इतस्ततो निर्धावन्ति। भोः भोः सुहृदः! शृण्वन्तु शृण्वन्तु भवन्तः—

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥२॥

क्व नु खल्वार्ययौगन्धरायणः? (विलोक्य) अये अयमत्रभवान् आर्ययौगन्धरायणः! य एषः,

---

चारपुरुषाः = गुप्तचराः इत्यर्थः। स्वेषु-स्वेषु स्थानेषु = भिन्नभिन्नस्थानेषु। स्थापिताः = नियुक्ताः, सुहृज्जनस्य = स्वकीयमित्रमंडलस्य। संज्ञाम् = संकेतम्। निरोधमुक्ताः निरोधात् बंधनात् मुक्ताः इति निरोधमुक्ताः। कृष्णसर्पा इव = कृष्णाश्च ते सर्पाश्च इति कृष्णसर्पाः, तद्वदित्यर्थः।

यः भर्तृपिण्डस्य कृते = भुक्तस्य स्वामिनः अन्नस्यार्थे, न युद्ध्येत् = युद्धं न कुर्यात्। तस्य = अनिष्कृतभर्तृपिण्डस्य, कृतघ्नस्य पुरुषस्य वा। सलिलैः = जलैः। सुपूर्णम् = परिपूर्णमित्यर्थः। सुसंस्कृतम् = सम्यक् प्रकारेण संस्कृतम्, आभ्युदयिकैर्मन्त्रैः अभिमन्त्रितम्। भर्तृपिण्डार्थं योद्धमात्रलभ्यतया प्रसिद्धम्। तत् नवं = नूतनम् शरावम् = पात्रविशेषः; 'सकोरा' इति लोके प्रचलितम्। मा भूत् = न स्यात्। सः = कृतघ्नः। नरकं गच्छेत् = यायात् इत्यर्थः ॥ २ ॥

अयं श्लोकः कौटिलीये अर्थशास्त्रेऽपि उपलब्धो भवति। इमं लक्षीकृत्य

---

गात्रसेवक—कौन कौन मत्त है। किसको नशा हुई है? हम लोग तो गुप्तचर हैं जिनको आर्य यौगन्धरायण ने अपने अपने स्थान पर नियुक्त किया है। मैं भी अपने मित्रवर्ग को संकेत करता हूं। ये तो वे ही मित्र लोग हैं जो कि बंधन से मुक्त हुए काले सांप की तरह इधर-उधर दौड़ रहे हैं। ए मित्रो! तुम लोग सुनो, सुनो।

जो खाये हुये स्वामी के अन्न के लिए (अर्थात् स्वामी का अन्न खाकर उसका बदला चुकाने के निमित्त) युद्ध न करे, उसे जल से परिपूर्ण, अच्छी तरह संस्कृत और दर्भ (कुश) से परिवेष्टित नया शराव (कुल्हड़) न मिले और वह नरक का भागी बने ॥ २ ॥

आर्य यौगन्धरायण कहां है? (देखकर) अरे यौगंधरायण तो यही हैं।

निशितविमलखड्गः संहृतोन्मत्तवेषः
कनकरचितचर्मव्यग्रवामाग्रहस्तः।
विरचितबहुचीरः पाण्डराबद्धपट्टः
सतडिदिव पयोदः किञ्चिदुद्गीर्णचन्द्रः॥ ३॥

अहो महत् प्रवृत्तं युद्धम्।[1]

हत्वा गजान् सगजिनः सहयांश्च योधा-
नक्षौहिणीमतिविगाह्य बलान्मुहूर्तम्।

केचित् वदन्ति यत् भासकविः कौटिल्यात् पूर्वम् अभवत्।

निशितविमलखड्गः—निशितः विमलः खड्गो यस्य सः निशितविमलखड्गः संहृतोन्मत्तवेषः—संहृतः उन्मत्तवेषो येन सः संहृतोन्मत्तवेषः व्यक्तोन्मत्तवेष इत्यर्थः। कनकरचितचर्मव्यग्रवामाग्रहस्तः—कनकरचिते स्वर्णालङ्कृते चर्मणि शस्त्रनिवारणसाधने फलकाख्ये व्यग्रो व्यापृतः वामः अग्रहस्तः यस्य सः कनकरचितचर्मव्यग्रवामाग्रहस्तः। विरचितबहुचीरः—विरचितानि शरीरविन्यस्तानि बहूनि नानाविधानि चीराणि वस्त्राणि येन सः। पाण्डराबद्धपट्टः—पाण्डरः आबद्धः पट्टः उष्णीषपट्टः शिरोवेष्टनं वा येन सः तथोक्तः। सतडित् = सविद्युत्। किञ्चिदुद्गीर्णचन्द्रः = ईषदुदितचन्द्रः यस्मिन्। एवंभूतः पयोद इव = मेघ इव (भवतीति) शेषः॥ ३॥

सगजिनः = गजी आधोरणः तत्सहितान्, गजान्=हस्तिनः हत्वा, सहयान्=

टिप्पणी—इससे यह प्रतीत होता है कि जो वीर स्वामी के लिए तन मन से लड़ते थे उनका इसी रीति से स्वागत किया जाता था। जो स्वामी के लिए श्रद्धा एवं विश्वास के साथ नहीं लड़ता था उसको इस प्रकार का नहीं किया जाता था।

तेज और चमचमाती हुई तलवार लिए हुए, उन्मत्तों का वेष त्याग कर, स्वर्ण सुसज्जित ढाल में बायाँ हाथ डाले हुए, नानाविध वस्त्रों को धारण किए हुए सफेद पगड़ी बाँधे हुए, विद्युत् युक्त मेघ के समान जिसमें से कुछ-कुछ चन्द्रमा दिखाई पड़ रहा है (यह यौगन्धरायण है)॥ ३॥

अरे यह तो घमासान युद्ध छिड़ गया!

सवारों सहित हाथियों को, अश्वों के साथ वीरों को मार कर और बलपूर्वक

१. अहो प्रतिभयमिदं युद्धम्। अहो महत्प्रतिभयं प्रवृत्तमिदं युद्धम्।

नागेन्द्रदन्तमुसलाहतभग्नबाहु-
भ्रंष्टायुधोऽपि ननिवृत्तपदोऽभियातः ॥ ४ ॥

हा धिग्, ग्रहणमुपगतः खल्वार्ययौगन्धरायणः !! यावदहमप्यार्ययौगन्धरायणस्य प्रत्यन्तरीभविष्यामि। ( निष्क्रान्तः )

भटः—किं णु खु एदं पाआरतोरणवज्जं सव्वं कोसम्बी खु इदं। होदु, इमं वुत्तन्तं अमच्चस्स णिवेदेमि। [ किन्तु खल्वेतत्। प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्विदम्। भवत्विमं वृत्तान्तममात्याय निवेदयामि। ] ( निष्क्रान्तः। )

प्रवेशकः

अश्वसहितान् योधान् = वीरान् हत्वा, बलात् = बलपूर्वकम् मुहूर्तम् स्वशक्त्या अक्षौहिणीम् = अक्षौहिणीसेनाम् अतिविगाह्य = छिन्न-भिन्नां कृत्वा। नागेन्द्रदन्तमुसलाहतभग्नबाहुः=नागेन्द्रस्य गजराजस्य दन्तमुसलेन मुसलसदृशदन्तेन आहतः अभिहतः अतएव भग्नः बाहुः यस्य सः नागेन्द्रदन्तमुसलाहतभग्नबाहुः। भ्रष्टायुधोऽपि—भ्रष्टम् आयुधं यस्य स भ्रष्टायुधः, हस्तच्युतप्रहरणोऽपि इत्यर्थः। ननिवृत्तपदः = अनपसृतपदः। ( परन्तु ) अभियातः = शत्रुसम्मुखं गतः ॥ ४ ॥

हा धिग् इति खेदे, ग्रहणमुपगतः = शत्रुवशीभूतः। प्रत्यन्तरीभविष्यामि = प्रत्यासन्नीभविष्यामि, समीपं गमिष्यामीति भावः।

प्राकारतोरणवर्जम् = प्राकारं तोरणं च वर्जयित्वा इत्यर्थः।

मुहूर्त भर में अपनी शक्ति से अक्षौहिणी सेना को छिन्न-भिन्न कर मुसल के समान हाथी के दाँत से चोट खाकर हाथ के टूट जाने पर और आयुध ( हथियार ) के गिर जाने पर भी इसने पैर पीछे न हटाया, परन्तु शत्रु के सन्मुख ( लड़ने को ) गया ॥ ४ ॥

हाय, बड़े खेद की बात है कि आर्य यौगंधरायण पकड़े गए। मैं भी यौगन्धरायण के समीप जाऊँगा। ( निकल गया )

टिप्पणी—नाटक के अभिनय में 'प्रवेशक' वह स्थल है जहाँ कोई पात्र दो अंकों के बीच की घटना का ( जो दिखाई न गई हो ) परिचय अपने वार्तालाप द्वारा देता है।

भट—यह क्या? प्राकार और तोरण को छोड़कर सभी कौशाम्बी है। अच्छा, यह वृत्तान्त अमात्य से कहूँगा। ( निकल जाता है। )

प्रवेशक समाप्त।

( ततः प्रविशतः साधारणौ । )

उभौ—उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]

प्रथमः—अंघो कण्ठस्स दीअमाणस्स ण उच्चं विरमदि । [ अङ्घो कण्ठस्य दीर्यमाणस्य नोच्चं विरमति । ]

द्वितीयः—अंघो भट्टिदारिआए वासवदत्ताए अवणअणविब्भमदाए वरुवन्तस्स मे वअणं कोच्चि ण सुणादि । अंघो ! किं भणह–किण्णिमित्तं उस्सारणा वत्तदि त्ति । गहीदो अय्यजोअन्धराअणो । किं भणह—कहं गहीद त्ति । सुणन्तु अय्या । अय्यजोअन्धराअणेण असिदुदीएण अक्खोहिणीए अग्गवेगो मुहुत्तअं धारिदो । विजयसुन्दरस्स हत्थिणो दन्तन्तचोदिदो असी विवण्णो । असिदोसेण गहीदो, ण पुरुसदोसेण । [ अंघो भर्तृदारिकाया वासवदत्ताया अपनयनविभ्रमतया विरुवतो मे वचनं कश्चिन्न शृणोति । अङ्घो ! किं भणत–किन्निमित्तमुत्सारणा वर्तत इति । गृहीत आर्ययौगन्धरायणः । किं भणत—कथं गृहीत इति । शृण्वन्त्वार्याः–आर्ययौगन्धरायणेनासि-

---

अंघो इति दुःखे । कण्ठस्य = गलस्य । दीर्यमाणस्य = उच्चारणध्वनेः उच्चत्वकरणाय अत्यायासमनुभवतः कण्ठस्य । अनादरे षष्ठी । उच्चं = मार्गे मिलितं नगरजनकलकलोच्चत्वं न विरमति मत्कंठायासजनितमुत्सारणध्वन्युच्चत्वं जनकलकलोच्चतां न्यक्कर्तुं न प्रभवतीति आशयः ।

भर्तृदारिकायाः = राजपुत्र्याः वासवदत्तायाः, अपनयनविभ्रमतया—अपनयनेन अपहरणेन विभ्रमः उन्मादो यस्य तस्य भावस्तत्ता तया हेतुना । विरुवतः मे =

---

( दो सामान्य भटों का प्रवेश )

दोनों—हटो हटो लोगो हटो ।

प्रथम—मैं गला फाड़-फाड़कर भी चिल्लाता हूँ, तथापि जनकोलाहल बन्द नहीं हो रहा है ।

दूसरा—अहा, राजकुमारी वासवदत्ता के अपहरण हो जाने से सब पागल हो रहे हैं । इसलिये मेरी बातों को कोई; नहीं सुन रहा है । क्या कहते हो ? 'क्यों हटा रहे हो ?' आर्य यौगन्धरायण पकड़ लिये गए हैं । क्या कहते हो ? 'कैसे पकड़े गए ?' आप लोग सुनें, आर्य यौगन्धरायण ने केवल तलवार से एक मुहूर्त

द्वितीयेनाक्षौहिण्या अग्रवेगो मुहूर्तं धारितः। विजयसुन्दरस्य हस्तिनो दन्तान्तचोदितोऽसिर्विपन्नः। असिदोषेण गृहीतो, न पुरुषदोषेण। ]

प्रथमः—अंघो अप्पमत्ता होह तुम्हे। पाआरतोरणवज्जं सव्वं कोसम्बी खु इअं। [ अद्घो अप्रमत्ता भवत यूयम्। प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्वियम्। ]

उभौ—ओदरदु ओदरदु अय्यो ओदरदु। [अवतरत्ववतरत्वार्योऽवतरतु।]

( ततः प्रविशति यौगन्धरायणः बद्धबाहुः फलकशयनेनानीयमानः। )

यौगन्धरायणः—अयमहमवतरामि।

**रिपुगतमपनीय वत्सराजं ग्रहणमुपेत्य रणे स्वशस्त्रदोषात्।**

---

उच्चस्वरेण शब्दं कुर्वतः मम। असिद्वितीयेन—असिः एव खड्ग एव द्वितीयः अपरसहायको यस्य सः असिद्वितीयः ( बहुव्रीहिः ), अग्रवेगः = अग्रपराक्रमः, प्रबलाक्रमणं वा। धारितः=सोढः। दन्तान्तचोदितः—दन्तान्ते (यौगन्धरायणेन) चोदितः = कृताघातः असिर्विपन्नः यातः। असिदोषेण = खड्गत्रोटनरूपदोषेण गृहीतः = शत्रुवशीभूतः ( आर्ययौगन्धरायणः ) न पुरुषदोषेण = न तु कापुरुषत्वेन शक्तिहीनत्वादिदोषेण वा।

अयम् अहम् रिपुगतम् = शत्रुहस्तप्राप्तम्, शत्रुवशीभूतम् इत्यर्थः। वत्सराजम् अपनीय = अपहृत्य, मोचयित्वा। रणे = युद्धक्षेत्रे, स्वशस्त्रदोषात् = स्वकीयखड्गरूपशस्त्रत्रोटनात् इत्यर्थः। ग्रहणम् उपेत्य = बन्दीभूय। अपनीतभर्तृदुःखः

---

तक सेना के वेग को सहन किया। विजय सुन्दर नामक हाथी के दाँत में मारने से तलवार टूट गई—यह तो तलवार के दोष ( टूटने ) से शत्रु के फंदे में आए; न कि अपनी कायरता या शक्तिहीनता के कारण।

प्रथम—अरे! आप लोग सावधान हों। यह तो ( उज्जयिनी ) प्राकार और तोरण के बिना कौशाम्बी हो रही है।

दोनों—उतरिये, उतरिये, आप उतरिये।

( हाथ बँधे हुए फलकशयन द्वारा लाये हुए यौगन्धरायण का प्रवेश )

यौगन्धरायण—यह मैं उतर रहा हूँ।

शत्रु के वशीभूत वत्सराज को छुड़ाकर; युद्धक्षेत्र में अपने शस्त्र ( तलवार )

अयमहमपनीतभर्तृदुःखो जितमिति राजकुले सुखं विशामि ॥ ५ ॥

भोः ! सुखं खलु निष्कलत्राणां कान्तारप्रवेशः, रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः, अपश्चात्तापकरः खलु सञ्चितधर्माणां मृत्युः । मया हि,

वैरं भयं परिभवं च समं विहाय
कृत्वा नयैश्च विनयैश्च शरैश्च कर्म ।
शत्रोः श्रियं च सुहृदामयशश्च हित्वा
प्राप्तो जयश्च नृपतिश्च महांश्च शब्दः ॥ ६ ॥

---

सन् अपनीतं दूरीकृतं, निवारितं वा भर्तुः स्वामिनः दुःखम् येन सः अपनीतभर्तृदुःखः, जितमिति = जयः सिद्ध इति बुद्ध्या राजकुले = राजभवने सुखम् = सुखपूर्वकं यथा स्यात् तथा विशामि प्रविशामि ॥ ५ ॥

निष्कलत्राणां स्त्रीरहितानाम् कान्तारप्रवेशः–कान्तारे प्रवेशः इति कान्तारप्रवेशः । तेन वनं गन्तव्यम् । यथा गृहम् तथा वनम् इति भावः । प्राप्तमनोरथानाम्—प्राप्तः सिद्धः मनोरथः यैः ते, तेषां प्राप्तमनोरथानाम् । विनिपातः = दैविकी आपत्तिः । रमणीयतरः खलु, सञ्चितधर्माणाम्—सञ्चितः उपार्जितः धर्मो यैः ते तेषाम् सञ्चितधर्माणाम् ।

वैरम् = विरोधम् , भयं, परिभवम् = उन्मत्तचर्यासुलभम् अवमानम् च समं सहैव विहाय = संत्यज्य नयैः = नीतिभिः विनयैः = नम्रतादिगुणैः शरैः = बाणैः च कर्म कृत्वा = कार्यं सम्पाद्य, शत्रोः = वैरिणः श्रियम् = राजलक्ष्मीम् , सुहृदाम् = मित्राणाम्, अयशः = अपकीर्तिम् च हित्वा दूरीकृत्य जयः प्राप्तः, नृपतिः = वत्सराजः प्राप्तः 'महान्' इति शब्दः च प्राप्तः ॥ ६ ॥

---

के दोष ( टूटने ) से पकड़ा हुआ मैं स्वामी के दुःख को निवारण कर और यह समझकर कि मेरी विजय-सिद्धि पूरी हो गई, राजकुल में प्रवेश कर रहा हूँ ॥ ५ ॥

भो, स्त्री-रहित पुरुषों का वन में जाना सुखदायी होता है। जिनका मनोरथ सिद्ध हो गया हो उनको विपत्ति का होना भी रमणीयतर ही है। जिन्होंने धर्म का उपार्जन किया है उनका मरना भी अच्छा है। मैंने तो—

मैंने शत्रुता, भय और अपमान सबको एक साथ छोड़कर और नीति से, विनयादि गुणों से, बाणों से कार्य करके तथा शत्रु की राजश्री को और मित्रों की

उभौ—उस्सरह उस्सरह अय्या ! उस्सरह। [ उत्सरतोत्सरतार्याः ! उत्सरत। ]

यौगन्धरायणः—मद्दर्शनाभिलाषी जनो न कश्चिदुत्सारयितव्यः।

पश्यन्तु मां नरपतेः पुरुषाः ससत्त्वा
राजानुरागनियमेन विपद्यमानम्।
ये प्रार्थयन्ति च मनोभिरमात्यशब्दं
तेषां स्थिरीभवतु नश्यतु वाभिलाषः॥ ७॥

उभौ—उस्सरह उस्सरह। किं तुम्हेहि ण दिट्ठपुरुवो अय्यजोअन्धराअणो ! [ उत्सरतोत्सरत। किं युष्माभिर्न दृष्टपूर्व आर्ययौगन्धरायणः ? ]

यौगन्धरायणः—दृष्टः पूर्वं, न त्वेवम्। मम हि,

---

राजानुरागनियमेन—राज्ञि अनुरागः राजानुरागः तस्य नियमेन इति राजानुरागनियमेन = राजभक्तिव्रतेन इत्यर्थः। विपद्यमानम् = आपद्ग्रस्तम्। मां ससत्त्वाः = सधैर्याः। नरपतेः = प्रद्योतस्य पुरुषाः = राजकर्मचारिणः प्रजावर्गाः वा पश्यन्तु = अवलोकयन्तु। ये जनाः मनोभिः = हृदयैः। अमात्यशब्दम् प्रार्थयन्ति तेषाम् अभिलाषः = मनोवाञ्छितम् स्थिरीभवतु नश्यतु वा॥ ७॥

---

अपकीर्ति को दूर हटाकर जय प्राप्त किया, राजा ( वत्सराज ) को पाया और 'महान्' शब्द की उपाधि पाई ( अर्थात् यश प्राप्त किया )॥ ६॥

दोनों—आर्य ! आप लोग हटें, आप लोग हटें।

यौ०—किसी भी पुरुष को-जो मेरा दर्शन करना चाहता है—मत हटाओ।

राजभक्ति के कारण विपत्ति में पड़े हुए मुझे प्रद्योत के कर्मचारी धीरतापूर्वक देखें। जो लोग मन से अमात्य शब्द को चाहते हैं ( अर्थात् मन्त्री बनना चाहते हैं ) उनकी अभिलाषा या तो पूरी हो जाती है या नष्ट हो जाती है॥ ७॥

दोनों—हटिये, हटिये ! क्या आप लोगों ने इसके पहले आर्य यौगन्धरायण को नहीं देखा है ?

यौ०—देखा है। परन्तु इस प्रकार नहीं। मेरा तो—

उन्मत्तच्छन्नवेपस्य रथ्यासु परिधावतः ।
अवगीतमिदं रूपं कर्म सम्प्रति दृश्यते ॥ ८ ॥

( प्रविश्य )

भटः—अय्य ! पिअं दे णिवेदेमि । गहीदो किल वच्छराओ ।
[ आर्य ! प्रियं ते निवेदयामि । गृहीतः किल वत्सराजः । ]

यौगन्धरायणः—नैतदस्ति ।

चिरमरिनगरे निरोधमुक्तः स किल वनान्युपलभ्य भद्रवत्या ।
ग्रहणमुपगमिष्यति प्रयातो निमिषितमात्रगतेषु योजनेषु ॥ ९ ॥

भद्र ! कथं गृहीत इति श्रुतम् ?

---

उन्मत्तच्छन्नवेपस्य = उन्मत्तत्वावच्छादितस्वरूपस्य । रथ्यासु = प्रतोलीषु । परिधावतः मम इदं अवगीतम् = निन्दितम् , घृणितमित्यर्थः । रूपम् सम्प्रति ( मम ) कर्म दृश्यते ॥ ८ ॥

चिरम् अरिनगरे = शत्रुनगरे निरोधमुक्तः = निरोधात् मुक्तः इति निरोधमुक्तः स भद्रवत्या वनानि = विन्ध्यवनानि । उपलभ्य = आसाद्य किल प्रयातः निमिषितमात्रगतेषु योजनेषु = निमेषमात्रातीतेषु योजनेषु ग्रहणम् उपगमिष्यति किल ? अर्थात् न गमिष्यति ॥ ९ ॥

---

उन्मत्तवेष धारण करने से मेरा ( यथार्थ ) रूप छिपा हुआ था और मैं गली-गली दौड़ता था ( अत एव ) मेरे निन्दित रूप को इन्होंने देखा ( इससे इनकी तृप्ति नहीं हुई ), परन्तु अब ये लोग मेरे सुन्दर कर्मों को देखें। अर्थात् इन्हें यह समझने दो कि मैंने क्या किया ॥ ८ ॥

( प्रवेश कर )

भट—हे आर्य ! प्रियवचन निवेदन करने आया हूँ। वत्सराज पकड़ा गया ।

यौ०—ऐसी बात नहीं है ( यह हो नहीं सकता ) ।

शत्रु के नगर में अनेक आपत्तियों से बचकर भद्रवती पर चढ़कर वनों के बीच से जाता हुआ अनेक योजन एक क्षणमात्र में जाकर ( क्या वह ) पकड़ा जा सकता है ? ( अर्थात् नहीं ) ॥ ९ ॥

भद्र ! क्या आपने सुना है कैसे वह पकड़ा गया ?

भटः—अणुसारिअ णलागिरिणा गहीदो किल। [ अनुसार्य नलागिरिणा गृहीतः किल। ]

यौगन्धरायणः—अस्ति वाहनसामर्थ्यम्। असमायुक्तस्तु सः।

गजस्याधोरणायुक्तो जवो भवति शिक्षया।
विमुक्तं वत्सराजेन क एनं वाहयिष्यति॥ १०॥

भटः—अय्य ! अमच्चो आह-आउहागारे चिट्ठदु किल अय्यो। पुरुसगुत्तो अअं देसो त्ति। [ आर्य ! अमात्य आह-आयुधागारे तिष्ठतु किलार्यः। पुरुषगुप्तोऽयं देश इति। ]

यौगन्धरायणः—अहो हास्यमभिधानम्।

अग्निं बद्ध्वा वत्सराजाभिधानं यस्मिन् काले सर्वतो रक्षितव्यम्।

---

वाहनस्य नलागिरेः सामर्थ्यम् भद्रवत्यनुधावनशक्तिः। असमायुक्तस्तु = असम्यग् व्यापारितः असुष्ठु शिक्षितो वा।

गजस्य = हस्तिनः। जवः = वेगः। आधोरणायुक्तः = आधोरणेन हस्तिपकेन आयुक्तः उत्पादितः। भवति शिक्षया विमुक्तम् = शिक्षारहितम् एनम् वत्सराजेन सह = भद्रवतीं वाहयता वत्सराजेनेति भावः। कः वाहयिष्यति = नेष्यति न कोऽपि चालयिष्यतीत्यर्थः॥ १०॥

पुरुषैः गुप्तः पुरुषगुप्तः = आगन्तुकेभ्यः बाह्यपुरुषेभ्यः रक्षितः इत्यर्थः।

वत्सराजाभिधानम् अग्निं बद्ध्वा = अग्निमिव वत्सराजं वशीकृत्य इति भावः।

---

भट—नलागिरि को उसके पीछे लगाकर पकड़ा।

यौग०—क्या उसमें इतनी शक्ति है? वह तो अच्छी तरह शिक्षा भी नहीं पाये हैं।

हाथी का वेग महावत से होता है; शिक्षारहित इस ( नलागिरि ) हाथी को वत्सराज के साथ कौन भगा सकता है? ( भाव यह है कि जिस हाथी को समुचित रूप से शिक्षा नहीं दी गयी है वह अच्छी तरह नहीं दौड़ सकता। )॥१०॥

भट—मन्त्री ने कहा है कि आप शस्त्रागार में ठहरें। यह स्थान लोगों से गुप्त है। ( अर्थात् लोग यहाँ नहीं आ सकते। )

यौग०—अहो! यह अत्यन्त हास्यास्पद बात है।

अग्नि के समान पराक्रमी वत्सराज को बांधकर ( कैदकर ) जिस समय

तस्मिन् काले सुप्तमासीदमात्यैर्नीते रत्ने भाजने को निरोधः ॥ ११ ॥

( परिक्रम्य )

भटः—इदं आउहागारं । पविसदु अय्यो । [ इदमायुधागारम् । प्रविशत्वार्यः । ]

( प्रविश्य )

भटः—अमच्चो आह—अवणीअदु वन्धणं त्ति । [ अमात्य आह–अपनीयतां वन्धनमिति । ]

यौगन्धरायणः—अक्षीणं मां कुरु । व्यक्तं भरतरोहको मां द्रष्टुमिच्छति । अहमपि तावद् भरतरोहकं द्रष्टुमिच्छामि ।

मद्वाक्यैः परिखिद्यमानहृदयं रोषात् प्रमत्ताक्षरैः

प्रारब्धेषु नयच्छलेषु तुलितं तुल्याधिकारोज्झितम् ।

---

यस्मिन् काले । सर्वतो रक्षितव्यम् तस्मिन् काले अमात्यैः = मन्त्रिवर्गैः सुप्तम् आसीत् । रत्ने ( वत्सराजरूपरत्ने ) नीते = गते सति, भाजने को निरोधः ? किं सावधानतया ? ॥ ११ ॥

अक्षीणम् = विश्रान्तम् । व्यक्तम् = अवश्यम् ।

रोषात् = स्वामिच्छलननिमित्तात् क्रोधात् । प्रमत्ताक्षरैः = उद्धतैः । मद्वाक्यैः= मदीयवचनैः । परिखिद्यमानहृदयम् = दोदूयमानहृदयम् दुःखिनमित्यर्थः । नयच्छलेषु = नीतिच्छद्मसु प्रारब्धेषु मदुपक्रान्तेषु सत्सु तुलितम् = तुलाधृतम् , निर्वारितच्छलप्रयोगसामर्थ्यम् इत्यर्थः । तुल्याधिकारोज्झितम् = मदीयप्रयुक्तच्छलारम्भ-

---

सब प्रकार से रक्षा करनी चाहिये थी उस समय तो अमात्य-वर्ग सो रहा था। रत्न के (चोरी) चले जाने पर केवल (खाली) पात्र की रक्षा करने से क्या लाभ ? ( भाव यह कि वत्सराज के चले जाने पर मेरी चौकसी करना व्यर्थ है। ) ॥११॥

( परिक्रमा कर )

भट—यह शस्त्रागार है। आर्य ! अन्दर चलें।

भट—अमात्य ने कहा है—बंधन ( बेड़ी अथवा अन्य बन्धन ) हटा दो।

यौग०—मुझे विश्राम कराओ। अवश्य भरतरोहक मुझे देखना चाहते हैं। ( अर्थात् मिलना चाहते हैं ) मैं भी भरतरोहक से मुलाकात करना चाहता हूँ।

मैं ( भरतरोहक को ) जिसका हृदय क्रोध में कहे हुए मेरे उद्धत वचनों से

सूक्तैः शास्त्रविनिश्चितैर्विरहितं बुद्ध्याधिकं वञ्चितं
द्रष्टुं मल्लमपक्रियाविनिहतं व्रीलादिवाधोमुखम् ॥ १२ ॥

( ततः प्रविशति भरतरोहकः । )

भरतरोहकः—क्वासौ क्वासौ यौगन्धरायणः ?

अवसितनिजकार्यं[1] वञ्चनैर्दुर्निरीक्ष्यं
कथमिव परिभाषे भर्तुरर्थे विपन्नम् ।
चिरमवनतकार्यं[2] चापि निर्युक्तमन्त्रं
भुजगमिव सरोषं धर्षितं चोच्छ्रितं च ॥ १३ ॥

समानारम्भरहितम् । शास्त्रविनिश्चितैः = बार्हस्पत्याद्यर्थशास्त्रनिर्णीतैः । सूक्तैः = रमणीयैरुपदेशैः विरहितम् = हीनम् । बुद्ध्या अधिकम् वञ्चितम् यावदहं तेन च्छलितः ततोऽधिकम् मया छलितम् , अपक्रियाविनिहतम् = अपकारेण प्रतिकारेण विनिहतम् प्रतिहतारम्भम् । मल्लम् = शूरम् इव व्रीलात् = लज्जया अधोमुखम् = अवनतमुखम् , नत्वभिमुखमित्यर्थः । भरतरोहकम् द्रष्टुम् इच्छामि ॥ १२ ॥

वञ्चनैः = छलनैः । अवसितनिजकार्यम् = सम्पादितं स्वकार्यम् येन सः तम् अवसितनिजकार्यम् । दुर्निरीक्ष्यम् = व्रीडान्मया दुःखेन द्रष्टुं शक्यम् , भर्तुरर्थे विपन्नम् = स्वामिनः कार्यार्थे विपद्ग्रस्तम् । चिरम् अवनतकार्यम् = अवनतं कार्यं यस्य स अवनतकार्यः, तम् अवनतकार्यम् । अवनतं स्वामिव्यसनवशाद-धोगतम् , उच्चैर्गतिहीनम् कार्यम् अमात्यकार्यं यस्य सः तेन चापि निर्युक्त-मंत्रम् = निर्युक्तः कार्योन्नमनानुकूलतया निश्चित्य प्रयुक्तो मंत्रो यस्य सः तम् ।

दुखी हो रहा है और जो आरम्भ किए गए नीति के कपट में तौला जाकर घटकर ही निकला, और जो शास्त्र विदित सदुपदेशों से रहित है तथा जो बुद्धि से भी ( जितना मैं ठगा गया उससे ) अधिक ठगा गया ( देखना चाहता हूँ )। भरतरोहक इस समय उस शूरवीर के समान हैं जो अपने-अपने प्रयत्न के निष्फल हो जाने से लाज के मारे नीचा मुंह किये रहता है ॥ १२ ॥

( भरतरोहक का प्रवेश )

भरतरोहक—यौगन्धरायण कहाँ हैं, कहाँ हैं ?

इसने वञ्चनाओं से अपना कार्य सिद्ध कर लिया, मैं इसे ( लज्जा के कारण ) कठिनता से देख सकता हूँ । इसका कार्य समय तक (स्वामी के पकड़े जाने

१. नृप । २. सुपनत ।

भटः—अय्यजोअन्धराअणो अय्यं पडिवालअन्तो आउहागारे चिट्ठइ । [ आर्ययौगन्धरायण आर्यं प्रतिपालयन् आयुधागारे तिष्ठति । ]

भरतरोहकः—भवतु भवतु ।

मन्त्रित्वे वञ्चितो ह्येष सव्याजं नीलहस्तिना ।
प्रत्यादेष्टुं स तद्वैरं मामिदानीं प्रतीक्षते ॥ १४ ॥

भटः—अय्य ! एसो अमच्चो । [ आर्य ! एषोऽमात्यः । ]

भरतरोहकः—( उपगम्य ) भो यौगन्धरायण !

यौगन्धरायणः—भोः !

---

सरोषम् = क्रोधयुक्तम् । भुजगमिव सर्पमिव । धर्षितम् = ग्रहणपरिभूतम् । उच्छ्रितम् = सिद्धसमीहितत्वात् उच्चैःशिरसं च एनं यौगन्धरायणम् । कथमिव = केन प्रकारेण । परिभाषे = उपालभे । सर्वप्रकारश्लाघनीयचरितोऽसौ नोपालम्भार्हः इत्यभिप्रायः ॥ १३ ॥

मन्त्रित्वे = मन्त्रिणः कार्ये ( विषये वा ) एष यौगन्धरायणः सव्याजम् = सकपटम् । नलिहस्तिना=नीलेन गजेन छद्मरचित-नीलगजेनेति भावः । वञ्चितः = प्रतारितः । स इदानीम् = अधुना । तद्वैरम् = मत्प्रयुक्तवञ्चनमूलकं विरोधमित्यर्थः । प्रत्यादेष्टुम् = दूरयितुं माम् प्रतीक्षते ॥ १४ ॥

---

के कारण ) अमात्य योग्य गति के प्रतिकूल था। वह अपने स्वामी के लिए विपत्ति में फंसा। पराजित होने पर भी उसका ( यौग० का ) शिर ऊंचा है। क्रोध से भरे हुए सर्प के समान इसको मैं किस प्रकार उपालंभ ( ताना ) दे सकता हूँ ? ॥ १३ ॥

भट—आर्य यौगन्धरायण शस्त्रागार में आपकी प्रतीक्षा कर रहे हैं।

भरतरोहक—अच्छा, अच्छा ।

अपने मंत्रित्व ( मंत्री के कार्य ) में यह कपटपूर्वक नीले हाथी से ठगा गया, उसी वैर का बदला लेने के लिए वह इस समय मेरी प्रतीक्षा कर रहा है ॥ १४ ॥

भट—आर्य ! ये अमात्य हैं।

भरतरोहक—( समीप जाकर ) ऐ यौगन्धरायण !

यौग०—ऐ !

भटः—अहो सरस्स गम्भीरदा ! अय्यस्स एकक्खरेण पूरिदो अयं देसो !! [ अहो स्वरस्य गम्भीरता ! आर्यस्यैकाक्षरेण पूरितोऽयं देशः !! ]

भरतरोहकः—( उपविश्य ) भोः ! यौगन्धरायण इत्यशरीराण्यक्षराणि श्रूयन्ते । दिष्ट्या भवान् दृश्यते ।

यौगन्धरायणः—दिष्ट्या भवान् दृश्यत इति । पश्यतु भवान् माम्,

एवं रुधिरदिग्धाङ्गं वैरं नियममास्थितम् ।
गुरोरवजितं हत्वा शान्तं द्रौणिमिव स्थितम् ॥ १५ ॥

---

वैरम् = वीरस्यायम् वैरः तं वीरसम्बन्धिनम्, नियमम् = समुदाचारम् । आस्थितम् = आश्रितम् । रुधिरदिग्धाङ्गम्—रुधिरेण दिग्धम् अङ्गम् यस्य सः रुधिरदिग्धाङ्गः तं रुधिरदिग्धाङ्गम्, गुरोः = जनकस्य अवजितम् = अवजेतारम् । हत्वा = मूलतः उच्छेदं कृत्वेति भावः । शान्तम् द्रौणिमिव = द्रोणस्यापत्यम् पुमान् द्रौणिः ( अश्वत्थामा ) तम् तथोक्तम् । स्थितम् एवं (माम् भवान् पश्यतु) ॥१५॥

---

भट—( मन ही मन ) कैसा गम्भीर स्वर है । आर्य के एक ही शब्द से यह स्थान भर गया ।

भरतरोहक—( बैठकर ) ऐ ! अभी तक 'यौगन्धरायण' ये अक्षर ही सुने गए थे । पर भाग्य से आप भी दिखाई पड़ते हैं । ( अर्थात् अब तक केवल आपका नाम ही सुना था, पर आज तो आपका दर्शन भी मुझे मिल रहा है ) ।

यौग०—भाग्य से ही आपके भी दर्शन हुए । आप मुझे देखें—

रुधिर से लिप्त शरीरवाले वीरों के नियमों को पालन करनेवाले मुझको आप पिता ( द्रोणाचार्य ) के पराजित करनेवाले ( धृष्टद्युम्न ) को मारकर शान्त हुए द्रौणि के समान देखें ॥ १५ ॥

टिप्पणी—महाभारत द्रोण-पर्व में यह कथा मिलती है । जब द्रोण को युद्ध में कोई न जीत सका तो उनको मारने का यह उपाय सोचा गया कि 'अश्वत्थामा मर गया' ऐसा शोर किया जाय तो पुत्र की मृत्यु सुनकर द्रोण शोकार्त होकर अस्त्र रख देंगे, उस समय उनको मारना आसान हो जायगा । तदनुसार ऐसा ही किया गया । जब द्रोण ने यह झूठी खबर सुनी तो शोक से संतप्त होकर धनुष बाण रख दिया और ध्यान करने लगे । उसी समय द्रुपदपुत्र धृष्टद्युम्न ने जाकर द्रोण का सिर काट लिया । महाभारत समाप्त होने पर एक रात को जब पाण्डवों की कुछ बची हुई सेना विश्राम कर रही थी, तो द्रोणपुत्र ने जाकर पिता का

भरतरोहकः—अहो छलेनागतगजारम्भस्यात्मसम्भावना !!

यौगन्धरायणः—किं छलेनेति। तत् पुनरिदानीं युक्तम्।

**या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चना**
**वद्धः सेवितवान् हि नो नरपतिर्वाहूपधानां क्षितिम्।**

छलेन—छद्मना कपटेन वा आगतगजारम्भस्य आगतः प्राप्तः गजारम्भः गजद्वारक आरम्भः भद्रवत्याख्यहस्तिनीद्वारको वत्सराजहरणोद्यमः येन तस्य तव। आत्मसम्भावना आत्मविषयः शौर्यवहुमानः। अहो आश्चर्यम्। नहि च्छल-प्रयोक्तुः शौर्यगर्व उचित इति भावः।

या सा मल्लिकसालवृक्षरचिता मल्लिकावति सालवृक्षे रचिता निर्मिता। नागाश्रिता = नीलहस्तिसंवद्धा सा प्रसिद्धा। वञ्चना = वत्सराजच्छलनरूपा इति तत् (छद्म) किं युक्तमिति ? अर्थात् नोचितम्। वद्धः = वन्दीकृतः। नः = अस्माकम्। नरपतिः = राजा। वाहूपधानाम् = वाहुरेव उपधानम् उपवर्हो यस्यां शय्याभूतायाम् तां क्षितिम् = भूमिम्। सेवितवान् = अधिशयितवान्। हि = यतः राज्ञः = वत्सराजस्य। वारणनिग्रहे = हस्तिदमने। परिचयात्

वदला लेने के लिए उस सेनाका संहार कर दिया। उसी में धृष्टद्युम्न भी था। उसको भी अश्वत्थामा ने मारा। इस प्रकार पिता के संहार करनेवाले का वध कर अश्वत्थामा शान्त हुआ।

भरतरोहक—धोखा देकर हाथी द्वारा (वत्सराज को) भगा कर अपने को वीर समझते हो ? धिक्कार है।

यौग०—छल की चर्चा क्यों करते हो ? क्या तुम्हारा छल करना ठीक था !!

मल्लिका और सालवृक्ष की ओट में जो (नीले) हाथी की रचना कर छल-प्रयोग किया गया था। (क्या वह ठीक था ?)। हमारे राजा (वत्सराज) ने आपके वन्धन में पड़कर भूमि पर हाथों की तकिया लगाकर शयन किया। हाथियों को वश करने उन (वत्सराज) की निपुणता को सहन न कर सकने के कारण उनकी वीणा को (आप लोगों ने) छीन ली। मैं तो आप लोगों द्वारा पहले से प्रयोग किये ही कपट का अनुकरण कर रहा हूँ। इसमें मेरा अपराध

राज्ञो वारणनिग्रहे परिचयाद् वीणाश्रिता वञ्चना
पूर्वं प्रस्तुतमेव यामि भवता नैवांपराधो मम ॥ १६ ॥

भरतरोहकः—भो यौगन्धरायण ! यदग्निसाक्षिकं महासेनस्य दुहितरं शिष्यां प्रतिगृह्य अदत्तापनयनं कृतं, युक्तेयं भोस्तस्करप्रवृत्तिः ?

यौगन्धरायणः—मा मा भवानेवम् । विवाहः खल्वेष स्वामिनः ।

भारतानां कुले जातो वत्सानामूर्जितः पतिः ।
अकृत्वा दारनिर्देशमुपदेशं करिष्यति ॥ १७ ॥

---

परिचयं प्राप्यकौशलात् वीणानिमित्तम् सामर्थ्यम् असोढ्वा ( वीणावादन-कौशलमसहमानः ) वीणाश्रिता = वीणापहरणलक्षणाप्रक्रिया कृतेति शेषः । भवन्तः तस्य वीणां हृतवन्तः इति । इत्थं बहुभिः प्रकारैः भवता पूर्वं कृतस्य च्छलस्य प्रतिच्छलनमेव मया कृतमित्याह—भवता पूर्वम् प्रथममेव प्रस्तुतम् = प्रक्रान्तमेव छलं यामि = प्राप्नोमि अनुकरोमि इत्यर्थः ॥ १६ ॥

महासेनस्य दुहितरम्=कन्याम् अग्निसाक्षिकम्—यथा स्यात्तथा अग्नेः साक्षिकम् परिकल्प्य शिष्याम् प्रतिगृह्य अदत्तापनयनं कृतम् = अविवाहितायाः अपनयनम् अपहरणम् कृतमित्यर्थः । भो ! तस्करप्रवृत्तिः—तस्करस्य चौरस्य प्रवृत्तिः इति तस्करप्रवृत्तिः = चौरवत् व्यवहारः । इयं युक्ता = उचिता ? न कदापि उचितेति भावः ।

भरतानाम् कुले जातः वत्सानाम् ऊर्जितः पतिः दारनिर्देशम् अकृत्वा उपदेशं करिष्यति । अयं भावः = महाकुलीनो वत्सराजः प्रौढाम् यौवनवतीं वा कामपि

---

नहीं । ( भाव यह है कि पहले आपने छल का प्रयोग किया तो पीछे हम भी उसका अनुकरण कर रहे हैं । ) ॥ १६ ॥

भरतरोहक—ऐ यौगन्धरायण महासेन की कन्या को अग्नि की साक्षी देकर ( वत्सराज ने ) अपनी शिष्या बनाया और फिर उस कुमारी को हर ले गए । क्या यह चौर-कर्म उचित है ?

यौग०—ऐसा मत कहो । यह तो स्वामी का विवाह है ।

भरतकुल में उत्पन्न बलवान् वत्सराज क्या किसी ( कन्या ) को बिना स्त्री बनाये हुये शिक्षा दे सकता है ? ( अर्थात् नहीं ) ॥ १७ ॥

---

१. नैवात्र दोषो मम ।

भरतरोहकः—अद्यापि महासेनेन प्रयुक्तसत्कारो वत्सराजः । तदिदानीं किं नावेक्षते ?

यौगन्धरायणः—मा मा भवानेवम् ।

**यदस्य चाज्ञां कुरुते नलागिरिः स शिक्षितानां वचनेषु तिष्ठति ।**
**ततो विमुक्तः स्वशरीररक्षणे यशः प्रदातुं सुहृदां च जीवितम् ॥१८॥**

भरतरोहकः—यद्येवं, नलागिरिग्रहणार्थं विमुक्तश्चेद्, न पुनर्बद्धस्ते स्वामी ।

---

कन्याम् पत्नीत्वेन अप्रतिगृह्य न अध्यापयेत् । लोकापवादभयादिति भावः ॥ १७ ॥

वत्सराजस्य बन्धनमोचनं न सत्कारार्थम् महासेनेन विहितं किन्तु स्वार्थमेवेत्यभिप्रायेणाह यत्—यस्मात् कारणात् नलागिरिः अस्य = वत्सेशस्य आज्ञां कुरुते सः शिक्षितानां=हस्तिवशीकरणविद्यानिष्णातानाम् वचनेषु तिष्ठति वचनान्यनुवर्तते । ततः = तस्मात् स्वशरीररक्षणे नलागिरिरस्य मत्तस्य पालने बन्धनान्मोचितः । सुहृदाम् जीवितं = जीवनं यशः = प्रतिष्ठाम् च प्रदातुं महासेनः वत्सराजम् मुक्तः = मुक्तवान् । अविमुक्ते हि वत्सराजे नलागिरिदमनासिद्धौ महासेनसुहृदां नलागिरिदमनासामर्थ्यापवादप्रसरणात् कीर्तिहानिः कीर्तिहानिभिया नलागिरिमभिगच्छतां जीवितहानिश्च स्यात् तदुभयं माभूदित्यर्थं मोचितः इति भावः ॥ १८ ॥

---

भरतरोहक—आज भी महासेन ने वत्सराज का जो सत्कार किया है क्या वह उसे ज्ञात नहीं । ( भावार्थ यह है कि वत्सराज को महासेन ने स्वतंत्र कर दिया था और यदि वत्सराज उस उपकार का ध्यान करता तो वत्सराज वासवदत्ता को लेकर भाग न जाता । )

यौग०—ऐसा आप न कहें—

नलागिरि जो वत्सराज की आज्ञा का पालन करता है इसका कारण यह है कि वह ( नलागिरि ) शिक्षितों (हस्तिवशीकरणविद्या को जाननेवालों ) की आज्ञा का पालन करनेवाला है । इसलिए ( महासेन से ) अपने शरीर की रक्षा के लिए और प्रतिष्ठा प्राप्त करने के लिए तथा मित्रों की जान बचाने के लिए वह ( वत्सराज ) मुक्त किया गया ॥ १८ ॥

भरतरोहक—यदि यही बात थी तो नलागिरि को पकड़ने के लिए मुक्त किये हुये तुम्हारे स्वामी फिर क्यों नहीं पकड़े गये ?

यौगन्धरायणः—नेति पश्यत्युपक्रोशभयात्।

भरतरोहकः—अपरोक्षराज्यव्यवहारो भवानिति ब्रवीति। समराव-जितेषु शत्रुषु किमाह शास्त्रम्?

यौगन्धरायणः—वधः।

भरतरोहकः—वधार्हो वत्सराजश्चेत् किमस्माभिः स सत्कृतः?

यौगन्धरायणः—एतदवेद्य खलु यदस्य शरीरं नापहृतम्।

भरतरोहकः—एतदपि सम्भाव्यं मन्यते स्वामी।

यौगन्धरायणः—कः संशयः?

हस्तप्राप्तो हि वो राजा रक्षितस्तेन साधुना।
न ह्यनारुह्य नागेन्द्रं वैजयन्ती निपात्यते॥ १६॥

---

उपक्रोशभयात् = सुहृज्जनस्यात्मनो रक्षितारं कृतघ्नोऽयम् पुनर्बध्नाति इति लोकापवादभीतेः।

अपरोक्षराज्यव्यवहारः = अपरोक्षः राज्यव्यवहारः यस्य सः। साक्षात्कृत-राज्यतंत्रः, राजनीतिज्ञोपि भवान् इति = एवम् अर्थहीनम् ब्रवीति भावः। समरा-वजितेषु—समरे युद्धक्षेत्रे अवजितेषु वशीभूतेषु शत्रुषु किमाह शास्त्रम् = शास्त्रेषु किं विधानमस्ति इत्यर्थः।

हस्तप्राप्तः = सुखम् यथा स्यात्तथा आक्रमणीयतां गत एव वः राजा (महासेनः) तेन साधुना रक्षितः = न मारितः। हि = यतः नागेन्द्रम् अनारुह्य वैजयन्ती =

यौग०—लोकापवाद के भय से उसने ऐसा नहीं किया।

भरतरोहक—राजनीति को जानते हुए भी आप ऐसी बात करते हैं। समर में पकड़े हुए शत्रु को शास्त्र में क्या विधान लिखा है?

यौग०—वध।

भरतरोहक—वध के योग्य भी वत्सराज का हम लोगों ने वध क्यों नहीं किया? (अर्थात् हम लोगों ने उसका वध न कर उसके ऊपर तो कृपा ही की)।

यौग०—इसी का विचार कर के ही तो महासेन का वध नहीं किया गया।

भरतरोहक—इसको भी तुम्हारे स्वामी सम्भव समझते हैं?

यौग०—इसमें क्या सन्देह है?

हस्तगत होने पर भी आपके राजा (महासेन) की उस साधु ने रक्षा की।

भरतरोहकः—भवतु भवतु। महासेनस्य प्रतिकूलं कृत्वा कौशाम्बीं प्रति का कृता ते बुद्धिः ?

यौगन्धरायणः—अहो हास्यमभिधानम्!

**भवतां चाग्रतो यातः शेषकार्येषु का कथा।**
**समूलं वृक्षमुत्पाट्य शाखाश्छेत्तुं कुतः श्रमः॥ २०॥**

( प्रविश्य )

काञ्चुकीयः—( कर्णे ) एवमिव।

भरतरोहकः—प्रकाशमुच्यताम्।

काञ्चुकीयः—

**कारणैर्बहुभिर्युक्तैः कामं नापकृतं त्वया।**

---

पताका न निपात्यते हस्तगतो न भवतीति भावः॥ १९॥

भवतां च अग्रतः यातः=ये मया साक्षादपकृताः मां सद्यो वध्यमिच्छन्ति तेषां युष्माकम् एव पुरस्तान्निर्भयं प्राप्तोऽहम्। शेषकार्येषु=कौशाम्बीप्रयाणे, का वार्ता महाकार्यनिर्वाहिणः क्षुद्रकार्यसाधने कः प्रयासः इति। यथा समूलं वृक्षम् उत्पाट्य शाखाः छेत्तुं कुतः श्रमः॥ २०॥

त्वया कामं बहुभिः युक्तैः कारणैः न अपकृतम्=त्वया कामं न अपकृतं बहुप्रकारं कपटं प्रयुक्तवतापि भवता ममापकारो न कृत इत्यनुमन्ये। मद्वद्धवत्सराजमोचनम् तद्धरणं मत्कन्याहरणं च त्वया कृतं नाहमपकारं मन्ये इति भावः।

---

विना हाथी पर चढ़े हुए हाथी के ऊपर की पताका नहीं हस्तगत हो सकती॥१९॥

भरतरोहक—बहुत अच्छा, महासेन के प्रतिकूल कार्य करके कौशाम्बी जाने के विषय में तुम्हारा क्या विचार है ?

यौग०—यह तो बड़ी हँसी की बात कही।

मैं आप लोगों के समक्ष हूँ। कौशाम्बी जाने की तो बात दूर रही। मूल से वृक्ष को उखाड़ देने पर डाल काटने में क्या परिश्रम है ? ॥ २०॥

( प्रवेश कर )

काञ्चुकीय—( कान में ) इस तरह से।

भरतरोहक—जोर से कहो।

कंचुकी—बहुविध कारणों से मैं तुम्हारे किये हुए अपकार को अपकार नहीं

गुणेषु न तु मे द्वेषो भृङ्गारः प्रतिगृह्यताम् ॥ २१ ॥

यौगन्धरायणः—हा धिक् !

गृहा न निर्वान्ति मया प्रदीपितास्तथैव तावद्धृदयानि मन्त्रिणाम् ।
इयं तु पूजा मम दण्डधारिणः कृतापराधस्य हि सत्कृतिर्वधः ॥ २२ ॥

( नेपथ्ये हाहाकारः क्रियते । )

भरतरोहकः—अये,

को नु खल्वेष सहसा प्रासादाग्राद् विनिःसृतः ।
श्येनपक्षाभिमृष्टानां कुररीणामिव ध्वनिः ॥ २३ ॥

भोः ! ज्ञायतां शब्दः ।

---

मे=मम द्वेषः=ईर्ष्या गुणेषु न । भृङ्गारः = कनकालुकारूपः स्वर्णनिर्मितपात्रविशेषः । प्रतिगृह्यताम् = उपायनरूपेण स्वीक्रियताम् ॥ २१ ॥

मया प्रदीपिताः गृहाः नलागिरिचितोद्भ्रमनायाग्निना संधुक्षिताः गृहाः न निर्वान्ति न शाम्यन्ति । तथा मन्त्रिणाम् हृदयानि न निर्वान्ति । दण्डधारिणः = दण्डविधानाधिकृतात् महासेनात् दण्डार्हस्य मम इयं पूजा न योग्या हि = यतः कृतापराधस्य वधः एव उचितः । सत्कृतिः = पूजा न इति भावः ॥ २२ ॥

श्येनपक्षाभिमृष्टानां कुररीणाम् ध्वनिः इव कः एष ( ध्वनिः ) सहसा प्रासादाग्रात् विनिःसृतः ॥ २३ ॥

---

समझता । मेरा गुण से विरोध नहीं है; इस भृङ्गार ( स्वर्णरचित पात्रविशेष ) को पारितोषिक रूप से स्वीकार करो ॥ २१ ॥

यौग०—धिक्कार है ।

मैंने जिन घरों को जलाया है वे और मन्त्रियों के हृदय आज भी ठंडे नहीं हो रहे हैं । दण्डविधान करनेवाले ( महासेन ) से मेरी यह पूजा की जा रही है । अपराधी की पूजा तो केवल वध है ॥ २२ ॥

( नेपथ्य में हाहाकार होता है )

भरतरोहक—अरे !

श्येन ( बाज ) द्वारा आक्रमण की हुई कुररी के शब्द के तरह यह सहसा महल में कैसा शब्द हो रहा है !! ॥ २३ ॥

अरे, पता लगाओ कि यह कैसी आवाज है ।

प्रच्छन्नोऽप्यनुकृतिलक्ष्यराजभावो
मेघान्तर्गतरविवत् प्रभानुमेयः ॥ ८ ॥

राजा—अलमेतावता प्रसङ्गेन। पुनरप्येषा परीक्षा क्रियताम्।

भूतिकः—यदाज्ञापयति स्वामी।

राजा—अथेदानीं काशिराजदूतं प्रति किं कर्तव्यम्।

भूतिकः—स्वामिन्! दूतशतान्यागतान्यागमिष्यन्ति च।

न तत्र कर्तव्यमिहास्ति लोके
कन्यापितृत्वं बहुवन्दनीयम्।

---

शुष्कव्रणचिह्नैः उल्बणः भीषणः प्रकोष्ठः बाहुभागो यस्य तादृशः, प्रच्छन्नः नामगोत्रादिगोपनेन तिरोहितस्वरूपोऽपि अनुकृतिलक्ष्यराजभावः प्रत्येकाचरणे प्रकटीभवद्राजभूयः मेघान्तर्गतरविवत् जलधरमालान्तर्निहितसूर्यवत् प्रभाऽनुमेयः कान्त्या ज्ञातव्यो भवतीति प्रच्छन्नजातेरपि सततव्यायतशरीरतयोन्नतांसस्य ज्याघातकर्कशभुजाग्रभागस्य च तस्य प्रत्येकाचरणे राजभावो लक्ष्यते सूर्यस्य मेघावृतस्य यथा कान्त्याऽनुमानं जायते तथेति भावः। प्रहर्षिणीवृत्तम्—'म्नाशाभिर्मनजरगाः प्रहर्षिणीयम्' इति च तल्लक्षणम् ॥ ८ ॥

एतावता प्रसङ्गेन—इयता परिकरेण। एषा परीक्षा—तदीयपरिचयजिज्ञासा। काशिराजदूतं प्रति किंकर्त्तव्यम्?—आगतस्य काशिराजदूतस्य किं सन्देष्टव्यम्? दूतशतानि—बहवो दूताः, शतशब्दो बहुत्वाभिप्रायः।

न तत्रेति—इह लोके तत्र दूतागमनविषये कर्त्तव्यं नास्ति, दूता आगच्छन्ति तेभ्यः किमुच्यतामिति चिन्तयाऽलमित्यर्थः। कन्यापितृत्वं बहुवन्द-

---

भी उनका राजभाव लक्षित हो ही जाता है, जैसे मेघ में छिपे सूर्य का भी प्रभा से अनुमान हो जाता है ॥ ८ ॥

राजा—इतने विस्तार की जरूरत नहीं है, फिर से इस विषय का पता लगाओ।

भूतिक—महाराज की जैसी आज्ञा।

राजा—अब काशिराज के दूत का क्या किया जाय?

भूतिक—महाराज, सैकड़ों दूत आये और आयेंगे।

इस प्रसङ्ग में कुछ भी करना नहीं है, कन्या का पिता होना सौभाग्य की

सर्वे नरेन्द्रा हि नरेन्द्रकन्यां
मल्लाः पताकामिव तर्कयन्ति ॥ ९ ॥

राजा—कोऽभिप्रायः।

भूतिकः—सर्वत्र दाक्षिण्यं न कर्तव्यम्। गुणबाहुल्यं तदात्वमायतिं चावेक्ष्य त्वरतां दीर्घसूत्रतां च परित्यज्य देशकालाविरोधेन साधयितव्यं कार्यमित्यर्थः।

राजा—युक्तमभिहितं भूतिकेन। कौञ्जायन! किमर्थं तूष्णीं भूतः।

कौञ्जायनः—स्वामिन्! बहुष्वपि क्षत्रियेषु पूर्वसम्बन्धविशेषौ सौवीर-

---

नीयम् अतिप्रशंसनीयम्—यतः सत्यां कन्यायां सर्वे राजानस्तां याचन्ते, तद्द्वारा च कन्यापितरं प्रार्थयन्ते इति कन्यापितृत्वस्य प्रशंसनीयता। मल्लाः योद्धारः पताकाम् जयध्वजमिव सर्वे नरेन्द्राः नरेन्द्रकन्यां तर्कयन्ति स्वलभ्यां सम्भावयन्ति यथा सर्वेऽपि योद्धारो विजयपताकां स्वलभ्यामेव मन्यन्ते तथैव राजकन्यां सर्वेऽपि राजानः स्वलभ्यामेव मन्यन्तेऽतश्च राजानमुपतिष्ठन्त इत्याशयः॥ ९ ॥

दाक्षिण्यं न कर्तव्यम्—उदारतया न व्यवहर्तव्यम्। गुणबाहुल्यम्—बहुगुणशालित्वम्, तदात्वम्—तात्कालिकीम् परिस्थितिम् आयतिं—भविष्यम्। त्वरताम्—क्षिप्रकारित्वम्। दीर्घसूत्रताम्—विलम्ब्य कार्यकारित्वम्। देशकालाविरोधेन—देशस्य कालस्य च अनुसारेण।

किमर्थं तूष्णींभूतः—त्वं किमर्थमत्र प्रसङ्गे स्वीयं विचारं न प्रकटयसीत्यर्थः।

पूर्वसम्बन्धविशेषौ—प्राक्तनसम्बन्धशालिनौ। भगिनीपतित्वे तुल्यौ-तुल्यरूपेण

---

बात है। सभी राजा राजकुमारी को उसी प्रकार चाहते हैं जैसे बहादुर लोग विजय-पताका को चाहा करते हैं॥ ९॥

राजा—इसका क्या अर्थ?

भूतिक—सर्वत्र उदारता से काम नहीं करना चाहिये, गुण-गौरव, तात्कालिक स्थिति, तथा भविष्य का विचार कर के जल्दबाजी और दीर्घसूत्रता दोनों का परित्याग कर के देशकाल के अनुसार अपना कार्य करना चाहिये।

राजा—भूतिक ने ठीक कहा है। कौञ्जायन, तुम क्यों चुप हो।

कौञ्जायन—महाराज, बहुत क्षत्रियों के रहने पर भी पुराने सम्बन्धी सौवीर-

राजकाशिराजौ स्वामिनो भगिनीपतिरेव तुल्यौ अस्मत्सम्बन्धयोग्या-विति स्वामिना चिन्तितौ। तत्र पूर्वमेव सौवीरराजेन पुत्रस्य कारणाद् दूतः प्रेषितः। स चास्माभिरतिबाला कन्येत्यपदेशमुक्त्वा सुपूजितो विसर्जितः। इदानीं तु काशिराजेन पुत्रस्य कारणाद् दूतः प्रेषितः। तत्र बलाबलचिन्तायां स्वामी प्रमाणम्।

राजा—सम्यगुक्तं कौञ्जायनेन। भूतिक! सर्वराजमण्डलमपोह्य द्वयोः स्थापितयोः कं प्रति विशेषः।

भूतिकः—न भृत्यदूषणीया राजानः, स्वामिनो हि स्वाम्यममात्यानाम्।

राजा—अलमुपचारेण। ब्रूहि को निश्चयः।

---

भगिनीपती। पुत्रस्य कारणात्—पुत्रार्थं भवतः कन्यां याचितुम्।

अतिबाला—अतिस्वल्पवयाः। अपदेशमुक्त्वा-छलं कृत्वा। बलाबलचिन्तायाम्—केन सह सम्बन्धः करणीय इति तारतम्यभावविचारे। स्वामी प्रमाणम्—भवानन्तिमनिर्णयकरः।

अपोह्य—अपास्य, अगणयित्वा। द्वयोः—सौवीरराजकाशिराजयोः।

भृत्यदूषणीयाः—भृत्यैर्निन्दनीयाः। स्वामिनो हि स्वाम्यममात्यानाम्—स्वामिनो हि मन्त्रिभिरनुगम्यन्तेऽतो भवतैव निर्णीतविशेषस्य कस्यापि राज्ञः प्रशंसा मयापि कर्त्तव्या, ननु स्वयं विशेषो निर्णयः, अलमुपचारेण—शिष्टाचारपूर्णव्यवहारेण।

---

राज तथा काशिराज आप के बहनोई होते हैं, अतः आपने सोचा था कि यह हमारे सम्बन्ध के योग्य हैं। सौवीरराज ने अपने पुत्र के लिये पहले ही दूत भेजा था, हमलोगों ने उसे यह कह कर सादर लौटा दिया कि लड़की निरी बच्ची है। अब काशिराज ने अपने पुत्र के लिये दूत भेजा है। इन में आप ही निर्णय करें कि कहाँ सम्बन्ध करना अधिक उपयुक्त होगा।

राजा—कौञ्जायन ने ठीक कहा है। समस्त राजमण्डल को छोड़ कर चुने गये इन दोनों में कौन अधिक अच्छा रहेगा?

भूतिक—भृत्यों को राजा की आलोचना नहीं करनी चाहिये, स्वामियों का अमात्यों पर प्रभुत्व होता है।

राजा—शिष्टता की बात छोड़ो, बताओ क्या निश्चय रहा?

भूतिकः—इदानीं तु न प्रत्याख्यातव्यम्। स्वामिन्! सौवीरराज-काशिराजौ स्वामिनो भगिनीपतित्वे तुल्यौ। अथ देव्या भ्रातेति सौवीरेन्द्रो गुणाधिकः।

राजा—न खलु भवानस्मत्सङ्कल्पानभिवादकः।

भूतिकः—उभयथानुगृहीतोऽस्मि।

राजा—भोः! किन्तु खलु सौवीरेन्द्रेण पुनर्न दूतसम्पातः क्रियते।

भूतिकः—तत्रास्ति मे कश्चित् सन्देहः। सुष्टु परीक्ष्य वक्ष्यामीति नोक्तवानस्मि।

राजा—ननु कुशली तत्रभवान्।

भूतिकः—वदन्ति चारपुरुषाः—

न दृश्यते तत्रभवान् सपुत्रः

---

इदानीं तु न प्रत्याख्यातव्यम्—सम्प्रति त्वन्यतरनिर्णयो मया वाच्य-एवेत्याशयः।

अस्मत्सङ्कल्पानभिवादकः—मदीयविचारानुमोदकः।

उभयथा—गुणाधिकस्य पूर्वसम्बन्धिनः स्वाम्यनुमोदितस्य च प्रार्थिनः प्राप्त्येत्यर्थः।

दूतसम्पातः—दूतप्रेषणम्।

न दृश्यते इति—सपुत्रः पुत्रेण सहितः तत्रभवान् आदरणीयः सौवीरराजः

---

भूतिक—अब तो प्रत्याख्यान नहीं करना है। महाराज, सौवीरराज और काशिराज आप के समान रूप से बहनोई हैं, परन्तु महारानी के भाई होने के कारण सौवीरराज गुणाधिक ठहरते हैं।

राजा—तुम कभी भी हमारे सङ्कल्प का विरोध नहीं करते हो।

भूतिक—दोनों प्रकार से अनुगृहीत हुआ।

राजा—अजी, सौवीरराज फिर से दूत क्यों नहीं भेजते हैं?

भूतिक—इस विषय में मुझे भी कुछ सन्देह है, अच्छी तरह पता लगाकर कहूँगा इसी लिये श्रीमान् से नहीं कहा था।

राजा—सौवीरराज सकुशल तो हैं?

भूतिक—सपुत्र सौवीरराज दीखते नहीं हैं, सारा कार्य मन्त्रियों के हाथ में है।

कार्याण्यमात्याः किल वर्तयन्ति ।
न विद्यते कारणमत्र किञ्चि-
न्न लभ्यते राजकुलप्रवेशः ॥ १० ॥

राजा—भोः ! किन्नु खलु भवेदेतत् ।
कामाहतः कुमतिभिः सचिवैर्गृहीतो
रोगातुरः स्वजनरागमवेक्षते वा ।
शप्तो द्विजैर्व्रतमुपेत्य करोति शान्ति
को वा भवेन्नरपतेर्गृहरोधहेतुः ॥ ११ ॥

---

न दृश्यते नावलोक्यते, तदनुपस्थितौ अमात्याः मन्त्रिणः किल कार्याणि राजकर्त्तव्यानि वर्त्तयन्ति कुर्वन्ति । अत्र राज्ञः सपुत्रस्यादर्शने किञ्चित् कारणं न विद्यते, नन्वेवं राजकुलं प्रविश्यैव राज्ञः स्थितिः कुतो नावधार्यते, तत्राह—न लभ्यते राजकुलप्रवेश इति । अतश्च वस्तुस्थितिरवधारयितुं न शक्यत इत्याशयः ॥ १० ॥

किन्नु खलु भवेदेतत्—राज्ञोऽदर्शने किन्नु कारणं स्यात् ?

**कामाहत इति**—कामाहतः कस्यांचन वनितायां जातेन अभिलाषातिशयेन पीडितः, कुमतिभिः दुष्टबुद्धिभिः सचिवैर्गृहीतः बद्ध्वा क्वचनाज्ञाते स्थाने स्थापितः, रोगातुरः केन चन व्याधिविशेषेण पीडितः, वा अथवा स्वजनरागम् आत्मीयजनानुरागम् अवेक्षते परीक्षते मयि प्रच्छन्ने मदात्मीयः कथमाचरतीति जिज्ञासत इत्यर्थः । अथवा द्विजैः ब्राह्मणैः शप्तः शापेन कदर्थितः सन् व्रतमुपेत्य व्रतमाधाय शान्तिं करोति शापनिवृत्त्यौपयिकं कर्मविशेषमाचरति ? एवमादिषु कारणेषु संभवत्सु नरपतेर्गृहरोधहेतुः गृहे प्रच्छन्नभावेनावस्थाने कारणं को वा भवेत् ? को हेतुर्यदयं सौवीरराजो नावगम्यते कुत्र स्थित इत्यर्थः ॥ ११ ॥

---

कुछ कारण समझ में नहीं आता, राजकुल में किसी को जाने नहीं दिया जाता है ॥ १० ॥

राजा—अजी, इस में क्या हो सकता है, कामासक्त हैं या मन्त्रियों ने उन्हें बन्दी बना लिया है ?

रुग्ण हैं ? या अपने स्वजन के प्रेम की परीक्षा ले रहे हैं, अथवा ब्राह्मणों से शप्त हो कर व्रत द्वारा उसकी शान्ति कर रहे हैं, आखिर उनके छिपने का क्या कारण हो सकता है ? ॥ ११ ॥

शीघ्रं परीक्ष्यतामेष वृत्तान्तः ।

भूतिकः—यदाज्ञापयति स्वामी ।

राजा—कौञ्जायन ! किमिदानीं काशिराजदूतं प्रति कर्तव्यम् ।

कौञ्जायनः—एवं गते काशिराजदूतः पूजयितव्यः । बहुमुखा विवाहा यथेष्टं साध्यन्ते ।

राजा—अहो कार्यमेवापेक्षते बुद्धिरमात्यानां, न स्नेहम् ।

( नेपथ्ये )

जयतु स्वामी, जयतु महाराजः । दश नालिकाः पूर्णाः ।

भूतिकः—स्वामिन् ! शेषमभ्यन्तरे चिन्तयिष्यामः । अतिक्रामति स्नानवेला । स्वामिदारिका चाश्वासयितव्या । महादेवी च चिरं प्रतीक्षते । महाजनोऽप्यस्मिन्नुपद्रवे स्वामिनं द्रष्टुमिच्छति ।

---

एवंगते—अस्यां दशायाम् । पूजयितव्यः सत्कृत्य विसर्जनीयः । बहुमुखाः—बहुषु स्थानेषु संभविनः । यथेष्टं साध्यन्ते—यथारुचि क्रियन्ते ।

कार्यमेवापेक्षते—कर्त्तव्यमेव विचारयति ।

दशनालिकाः पूर्णाः—दशवादनवेला जाता इत्यर्थः ।

अभ्यन्तरे—कालान्तरे । अतिक्रामति—अतिगच्छति । आश्वासयितव्या—सान्त्वनीया । महाजनः—सर्वोऽपि परिजनवर्गः ।

---

इस बात का शीघ्र पता लगाओ ।

भूतिक—महाराज की जो आज्ञा ।

राजा—इस समय काशिराज के दूत का क्या किया जाय ?

कौञ्जायन—इस स्थिति में काशिराज के दूत का आदर हो । विवाह में बहुत में से एक चुनना होता है ।

राजा—हाँ, मन्त्रियों की बुद्धि काम की बात सोचती है !

( नेपथ्य में )

जय हो महाराज की, दश बज गये ।

भूतिक—और बातें पीछे सोची जायेंगी, स्नान का समय बीत रहा है, आपको राजकुमारी को आश्वासन भी देना है । महारानी देर से राह देख रही हैं, और लोग भी इस समय श्रीमान् को देखना चाहते हैं ।

राजा—अहो महद्भारो राज्यं नाम। कुतः,

धर्मः प्रागेव चिन्त्यः सचिवमतिगतिः प्रेक्षितव्या स्वबुद्ध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ कालयोगेन कार्यौ
ज्ञेयं लोकानुवृत्तं परचरनयनैर्मण्डलं प्रेक्षितव्यं
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोऽपि नावेक्षितव्यः ॥१२॥

( निष्क्रान्ताः सर्वे। )

प्रथमोऽङ्कः।

धर्मः प्रागेवेति—धर्मः प्रागेव पूर्वमेव चिन्त्यः विचारणीयः, अनन्तरं स्वबुद्ध्या निजमत्यनुसारं सचिवमतिगतिः सचिवानां मन्त्रिणां मतिगतिः बुद्धिधारा-इमे मन्त्रिणः सद्बुद्धयो दुर्बुद्धयो वेति—प्रेक्षितव्या द्रष्टव्या। रागदोषौ रागः वस्तुष्वभिषङ्गः दोषः दुष्टविचारानुवृत्तिश्च प्रच्छाद्यौ बलान्निग्रहीतव्यौ। कालयोगेन समयानुसारेण मृदुपरुषगुणौ कार्यौ, कदाचिन्मार्दवं कदाचिच्च पारुष्यं यथावसरं प्रयोक्तव्यमित्यर्थः। लोकानुवृत्तं लोकवृत्तं ज्ञेयं बोद्धव्यं, परे उत्कृष्टा ये चराः गुप्तचरास्त एव नयनानि दर्शनसाधनानि तैः मण्डलं प्रजामण्डलं प्रेक्षितव्यं द्रष्टव्यम्, इह लोके प्रयासमास्थाय आत्मा स्वो रक्ष्यः रक्षितव्यः, पुनः रणशिरसि युद्धभूमौ सोऽपि यत्नात् आत्मापि नावेक्षितव्यः, आत्मनोऽपि चिन्ता न कर्तव्या, युद्धे पराजयस्य मरणादपि कष्टकरत्वादित्यर्थः। तदित्थं राज्यं महद् भारो नामेति भावः॥ १२॥

इति श्रीरामचन्द्रमिश्रकृते अविमारक 'प्रकाशे' प्रथमाङ्क 'प्रकाशः'

राजा—अहो, राज्य भी एक बोझ है, क्योंकि:—

पहले धर्म देखना होता है, अपनी बुद्धि से मन्त्रियों की गति-विधि देखनी पड़ती है, राग-द्वेष को छिपाना पड़ता है, सरलता तथा कठोरता यथासमय बरतनी होती है। गुप्तचर रखना पड़ता है, प्रजा की रक्षा करनी है, अपनी रक्षा करनी तथा युद्ध में उसकी भी उपेक्षा करनी होती है॥ १२॥

( सबका प्रस्थान )

प्रथम-अङ्क।

# द्वितीयोऽङ्कः

( ततः प्रविशति विदूषकः )

विदूषकः—भो ! ण जाणन्ति अवत्थाविसेसं इस्सरपुत्ता णाम। अदो तत्तभवं अविमारओ इसिसावेण कुलपरिब्भंसं अन्तअकुलप्पवासं अत्तणो विण्णाणं गुरुजणं च अचिन्तअन्तो जदा हत्थिसम्भमदिअसे कुन्तिभोअदुहिआ कुरङ्गी दिट्ठा, तदप्पहुदि, अण्णादिसो विअ संवुत्तो। ही ही किं वहुणा, मए वि सह गोट्ठिं णेच्छदि, सव्वआलं चिन्तअन्तो अहिरमदि। सच्चो खु लोअप्पवादो 'सङ्घआरिणो अणत्थ' त्ति। को एत्थ सम्बन्धो। सा राअदारिआ सअं अन्तअ त्ति। अहं पि दाव बम्हणपरिवादं परिहरन्तो बम्हणकुलेसु परिब्भमिअ पच्छण्णो तत्तहोदो आवासं एव्व गच्छामि। [ भोः ! न जानन्त्यवस्थाविशेषमीश्वरपुत्रा नाम। अतस्तत्रभवान् अविमारकः ऋषिशापेन कुलपरिभ्रंशमन्त्यजकुलप्रवासमात्मनो विज्ञानं गुरुजनं चाचिन्तयन् यदा हस्तिसम्भ्रमदिवसे कुन्तिभोजदुहिता कुरङ्गी दृष्टा, तदाप्रभृत्य-

---

अवस्थाविशेषम्—आत्मनो दशाविपर्ययम्। ईश्वरपुत्राः—राजकुमाराः। ऋषिशापेन—कस्यापि ऋषेरियन्त्यहानि चण्डालो भवेति साधिक्षेपवचसा। हस्तिसम्भ्रमदिवसे-यस्मिन् दिने मत्तो हस्ती कन्योद्यानं प्रविश्य तत्र स्थितान् पीडयितुं प्रवृत्तस्तस्मिन्नहनि। अन्यादृशः—पूर्वापेक्षया विलक्षणः। संवृत्तः—जातः। सह गोष्ठीं नेच्छति-लोकैः सह वासं न कामयते। सर्वकालम्—सर्वदा। चिन्तयन्नभिरमते—चिन्ताकुलस्तिष्ठति। सङ्घचारिणः—एकस्यानर्थस्योपनिपाते परेऽप्यनर्थाः समापतन्तीति मन्येऽनर्थाः सर्वदा सदैव तिष्ठन्तीत्यर्थः, 'छिद्रेष्वनर्था बहुलीभवन्ति' 'misfortune never comes alone' इत्याभाणकसमानार्थेयमुक्तिः।

---

द्वितीय अङ्कः

विदूषक—ये राजा के लाड़ले अवस्था-परिवर्त्तन समझते ही नहीं हैं। इसी लिये यह अविमारक—ऋषिशाप के कारण कुलभ्रंश, अन्त्यजकुलप्रवास, अपना ज्ञान, एवं गुरुजन—सबकुछ भूलकर—जभी से उस हस्तिसंभ्रम के दिन कुन्तिभोज-पुत्री कुरङ्गी दीख गई—तभी से कुछ दूसरी ही तरह का हो रहा है। हःहः, और क्या, मेरे साथ भी बैठना नहीं चाहता है, सदा सोचा करता है। लोक ठीक ही

न्यादृश इव संवृत्तः । हो ही किं वहुना, मयापि सह गोष्ठीं नेच्छति, सर्वकालं चिन्तयन्नभिरमते । सत्यः खलु लोकप्रवादः 'सङ्घचारिणोऽनर्थाः' इति । कोऽत्र सम्बन्धः । सा राजदारिका स्वयमन्त्यज इति । अहमपि तावद् ब्राह्मणपरिवादं परिहरन् ब्राह्मणकुलेषु परिभ्रम्य प्रच्छन्नस्तत्रभवत आवासमेव गच्छामि । ]

( ततः प्रविशति चेटी )

चेटी—एदस्सिं अवत्थापरिब्भट्ठे राअउळे अबहुकय्यदाए णअरं पेक्खिदुं णिग्गदम्हि । ( परिक्रम्यावलोक्य ) अयि एसो अय्यसन्तुट्ठो गच्छइ । होदु, एदेण सह हसन्ती मुहुत्तअं णिव्वेदं विणोदेमि । ( उपसृत्योर्ध्वमवलोक्य ) हळा कोमुदिए ! किं ळद्धो वम्हणो । किं भणासि-ण ळभामि त्ति । [ एतस्मिन्नवस्थापरिभ्रष्टे राजकुलेऽवहुकार्यतया नगरं प्रेक्षितुं निर्गतास्मि । अयि एष आर्यसन्तुष्टो गच्छति । भवतु, एतेन सह हसन्ती मुहूर्तकं निर्वेदं विनोदयामि । हला ! कौमुदिके ! किं लब्धो ब्राह्मणः । किं भणसि—न लभ इति । ]

---

कोऽत्र संवन्धः—न कोऽपि संवन्धः अस्ति येनानुरागोदयः प्राप्तावसरतया समर्थ्येत । ब्राह्मणपरिवादं परिहरन्—ब्राह्मणोऽयमिति वक्तव्यतां दूरीकुर्वन् ।

अवस्थापरिभ्रष्टे—स्वदशायाश्च्युते । अवहुकार्यतया—कार्यवाहुल्यस्याभावेन । मुहूर्त्तकम्-कियन्तं कालम् । निर्वेदम्—मनःखेदम् । विनोदयामि—आनन्दे परिवर्त्तयामि ।

---

कहते हैं कि अनर्थ अकेला नहीं चलता है । इस में क्या सम्बन्ध ? वह राज कन्या है, और आप खुद अन्त्यज हैं । मैं भी ब्राह्मणों की शिकायत को बचाता हुआ ब्राह्मणों के घर का चक्कर लगा कर छिप कर उसी के आवास को जाता हूँ ।

( चेटीका प्रवेश )

चेटी— इस अवस्था-परिभ्रष्ट राजकुल में काम कम है, इस लिये नगर देखने निकल पड़ी हूँ । ( चल कर तथा देख कर ) अजी, यही तो आर्य सन्तुष्ट जा रहे हैं । अच्छा, इनके साथ हँस खेल कर जरा दिल वहला लूँ । ( समीप जाकर तथा ऊपर देख कर ) सखी कौमुदिके, क्या ब्राह्मण मिलगये ? क्या कहा ? नहीं मिले ?

विदूषकः—चन्दिए। किं एदं। [ चन्द्रिके! किमेतत्। ]

चेटी—अय्य! कञ्चि बम्हणं अण्णेसामि। [ आर्य! कञ्चिद् ब्राह्मणमन्विष्यामि। ]

विदूषकः—बम्हणेण किं कय्यं! [ ब्राह्मणेन किं कार्यम्। ]

चेटी—किमण्णं, भोअणत्थं णिमन्तेदुं। [ किमन्यद्, भोजनार्थं निमन्त्रयितुम्। ]

विदूषकः—भोदि! अहं को, समणओ। [ भवति! अहं कः, श्रमणकः। ]

चेटी—तुवं किल अवेदिओ। [ त्वं किलावेदिकः। ]

विदूषकः—किस्स अहं अवेदिओ। सुणाहि दाव। अत्थि रामाअणं णाम णट्टसत्थं। तस्सिं पञ्च सुलोआ असम्पुण्णे संवच्छरे मए पठिदा। [ कस्मादहमवेदिकः। शृणु तावत्। अस्ति रामायणं नाम नाट्यशास्त्रम्। तस्मिन् पञ्च श्लोका असम्पूर्णे संवत्सरे मया पठिताः। ]

---

ब्राह्मणेन किं कार्यम्—किंनिमित्तं ब्राह्मणोऽन्विष्यते?

श्रमणकः—बौद्धभिक्षुः ( अब्राह्मणत्वे तात्पर्यम् )

अवेदिकः—वेदज्ञानशून्यः।

असम्पूर्णे—असमाप्ते। वर्षे अपूर्णे एव मया पञ्च श्लोकाः पठिता इत्यहो मम बुद्धेः प्रखरता।

---

विदूषक—चन्द्रिके, यह क्या?
चेटी—आर्य, किसी ब्राह्मण का अन्वेषण कर रही हूँ।
विदूषक—ब्राह्मण से क्या कार्य है?
चेटी—और क्या? भोजन के लिये निमन्त्रण देना है।
विदूषक—अरी, मैं कौन हूँ, संन्यासी।
चेटी—तुम अवैदिक हो।
विदूषक—कैसे मैं अवैदिक हूँ। सुनो—रामायण नाम का नाट्यशास्त्र है। वर्ष पूरा नहीं हो पाया, और मैंने उस के पाँच श्लोक पढ़लिया।

चेटी—जाणामि जाणामि। अय्यस्स कुलोइदो ईदिसो मेधाविभावो। [ जानामि जानामि। आर्यस्य कुलोचित ईदृशो मेधाविभावः ]

विदूषकः—ण केवलं सुलोआ एव, तेसं अत्थो वि मुणिओ। अण्णं च। अवरो विसेसो, वम्हणो दुल्लहो अक्खरञ्ञो अत्थञ्ञो अ। [ न केवलं श्लोका एव, तेषामर्थोऽपि ज्ञातः। अन्यच्च। अपरो विशेषः, ब्राह्मणो दुर्लभोऽक्षरज्ञोऽर्थज्ञश्च। ]

चेटी—तेण हि भणाहि किं णाम एदं अक्खरं। ( नाममुद्रिकां दर्शयति ) [ तेन हि भण किं नामैतदक्षरम्। ]

विदूषकः—( आत्मगतम् ) अजाणमाणो किं भणिस्सं। ( विचार्य ] भोदु दिट्ठं। एवं दाव भणिस्सं। ( प्रकाशम् ) भोदि ! एदं अक्खरं मम पुत्थए णत्थि। [ अजानानः किं भणिष्यामि। भवतु दृष्टम्। एवं तावद् भणिष्यामि। भवति ! एतदक्षरं मम पुस्तके नास्ति। ]

चेटी—जदि ण जाणासि, अदक्खिणं भुञ्जेहि। [ यदि न जानासि अदक्षिणं भुङ्क्ष्व। ]

विदूषकः—भोदु भोदु। [ भवतु भवतु। ]

---

मेधाविभावः—बुद्धिवैभवम्। कुलोचितः कुलक्रमागतः।

अदक्षिणं भुङ्क्ष्व—दक्षिणामन्तरेणैव भोजनं कुरु।

---

चेटी—जानती हूँ, आप की यह बौद्धिक प्रखरता कौलिक है।

विदूषक—केवल श्लोक ही नहीं, मैंने उनका अर्थ भी पढ़ लिया है। और मुझ में यह विशेषता है, अक्षर भी जाने और अर्थ भी, ऐसा ब्राह्मण दुर्लभ होता है।

चेटी—अच्छा तो बोलो यह कौन अक्षर हैं ? ( अंगूठी दिखलाती है )

विदूषक—( स्वगत ) मैं अनजान क्या बताऊँगा ? ( सोच कर ) समझ गया, यही कह दूँगा। ( प्रकट ) यह अक्षर मेरी पुस्तक में नहीं है।

चेटी—अगर नहीं जानते तो बिना दक्षिणा के भोजन करो।

विदूषक—अच्छा अच्छा।

चेटी—पेक्खामि दाव अय्यस्स अङ्गुलीअअं। [ पश्यामि तावदार्यस्याङ्गुलीयकम्। ]

विदूषकः—पेक्ख पेक्ख ममकेरअं दंसणीअं। [ पश्य पश्य मदीयं दर्शनीयम्। ]

चेटी—( गृहीत्वा ) एसो भट्टिदारओ इदो एव्व आअच्छदि। [ एष भर्तृदारक इत एवागच्छति। ]

विदूषकः—( परावृत्यावलोक्य ) कहिं कहिं तत्तभवं। [ कुत्र कुत्र तत्रभवान् ]

चेटी—विलोभिदो मुद्धवम्हणो। इमं जणसमूहं पविसिअ चउप्पहमग्गे वञ्चिअ गमिस्सं। ( निष्क्रान्ता ) [ विलोभितो मुग्धब्राह्मणः। इमं जनसमूहं प्रविश्य चतुष्पथमार्गे वञ्चयित्वा गमिष्यामि। ]

विदूषकः—( सर्वतो विलोक्य ) चन्दिए! चन्दि! कहिंए कहिं चन्दिआ हा वञ्चिदो म्हि। गण्डभेददासीए सीलं जाणन्तो वि अत्तणो भोअणविस्सम्भेण छालिदो म्हि ( परिक्रम्य ) भोअणं वि अलिअं चिन्तेमि। ( अग्रतो विलोक्य ) हन्त एसा धावइ। चिट्ठ चिट्ठ अधम्मिट्ठदासि!

---

विलोभितः—वञ्चितः। मुग्धब्राह्मणः—सरलमतिर्विप्रः।

इमं जनसमूहं प्रविश्य—अस्मिन् जनसम्मर्देऽन्तर्भूय।

गण्डभेददास्याः—निन्द्यचरित्राया दास्याः। भोजनविस्रम्भेण—भोजनलाभप्रत्ययेन। छलितः—वञ्चितः। भोजनमप्यलीकं चिन्तयामि यया इत्थं प्रतारितोऽस्मि तया दत्तं निमन्त्रणमपि मिथ्या संभवतीति भावः। अधर्मिष्ठदासि—पापे-

---

चेटी—जरा आप की अंगूठी देखूँ।

विदूषक—देखो देखो, मेरी अँगूठी देखने लायक है।

चेटी—( लेकर ) यह राजकुमार इधर ही आ रहे हैं।

विदूषक—( मुड़ कर देख कर ) कहाँ? कहाँ है राजकुमार?

चेटी—ठग लिया वेवकूफ ब्राह्मण को, इस जनसमूह में मिल कर चौराहे पर ठग कर निकल जाऊँगी।

( जाती है )

विदूषक—( चारो ओर देख कर ) चन्द्रिके, चन्द्रिके, कहाँ कहाँ है चन्द्रिका। हाय, ठगा गया। मैं इस कलमुँही दासी का स्वभाव जानता था, तथापि

चिट्ठ। किं धावइ एव। जाव अहं वि धावामि। ( धावति ) मम पादा सिविणे हत्थिणा आसादिअमाणस्स विअ तहिं तहिं एव्व पडन्ति। हन्त कुम्भदासीए वुत्तन्तं तत्तहोदो णिवेदइस्सं। [ चन्द्रिके! चन्द्रिके! कुत्र कुत्र चन्द्रिका। हा वञ्चितोऽस्मि। गण्डभेददास्याः शीलं जानन्नप्यात्मनो भोजनविस्रम्भेण च्छलितोऽस्मि। भोजनमप्यलीकं चिन्तयामि। हन्तैषा धावति। तिष्ठ तिष्ठ अधर्मिष्ठदासि! तिष्ठ। किं धावत्येव। यावदहमपि धावामि। मम पादौ स्वप्ने हस्तिनासाद्यमानस्येव तत्र तत्रैव पततः। हन्त कुम्भदास्या वृत्तान्तं तत्रभवते निवेदयिष्यामि। ]

( निष्क्रान्तः )

**प्रवेशकः।**

( ततः प्रविशत्युपविष्टोऽविमारकः। )

अविमारकः—

**अद्यापि हस्तिकरशीकरशीतलाङ्गीं**
**बालां भयाकुलविलोलविषादनेत्राम्।**

---

दासि। हस्तिना साद्यमानस्य–करिणा गृह्यमाणस्य। तत्र तत्रैव पततः—तस्मिन्नेव स्थाने निपततः नाग्रतः सरतः।

**प्रवेशक समाप्त**

**अद्यापीति**—अद्यापि बहुसमयातिपातेऽपि हस्तिनः करस्य शुण्डादण्डस्य शीकरैः अम्बुकणैः शीतलानि शीतानि अङ्गानि यस्यास्तां तथोक्ताम्, भयेन आकुले व्याकुले विलोलविषादे विषादपूर्णे च नेत्रे यस्यास्तां तथाभूताम्, बालां

---

भोजन के मिलने की आशा में ठगा गया। ( चल कर ) भोजन का निमन्त्रण भी झूठा हो सकता है। ( आगे देख कर ) हाय, यही तो दौड़ी जा रही है। अरी पापिनी दासी, ठहर ठहर। क्यों, भागती ही जा रही है। मैं भी दौड़ता हूँ। ( दौड़ता है ) मेरे पैर जहाँ के तहाँ ही पड़ रहे हैं, जैसे सपने में हाथी ने पकड़ लिया हो। हाय, इस अभागी दासी की सारी बातें मैं महाराज से कह दूँगा। ( जाता है )

( प्रवेशक )

( बैठे हुए अविमारक का प्रवेश )

अविमारक—हाथी के शुण्डा-दण्ड से निर्गत जलकण से सिक्त सर्वगात्री,

स्वप्नेषु नित्यमुपलभ्य पुनर्विबोधे
जातिस्मरः प्रथमजातिमिव स्मरामि ॥ १ ॥

अहो बलमनङ्गस्य । कुतः,

दृष्टिस्तदाप्रभृति नेच्छति रूपमन्यद्
बुद्धिः प्रहृष्यति विषीदति च स्मरन्ती ।
पाण्डुत्वमेति वदनं तनुतां शरीरं
शोकं व्रजामि दिवसेषु निशासु मोहम् ॥ २ ॥

---

नित्यं स्वप्नेषूपलभ्य स्वप्नावस्थायामासाद्य पुनर्विबोधे जाते जागरे जातिस्मरः पूर्वजन्मस्मरणशक्तिशाली प्रथमजातिं पूर्वजन्मेव स्मरामि । अयमाशयः—यथा जातिस्मरः पूर्वतनीं जातिं स्मरति न चोपलभते, तथैवाहं करिकरशीकरक्लिन्न-सर्वावयवतया शीतलीभवद्वपुषं भयाकुलविषादपूर्णनयनाञ्च तां बालां स्वप्नेषु साक्षात्कृत्य जाते जागरे ध्याने भावयामीति । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ १ ॥

अहो बलमनङ्गस्य आश्चर्यजनकं कामदेवस्य सामर्थ्यम् । तदेवोपपादयति—कुत इति ।

दृष्टिरिति—तदाप्रभृति यदा सा युवतिर्दृष्टा ततः कालात् दृष्टिः अन्यद्रूपम् अन्यगतं सौन्दर्यम् नेच्छति नाभिनन्दति । स्मरन्ती प्रेयस्या ध्याने आसक्ता बुद्धिः प्रहृष्यति विषीदति च लाभाशया प्रहर्षमाप्नोति विघ्नशङ्कया च विषादमनुभवति । वदनं मुखं पाण्डुत्वम् पाण्डुरवर्णत्वम् शरीरं तनुताञ्च एति प्राप्नोति, दिवसेषु शोकम् इष्टानवाप्तिजनितं खेदम् निशासु रात्रिषु च मोहं मूर्च्छाम् व्रजामि । पूर्वोक्तं वृत्तम् ॥ २ ॥

---

भयाकुलनयना उस बाला को स्वप्न में प्राप्त करता हूँ, फिर जगने पर उसी तरह याद किया करता हूँ जैसे पूर्वजन्म को जातिस्मर लोग याद करते हैं ॥ १ ॥

अहो, कन्दर्प कितना प्रबल है,

उस समय से मेरी दृष्टि दूसरे रूप को नहीं देखना चाहती है, बुद्धि उसके स्मरण से कष्ट तथा आनन्द दोनों प्राप्त करती है, चेहरा पीला एवं शरीर दुबला होता जा रहा है, दिन में शोक एवं रात में मोह घेरे रहता है ॥ २ ॥

अथवा अयुक्तमधृतित्वं पुरुषाणाम्। सङ्कल्प्यमानो हि विजृम्भते मदनः। तस्मादहमिदानीं न सङ्कल्पयामि। (स्मृत्वा) अहो तस्या रूपसम्पद्, रूपानुरूपं यौवनं, यौवनसदृशं सौकुमार्यम्। अत्र हि,

प्रतिच्छन्दं धात्रा युवतिवपुषां किन्नु रचितं
गता वा स्त्रीरूपं कथमपि च ताराधिपरुचिः।
विहाय श्रीः कृष्णं जलशयनसुप्तं कृतभया
धृतान्यस्त्रीरूपं क्षितिपतिगृहे वा निवसति ॥ ३ ॥

---

अधृतित्वम्—धैर्यत्यागः। सङ्कल्प्यमानः—सङ्कल्पगोचरतां नीयमानः। विजृम्भते-वर्द्धते। रूपानुरूपं यौवनम्—यादृशं रूपं तादृशं यौवनम्। यौवनसदृशं सौकुमार्यम्—यादृशं यौवनं तादृशमेव सौकुमार्यम्।

प्रतिच्छन्दमिति—धात्रा ब्रह्मणा युवतिवपुषाम् सुन्दरीतनूनाम् प्रतिच्छन्दम् आदर्शरूपम् किन्नु रचितम्? वा अथवा ताराधिपरुचिः चन्द्रकान्तिः कथमपि केनापि प्रकारेण स्त्रीरूपं गता स्त्रीस्वरूपतां प्राप्ता? वा अथवा जलशयनसुप्तम् जलनिधिशयनीये शयानम् कृष्णं भगवन्तं विष्णुं विहाय परित्यज्य कृतभया सञ्जातभीतिः श्रीः लक्ष्मीः धृतान्यस्त्रीरूपम् अन्यरमणीस्वरूपं धृत्वा क्षितिपतिगृहे कुन्तिभोजनृपभवने तत्तनयारूपेण निवसति? इयं राजकुमारी ब्रह्मणा निर्मितस्य स्त्रीरूपादर्शस्य स्त्रीरूपं बिभ्रतः चन्द्ररोचिषश्च समाना विद्यते, अथवा समुद्रे शयानं विष्णुं विहायागतया तद्भवादन्यस्त्रीरूपमास्थाय वसन्त्या श्रिया वा तुलिता विद्यत इत्यर्थः। उत्प्रेक्षात्रयं स्फुटम्। शिखरिणीवृत्तम् ॥ ३ ॥

---

अथवा—पुरुषों का अधैर्य उपयुक्त नहीं है। संकल्प करने से ही काम की वृद्धि होती है, अतः मैं अभी संकल्प ही नहीं करूँगा। (याद कर के) अहा, कैसा था उसका रूप, जैसा ही रूप वैसा ही यौवन, यौवन के ही सदृश सुकुमारता। यहाँ—

उसे क्या ब्रह्माने युवतियों के रूप का नमूना बनाया है? अथवा किसी तरह चन्द्रमा की कान्ति ने स्त्री का रूप धारण किया है? अथवा लक्ष्मी ने सागर में सोते हुए भगवान् को छोड़ कर भय के कारण अन्य स्त्री का रूप बनाकर राजा के घर में वास कर रही है? फिर कैसे मैं सोचने लग गया? अब क्या करूँगा? मन तो हमारी इच्छा से नहीं चलेगा ॥ ३ ॥

कथमहं पुनरारब्धश्चिन्तयितुम्। किमिदानीं करिष्ये। मनश्च तावदस्मदिच्छया न प्रवर्तते। इह हि;

प्रतिषिद्धं प्रयत्नेन क्षणमात्रं न वीक्षते।
चिराभ्यस्तपथं याति शास्त्रं दुर्गुणितं यथा ॥ ४ ॥

अथवा न शक्यं मनो जेतुम्। चिन्तयिष्याम्येनाम्। अहो सर्वेषां स्त्रीगुणानामेकत्र समवायः। ( चिन्ताभिभूत उपविशति )

( ततः प्रविशति धात्री नलिनिका च। )

धात्री—( सवितर्कम् ) अहो सङ्कडदा कज्जस्स। जइ एवं करीअदि, राअउलं दूसिअं होइ। जदि ण करीअदि, अवस्सं सा विवज्जइ। -मए

---

आरब्धश्चिन्तयितुम्—चिन्तां कर्तुमेव प्रारब्धवान्। अस्मदिच्छया न प्रवर्तते—मदीयां रुचिं नानुवर्तते। अहं चिन्तयितुं नेच्छामि, मनश्च तद्विपरीतं चिन्तनमेव प्रारभते।

**प्रतिषिद्धमिति**—प्रयत्नेन प्रतिषिद्धं प्रयासं कृत्वा दुष्टमार्गात् निवर्त्तनानं मनः क्षणमात्रं कालम् अल्पं यावत् न वीक्षते स्वमार्गं नालोकते, यथा दुर्गुणितं साधु नाभ्यस्तं शास्त्रं यथा असम्यगभ्यस्तशास्त्रवत् चिराभ्यस्तपथं बहुनिषेवितं वर्त्म याति, अयमाशयः—यथा असम्यगभ्यस्तं शास्त्रं बहु प्रयस्य यदि किमपि स्माद्यते तदा कियन्तं कालं यावत्स्वाध्येतुर्वशे तिष्ठति पुनश्च तमेवाशुद्धं पन्थानं प्रतिपद्यते तद्वत् मनोऽपि बलवान्निगृह्यमाणं कियतः कालस्य कृते वशे तिष्ठति, तदनन्तरं च पुनः स्वमेव मार्गमाश्रयतीति ॥ ४ ॥

स्त्रीगुणानाम्—स्त्रियामपेक्षितानां तेषां तेषां गुणानाम्। समवायः—राशी-

---

मना करने पर भी क्षणमात्र के लिये नहीं मानता है, वह बार बार उसी को याद किया करता है, जैसे अनभ्यस्त शास्त्र बार बार गलत मार्ग ही पकड़ा करता है ॥ ४ ॥

अथवा—मन नहीं जीता जा सकता है। मैं उसके बारे में सोचूंगा ही। अहा, सभी स्त्रीगुण इसमें एकत्रित हो रहे हैं। ( चिन्ताभिभूत हो कर बैठा रहता है )

( धात्री तथा नलिनिका का प्रवेश )

धात्री—( कुछ सोचती हुई ) कार्य बड़ा टेढ़ा है, यदि ऐसा करती हूँ तो

अणेएहि उवाएहि विआरिदं च। मम वि सा अज्ज वि पच्छादेदि। अहव किं ताए पच्छादिदं। सा तदप्पहुदि सुमणावण्णअं णेच्छदि, आहारं णाभिलसदि, ण रमदि गोट्ठीजणेण, दिग्घं णिस्ससदि, असम्बद्धं कहेदि, कहिदं ण जाणादि, गूढं हसदि, विवित्ते रोदिदि, रोअं अवदिसदि, तणुआ होदि, पण्डभावं गच्छदि। एकं पि तहि अच्छरिअं। एवं विधेहि अवत्थाविसेसेहि अत्तणो लज्जाए भएण कुलमाणेण बालभावेण अ एकस्सा वि किञ्चि ण मन्तेदि। [ अहो सङ्कटता कार्यस्य। यद्येवं क्रियते, राजकुलं दूषितं भवति। यदि न क्रियतेऽवश्यं सा विपद्यते। मयानेकैरुपायैर्विचारितं च। ममापि साद्यापि प्रच्छादयति। अथवा किं तया प्रच्छादितम्। सा तदाप्रभृति सुमनोवर्णकं नेच्छति, आहारं नाभिलषति, न रमते गोष्ठीजनेन, दीर्घं निःश्वसिति, असम्बद्धं कथयति, कथितं न जानाति, गूढं हसति, विविक्ते रोदिति, रोगमपदिशति, तन्वी भवति, पाण्डुभावं गच्छति। एकमपि तत्राश्चर्यम्। एवंविधैरवस्थाविशेषैरात्मनो लज्जया भयेन कुलमानेन बालभावेन च एकस्या अपि किञ्चिन्न मन्त्रयते। ]

---

भावः। सङ्कटता—सङ्कटपूर्णता। यद्येवं क्रियते—प्रच्छाद्य राजकुमारो राजकुमार्या सङ्गम्यते। सा–राजकुमारी। विपद्यते–प्राणान् न धारयति। ममापि साद्यापि प्रच्छादयति अधुनापि सा ममापि निकटे स्फुटं स्वमभिप्रायं न विवृणोति। सुमनोवर्णकम्—पुष्पमाल्यम्। गोष्ठीजनेन—प्रियसखीसङ्गमेन। असम्बद्धम्—अप्रस्तुतम्। विविक्ते-एकान्ते। रोगमपदिशति—रोगस्यच्छलं करोति—रुग्णा-

---

राजकुल कलङ्कित होता है, और यदि नहीं करती हूँ तो निश्चय ही वह मर जायेगी। मैंने अनेक प्रकार से सोच कर देखा है, वह तो अभी भी मुझ से छिपाती ही है, अथवा उसने छिपाया क्या? उसको उसी दिन से फूल की माला भली नहीं लगती है, खाना नहीं रुचता है, सखी-सङ्गति नहीं अच्छी लगती है। वह लम्बी सांस लेती है, बेसिर-पैर की बका करती है, कहा हुआ नहीं समझ पाती है, छिपा कर हंसती है, एकान्त में रोती है, रोग का बहाना बनाती है, दुबली होती जा रही है, पीली पड़ गई है,। इस पर भी एक आश्चर्य है कि वह इस स्थिति में भी भय, कुल गौरव तथा बाल्य के चलते किसी से कुछ नहीं कहती है।

नलिनिका—किस्स ण मन्तेदि। मम सव्वं कहेदि। [ कस्मान्न मन्त्रयते। मम सर्वं कथयति। ]

धात्री—हला! जाणामि दे अभिप्पाअं, अवत्थं जाणिअ सव्वहा इमं एदेण जोजेहि त्ति। [ हला! जानामि तेऽभिप्रायम्, अवस्थां ज्ञात्वा सर्वथेमामेतेन योजयेति। ]

नलिनिका—किण्णुक्खु ईदिसो तादिसेहि गुणविसेसेहि अकुलीणो भवे। [ किन्नु खल्वीदृशस्तादृशैर्गुणविशेषैरकुलीनो भवेत्। ]

धात्री—तहिं च सन्देहो। सुदं च मए भट्टिणीए समीवे अमच्चेहि किल भणिदं—ण सो तादिसो दुक्कुलजो त्ति। अत्ताणं केण वि कारणेण पच्छादेदि त्ति। [ तत्र च सन्देहः। श्रुतं च मया भट्टिन्याः समीपेऽमात्यैः किल भणितं—न स तादृशः दुष्कुलज इति। आत्मानं केनापि कारणेन प्रच्छादयतीति। ]

नलिनिका—कोण्णुक्खु भवे। [ को नु खलु भवेत्। ]

---

स्मीति स्वापयति। कुल्माषेन—कुल्माषरवेण। एकस्याः अपि—कस्याश्चिदपि तस्याः।

अवस्थां ज्ञात्वा—स्थितिं परिचित्य। इमाम्—राजकुमारीम्। एतेन—राजपुत्रेण। योजय—घटय। तादृशैर्गुणैरकुलीनो भवेत्—तादृशेषु गुणेषु सत्सु तस्यान्त्यजत्वमविश्वास्यमेवेत्यर्थः। भट्टिन्याः—राज्ञ्याः।

---

नलिनिका—क्यों नहीं कहती है, मुझ से तो सारी बातें कहती है।

धात्री—हाँरी, मैं तुम्हारा मतलब समझती हूँ—अवस्था देख कर इसे उस पुरुष से मिला दो।

नलिनिका—क्या ऐसा व्यक्ति इस तरह के गुणों के रहते हुए भी अकुलीन हो सकता है।

धात्री—इसमें सन्देह है, मैंने महारानी के पास मन्त्रियों से सुना है कि वह उतना छोटे कुल का नहीं है, किसी कारण वश अपने को छिपा रहा है।

नलिनिका—यह कौन हो सकता है?

धात्री—जदि सो सन्देहो णत्थि, को अण्णो अदिरित्तगुणो जामादुओ भवे। [ यदि स सन्देहो नास्ति, कोऽन्योऽतिरिक्तगुणो जामाता भवेत्। ]

( नेपथ्ये )

यदि च विभवरूपज्ञानसत्त्वादयः स्यु-
र्न तु कुलविकलानां वर्तते वृत्तशुद्धिः।
ध्रुवमिह कुलमस्य श्रोष्यसि प्राप्तकाले
त्यज कुलगतशङ्कां साध्यतां स्वन्तमेतत् ॥ ५ ॥

धात्री—हला ! केण खु भणिदं [ हला ! केन खलु भणितम्। ]

नलिनिका—एत्थ को वि ण दिस्सदि। [ अत्र कोऽपि न दृश्यते। ]

---

स सन्देहः—अन्त्यजत्वशङ्का। अतिरिक्तगुणः—इतोऽधिकगुणशाली।

**यदि चेति**—कुलविकलानाम् नीचवंशजातानाम्, ज्ञानम् शास्त्रज्ञानम्, विभवः समृद्धिः, रूपं कायसौन्दर्यम्, सत्त्वम् बलञ्च तदादयो गुणाः यदि स्युः भवेयुर्नाम, परन्तु तेषां वृत्तशुद्धिः शुद्धचरित्रता न वर्त्तते। नीचवंशजातेषु विभवरूपबलादयो गुणाः काममासतां परं ते शुद्धचरित्रा नैव भवन्ति, तन्निर्गलितमर्थमाह—ध्रुवमिति। इह अस्य प्रसङ्गे, प्राप्तकाले समये प्राप्ते सति, ध्रुवं निश्चयेन अस्य कुमारस्य, कुलं सत्कुलप्रसूतत्वं श्रोष्यसि, अतः कुलगतशङ्कां त्यज, एतत् कुमार्याः कुमारेण सह सङ्गमनरूपं कार्यं, स्वन्तं सुखोदर्कं, साध्यताम्, तथा यतस्व यथाऽनयोः सङ्गमः सुखावसानो जायेतेत्यर्थः। मालिनीवृत्तं, तल्लक्षणं यथा—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥ ५ ॥

---

धात्री—यदि वह सन्देह नहीं है तो कौन इससे अधिक गुणी जामाता मिल सकता है।

( नेपथ्य में )

यदि सम्पत्ति, रूप, ज्ञान, बल आदि हो भी जाय, फिर भी अकुलीनों का चरित्र निर्मल नहीं हुआ करता है। निश्चय आप इसके कुल के सम्बन्ध में समय पर सुन लेंगे, इस कार्य का अन्त भला होगा, यह कार्य अवश्य करो ॥ ५ ॥

धात्री—अरी, यह किसने कहा।

नलिनिका—यहाँ तो कोई नहीं दीख रहा है।

धात्री—पहिट्ठरोमकूवं मे सरीरं। असंसअं देव्वेण भणिदं। अहं पुण जाणामि ण एसो केवलो माणुसत्ति। [ प्रहृष्टरोमकूपं मे शरीरम्। असंशयं दैवेन भणितम्। अहं पुनर्जानामि नैष केवलो मानुष इति। ]

नलिनिका—गदो तस्स कुलसन्देहो। अम्हाणं वअणं करेदि ण करेदि त्ति चिंतेमि। ( विचिन्त्य ) धण्णो खु सो जणो इमं एवं उम्मादेदि। किं बहुणा, सअं कामदेवो वि भट्टिदारिआए रूवं पेक्खिअ किलिस्सिदि। तेण सो वि किलिस्सिदि त्ति तक्केमि। [ गतस्तस्य कुलसन्देहः। अस्माकं वचनं करोति न करोतीति चिन्तयामि। धन्यः खलु स जन इममेवमुन्मादयति। किं बहुना, स्वयं कामदेवोऽपि भर्तृदारिकाया रूपं प्रेक्ष्य क्लिश्यते। तेन सोऽपि क्लिश्यत इति तर्कयामि। ]

धात्री—हला! एसो तस्स आवासो, जं तदा हत्थिसम्भमदिअसे कोदूहलेण आअदम्ह। [ हला! एष तस्यावासः, यं तदा हस्तिसम्भ्रमदिवसे कौतूहलेनागते स्वः। ]

---

प्रहृष्टरोमकूपम्—जातरोमाञ्चम्। एषः—कुमारः।

गतस्तस्य कुलसन्देहः—तदीयकुलविषयको मम सन्देहो दूरापास्त इत्यर्थः। इममेवमुन्मादयति—यो जन ईदृग्धीरमपीमं जनमेवमुन्मादयति स विशिष्टसौन्दर्यशालितया धन्य इत्यर्थः।

तस्य—राजकुमारस्य। आवासः—वासस्थानम्। हस्तिसम्भ्रमदिवसे—हस्तिना कृतस्य उपद्रवस्य दिने। कौतूहलेन—कुत्रेदृशो महानुभावो वसतीति कौतुकेन।

---

धात्री—मेरे तो रोंगटे खड़े हो रहे हैं, निश्चय ही दैवने कहा है। मैं जानती हूँ यह निरा मनुष्य ही नहीं है।

नलिनिका—इस के वंशगत संशय का तो अन्त हो गया। देखें हमारी बात मानता है या नहीं। वह धन्य है जिसके लिये यह इस तरह पागल हो रहा है। और क्या, स्वयं कन्दर्प भी राजकुमारी के रूप को देख कर दुःखी हो जाय। इसी लिये यह भी दुःखी हो रहा है।

धात्री—अरी, यही न उसका निवास स्थान है जहाँ हाथी वाले उपद्रव के दिन हम आई थीं।

नलिनिका—हला ! अहो दस्सणीअं किदोवहारं च दुवारमुहं । हला ! एहि पविसामो । [ हला ! अहो दर्शनीयं कृतोपहारं च द्वारमुखम् । हला ! एहि प्रविशावः । ]

धात्री—हला ! कहिं भट्टिदारओ किं भणासि-चउस्साले वत्तदि त्ति । ( परिक्रम्यावलोक्य ) अअं अम्हाणं भट्टिदारओ । एक्को एव्व किं वि चिन्तअन्तो चिट्ठई । [ हला ! कुत्र भर्तृदारकः । किं भणसि-चतुःशाले वर्तत इति । अयमस्माकं भर्तृदारक एक एव किमपि चिन्तयंस्तिष्ठति । ]

नलिनिका—हला ! णं पिविसामो । [ हला ! ननु प्रविशावः । ]

धात्री—एवं करेम्ह । ( प्रविश्य ) सुहं अय्यस्स । [ एवं कुर्वः । सुखमार्यस्य । ]

अविमारकः—अहो तस्या रूपसम्पत् ।

धात्री—( साकुलम् ) किण्णुहु भवे । सुहं अय्यस्स । [ किन्नु खलु भवेत् । सुखमार्यस्य । ]

अविमारकः—

उरः स्तनतटालसं जघनभारखिन्ना तनुः

---

दर्शनीयम्—सुन्दरम् । कृतोपहारम्—कल्पितप्रसाधनञ्च । चतुरशाले—बहिर्गृहे । सुखमार्यस्य—भवतः कुशलम् ?

उर इति—उरः वक्षस्थलम् स्तनतटालसम् स्तनभारेण भाराक्रान्तम्,

---

नलिनिका—इसका दरवाजा कितना सुन्दर तथा अलङ्कृत है ? चलो, प्रवेश करें ।

धात्री—अरी, राजकुमार कहाँ हैं ? क्या कहा—चतुःशाल में हैं ? यहीं तो हमारे राजकुमार कुछ सोचते हुए बैठे हैं ।

नलिनिका—अरी, चलो चलें ।

धात्री—ऐसा करें । ( प्रवेश करके ) आप आनन्द से तो हैं ?

अविमारक—अहा, कैसा विलक्षण था उसका रूप ।

धात्री—( आकुलता के साथ ) जाने क्या होता है । आप सानन्द तो हैं ?

अविमारक—छाती स्तन के भार से अलस है, शरीर जघन के भार से खिन्न है ।

धात्री—अम्मो विप्पलवदि। [ अम्भो विप्रलपति। ]

अविमारकः—

मुखं नयनवल्लभं प्रकृतिताम्रबिम्बाधरम्।

धात्री–धण्णो खु सो जणो इमं एव्वं उन्मादेदि। [ धन्यः खलु स जन इमनेवमुन्मादयति। ]

अविमारकः—

भयेऽपि यदि तादृशं नयनपात्रपेयं वपुः

धात्री—सुत्थिदं कज्जं [ सुस्थितं कार्यम्। ]

अविमारकः—

कथन्नु सुरतान्तरप्रचुरविभ्रमं तद् भवेत् ॥ ६ ॥

---

तनुः जघनभारखिन्ना नितम्बभारपीडिता, मुखं नयनवल्लभं नेत्ररमणीयं, प्रकृतिताम्रबिम्बाधरम्—स्वभावरक्तवर्णेन बिम्बोपमेन चाधरेण युक्तम्, भयेऽपि भयकारणे समुपस्थितेऽपि यदि तादृशं, नयनपात्रपेयम् नयनैः सादरं दर्शनीयं वपुः शरीरम्, तद् वपुः सुरतान्तरे रतिक्रीडाकाले प्रचुरविभ्रमं नानाविलासयुतं कथं कीदृशं नु भवेत्। यद्वपुर्भयकाले तादृशं रामणीयकं धारयति तस्यैव वपुषो रतिकाले नानाविधविलाससम्वलिततया कीदृशं रमणीयत्वं स्यादिति मनोमात्रकल्पनीयमित्यर्थः। पृथ्वीवृत्तम्—'जसौ जसजला वसुग्रहयतिश्च पृथ्वी गुरुः' इति तल्लक्षणात् ॥ ६ ॥

---

धात्री—अरे यह तो विप्रलाप कर रहा है !

अविमारक—मुख आँख की सुन्दरता से पूर्ण है, अधर स्वाभाविक लालिमा से भरा है।

धात्री—धन्य है वह स्त्री जिसके लिये यह इस तरह पागल हो रहा है।

अविमारक—भय की स्थिति में भी यदि उसका रूप देखते ही बनता था तो फिर—

धात्री—काम बन गया।

अविमारक—

सुरत के मध्य में विलासों से पूर्ण उसका चेहरा कितना सुन्दर होगा ? ॥६॥

धात्री—सा एव इमं उन्मादेदि। [ सैवेममुन्मादयति। ]

नलिनिका—सुट्ठु भणिदं–एसो वि किलिस्सिदि त्ति। [ सुष्ठु भणितम्–एषोऽपि क्लिश्यत इति। ]

धात्री—सुट्ठु विण्णादं तुए। सुहं अय्यस्स। [ सुष्ठु विज्ञातं त्वया। सुखमार्यस्य। ]

अविमारकः—( विलोक्य सव्रीडम् ) स्वागतं भवतीभ्याम्।

उभे—अवि सुहं। [ अपि सुखम्। ]

अविमारकः—भविष्यति वां दर्शनेन।

धात्री—अय्य ! किं चिन्तीअदि। [ आर्य ! किं चिन्त्यते। ]

अविमारकः—भवति ! शास्त्रं चिन्त्यते।

धात्री—किं णाम एदं रमणीअं सत्थं विवित्थे चिन्तीअदि। [ किं नामैतद् रमणीयं शास्त्रं विविक्ते चिन्त्यते। ]

अविमारकः—भवति ! योगशास्त्रं चिन्त्यते।

धात्री—( सस्मितम् ) पडिग्गहिदं मङ्गलवअणं। जोअसत्थं एव्व

---

भविष्यति वां दर्शनेन—युवयोर्दर्शनेन मे सुखं भविष्यतीत्यर्थः।

विविक्ते—एकान्तदेशे।

---

धात्री—राजकुमारी के लिये ही यह पागल हो रहा है।

नलिनिका—ठीक कहती हो, यह भी क्लेश में है।

अविमारक—( देख कर, लज्जा पूर्वक ) आप लोगों का स्वागत है।

दोनों—आप तो सानन्द हैं ?

अविमारक—आप के दर्शन से मैं भी सानन्द हो जाऊँगा।

धात्री—आर्य, आप क्या सोच रहे हैं ?

अविमारक—मैं शास्त्र की चिन्ता करता हूँ।

धात्री—कौन सा वह रमणीय शास्त्र है जिसकी चिन्ता आप एकान्त में कर रहे हैं।

अविमारक—मैं योग शास्त्र की चिन्ता करता हूँ।

धात्री—( मुस्कुराहट के साथ ) इस मङ्गलवचन को मैं स्वीकार करती हूँ, योगशास्त्र ही हो।

होदु। प्रतिगृहीतं मङ्गलवचनम्। योगशास्त्रमेव भवतु। ]

अविमारकः—(आत्मगतम्) को नु खलु वाक्यार्थः। अन्यदप्यभिलाष-वशादन्यथा सङ्कल्पयामि। (प्रकाशम्) किमभिप्रेतं भवत्याः।

धात्री—जोअं इच्छन्तीओ आअदम्ह। अणुमदो अय्येण जोओ त्ति णं णिट्ठिदं कय्यं अम्हाअं राअउले विवित्ते अवआसे। तहिं पि को वि जणो अहिअदरं जोअं चिन्तअन्तो अच्छदि। तेण सह तहिं एव अय्येण सुट्ठु जोअविहाणं चिन्तीअदु त्ति। [ योगमिच्छन्त्यावागते स्वः। अनुमत आर्येण योग इति ननु निष्ठितं कार्यमस्माकं राजकुले विविक्ते अवकाशे। तत्रापि कोऽपि जनोऽधिकतरं योगं चिन्तयन्नस्ति। तेन सह तत्रैवार्येण सुष्ठु योगविधानं चिन्त्यतामिति। ]

अविमारकः—कथमद्यापि सावशेषाणि मे भाग्यानि। (आसनादुत्थाय) भवति! पुनर्दत्ता इव मे प्राणाः। कुतः,

---

प्रतिगृहीतम्—अङ्गीकृतम्।

को नु खलु वाक्यार्थः—किमाभ्यां त्वोभ्यामुच्यते? अन्यदपि—अन्यार्थकमपि। अभिलाषवशात्—स्वहृदयस्यानुरक्ततया। अन्यार्थकम्—स्वमनोनुकूलार्थकम्। योगम्—युवयोः संयोगम्। निष्ठितम्—सम्पन्नम्। तत्र—राजकुले कोऽपि राजपुत्रीलक्षणः।

सावशेषाणि—अवशिष्टानि। भाग्यस्यावशिष्यमाणतयैवैतादृशावसरलाभ इत्यर्थः। पुनर्दत्ताः—पुनः प्रत्यर्पिताः, भवत्योरीदृशेन प्रस्तावेन मृतकल्पोऽहं पुनर्जीवलोके-प्रविष्टोऽस्मीति मन्ये भवतीभ्यामेव मे प्राणाः पुनर्दत्ता इत्यर्थः।

---

अविमारक—(स्वगत) इसका क्या अर्थ? दूसरी वस्तु को भी मैं अभिलाष-वश दूसरे रूप में सोचने लगता हूँ। (प्रकट) आप का क्या अभिप्राय है?

धात्री—हम दोनों योग की ही इच्छा लेकर आई थीं, आपने भी योग की अनुमति दी है इससे हमारा कार्य बन गया, वह एकान्त राजकुल में सम्पन्न होगा। वहाँ भी कोई उत्कट रूप में योग की चिन्ता कर रहा है। उसके साथ आप भी वहाँ भली भाँति योग की चिन्ता करें।

अविमारक—क्या अभी भी मेरे भाग्य बचे हुए हैं? (आसन से उठ कर) आपने मेरे प्राण मुझे फिर से दे दिये हैं, क्योंकि:—

तस्या भयाकुलितदृष्टिविषं मनोज्ञं
सौम्यप्रकारमतितीक्ष्णमवेक्ष्य वक्त्रम् ।
उन्मादमभ्युपगतोऽस्मि चिरं भवत्यो-
र्वाक्यामृतेन पुनरद्य कृतः ससंज्ञः ॥ ७ ॥

धात्री—दिट्ठिआ अय्येण परिपालिदो अअं जणो । अलमदिप्पसङ्गेण । अज्ज एव्व पविसिदव्वं कण्णाउरं । अमच्चो अय्यभूदिओ कण्णाउररक्खओ कासिराअदूदेण सह अम्हाअं महाराएण पूइदो पत्थिदो अ । [ दिष्ट्यार्येण परिपालितोऽयं जनः । अलमतिप्रसङ्गेन । अद्यैव प्रवेष्टव्यं कन्यापुरम् । अमात्य आर्यभूतिकः कन्यापुररक्षकः काशिराजदूतेन सहास्माकं महाराजेन पूजितः प्रस्थितश्च । ]

---

**तस्या भयेति**—भयेन हस्तिसंभ्रमकालोत्पन्नया भीत्या आकुलिता व्याकुलत्वं गता दृष्टिरेव विषं प्राणापहरणसाधनं यत्र तादृशम् , सौम्यप्रकारम् सातिशयभद्ररूपम् अतितीक्ष्णम् उन्नतनासत्वादिनातितुङ्गम् तस्या राजकुमार्या वक्त्रम् मुखम् अवेक्ष्य दृष्ट्वा चिरं बहुकालपर्यन्तम् उन्मादं चित्तविक्षेपम् अभ्युपगतोऽस्मि प्राप्तोऽस्मि अद्य अधुना पुनः भवत्योः युवयोर्धात्रीनलिनिकयोः वाक्यामृतेन अमृतवद् अतिहितेन प्राणपदेन च वाक्येन पुनः भूयः ससंज्ञः कृतोऽस्मि प्रत्यापन्नचैतन्योऽस्मि जात इत्यर्थः । भीतिलोलनयनं सौम्यं सुन्दरतमं च कुमार्या वदनमालोक्य चिरादुन्मादतो मम चेतनाऽद्य भवत्योर्वाक्यं श्रुत्वा प्रत्यागतेवेति तात्पर्यम् । वसन्ततिलकं वृत्तम् ॥ ७ ॥

अयं जनः परिपालितः—ईप्सितकार्यप्रतिश्रुत्या महतो भयात् त्रातो मल्लक्षणो जनः । अतिप्रसङ्गेन—कालविलम्बेन ।

---

उसके भयाकुल नयनों से सुन्दर, सौम्य, अतितीक्ष्ण मुख देखकर मैं पागल हो रहा था, सम्प्रति आपलोगों के वाक्य रूप अमृत ने मुझे होश में ला दिया है ॥ ७ ॥

धात्री—सौभाग्यवश आपने मुझे बचा लिया । समय बिताने की जरूरत नहीं है, आज ही कन्यापुर में प्रवेश करना चाहिये । कन्यापुर के रक्षक अमात्य भूतिक काशिराजदूत के साथ गये हैं ।

अविमारकः—बाढम्। प्रथमः कल्पः। भवति! कस्तावदौषधमुपलभ्य मन्दीभवत्यातुरः।

धात्री—पवेसमत्तं एव्व दुल्लहं। सक्कं अब्भन्तरे चिरं वसिदुं। [प्रवेशमात्रमेव दुर्लभम्। शक्यमभ्यन्तरे चिरं वस्तुम्।]

अविमारकः—प्रविष्ट एवाहं चिन्तयितव्यः। क्रियतामनर्गलविशाला प्रासादमाला।

धात्री—एवं करेम्ह। सव्वं अब्भन्तरकरणीअं संपादेम्ह। अप्पमत्तो एव्व पविसदु अय्यो। [एवं कुर्वः। सर्वमभ्यन्तरकरणीयं संपादयावः। अप्रमत्त एव प्रविशत्वार्यः।]

अविमारकः—भवति! सकृदभिधीयतां राजकुलस्य विधानम्।

---

प्रथमः कल्पः—अस्य भवतीभ्यां प्रार्थितस्य कन्यान्तःपुरप्रवेशलक्षणस्य कार्यस्य प्रथमकरणीयत्वं मया स्वीकृतमित्यर्थः। मन्दीभवत्यातुरः—कोऽपि रोगी औषधमासाद्य तत्पातुं यथा न मन्दायते तथैव मयाऽप्यत्र कर्मणि विलम्बो नैव विधास्यते, तत्सङ्गमस्य प्राणधारणौपयिकत्वेनात्यन्ताभ्यर्हितत्वादिति भावः। प्रवेशमात्रमेव दुर्लभम्—प्रवेशः केवलमसुकरः, बहुरक्षिपरिवृतत्वात्, प्रवेशे पुनर्जाते चिरं वस्तुं शक्यते कन्यान्तःपुरे, तस्य प्रकामगुप्तत्वादिति भावः।

प्रविष्ट एवाहं चिन्तितव्यः—मम प्रवेशो निश्चितो मन्तव्यः। अनर्गलविशाला-अदत्तार्गलैः कपाटैर्विस्तीर्णद्वारदेशा। प्रासादमाला—प्रासादपरम्परा।

अभ्यन्तरकरणीयम्—भवति कन्यान्तःपुरे प्रविष्टे सति कर्त्तव्यम्। अप्रमत्तः—सावधानः। राजकुलस्य विधानम्—तत्र वासौपयिकं कर्त्तव्यज्ञानम्।

---

अविमारक—अच्छी बात है। कौन ऐसा रोगी होगा जो औषध के मिलने पर देर करेगा?

धात्री—प्रवेश पाना कठिन है, भीतर में बहुत दिनों तक सुख से रहा जा सकता है।

अविमारक—आप लोग यही समझें कि मैंने प्रवेश पा लिया। केवल आप प्रासाद के कपाट खुले छोड़ दें।

धात्री—हम ऐसा ही करेंगी। भीतर का सारा काम हम कर लेंगी, आप सावधानी से प्रवेश करें।

अविमारक—आप एक बार यह तो बता दें कि राजकुल में कैसे बरता जाता है।

धात्री—एव्वं विअ । [ एवमिव । ]

अविमारकः—हन्त भोः !

श्रुत्वा तु राज्ञो गृहसंविधानं
प्रविष्टमात्मानमवैति बुद्धिः ।
न पौरुषं वै परदूषणीयं
न चेद् विसंवादमुपैति दैवम् ॥ ८ ॥

( विचिन्त्य ) भवति ! कोऽस्माकमस्मिन् कार्ये प्रत्ययः ।

उभे—अअं पच्चओ । जेदु भट्टिदारओ । [ अयं प्रत्ययः । जयतु भर्तृदारकः । ]

अविमारकः—हन्त गम्यतां सम्प्रति । प्रतीक्ष्यतामर्धरात्रम् ।

---

श्रुत्वेति—राज्ञः गृहसंविधानम् कन्यान्तःपुरप्रवेशानन्तरकरणीयं नियमजातं श्रुत्वा बुद्धिः मम कुशला मतिः आत्मानं प्रविष्टम् अवैति, स्वं प्रवेशमतिसुकरतया जातकल्पं मन्यते । पौरुषम् मदीयः पुरुषकारः परदूषणीयं केनाप्यन्येन तिरस्करणीयं नास्ति, यदि दैवं भाग्यं विसंवादं प्रतिकूलत्वं न उपैति भवतीभ्यामुच्यमानं राजकुलसंविधानमतिसुकरमितिहेतोरहमात्मनः प्रवेशमतिसुसाध्यं मन्ये, मदीयं पौरुषमपि परैरधर्षणीयमेव यदि भाग्यं न विरुणद्धि तदा नास्ति कोऽपि प्रत्यूह इत्यर्थः ॥ ८ ॥

प्रत्ययः—विश्वासः । इदं कार्यं भविष्यतीति विश्वासः कथं क्रियताम् इत्याशयः ।

---

धात्री—( कान में ) ऐसे ही ।

अविमारक—अहा, राजा के गृह का व्यवहार सुन कर मेरी बुद्धि यही समझ रही है कि मैं राजकुल में प्रवेश पागया । मेरा पराक्रम ऐसा है कि दूसरे उसकी शिकायत नहीं कर सकते हैं, हाँ यदि भाग्य प्रतिकूल नहीं हो ॥ ८ ॥

( सोचकर ) भद्रे, मुझे इस कार्य में विश्वास कैसे हो ?

दोनों—ऐसे विश्वास होगा । जय हो राजकुमार की ।

अविमारक—अच्छा, तो आप अभी जायें, आधीरात के समय प्रतीक्षा करें ।

दसे—जं भट्टिदारओ आणवेदि ( निष्क्रान्ते ) [ यद् भर्तृदारक आज्ञापयति । ]

( ततः प्रविशति विदूषकः । )

विदूषकः—अहो णअरस्स सोहा संपदि । अत्थं आसादिदो भअवं सुय्यो दीसइ दहिपिण्डपण्डरेसु पासादेसु अग्गापणालिन्देसु पसारिअगुलमहुरसङ्कदो विअ । गणिआजणो णाअरिअजणो अ अण्णोण्णविसेसमण्डिदा अत्ताणं दंसइदुकामा तेसु तेसु पासादेसु सविब्भमं सञ्चरन्ति । अहं तु तादिसाणि पेक्खिअ उम्मादिअमाणस्स तत्तहोदो रत्तिसहाओ होमि त्ति णअरादो णिग्गदो म्हि । सो वि दाव अम्हाणं अवण्णदाए केण वि अणत्थसङ्कन्तरोण अण्णादिसो विअ संवुत्तो । एदं तत्तहोदो आवासगिहं । अज्ज णअरापणालिन्दे सुणामि तत्तहोदो गिहादो णिग्गदा रासदारिआए धत्ती सही अ त्ति । किं णु खु एत्थ कय्यं । अहव हत्थिहत्थचञ्चलाणि पुरुसभग्गाणि होन्ति । अहव गच्छदु अणत्थो अम्हाअं । अवत्थासादिसं राअउलं पविसामि । ( प्रविश्य ) ही ही एसो अत्तभवं कामुअजणवण्णएण अणुलित्तो विअ पण्डुभावेण इदो एव आअच्छदि । अहव सव्वं अलङ्कारो होदि सुरूवाणं ( उपेत्य ) जेदु भवं । [ अहो नगरस्य शोभा सम्प्रति । अस्तमासादितो भगवान् सूर्यो दृश्यते दधिपिण्डपाण्डरेषु प्रासादेष्वग्रापणालिन्देषु प्रसारितगुडमधुरसङ्कट इव ।

---

अहो नगरस्य शोभा—अतिविस्मयजननी पुरशोभा । अस्तमासादितः—

---

दोनों—राजकुमार की जैसी आज्ञा । ( प्रस्थान )

( विदूषक का प्रवेश )

विदूषक—अहा, नगर की शोभा इस समय क्या ही विलक्षण है ? अस्ताचल को प्राप्त सूर्य दही की तरह धवल प्रासादों तथा अंगनाई की सहन पर फैले हुए गुड़-मधु की तरह प्रतीत होता है । वेश्यायें तथा नागरिकजन विशेष सज्जित होकर इस विलास से विचरण करते हैं मानो अपने रूपयौवन का प्रदर्शन कर रहे हों । मैं तो इसलिये नगर से निकल पड़ा हूँ कि इन वस्तुओं को देखकर उन्मत्त की तरह आचरण करने वाले राजकुमार की सहायता कर सकूंगा । वह आजकल किसी अनर्थ की चिन्ता से कुछ दूसरी तरह हो रहे हैं । यहीं तो उनका

गणिकाजनो नागरिकजनश्चान्योन्यविशेषमण्डितावात्मानं दर्शयितुकामौ तेषु तेषु प्रासादेषु सविभ्रमं संचरतः । अहं तु तादृशानि प्रेक्ष्योन्माद्यतस्तत्रभवतो रात्रिसहायो भवामीति नगरान्निर्गतोऽस्मि । सोऽपि तावदस्माकमधन्यतया केनाप्यनर्थसंचिन्तनेनान्यादृश इव संवृत्तः । एतत् तत्रभवत आवासगृहम् । अद्य नगरापणालिन्दे शृणोमि तत्रभवतो गृहान्निर्गता राजदारिकाया धात्री सखी चेति । किं नु खल्वत्र कार्यम् । अथवा हस्तिहस्तचञ्चलानि पुरुषभाग्यानि भवन्ति । अथवा गच्छत्वनर्थोऽस्माकम् । अवस्थासदृशं राजकुलं प्रविशामि । ही ही एषोऽत्रभवान् कामुकजनवर्णकेनानुलिप्त इव पाण्डुभावेनेत एवागच्छति । अथवा सर्वमलङ्कारो भवति सुरूपाणाम् । जयतु भवान् । ]

---

अस्तंप्राप्तः । दधिपिण्डपाण्डरेषु–दधिपिण्डस्वच्छेषु । प्रासादेषु—राजभवनेषु । अग्रापणालिन्देषु आपणाग्रस्थितालिन्देषु । प्रसारितगुडमधुरसङ्गतः—प्रसारितस्य गुडस्य मधुनश्च रसङ्गत इव, राजभवनोपरि आपणालिन्देषु च प्रतिफलन् सूर्यस्तत्र प्रसारिते गुडे मधुनि च लोलुप इव दृश्यत इत्यर्थः । गणिका—वेश्या । अन्योन्यविशेषमण्डितौ—परस्परप्रतिस्पर्धयेव सविशेषं प्रसाधितकायौ । सविभ्रमम्—सविलासम् । तादृशानि—कामसंदीपनानि । उन्माद्यतः—विमनायमानस्य । रात्रिसहायः—निशायां सहायताकरः । अधन्यतया भाग्यदोषेण । केनाप्यनर्थसञ्चिन्तनेन—किमपि दुःखं भावयित्वा । तत्रभवतः—राजकुमारस्य । अत्र–राजकुमारस्यावासे । हस्तिहस्तचञ्चलानि—करिशुण्डादण्डवच्चपलानि । अनर्थः गच्छतु—अपसरतु दुर्भाग्यम् । कामुकजनवर्णकेन—कामिजनोचितेन वेषेण । पाण्डुभावेन श्वेतिम्ना । सुरूपाणां सर्वमलङ्कारः—रूपशालिनः केनापि वस्तुनाऽलङ्कृता भवन्ति, तथा चोक्तं कालिदासेन—'किमिव हि मधुराणां मण्डनं

---

निवास है। मैंने बाजार में सुना है कि इनके घर से राजकुमारी की सखी तथा धात्री निकलीं हैं। उनका यहाँ क्या कार्य हो सकता है? अथवा—पुरुष के भाग्य हाथी के शुण्डादण्ड की तरह चञ्चल हुआ करते हैं। अथवा—हमारे अनर्थ दूर हों। अवस्थानुकूल राजकुल में प्रवेश करता हूँ। हाँ, यही तो कामिजन के समान पाण्डुता से युक्त राजकुमार हैं जो इधर ही आरहे हैं। सुरूपजन के लिये सब कुछ भूषण ही होता है। जय हो आप की।

अविमारकः—वयस्य ! अतिविलम्बितमिव भवता नगरे ।

विदूषकः—तुमं दाव आमन्तणविप्पलद्धो विअ बम्हणो अहोरत्तं चिन्तेसि । अहं पि दाव दिअसे णअरं परिब्भमिअ अलद्धभोआ पाअडगणिआ विअ रत्तिं पस्सदो सइदुं आअच्छामि । [ त्वं तावदामन्त्रणविप्रलब्ध इव ब्राह्मणोऽहोरात्रं चिन्तयसि । अहमपि तावद् दिवसे नगरं परिभ्रम्यालब्धभोगा प्राकृतगणिकेव रात्रौ पार्श्वतः शयितुमागच्छामि । ]

अविमारकः—सखे ! प्रियं ते कथयिष्यामि ।

विदूषकः—किं समत्तो अम्हाअं इसिसावो । [ किं समाप्तोऽस्माकमृषिशापः । ]

अविमारकः—मूर्ख ! अवश्यं भवितव्येऽर्थे कः प्रहर्षः ।

विदूषकः—किं पुण अण्णं । [ किं पुनरन्यत् । ]

अविमारकः—कि न दृष्टा कुरङ्ग्या धात्री नलिनिका च ।

---

नाकृतीनाम्' । अतिविलम्बितम्—भूयान् विलम्बः कृतः ।

आमन्त्रणविप्रलब्धः—निमन्त्रणेन वञ्चितः । अलब्धभोगा-अप्राप्तभोगसाधना । प्राकृतगणिका-वेश्या साधारणी ।

अवश्यंभवितव्येऽर्थे कः प्रहर्षः—यत्कार्यमवश्यंभावि तस्मिञ्जातेऽपि कः प्रमोदः । ऋषिशापस्य सावधिकतया समये स्वयं समाप्यतया तत्समाप्तेर्हर्षकारणत्वं न युज्यत इत्यर्थः ।

---

अविमारक—मित्र, आपने नगर में बहुत विलम्ब कर दिया ।

विदूषक—तुम तो निमन्त्रण-लोभी ब्राह्मण की तरह दिन-रात चिन्ता किया करते हो । मैं भी दिनभर नगर में घूमकर अलब्धभोग सामान्य वेश्या की तरह रात में बगल में सोने आ जाता हूँ ।

अविमारक—सखे, तुझे खुशखबरी सुनाऊंगा ।

विदूषक—*क्या हमारा शापकाल समाप्त हो गया ?*

अविमारक—मूर्ख, उस अवश्यंभावी वस्तु में खुशी की क्या बात है ?

विदूषक—तो फिर और क्या है ?

अविमारक—क्या तुमने कुरङ्गी की धात्री तथा नलिनिका को नहीं देखा ?

विदूषकः—आम भो ! दिट्ठाओ तत्तहोदीओ ! किं आणीदं । [ आम भोः दृष्टे तत्रभवत्यौ । किमानीतम् । ]

अविमारकः—अस्मच्छोकौषधमानीतम् ।

विदूषकः—पेक्खामि दाव । [ पश्यामि तावत् । ]

अविमारकः—काले द्रक्ष्यसि । अद्य तावच्छ्रूयताम् ।

विदूषकः—भणादु भणादु भवं [ भणतु भणतु भवान् । ]

अविमारकः—किं बहुना । तत्रभवती ब्रवीति अद्यैव प्रवेष्टव्यं कन्यापुरमिति ।

विदूषकः—( विहस्य ) केण खु उवाएण अब्भन्तरं पविसिअ जीवग्गहणं पत्तुकामोऽसि । अमच्चा णाम विसमसीला कुन्तिभोअस्स । [ केन खलूपायेनाभ्यन्तरं प्रविश्य जीवग्रहणं प्राप्तुकामोऽसि । अमात्या नाम विषमशीलाः कुन्तिभोजस्य । ]

अविमारकः—कथं भवतापि शङ्कनीयम् । पश्य,

---

अस्मच्छोकौषधम्—मदीयस्य कष्टस्य निवारकं वस्तु ।

जीवग्रहणं प्राप्तुकामः—जीवितुमिच्छुः । विषमशीलाः—दुष्टस्वभावाः । कुन्तिभोजस्यामात्या अतिदुष्टास्तत्कन्यान्तःपुरं प्रविष्टस्य गृहीतस्य च तव जीवनोपयिकं किमपि न पश्यामीति तदाशयः ।

---

विदूषक—हाँ, उन दोनों को तो देखा है ।

अविमारक—वे दोनों हमारे शोक की दवा ले आई थीं ।

विदूषक—देखूँ ।

अविमारक—समयपर देख लेना, अभी सुनो ।

विदूषक—कहिये कहिये आप ।

अविमारक—अधिक क्या कहें, उसने कहा कि आज ही कन्यापुर में प्रवेश करें ।

विदूषक—( हंसकर ) किस उपाय से अन्तःपुर में प्रवेशकर के जीते रह सकोगे । कुन्तिभोज के अमात्य बड़े खतरनाक हैं ।

अविमारक—तुमको भी क्यों शङ्का होती है ? देखो—

भग्ना मयैकेन पराः ससैन्या
अद्यापि गन्धेन न संश्रयन्ते ।
किं मानुषैः सोऽप्यसुरेश्वरो मे
हतो भुजाभ्यामविरूपधारी ॥ ९ ॥

विदूषकः—जाणामि जाणामि भवदो अमाणुसाणि कम्माणि । सव्वहा सङ्कणीओ रत्तिच्छण्णो परगिहप्पवेसो । [जानामि जानामि भवतोऽमानुषाणि कर्माणि । सर्वथा शङ्कनीयो रात्रिच्छन्नः परगृहप्रवेशः ।]

अविमारकः—एष समासः । सर्वथा प्रवेष्टव्यं कुन्तिभोजस्य कन्यापुरम् । तदनुमन्तुमर्हति महाब्राह्मणः ।

---

भग्ना इति—मया एकेन सहायकान्तरनिरपेक्षेणापि सता पराः शत्रवः ससैन्याः सैनिकसार्थसमेता अपि भग्नाः पराजिताः सन्तः अद्यापि सम्प्रत्यपि गन्धेन गर्वेण न संश्रयन्ते न युज्यन्ते, ससैन्यस्यापि परस्य मयैकेन जये साधिते नास्ति तस्याधुनापि गर्वाङ्कुरोदय इत्यर्थः । किं मानुषैः मम पराक्रमस्य पुरतः का गणना मानुषाणाम् ? अविरूपधारी मेषरूपधारी सः प्रसिद्धपराक्रमः असुरेश्वरः असुरराजोऽपि मे भुजाभ्यां बाहुभ्याम् हतः व्यापादितः, अतो मम कन्यान्तःपुरप्रवेशोऽशङ्कयभय एवेति भावः । 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः' इति विश्वः । उपेन्द्रवज्रा वृत्तम्—'उपेन्द्रवज्रा जतजास्ततो गौ' इति तल्लक्षणात् ॥ ९ ॥

अमानुषाणि—मनुष्यैः सम्पादयितुमशक्यानि । रात्रिच्छन्नः—रात्रौ गूढभावेन क्रियमाणः ।

एष समासः—संक्षेपेण तन्मया ते कथितम् । सर्वथा प्रवेष्टव्यम्—नास्ति तत्र

---

मैंने अकेले शत्रुओं की सेना को ऐसी हार दी है कि वह आज भी शिर नहीं उठा रही है । मनुष्यों की तो बात ही क्या ? वह भेड़े का रूप बनाने वाला असुरराज भी मेरे हाथों मर चुका है ॥ ९ ॥

विदूषक—जानता हूँ जानता हूँ मैं तुम्हारे अमानुषकर्मों को । फिर भी रात में छिपकर दूसरे के घर में प्रवेश करना सर्वथा शङ्कनीय है ।

अविमारक—सारांश यही है कि किसी भी हालत में कुन्तिभोज के अन्तःपुर में प्रवेश करना है । तुम ब्राह्मण हो, अनुमति दो ।

विदूषकः—कहं मं उज्झिअ गच्छसि। अहं भवन्तं सव्वकालं ण मुञ्चामि। अक्कोसन्तो वि एक्को इच्छिदव्वो। [ कथं मामुज्झित्वा गच्छसि। अहं भवन्तं सर्वकालं न मुञ्चामि। आक्रोशन्नप्येक एष्टव्यः ]।

अविमारकः—न जानाति भवान् शास्त्रमार्गम्।

एकः परगृहं गच्छेद् द्वितीयेन तु मन्त्रयेत्।
बहुभिः समरं कुर्यादित्ययं शास्त्रनिर्णयः॥ १०॥

तस्मादेकेनैव मया प्रवेष्टव्यं कुन्तिभोजस्य कन्यापुरम्। न ते वयं शङ्कनीयाः। पश्यतु भवान्,

मितगुणमिह कुन्तिभोजसैन्यं

---

प्रवेशे किमपि भयम्।

आक्रोशन्—विपदुपनिपाते शब्दायमानः। एक एष्टव्यः-अभिलषणीयः। एकः एतादृशोऽपि सहायकोऽपेक्ष्यते यः प्रकारान्तरेणानुपकुर्वन्नपि सत्यां विपदि लोकाह्वानाय शब्दायेतेत्यर्थः।

शास्त्रमार्गम्—शास्त्रस्य तत्त्वम्।

एक इति—एकः सहायकान्तररहित एव परगृहं गच्छेत् अन्यदीयं भवनं प्रविशेत्, द्वितीयेन सह तु मन्त्रयेत्, मन्त्रणे द्वितीयमाददीत सहायकम्। बहुभिः सह समरं युद्धं कुर्यात् युद्धे सहायान् यथासंभवमाददीत। इत्ययम् एतादृशः शास्त्रनिर्णयः—शास्त्रसम्मतो मार्गः। अस्तीति शेषः॥ १०॥

न ते वयं शङ्कनीयाः—मद्विषये त्वया शङ्का न कार्येत्यर्थः।

मितगुणमिति—इह अत्र कन्यान्तःपुरे कुन्तिभोजसैन्यम् कुन्तिभोजस्य

---

विदूषक—मुझे छोड़कर क्यों जाते हो, मैं तुझे किसी भी हालत में नहीं छोड़ूँगा, चिल्लाने वाला भी तो एक आदमी चाहिये।

अविमारक—आप शास्त्र की बात नहीं जानते हैं,

अकेला दूसरे के घर में प्रवेश करें, दो आदमी मन्त्रणा करें, बहुत आदमी लेकर युद्ध करें, यही शास्त्र का निर्णय है॥ १०॥

अतः मैं अकेला ही कुन्तिभोज के अन्तःपुर में प्रवेश करूँगा। मेरे विषय में तुम लोग शङ्का मत करना, देखो—

कुन्तिभोज की सेना साधारण है, वैभवशाली राजकुल में प्रवेश सरल है।

नृपभवनं विभवैः सुखं प्रवेष्टुम् ।
वयमपि च भुजायुधप्रधानाः
किमिह सखे ! भवतापि शङ्कनीयाः ॥ ११ ॥

विदूषकः—जइ एवं किदो णिच्चओ, संपदि णअरं पविसामो । तहिं मम अत्थि मित्तो । तस्स आवासे कालं पडिवालम्ह । [ यद्येवं कृतो निश्चयः, संप्रति नगरं प्रविशावः । तत्र ममास्ति मित्रम् । तस्यावासे कालं प्रतिपालयावः । ]

अविमारकः—सम्यग् भवानाह । साम्प्रतमभ्यन्तरं प्रविश्य कृताह्निको महाराजेनाभ्यनुज्ञातो वासगृहे शयनसंविधानं प्रविश्याज्ञातो नगरं प्रविश्य भवतो मित्रगृहे कालं प्रतिपालयामि ।

( प्रविश्य )

---

नृपतेः बलम् मितगुणम् परिमितगुणशालि ( विद्यते ) अतस्तत्प्रतिबन्धो नास्तीत्यर्थः । विभवैः ( उपपन्नं ) नृपभवनं राजान्तःपुरं सुखं प्रवेष्टुम् प्रवेष्टुं सुकरम् । भुजायुधप्रधानाः प्रधानरूपेण बाहुप्रहरणाः वयम् अपि किं सखे, भवताऽपि शङ्कनीयाः, भवान्मम पराक्रमं वेत्ति, तदस्यां स्थितौ बाहुसहाये मयि मितगुणसैनिकशालिराजान्तःपुरं प्रविशति सति भवता शङ्का नैव कार्येत्यर्थः । पुष्पिताग्रावृत्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति तल्लक्षणम् ॥ ११ ॥

कालं प्रतिपालयावः—अर्धरात्रात्मकं कन्यान्तःपुरप्रवेशयोग्यं समयं प्रतीक्षावहे ।

महाराजेन—पित्रा ।

---

हमारे हाथ में अस्त्र के रहने पर भी क्या तुम को भी [मुझ पर शङ्का करनी चाहिये ॥ ११ ॥

विदूषक—अगर यही निश्चय कर लिया है तो चलो नगर में चलें, हमारा एक मित्र है, उसी के घर बैठकर समय की प्रतीक्षा करें ।

अविमारक—तुम ठीक कहते हो । अब भीतर जाकर दिनकृत्य सम्पन्न करके महाराज की अनुमति से वासगृह में प्रवेश कर छिपे-छिपे तुम्हारे मित्र के यहाँ समय की प्रतीक्षा करें ।

( प्रवेश करके )

चेटी—जेदु भट्टिदारओ। आवुत्तं ह्णाणोदअं। [ जयतु भर्तृदारकः। आवृत्तं स्नानोदकम्। ]

अविमारकः—अयमयमागच्छामि। गच्छाग्रतः।

चेटी—जं भट्टिदारओ आणवेदि। (निष्क्रान्ता) [ यद् भर्तृदारक आज्ञापयति। ]

अविमारकः—वयस्य! अस्तमितो भगवान् दिवाकरः। सम्प्रति हि—

पूर्वा तु काष्ठा तिमिरानुलिप्ता
सन्ध्यारुणा भाति च पश्चिमाशा।
द्विधा विभक्तान्तरमन्तरिक्षं
यात्यर्धनारीश्वररूपशोभाम्॥ १२॥

विदूषकः—सुट्ठु भवं भणादि। अदिक्कन्दो दिअसो। आरूढो पओसो। [ सुष्ठु भवान् भणति। अतिक्रान्तो दिवसः। आरूढः प्रदोषः। ]

अविमारकः—अहो विचित्रस्वभावता जगतः। कुतः।

---

पूर्वा त्विति—पूर्वा काष्ठा प्राची दिशा तिमिरानुलिप्ता अन्धकारेण व्याप्ता, पश्चिमाशा पश्चिमदिशा च सन्ध्यारुणा सान्ध्यरागेण रक्ता भाति शोभते। तदेवम् अन्तरिक्षं व्योम द्विधा विभक्तान्तरम् द्वेधा विभज्यमानं सत् अर्धनारीश्वररूपशोभाम् अर्धाङ्गाश्रितजायस्य शिवस्य सादृश्यं धारयति। अर्धांशे श्यामलाभं तदवशिष्टे चार्धांशे रक्तवर्णं व्योमार्धनारीश्वरस्य सादृश्यं धारयतीत्यर्थः॥ १२॥

अतिक्रान्तः—व्यतीतः। आरूढः—प्रारब्धः।

विचित्रस्वभावता—विस्मयावहप्रकृतित्वम्।

---

चेटी—जय हो राजकुमार की। नहाने का जल प्रस्तुत है।

अविमारक—यह आया, तुम आगे चलो।

चेटी—राजकुमार की जो आज्ञा। (जाती है)

अविमारक—मित्र, भगवान् सूर्य अस्त हो गये। इस समय—

पूर्वदिशा अन्धकार से पूर्ण तथा पश्चिमदिशा सन्ध्यारुणा हो रही है। दो रूपों में बटा हुआ यह आकाश अर्धनारीश्वर का सादृश्य धारण कर रहा है॥ १२॥

विदूषक—तुम ठीक कहते हो, दिन समाप्त हो गया, प्रदोष गाढ़ा हो रहा है।

अविमारक—अहा, जगत् का स्वभाव विचित्र है, क्योंकि:—

व्यामृष्टसूर्यतिलको विततोडुमालो
नष्टातपो मृदुमनोहरशीतवातः ।
संलीनकामुकजनः प्रविकीर्णशूरो
वेषान्तरं रचयतीव मनुष्यलोकः ॥ १३ ॥

( निष्क्रान्तौ )

द्वितीयोऽङ्कः ।

---

व्यामृष्टेति—व्यामृष्टम् प्रोञ्छितम् सूर्य एव तिलकं ललाटस्थचन्दनबिन्दुर्येन तथोक्तः, विततोडुमालः वितता विस्तृता उडूनां नक्षत्राणां माला दाम येन तथोक्तश्च, नष्टातपः शान्तसूर्यकरतापः मृदुमनोहरशीतवातः कोमलैर्मनोज्ञैश्च शीतवातैः सहितः, संलीनकामुकजनः गृहाभ्यन्तरगतकामिलोकः प्रविकीर्णशूरः प्रचलितवीरजनश्चायं मनुष्यलोको वेषान्तरं रूपान्तरमिव रचयति विधत्ते । अयं मनुष्यलोकः सम्प्रति सूर्यरूपं तिलकमपास्य तारामाल्यं धारयति, आतपं प्रशमय्य कोमलशीतं वायुं सञ्चारयति, कामिलोकं प्रियापरिसरे प्रापय्य शूरानितस्ततः प्रचारयति, तन्मन्ये रूपान्तरमिव करोति । वसन्ततिलकं वृत्तम् ॥ १३ ॥

इति श्रीरामचन्द्रमिश्रप्रणीतेऽविमारकप्रकाशे द्वितीयाङ्कप्रकाशः ॥

---

सूर्यरूपी चन्दन पुँछ गया, तारों की माला फैली, धूप समाप्त हो गई, कोमल ठंढी हवा बह रही है, कामुक जन घरों में छिप गये, बहादुर लोग इधर-उधर फिर रहे हैं, इस तरह यह मनुष्य लोक वेषान्तर की रचना सा कर रहा है ॥ १३ ॥

( दोनों का प्रस्थान )

द्वितीय अङ्क समाप्त

# तृतीयोऽङ्कः

( ततः प्रविशति कुरङ्गी चेट्यौ च )

कुरङ्गी—हला ! किं तेण भणिअं [ हला ! किं तेन भणितम् । ]

चेटी—भट्टिदारिए ! केण । [ भर्तृदारिके ! केन । ]

कुरङ्गी—( स्वगतम् ) हं भिन्दामि खु मन्दभाआ । ( प्रकाशम् ) कण्णेउरचेडेण । [ हं भिनद्मि खलु मन्दभागा । कन्यापुरचेटेन । ]

मागधिका—दिट्ठो मए कण्णेउरचेडो । भणिदं च । ण किञ्चि आह । [ दृष्टो मया कन्यापुरचेटः । भणितं च । न किंचिदाह । ]

कुरङ्गी—हन्त भट्टिणीए णिवेदेमि—कण्णेउरचेडो मम सुअपञ्जरं ण करेदि त्ति । [ हन्त भट्टिन्यै निवेदयामि—कन्यापुरचेटो मम शुकपञ्जरं न करोतीति । ]

---

भिनद्मि—अपमानदुःखेन भिन्नहृदया भवामि ।

कन्यापुरचेटः—कन्यान्तःपुरपरिचारकः ।

---

तृतीय अङ्क

( कुरङ्गी के साथ दो चेटियों का प्रवेश )

कुरङ्गी—सखी, उसने क्या कहा ?

चेटी—भर्तृदारिके, किसने ?

कुरङ्गी—( स्वगत ) मैं अपमान-दुःख से मरी जाती हूँ ( प्रकट ) कन्यापुर के भृत्य ने ।

मागधिका—मैंने कन्यापुर के भृत्य से भेंट की थी, कहा भी था, उसने कुछ नहीं कहा ।

कुरङ्गी—अच्छा, मैं महारानी से कहूँगी । कन्यापुर का भृत्य मेरे शुकपञ्जर नहीं बना दे रहा है ।

मागधिका—णं णिट्ठिदो सुअपञ्जरो भट्टिदारिए। [ ननु निष्ठितः शुकपञ्जरो भर्तृदारिकायाः। ]

कुरङ्गी—वाचाडे! किं अण्णो वि अत्थि। [ वाचाटे! किमन्योऽप्यस्ति। ]

मागधिका—भोदव्वं। [ भवितव्यम्। ]

कुरङ्गी—हला! का वेला। [ हला! का वेला। ]

मागधिका—ओगाढो पओसो। [ अवगाढः प्रदोषः। ]

कुरङ्गी—तेण ही पासादं आलुहामो। [ तेन हि प्रासादमारोहामः। ]

मागधिका—विलासिणि! अग्गदो जाहि। विरएहि सअणासणाणि। [ विलासिनि! अग्रतो याहि। विरचय शयनासनानि। ]

विलासिनी—सुत्ता खु तुवं! को कालो विरइदाणि सअणासणाणि। [ सुप्ता खलु त्वम्। कः कालो विरचितानि शयनासनानि। ]

मागधिका—हला! जाणामि दे अलसत्तणं। दिवसरइदाणि भणासि

---

निष्ठितः—निर्मितः।

वाचाटे—बहुभाषिणि,

का वेला—कः समयः?

अवगाढः—घनीभूतः, चिरपरिणतः।

विरचय—निर्माय सज्जीकुरु।

दिवसरचितानि भणसि रचितानीति—दिवस एव सज्जीकृतानि शयनासनानि

---

मागधिका—राजकुमारी के शुकपञ्जर तो बनकर आचुके हैं।

कुरङ्गी—ओ री बातूनी, क्या दूसरा भी है।

मागधिका—होना चाहिये।

कुरङ्गी—सखी, क्या समय है।

मागधिका—प्रदोष गाढ़ा हो रहा है।

कुरङ्गी—तब हम लोग छतपर चलें।

मागधिका—अरी विलासिनि, तू आगे चल, बिछावन ठीक कर।

विलासिनी—क्या तुम सो रही थी, कब न मैंने बिछावन ठीक कर दिया।

मागधिका—मुझे तुम्हारा आलस्य ज्ञात है, दिन में किये गये बिछावन को ही

रइदाणि त्ति। [हला! जानामि तेऽलसत्वम्। दिवसरचितानि भणसि रचितानीति।]

विलासिनी—हला! मा एव्वं भणाहि। भट्टिदारिअं अन्तरेण अण्णादिसाणि होन्ति। [हला! मैवं भण। भर्तृदारिकामन्तरेणान्यादृशानि भवन्ति।]

मागधिका—हला! गदुअ जाणामि। [हला! गत्वा जानामि।]

(सर्वाः परिक्रामन्ति।)

मागधिका—एसो पासादो। [एष प्रासादः।]

कुरङ्गी—अग्गदो जाहि! [अग्रतो याहि।] (आरोहणं नाटयति।)

मागधिका—साहु विलासिणि! साहु! अत्तणो णामसदिसं किदं। एदस्सिं सिलादले रइदं सअणं। [साधु विलासिनि! साधु! आत्मनो नामसदृशं कृतम्। एतस्मिन् शिलातले रचितं शयनम्।]

विलासिनी—अब्भन्तरमण्डवे खु रइदं सअणं। मागधिए! पेक्ख पेक्ख मे अलसत्तणं। [अभ्यन्तरमण्डपे खलु रचितं शयनम्। मागधिके! पश्य पश्य मेऽलसत्वम्।]

---

सम्प्रति कृतानि ब्रूषे, स्वमलसत्वं प्रच्छादयितुमेवं मिथ्या भाषस इत्यर्थः।

---

अभी किया बता रही है।

विलासिनी—ऐसा मत कहो, राजकुमारी क्या सोचेंगी।

मागधिका—सखी, जाकर ही जान सकूँगी।

(सभी जाती हैं)

मागधिका—यही तो प्रासाद है।

कुरङ्गी—आगे चल, (चढ़ती है)

मागधिका—शाबाश विलासिनि, शाबाश, तुमने नामानुकूल ही कार्य किया है। इस शिलातल पर बिछावन लगा रखा है।

विलासिनी—मैंने भीतर के मण्डप में बिछावन लगा दिया है। देखो मेरा आलस्य?

मागधिका—अदिपण्डिदा खु संवुत्ता। एवं पण्डितचेडवुत्तं भत्तारं लभेहि। [ अतिपण्डिता खलु संवृत्ता। एवं पण्डितचेटवृत्तं भर्तारं लभस्व। ]

कुरङ्गी—हला! इमस्सिं सिलादले मुहुत्तअं उवविसामि। [ हला! अस्मिन् शिलातले मुहूर्तकमुपविशामि। ]

मागधिका—जं भट्टिदारिआए रुइदं। होदु। [ यद् भर्तृदारिकायै रुचितम्। भवतु। ]

( सर्वा उपविशन्ति )

मागधिका—भट्टिदारिए! कहेमि वक्खाणं। [ भर्तृदारिके! कथयामि व्याख्यानम्। ]

कुरङ्गी—हला! जाणामि दे असम्बद्धप्पलावं। [ हला! जानामि तेऽसंबद्धप्रलापम्। ]

मागधिका—भट्टिदारिए! अभिणवा खु कहा। [ भर्तृदारिके! अभिनवा खलु कथा। ]

कुरङ्गी—याचेमि, मा णिब्बन्धिअ, मुहूत्तअं सआमि। [ याचे, मा निर्बध्य, मुहूर्तकं शये। ]

---

अतिपण्डिता—अतिचतुरा। पण्डितचेटवृत्तम्—चेटेषु पण्डितत्वेन प्रथितम्। व्याख्यानम्—कथाविशेषम् आख्यानम्।

असंबद्धप्रलापम्—परस्परासम्बद्धकथाभिधायित्वम्।

याचे-प्रार्थये। मा निर्बध्य-आग्रहं न कुरु। शये-निद्रामनुभवामि।

---

मागधिका—तुम बड़ी काबिल हो रही है। अपने समान ही चतुर स्वामी को प्राप्त करो।

कुरङ्गी—सखी, इस शिलातल पर थोड़ा बैठ लेती हूँ।

मागधिका—राजकुमारी को जो भला लगे। अस्तु।

( सभी बैठती हैं )

मागधिका—राजकुमारी, अब मैं कहानी कहती हूँ।

कुरङ्गी—सखी, मैं जानती हूँ तुम बेसिर-पैर की कहानी कहती हो।

मागधिका—राजकुमारी, यह बिलकुल नई कथा है।

कुरङ्गी—प्रार्थना करती हूँ, जिद मत करो, थोड़ा सो लेती हूँ।

विलासिनी—सुहं सअदु भट्टिदारिआ । मे कहेहि । [ सुखं शेतां भर्तृदारिका । मम कथय । ]

कुरङ्गी—( आत्मगतम् ) किंणु खु भवे ! [ किंतु खलु भवेत् । ]

मागधिका—हला ! सुणाहि भट्टिदारिअं अन्तरेण । [ हला ! शृणु भर्तृदारिकामन्तरेण । ]

कुरङ्गी—हं विदिदं रहस्सं । परिब्भट्ठम्हि । [ हं विदितं रहस्यम् । परिभ्रष्टास्मि । ]

विलासिनी—हला ! कहिं तुए सुदं । [ हला ! कुत्र त्वया श्रुतम् । ]

मागधिका—भट्टिणीपरिचारिआए वसुमित्ताए कहिदं । [ भट्टिनीपरिचारिकया वसुमित्रया कथितम् । ]

विलासिनी—सअं णाम भट्टिणीए कहिदं होदि । [ स्वयं नाम भट्टिन्या कथितं भवति । ]

मागधिका—अत्थि कासिराअपुत्तो जअवम्मा णाम । तस्स दिण्णा भट्टिदारिआ । तस्स अ दूदो आअदो महाराएण पूइदो । पडिग्गहिदं च वण्णिआरं । [ अस्ति काशिराजपुत्रो जयवर्मा नाम । तस्मै दत्ता भर्तृदा-

---

मम कथय—मह्यं श्रावय ।

परिभ्रष्टास्मि—पतितास्मि, यथाभिर्मम तत्र यून्यनुरागादिकं वृत्तं ज्ञातं तदा जातं मम पतनमिति ।

---

विलासिनी—राजकुमारी आराम से सोवे, मुझे सुनाओ ।
कुरङ्गी—( स्वगत ) न जाने क्या बात है ?
मागधिका—सखी, सुनो, राजकुमारी के बिना.........
कुरङ्गी—हाय, मेरा रहस्य इसे मालूम है । मैं भ्रष्ट हो गई ।
विलासिनी—सखी, तुमने कहाँ सुना ?
मागधिका—महारानी की परिचारिका वसुमित्रा ने कहा है ।
विलासिनी—वह तो स्वयं महारानी ने ही कहा ।
मागधिका—काशिराज का एक पुत्र जयवर्मा नाम का है । राजकुमारी उसे दी

रिका। तस्य च दूत आगतो महाराजेन पूजितः। प्रतिगृहीतं च वर्णिकारम्। ]

कुरङ्गी—( आत्मगतम् ) एदं अलिअं। अहं अत्तणो पभवामि। [ एतदलीकम्। अहमात्मनः प्रभवामि। ]

मागधिका—तहिं किल भट्टिणीए भणिदं—बाला खु मे दुहिआ, ण सक्कुणोमि एक्कं पि दिअसं अपेक्खन्ती जीविडं। जदि मे महाराओ पसण्णो, एत्थ एव्व जामादुओ आणीदव्वो त्ति। [ तत्र किल भट्टिन्या भणितं-बाला खलु मे दुहिता, न शक्नोम्येकमपि दिवसमपश्यन्ती जीवितुम्। यदि मे महाराजः प्रसन्नः, अत्रैव जामातानेतव्य इति। ]

विलासिनी—तदो तदो। [ ततस्ततः। ]

मागधिका—तदो तं पि किल अणुमदं महाराएण। अज्ज णक्खत्तं सोमणं त्ति तेण अ दूदेण अमच्चो अय्यभूदिओ पत्थिदो। [ ततस्तदपि किलानुमतं महाराजेन। अद्य नक्षत्रं शोभनमिति तेन च दूतेनामात्य आर्यभूतिकः प्रस्थितः। ]

---

वर्णिकारम्—कन्यावरणसामग्र्यादि।

अलीकम्—मिथ्या, अहं जयवर्मणे दत्तेति कथनं न सत्यमित्यर्थः, तत्र कारणमाह–अहमात्मनः प्रभवामि–स्वयं मयाऽऽत्मनि प्रभूयतेऽतो मत्सम्मतिं विना मदन्यदानं कथं सत्यं भवितेति भावः।

एकमपि दिवसम्-एकमपि दिनम्। अपश्यन्ती-स्वां सुतामनवेक्षमाणा।

अमात्य आर्यभूतिकः प्रेषितः—जामातरमानेतुं प्रहित इत्यर्थः।

---

गई है। उसका दूत भी आया था, महाराज ने उसका सत्कार किया। वरणसामग्री भी लेली।

कुरङ्गी—( स्वगत ) यह असत्य है, मैं अपनी मालिक स्वयं हूँ।

मागधिका—इसपर महारानी ने कहा—मेरी लड़की अभी छोटी है, उसे मैं एक दिन के लिये भी नजर से अलग नहीं रख सकती हूँ। यदि महाराज की मुझ पर कृपा है तो दामाद को यहीं बुला लें।

विलासिनी—तब क्या हुआ?

मागधिका—महाराज ने वह भी स्वीकार कर लिया। आज शुभ समय था अतः दूत के साथ अमात्य आर्यभूतिक भी गये हैं।

कुरङ्गी—( स्वगतम् ) हन्त कालन्तरिदं कय्यं। [ हन्त कालान्तरितं कार्यम् । ]

विलासिनी—पिअं भट्टिदारिआए रूवजोव्वणं सफलं संवुत्तं त्ति। [ प्रियं-भर्तृदारिकाया रूपयौवनं सफलं संवृत्तमिति । ]

( प्रविश्य )

नलिनिका—भणिदं हि मम मादाए-गच्छ एदं वुत्तन्तं भट्टिदारिआए कहेहि। पिअणिवेदिअमाणाणि पिआणि पिअदराणि होन्ति। अह अ सा वि मं पेक्खन्ती सव्वं विस्सत्थं ण भणादि। अहं पि काले पस्सदो पभवामि त्ति। जाव भट्टिदारिआए पिअं णिवेदेमि। ( परिक्रामति ) [ भणितं हि मम मात्रा-गच्छैतं वृत्तान्तं भर्तृदारिकायै कथय। प्रियनिवेद्यमानानि प्रियाणि प्रियतराणि भवन्ति। अथ च सापि मां पश्यन्ती सर्वं विश्वस्तं न भणति। अहमपि काले पार्श्वतः प्रभवामीति यावद् भर्तृदारिकायै प्रियं निवेदयामि। ]

---

कालान्तरितम्—विलम्बनिष्पाद्यम् ।

रूपयौवनम् सफलं संवृत्तम्—अनुरूपस्वामिलाभेन राजकुमारिकाया रूपं यौवनञ्च सफलं जातमित्यर्थः ।

प्रियनिवेद्यमानानि प्रियाणि-प्रियतराणि भवन्ति—प्रियजनेन कथितानि प्रियवृत्तानि सातिशयमनोहराणि भवन्ति, अतो भर्तृदारिकायाः प्रियसख्या त्वया तस्यै निवेद्यमानस्तद्विवाहोदन्तः समधिकहृद्यो भवितेति भावः। सर्वं विश्वस्तं न भणति—विश्वासपूर्वकं सर्वं मनोगतं न कथयति, सङ्कुचति। काले पार्श्वतः प्रभवामि—समये समीपस्था भवामि ।

---

कुरङ्गी—( स्वगत ) अच्छा, यह कार्य अब कालान्तरित हुआ।

विलासिनी—बड़ी खुशी की बात, राजकुमारी का रूपयौवन सफल हुआ।

( प्रवेश करके )

नलिनिका—मेरी माता ने कहा है कि जाओ यह समाचार राजकुमारी को सुनादो। प्रियजन द्वारा कथित प्रियवस्तु प्रियतर होता है। वह भी मुझे देखते ही सारी बातें खुलकर नहीं कहती है। मैं भी समय पर समीप आ जाऊँगी। तबतक मैं राजकुमारी को खुशखबरी सुना दूँ।

कुरङ्गी—कोणु खु अभूदपुव्वो रोओ चिन्तिअमाणो मं उम्मादेदि। सुमणावण्णअं णेच्छदि। ण तुस्सदि गोट्ठीए। इदं एत्थ दारुणं मणोहरं च। (निःश्वस्य) णलिणिए! किं एदं। [कोनु खल्वभूतपूर्वो रोगश्चिन्त्यमानो मामुन्मादयति। सुमनोवर्णकं नेच्छति। न तुष्यति गोष्ठया। इदमत्र दारुणं मनोहरं च। नलिनिके! किमेतत्।]

मागधिका—भट्टिदारिए! माअधिआ खु अहं। [भर्तृदारिके! मागधिका खल्वहम्।]

विलासिनी—भट्टिदारिए! विलासिणी खु अहं। [भर्तृदारिके! विलासिनी खल्वहम्।]

नलिनिका—(उपगम्य) भट्टिदारिए! अहं णलिणिआ। सोवाणसद्देण खु भट्टिदारिआए विण्णादं। भट्टिदारिए! भट्टिणी भणादि। [भर्तृदारिके! अहं नलिनिका। सोपानशब्देन खलु भर्तृदारिकया विज्ञातम्। भर्तृदारिके! भट्टिनी भणति।]

कुरङ्गी—किं त्ति। [किमिति।]

नलिनिका—(कर्णे) एवं विअ। [एवमिव।]

---

अभूतपूर्वः—पूर्वं कदाप्यजातः। सुमनोवर्णकम्-पुष्पमाल्यम्।

सोपानशब्देन—सोपानोपरि मदीयपादनिपातेन जायमानेन शब्देन।

---

कुरङ्गी—यह कौन सा अपूर्व रोग है जिसकी चिन्ता से मैं पागल होती जा रही हूँ। मुझे पुष्पमाल्य अच्छा नहीं लगता है, लोगों से मिलना-जुलना नहीं भाता, यह तो नितान्त कष्टकर होतेहुए भी मनोहर है। (साँस छोड़कर) नलिनिके, यह क्या बात है?

मागधिका—राजकुमारी, मैं मागधिका हूँ।

विलासिनी—राजकुमारी, मैं विलासिनी हूँ।

नलिनिका—(समीप जाकर) राजकुमारी मैं हूँ नलिनिका, सीढ़ी के शब्द से आपने जान लिया। महारानी ने कहा है:—

कुरङ्गी—क्या कहा है?

नलिनिका—(कान में) यही कहा है।

कुरङ्गी—हं हीणं चारित्तं । [ हं हीनं चारित्रम् । ]

नलिनिका—णं सम्भावणीओ एसो । णं सो एव्व सो । [ ननु संभावनीय एषः । ननु स एव सः । ]

कुरङ्गी—णलिणिए ! संवाहेहि मं । [ नलिनिके ! संवाहय माम् । ]

नलिनिका—जं भट्टिदारिआ आणवेदि । [ यद् भर्तृदारिका आज्ञापयति । ]

विलासिनी—णलिणिए ! विवाहो कदा भविस्सदि । [ नलिनिके ! विवाहः कदा भविष्यति । ]

( नेपथ्ये )

अद्य ।

नलिनिका—चिरं जीव ।

( नेपथ्ये )

राजपुरुषाः ! अमात्यः प्रस्थित इति कश्चिदमात्यभृत्यः कन्यापुररक्षणार्थं नाभ्यागतः । तद् यथेष्टं भवतु । तावदहं श्वो राज्ञो निवेदयिष्यामि ।

विलासिनी—हला णलिणिए ! किं भणिदं । [ हला नलिनिके ! किं भणितम् । ]

---

संभावनीयः—आदरेण ग्रहणीयः ।

संवाहय—धारय ।

---

कुरङ्गी—हाय, चारित्रिकपतन हो गया ।

नलिनिका—ऐसा मत सोचिये । निश्चय ही वह वही हैं ।

कुरङ्गी—नलिनिके, पकड़ ले मुझे ।

नलिनिका—राजकुमारी की जो आज्ञा ।

विलासिनी—नलिनिके, विवाह कब होगा ।

( नेपथ्य में )

आज ।

नलिनिका—चिरकाल तक जीती रहो ।

( नेपथ्य में )

राजपुरुषो, अमात्य चले गये हैं अतः कोई भी अमात्य का भृत्य कन्यान्तःपुर की रक्षा करने नहीं आया है । जो होता है होवे । कल मैं महाराज से निवेदन करूँगा ।

विलासिनी—सखी नलिनिके, क्या कहा ?

नलिनिका—जदा सो भट्टिदारओ पविसदि, तदा होदि विवाहो। [ यदा स भर्तृदारकः प्रविशति, तदा भवति विवाहः। ]

विलासिनी—अविग्घेण पविसदु। [ अविघ्नेन प्रविशतु। ]

नलिनिका—एवं होदु। [ एवं भवतु ]

मागधिका—हला ! एहि चदुस्साले उपविसामो। [ हला ! एहि चतुःशाले उपविशामः। ]

विलासिनी—एवं होदु। गदप्पाओ पओसो। आरूढा जोह्ना। [ एवं भवतु। गतप्रायः प्रदोषः। आरूढा ज्योत्स्ना। ]

नलिनिका—हला ! मम वि अत्थरं अत्थरेहि। [ हला ! ममाप्यास्तरमास्तृणु। ]

मागधिका—अत्थि अवआसो। सेवेहि भट्टिदारिअं, जाव णिद्दं लभदि। [ अस्त्यवकाशः। सेवस्व भर्तृदारिकां, यावन्निद्रां लभते। ]

नलिनिका—एवं होदु। [ एवं भवतु। ]

( उभे निष्क्रान्ते। )

( ततः प्रविशति खड्गहस्तश्चोरवेषेण रज्जुहस्तोऽविमारकः )

---

गतप्रायः—व्यतीतकल्पः। आरूढा—प्रकर्षगता।

आस्तरमास्तृणु—शयनीयं रचय।

---

नलिनिका—जभी वह राजकुमार प्रवेश करेंगे, तब विवाह होगा।

विलासिनी—निर्विघ्नभाव से प्रवेश करें।

नलिनिका—ऐसा ही हो।

मागधिका—सखी, चलो चतुःशाल में चलकर बैठें।

विलासिनी—यही होवे, प्रदोष बीत गया, चन्द्रिका फैल रही है।

नलिनिका—सखी, मेरा बिस्तर भी लगा दे।

मागधिका—अवकाश तो है। राजकुमारी की सेवा कर जब तक वह सो नहीं जाती।

नलिनिका—यही हो।

( दोनों का प्रस्थान )

( इसके बाद खड्ग तथा रस्सी हाथ में लिये चोरवेषधारी अविमारक का प्रवेश )

अविमारकः—( सविमर्शम् ) भोः ! कष्टं तारुण्यं नाम । कुतः,

रागं विजृम्भयति संश्रयते प्रमादं
दोषान् न चिन्तयति साहसमभ्युपैति ।
स्वच्छन्दतो व्रजति नेच्छति नीतिमार्गं
बुद्धिं शुभां सुविदुषामवशीकरोति ॥ १ ॥

कथमात्माधीनेष्वर्थेषु मन्दीभवामि । इह हि,

नगरपरिचितोऽहं रक्षिणो ज्ञातसारा-
स्तिमिरगहनभीमं वर्तते चार्धरात्रम् ।

---

कष्टं तारुण्यं नाम—यौवनं नाम नितान्तकष्टकरं भवति ।

रागमिति—रागं कस्मिंश्चिदपि विषये समासङ्गं विजृम्भयति वर्द्धयति, प्रमादम् असावधानताम् संश्रयते समाश्रयति, दोषान् भाविनोऽनर्थान् न चिन्तयति न विभावयति, साहसम् हठप्रवृत्तिम् अभ्युपैति अङ्गीकरोति, स्वच्छन्दतः स्वेच्छानुसारम् व्रजति आचरति, नीतिमार्गम् शास्त्रोपदिष्टं पन्थानम् नेच्छति न कामयते, सुविदुषाम् शास्त्राण्यधीतवताम् ( अपि ) शुभाम् बुद्धिम् अवशीकरोति स्वतन्त्रविचाराक्षमां करोति । वसन्ततिलकं वृत्तम् ॥ १ ॥

आत्माधीनेषु—स्वसाध्येषु । अर्थेषु-कार्येषु । मन्दीभवामि—अकृतोत्साहो भवामि ।

नगरेति—अहं नगरपरिचितः समस्तमपि ग्रामं परिचिनोमि, रक्षिणः—राज्ञोऽन्तःपुरस्य रक्षणेऽधिकृताः ज्ञातसाराः अवगतसामर्थ्याः, इदम् च अर्धरात्रम् तिमिरेण अन्धकारेण गहनं भयङ्करं भीमं भीषणञ्च वर्त्तते विद्यते,

---

अविमारक—राग बढ़ाता है, असावधानता को प्रश्रय प्रदान करता है, दोषों की चिन्ता नहीं रखता तथा साहस ग्रहण कराता है। स्वच्छन्दता अपनाता है नीतिमार्ग नहीं चाहता है, विद्वानों की कल्याणिनी बुद्धि को भी विवश कर देता है ॥ १ ॥

स्वाधीन विषय में भी मन्दता क्यों अपनाऊँगा ? यहाँ पर—

मुझे नगर का परिचय है, रक्षकों के बलको मैं जानता हूँ, अन्धकारपूर्ण तथा भीषण यह अर्धरात्रि का समय है। तलवार मेरी सहायिका है, आत्मा निश्चित·

असिरपि सुसहायो निश्चितश्चान्तरात्मा
किमिह बहुविचारैः को मया दुष्करोऽर्थः ॥ २ ॥

अहो अर्धरात्रस्य प्रतिभयता । सम्प्रति हि,

गर्भस्था इव मोहमभ्युपगताः सर्वाः प्रजा निद्रया
प्रासादाः सुखसुप्तनीरवजना ध्यानं प्रविष्टा इव ।
प्रग्रस्ता इव सञ्चितेन तमसा स्पर्शानुमेया नगा
अन्तर्धानमिवोपयाति सकलं प्रच्छन्नरूपं जगत् ॥३॥

---

मदीयः असिः खड्गः अपि सुसहायः साधुसहायताकरः, अन्तरात्मा च निश्चितः, निर्धारितकरणीयः, इह अस्मिन् समये बहुविचारैः नानाविधैर्विचारैः किम् नास्ति किमपि विचारैः फलम् , मया कः अर्थः दुष्करः सर्वोऽप्यर्थः साधयितुं शक्यः, अस्यां स्थितौ साधयितुं शक्ये कार्ये मन्दप्रवृत्तिकता नोपयुक्तेत्यर्थः । मालिनीवृत्तं 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणात् ॥ २ ॥

प्रतिभयता—भीषणता ।

**गर्भस्था इति**—सर्वाः प्रजाः अखिलो लोकः गर्भस्था इव जननीजठरस्थिता इव निद्रया मोहमभ्युपगताः अज्ञानं प्राप्ताः, सर्वोऽपि लोको निद्रानिलीनः सन् गर्भस्थ इव मुग्धो जात इत्यर्थः । सुखसुप्ताः नीरवा जना यत्र तादृशाः प्रासादाः राजगृहाः ध्यानं प्रविष्टाः कृतध्याना इव सर्वेषु सुप्ततया नीरवेषु सत्सु प्रासादा ध्यानमिवाधाय मूकीभूता जाता इत्यर्थः । सञ्चितेन पुञ्जीभूतेन तमसा अन्धकारेण प्रग्रस्ताः कवलीकृता इव नगा वृक्षाः स्पर्शानुमेयाः स्पर्शमात्रज्ञेयसत्त्वा जाता इत्यर्थः । तदित्थं सकलमपि स्थावरजङ्गमात्मकं जगत् विश्वम् अन्तर्धानम् तिरोधानमिव उपयाति सकलमपि विश्वं तमस्यन्तर्हितमिव निलीय स्थितमित्याशयः ।

---

कर्त्तव्य है, फिर इस प्रसङ्ग में विचार क्या करना है, मेरे लिये दुष्कर ही क्या है ॥ २ ॥

अहो, अर्धरात्रि का समय कितना भयङ्कर है । इस समय सारी जनता गर्भस्थ शिशु की तरह निद्रा से मुग्ध हो रही है, प्रासाद पर सभी लोक सुख से सो रहे हैं मानो प्रासाद ध्यानमग्न हों । अन्धकार में डूबे वृक्षों का ज्ञान स्पर्शहेतुक अनुमान मात्र से होता है, इस जगत् का रूप छिप गया है मानो वह अन्तर्धान प्राप्त हो रहा हो ॥ ३ ॥

अद्यैव खलु वर्तते कालरात्रिः ।

तिमिरमिव वहन्ति मार्गनद्यः
पुलिननिभाः प्रतिभान्ति हर्म्यमालाः ।
तमसि दश दिशो निमग्नरूपाः
प्लवतरणीय इवायमन्धकारः ॥ ४ ॥

( परिक्रम्य कर्णं दत्त्वा ) अये गान्धर्वध्वनिरिव श्रूयते । को नु खल्वयं सर्वकालसुखी पुरुषः कान्तया सह गान्धर्वमनुभवति । व्यक्तं स्वयं वीणां वादयति । कुतः,

---

शार्दूलविक्रीडितं वृत्तम्, 'सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्' इति तल्लक्षणम् ॥ ३॥

**तिमिरमिवेति**—मार्गनद्यः मार्गा एव नद्यः वर्त्मरूपा नद्यः तिमिरं जलस्थाने वहन्ति प्रवाहयन्ति, सर्वोऽपि मार्गचयोऽन्धकारव्याप्त इत्यर्थः, इमाश्च हर्म्यमालाः पुलिननिभाः तटसदृशाः प्रतिभान्ति, सर्वेऽपि गृहा मार्गरूपनद्यास्तटभूमय इव भासन्त इत्यर्थः । तमसि अन्धकारे निमग्नरूपाः निलीनस्वरूपा दशापि दिशः प्राच्यादयो दिग्विभागाः जाता इति शेषः । ( एवमतिगाढोऽयमन्धकारः ) प्लवतरणीयः नावा तार्य इव विभातीति शेषः । पुष्पिताग्रावृत्तम् ॥ ४ ॥

गान्धर्वध्वनिः—गीतवादित्रशब्दः । सर्वकालसुखी—सततानन्दी । गान्धर्वमनुभवति गीतवादित्रविनोदेनात्मानं विनोदयति । स्वयं वीणां वादयति—पुरुष एवाधुना वीणां वादयतीति स्फुटम्, तत्र युक्तिं वक्ष्यति—

---

आज ही काल रात्रि है,

मार्गस्थित नदियों में अन्धकार प्रवाहित हो रहा है, मकान नदी-तट के समान प्रतीत हो रहे हैं, दश दिशायें अन्धकार में लीन हो रही हैं, और अन्धकार इतना गाढ़ा है जैसे इसे नाव से पार करना पड़ेगा ॥ ४ ॥

( चलकर, कान देकर ) अहा, गीत की ध्वनि सुनाई पड़ रही है, कौन यह सर्वकाल-सुखी पुरुष है जो अपनी प्रिया के साथ गीत का आनन्द ले रहा है । स्पष्ट है कि वह स्वयं वीणा बजा रहा है । क्योंकि :—

उच्चं हर्म्यं सन्निरुद्धाश्च जाला-
स्तन्त्रीनादः श्रूयते सानुनादम् ।
वाह्यस्थानं व्यक्तमेवं प्रयोक्तुं
किं सामर्थ्यं स्त्रीकराग्राङ्गुलीनाम् ॥ ५ ॥

गीतं तु पुनः स्त्रियाः । इह हि,

तानस्तु मन्दो विशदप्रवृत्तो
जातश्च नादो मुखनासिकेन ।
स्थूलोऽपि हेतुः करतालनादः

---

उच्चमिति—हर्म्यम् भवनम् उच्चम् उन्नतम् , जालाः गवाक्षाश्च सन्निरुद्धाः पिहिताः, तन्त्रीनादः वीणाशब्दश्च सानुनादम् सप्रतिशब्दं श्रूयते, वाह्यस्थानम् परश्रवणगोचरतायोग्यम् ध्वनिगततारत्वमन्दत्वादिकम् व्यक्तम् स्फुटम् , एवं प्रयोक्तुम् इत्थं वीणां वादयितुं स्त्रीकराग्राङ्गुलीनां वनिताहस्तस्याङ्गुलीनाम् किं सामर्थ्यम् कुतो वलम् ? उच्चे पिहितसकलगवाक्षे च हर्म्ये वाद्यमानाया वीणायाः सप्रतिध्वनिर्ध्वनिरिहाकर्ण्यते, तत्रापि तारत्वादिस्फुटं प्रतीयते, नेत्थं स्त्रीकराग्राङ्गुलिः वीणां वादयितुं क्षमते तदपेक्षितसामर्थ्यस्य तत्राभावादिति पुरुष एव वीणां वादयत्ययं यः शब्दो मयाऽऽकर्ण्यत इत्याशयः । शालिनीवृत्तम्— 'मात्तौ गौचेच्छालिनी वेदलोकैः' इति तल्लक्षणम् ॥ ५ ॥

गीतं तु पुनः स्त्रियाः—तुशब्दः पूर्वपक्षव्यावर्त्तकः, वीणां पुरुषो वादयति, गायति तु स्त्री, इति भावः, तत्र कारणमग्रिमश्लोकेन वक्ष्यति ।

तानस्त्विति—विशदप्रवृत्तः स्फुटमारब्धः तानः लयप्रकाशनप्रकारः मन्दः अनतिस्थूलः, नादश्च मुखनासिकेन मुखसहितया नासिकया जातः, एतेन माधुर्यं व्यञ्जितम् । स्थूलः दीर्घः अपि करतालनादः सद्वलयस्वनेन करभूषणध्वनिना हेतुः

---

मकान ऊँचा है, खिड़कियाँ वन्द हैं, प्रतिध्वनि के साथ वीणा का शब्द सुनाई पड़ रहा है, इस वीणा-ध्वनि में वाह्य स्थान स्फुट है, इस तरह वीणा वजाने की शक्ति स्त्री की अङ्गुलियों में कहाँ से आ सकती है ? ॥ ५ ॥

गीत स्त्री का ही है, इसमें—

तानमन्द है परन्तु स्पष्ट है, मुख नासिका के मिलित प्रयत्न से नाद पैदा

सञ्जायते सद्वलयस्वनेन ॥ ६ ॥

( परिक्रम्यावलोक्य ) हहह अयमपरः कः क्रुद्धां कान्तां प्रसादयति। महान् खल्वस्यापराधः, येनेयमस्यां वेलायामपि न प्रसीदति। अथवा प्रसन्ना खल्वियं व्यपदेशमिच्छति। कुतः,

वाष्पोपरुद्धजडगद्गदजिह्मकण्ठं
काऽहं तवेत्यसकलं प्रणयाद् वदन्ती।
सद्भावतः प्रियवशं समुपागतापि
स्त्रीभावतः प्रवदति प्रतिकूलमेव ॥ ७ ॥

---

स्त्रिया एव गायकतेतिप्रत्यये कारणं संजायते। करतालध्वनौ दीर्घतरेऽपि वलयध्वनिरेव माधुर्यमवतार्य स्त्रिया एव गायकत्वमिति प्रत्ययं द्रढयतीत्यर्थः। इन्द्रवज्रावृत्तम्, 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति च तल्लक्षणम् ॥ ६ ॥

क्रुद्धाम्-कुपिताम्। कान्ताम्-स्त्रियम्। प्रसादयति-अनुकूलयति। अस्य-पुरुषस्य। वेलायाम्—समये। व्यपदेशमिच्छति-किमपि व्याजं कृत्वा स्वं प्रसादं प्रकटयितुमिच्छति, येन लाघवं न प्रकाशितं स्यात्।

वाष्पोपरुद्धेति—वाष्पेण अश्रुणा उपरुद्धः आकीर्णः जडः गद्गदः श्लथवाक्प्रवृत्तिः जिह्मः कुटिलश्च कण्ठो यत्र तत्तया तव का अहम् इति असकलं समस्तं वर्णमनुच्चार्य वदन्ती व्याहरन्ती सद्भावतः सौजन्यवशात् प्रियवशं समुपागताऽपि प्रियेऽनुरक्तापि स्त्रीभावतः स्त्रीत्ववशात् प्रतिकूलमेव वदति विरुद्धेव व्याहरति। अयमाशयः—वाष्पेण रुद्धः कण्ठः गद्गदो जातस्तेन कण्ठेन

---

हुआ है, स्थूल करताल वलय के शब्द के साथ होता है, ( इसी से यह गीत स्त्री का है यह सिद्ध है ) ॥ ६ ॥

( चलकर तथा देखकर ) हहह !! यह कौन अपनी मानिनी स्त्री को मना रहा है, मालूम पड़ता है—इसने बहुत बड़ा अपराध किया है, जिससे यह स्त्री इस समय भी नहीं मान रही है। अथवा—यह कुपित नहीं रह गई है, केवल प्रसन्नता व्यक्त करने के लिये बहाना ढूँढ़ रही है। क्योंकिः—

उसका कण्ठ बाष्प से उपरुद्ध, जड़ तथा गद्गद हो रहा है, वह मैं तुम्हारी कौन होती हूँ ऐसा कह रही है, सद्भावना के कारण वह प्रियतम के समीप आकर भी स्त्री स्वभाव से प्रतिकूल ही बोल रही है ॥ ७ ॥

को नु खल्वयं पक्षी भैरवस्वरः । आ उलूकः खल्वयम् । कथं हसितमनेन । उलूकस्वरश्रवणभीतया कान्तया परिष्वक्तः खल्वयं तपस्वी । सदृशं वयसः । किं परव्यापारवीक्षणम् । साधयामस्तावत् । ( परिक्रम्य ) को नु खल्वयमस्मिन् नगरापणालिन्दे सशङ्कितमतिस्निग्धं च सम्भाषते । अस्मत्सब्रह्मचारी खल्वयं तपस्वी ।

सम्पीड्यते परिजनेन शनैर्वदेति
संविग्नवद् भवति भूषणनिस्वनेन ।
सङ्गं वदत्यसुखदं मदनाभिभूतः
सङ्केतमिच्छति च नेच्छति चाभिगन्तुम् ॥ ८ ॥

---

यद्यपि काऽहं तव इति व्याहरति, परं तस्या हृदयमनुकूलतां गतमथापि स्त्रीभावाद् वक्रामेव गिरमुच्चारयति । वसन्ततिलकं वृत्तम् ॥ ७ ॥

भैरवस्वरः—कठोरशब्दकर्ता । परिष्वक्तः—आलिङ्गितः । सदृशं वयसः—अवस्थाऽनुकूलम् । किं परव्यापारवीक्षणम्—अयुक्तं परकीयरहस्यनिरीक्षणम् । साधयामः—गच्छामः । नगरापणालिन्दे—नगरापणस्य बहिर्भागे । सशङ्कितम् सभयम् । अतिस्निग्धम्—मन्दं मधुरञ्च । अस्मत्सब्रह्मचारी—मया तुल्यः ।

सम्पीड्यत इति—परिजनेन परिचारकवर्गेण शनैर्वद मन्दमभिधेहीति सम्पीड्यते बलवदवरुध्यते, भूषणनिःस्वनेन कामिनीधृतालङ्कारशब्देन श्रुतमात्रेण संविग्नवद् भवति उद्विग्न इव जायते । सङ्गम् नायिकासंयोगम् असुखदम् अहितजनकं वदति, अथ च मदनाभिभूतः कामपीडितः सन् सङ्केतम् प्रियतमासङ्गतये कल्पितं स्थानविशेषम् इच्छति, परन्तु अभिगन्तुम् तत्र सङ्केते गन्तुं नेच्छति ।

---

भीषण स्वभाव वाला यह कौन सा पक्षी है ? अरे यह तो उलूक है । यह हँस क्यों रहा है । उलूक के स्वर को सुनकर डरी हुई यह नायिका अपने प्रियतम का आलिङ्गन कर रही है । ( चलकर ) यह कौन नगरापण के अलिन्द पर सशङ्क तथा स्निग्ध भाषण कर रहा है । यह तपस्वी तो हमारे समान ही है ।

परिजन इसे दबाता है कि धीरे से बोलो । यह भूषण की आवाज सुनकर उद्विग्न हो जाता है, इसे सङ्ग में असुख प्रतीत होता है, तथापि कामवश होकर सङ्केत की कामना करता है, फिर भी आगे बढ़ना नहीं चाहता है ॥ ८ ॥

(परिक्रम्य) अये ज्योत्स्ना। नैषा ज्योत्स्ना, उभयपङ्क्तिगतानां प्रासादानां गवाक्षान्तरगता दीपप्रभैषा। इह खलु प्रयत्नादात्मा रक्षितव्यः। अये अयं तु तस्करः। एष हि,

दृढपरिकरबन्धहृष्टचित्तः
परगृहवादनिविष्टदृष्टिचेष्टः।
द्रुतगतिरपि दीपिकावलोकी
भवति च पादनिपातनादभीरुः॥ ९॥

---

कस्यचिद् भीरोः कामुकस्य वर्णनमिदम्। स हि परिचारकेण मन्दं वक्तुमुपदिश्यते, काम्यमानवनिताधृतभूषणशब्दे श्रुते काममप्युद्विग्नतामिव धारयति, पुनश्च परकीयनायिकासङ्गमसुखोदर्कं मत्वा ततो निवृत्तिं कामयते, मदनपीडितश्च भूत्वा सङ्केतं कल्पयति, नच तत्र प्रविष्टो भवति, स्वभावभीरुत्वादित्यर्थः। वसन्ततिलकं वृत्तम्॥ ८॥

ज्योत्स्ना-चन्द्रप्रकाशः। उभयपङ्क्तिगतानाम्—मार्गस्योभयोः पार्श्वयोः स्थितानाम्। प्रासादानाम्—राजगृहाणाम्। गवाक्षान्तरगता—जालमार्गान्निष्क्रामन्ती। रक्षितव्यः—गोपनीयः। तस्करः—चौरः।

दृढपरिकरेति—दृढस्य परिकरस्य बन्धेन हृष्टं प्रसन्नं चित्तं यस्य तादृशः, अथ परगृहवादे अन्यदीयगृहे जायमाने वार्त्तालापे निविष्टा लग्ना दृष्टिश्चेष्टा च यस्य तादृशः, द्रुतगतिः शीघ्रगामी अपि दीपिकावलोकी प्रकाशद्रष्टा सन् पादनिपातनात् चरणन्यासं कृत्वा अभीरुः भयरहितः भवति। दृढं परिकरं दृष्ट्वा प्रसीदति, परगृहे जायमानां वार्त्तामाकर्ण्य तत्र सावधानां दृशं निक्षिपति, द्रुतं गच्छति, दीपिकां दृष्ट्वापि पादन्यासान्न निवर्त्तते, तदयं चौरलक्षणयोगित्वाच्चौर एव संभवतीत्यर्थः॥ ९॥

---

(चलकर) अरे यह चाँदनी है। नहीं यह चाँदनी नहीं है। यह तो दोनों पङ्क्तियों में वर्त्तमान भवनों की खिड़कियों से निकली दीप की प्रभा है। इसमें यत्नपूर्वक अपनी रक्षा करनी है। अरे, यह तो चोर है, यह:—

परिकर बाँधकर इसके हृदय को बड़ा आनन्द मिल रहा है, दूसरों के घर की बात सुनने-देखने में इसकी नजर लगी रहती है, शीघ्र चलता है, फिर भी दीप देख कर भी निर्भय भाव से पैर बढ़ा रहा है॥ ९॥

हन्त परिहरिष्याम्येनम् । ( एकान्ते स्थितः ) गतो नृशंसः । वयमपि तावत् प्रतिष्ठामहे । ( परिक्रम्य ) अये रक्षिणः खल्वेते । किन्तु खल्विदानीं करिष्ये । भवतु दृष्टम् । इमां शृङ्गाटकस्थां विटसभां प्रविशामि । ( विलङ्घ्य स्थित्वा )

आरक्षिणां तु विमुखं मितविक्रमाणां
मामभ्युपेत्य हसतीव ममैष खड्गः ।
नैते तु रक्षिपुरुषा मम भारभूता
मत्कार्यसाधनपरोऽहमिह प्रविष्टः ॥ १० ॥

गता रक्षिणः । के रक्षन्ति रक्षितात्मानम् ।

---

परिहरिष्यामि—वर्जयिष्यामि । नृशंसः—क्रूरकर्मा । प्रतिष्ठामहे—गच्छामः । शृङ्गाटकस्थाम्—चतुष्पथे वर्तमानाम् । विटसभाम्—विटानामुपवेशनस्थानं निशि रिक्तम् ।

आरक्षिणामिति—मितविक्रमाणाम् परिमितपराक्रमशालिनां स्वल्पसामर्थ्यानाम् आरक्षिणाम् कन्यान्तःपुररक्षिणाम् विमुखं पराङ्मुखम् माम् अभ्युपेत्य अवगम्य एषः प्रबलो मम खड्गः मां हसतीव मनोपहासमिव करोति । तु किन्तु एते रक्षिपुरुषाः मम भारभूताः विघ्नस्वरूपाः न, अहम् इह मत्कार्यसाधनपरः प्रविष्टः आयातः, अतो मम कार्ये प्रतिबन्धकत्वाभावात्तानेषां रक्षिणां वधो मया स्वपराक्रमप्रकटनमात्रमुद्दिश्य नैव कर्तव्य इत्याशयः । वसन्ततिलकं वृत्तम् ॥ १० ॥

---

अच्छा, इसे बचा जाऊँगा । ( एकान्त में खड़ा हो जाता है ) चला गया यह क्रूर । अब मैं भी जाता हूँ । ( चलकर ) अरे यह तो रक्षक हैं, अब क्या करूँगा, अच्छा, देख लिया, इसी चौराहे पर की विटसभा में पैठ जाता हूँ ( लाँघकर खड़ा होकर )

मुझे इन साधारण पराक्रम वाले रक्षकों से विमुख होते देख मेरा यह खड्ग मुझे हँस रहा है, परन्तु यह रक्षक मेरे भार तो हैं नहीं, मैंने तो अपना काम निकालने के लिये यहाँ प्रवेश किया है ॥ १० ॥

रक्षक चले गये, जो अपनी रक्षा खुद करते हैं उनकी रक्षा कौन करेगा ?

अवहुपुरुषपक्षमेत्य शौर्यं
निशि विचरन्ति सरागलोभमोहाः ।
इह तु पुरुषकारसारसाक्षी
बहुविषमश्च सुखश्च रात्रिचारः ॥ ११ ॥

एतद् राजकुलम् । अहो स्थिरत्वमुच्छ्रितत्वं प्राकारस्य । इह खलु प्रयुज्यते पुरुषाणां कक्ष्याबन्धः । अथवा प्रविष्ट एवाहं चिन्तयितव्यः, यदि स्थिराः कपिशीर्षकाः । इह स्थित्वा रज्जुं प्रक्षिपामि । नमः प्रजापतये । नमः सर्वसिद्धेभ्यः । प्रसीदन्तु बलिशम्बरमहाकालाः । विजृम्भतां रात्रिः । वर्धतां निद्रा । अनुमन्यतां पद्मा । लयं गताः सर्वविघ्ना

---

रक्षितात्मानम्—स्वत्राणसमर्थम् , सर्वो हि स्वरक्षणाधिकारीत्यर्थः ।

अवहुपुरुषेति—अवहुपुरुषपक्षम्—बहुभिः पुरुषैरनाश्रीयमाणपक्षम् अन्यैरकृतसाहायकम् शौर्यम् पराक्रमशालित्वम् एत्य प्राप्य सरागलोभमोहाः रागेण लोभेन मोहेन चोपेताः निशि विचरन्ति रात्रौ संचरन्ति । इह राजप्रासादे तु पुरुषकारस्य पौरुषातिशयस्य साक्षी प्रज्ञापकः रात्रिचारः बहुविषमः नितान्तकष्टसाध्यः सुखश्च अनायाससाध्यश्च अस्तीति शेषः । अन्यत्र चौरा अन्यकृतां सहायताम् अनपेक्षमाणा अपि रागलोभमोहादिना निशि प्रचरन्ति अत्र राजान्तःपुरे तु पौरुषमाधाय यदि प्रचर्यते तदा द्वयी गतिः सति भाग्योदये अक्लेशं सञ्चर्यते, सति च विपर्यये विपत्तिरपि लभ्यत इत्यर्थः ॥ ११ ॥

राजकुलम्—राजप्रासादः । उच्छ्रितत्वम्—उन्नतत्वम् । प्राकारस्य—परितो-रक्षार्थं कृतस्य कुड्यस्य । कक्ष्याबन्धः—परिकरबन्धनम् । कपिशीर्षकः—कपिशीर्षाकारमिष्टकादिनिर्मितमुन्नतं स्थानम् । बलिशम्बरमहाकालाः—स्तेय-

---

अल्पजनलभ्य पौरुष लेकर राग-लोभ-मोह वाले रात में घूमा करते हैं। रात में घूमना सुखप्रद, खतरे से भरा, तथा पौरुष का साक्षी हुआ करता है ॥११॥

यही तो है राजकुल। अहा प्राकार कितने ऊँचे और दृढ़ हैं। यहीं पुरुषों को परिकर बाँधना होता है। अथवा मैं तो प्रविष्ट ही हूँ। यदि यह कंगूरे स्थिर हैं तो इन्हीं पर रस्सी फेंकता हूँ। प्रजापति को नमस्कार। बलि, शम्बर तथा महाकाल मुझपर प्रसन्न हों। सभी सिद्धों को नमस्कार करता हूँ। रात बढ़े,

भवन्तु। हताः परिपन्थिका भवन्तु। जयतु भगवती कात्यायनी।
( रज्जुं क्षिप्त्वा ) हन्त बद्धः कर्कटकरज्ज्वा कपिशीर्षकः। अहो भवितव्यस्य प्रभावः। एकेनैव क्षेपेण सुसंसक्तां रज्जुं कार्यसिद्धिमिव पश्यामि। अहो बलवान् हि भगवान् प्रजापतिः। कुतः,

> यत्ने कृते यदि न सिध्यति कोऽत्र दोषः
>     को वा न सिध्यति ममेति करोति कार्यम्।
> यत्नैः शुभैः पुरुषता भवतीह नृणां
>     दैवं विधानमनुगच्छति कार्यसिद्धिः॥ १२॥

---

शास्त्रप्रसिद्धाः। अनुमन्यताम् अनुज्ञां करोतु। परिपन्थिकाः—शत्रवः। भवितव्यस्य प्रभावः भवितव्यतायाः सामर्थ्यातिशयः। सुसंसक्ताम्—दृढं लग्नाम्। कार्यसिद्धिम् इव एकेनैव क्षेपेण यत्कपिशीर्षके लग्ना रज्जुस्तन्मन्ये कार्यं सिद्धमिवेत्यर्थः।

यत्ने कृत इति—यत्ने कृते यथाशक्ति प्रयासे कृते सति यदि कार्यं न सिद्ध्यति विपद्यते तदाऽत्र कर्तुः को दोषः, नहि कोऽपीत्यर्थः। को वा पुरुषः मम न सिद्ध्यति मम कार्ये सिद्धिर्न जायताम् इति कार्यं करोति नहि कोऽपि असिद्धिमभिलष्य कर्मारभते, सर्वस्यापि सिद्धिरेवाभिलष्यमाणा भवतीत्यर्थः। इह शुभैः यत्नैः अनुरूपैः प्रयासैः नृणां पुरुषता भवति पुरुषाः पौरुषपदं लभन्ते एतावदेव पुरुषस्य कार्यं यदसौ प्रयासमनुरूपं विदधीतेत्यर्थः, कार्यसिद्धिस्तु पुनः दैवं विधानमनुगच्छति कार्यं तु भाग्यवशादेव सिद्ध्यति इत्यर्थः॥ १२॥

---

नींद गाढ़ी हो, लक्ष्मी अनुकूल रहें, सभी विघ्नों का लय हो। मेरे शत्रु निहत हों। जय हो भगवती दुर्गा की। ( रस्सी फेंक कर ) अहा, रस्सी से कंगूरा बँध गया। अहा, भवितव्यता का क्या प्रभाव है।

एक ही बार फेंकने से रस्सी फँस गई, इससे पता चलता है कि कार्य बन जायगा भगवान् प्रजापति सामर्थ्यशाली हैं। क्यों कि—

यत्न करने पर भी यदि कार्य नहीं सिद्ध हो तो इसमें किसका दोष है? कौन नहीं चाहता कि मेरे कार्य सिद्ध हों। अच्छे प्रयत्नों से पुरुषों की पुरुषता सिद्ध होती है। कार्य की सिद्धि तो भाग्य के विधान पर अवलम्बित है॥ १२॥

भवतु रज्जुमवलम्ब्यारोहामि । (आरुह्य दृष्ट्वा) अहो राजकुलस्य श्रीः ।

विपुलमपि मितोपमं विभागा-
निविडमिवाभ्युदितं क्रमोच्छ्रयेण ।
नृपभवनमिदं सहर्म्यमालं
जिगमिषतीव नभो वसुन्धरायाः ॥ १२ ॥

इह तु न स्थातव्यम् । अट्टालप्रतोलीन्द्रपथेभ्यः सर्वविघ्ना भवन्ति । भवतु अनयैव रज्ज्वावतरिष्यामि । ( अवतीर्य ) क नु खल्विदानीं रज्जुं प्रच्छादयामि । ( विचिन्त्य ) भवतु दृष्टम् । अस्यां हस्तिशालायां पाशं छित्त्वा क्षिपामि । ( प्रक्षिपति । परिक्रम्य )

---

**विपुलमपीति**—विपुलम् विशालमपि विभागात् तत्तद्विभागवशतः मितोपमम् सीमितमिव, क्रमोच्छ्रयेण क्रमोन्नत्या निविडं घनमिवाभ्युदितम् सर्वत्र दृढसंयोगमिव प्रतीयमानम्, इदं सहर्म्यमालम् सप्रासादपरम्परं नृपभवनम् वसुन्धरायाः विहाय धरणीं नभः जिगमिषतीव गन्तुमिच्छतीव । विशालमपि नृपभवनं विभक्ततया परिमितमिव प्रतीयते, क्रमोन्नततया दृढबन्धनमिव च भासते, तन्मन्ये इदं नृपभवनं धरां विहाय व्योम्नीवोड्डीय गन्तुमिच्छतीत्यर्थः । पुष्पिताग्रावृत्तम् ॥ १२ ॥

अट्टालम्—गृहोपरितनो भागः, प्रतोली—रथ्या । इन्द्रपथः—प्रधानमार्गः । अवतरिष्यामि—अधो गमिष्यामि । पाशं छित्त्वा—बन्धनं विघटय्य ।

---

अस्तु, रस्सी पकड़ कर चढ़ता हूँ । ( चढ़कर तथा देखकर ) अहा, राजकुल की कैसी शोभा है ?

विशाल होने पर विभागों में बँट जाने से यह राजकुल परिमित सा लगता है, क्रमशः उन्नत होते जाने के कारण घना सा लगता है, प्रासाद परम्परा से युक्त यह नृपभवन ऐसा लगता है मानो पृथ्वी से उठकर आकाश की ओर जा रहा हो ॥ १२ ॥

यहाँ नहीं ठहरना चाहिये । अट्टालिका, गली, तथा चौराहे से ही सारे विघ्न आते हैं । अस्तु, इसी रस्सी के सहारे उतरूँगा । ( उतरकर ) अब इस रस्सी को कहाँ छिपाऊँ ? ( सोचकर ) इस हस्तिशाला में गिरह खोल कर रख देता हूँ । ( फेंकता है । चलकर )

कान्तासमीपमुपगम्य मनोभिलाषा-
द्धर्म्याधिरोहणमतेर्मम का विशङ्का।
संसक्तनालगतकण्टकभीतचेता-
स्तृष्णार्दितः क इह पुष्करिणीं जहाति ॥ १५ ॥

भवत्वारोहामि। (आरुह्य) इदं तयोक्तं जालयन्त्रम्। (विघाट्य प्रविश्यावलोक्य च) साधु कुन्तिभोज! साधु। उपहसित इव भवनेनानेन स्वर्गः। तथाहि,

हंसाः स्वपन्ति मणिरत्नशिलातलेषु
वैदूर्यमौक्तिककृताः सिकताप्रतानाः।

---

यत्र लोकाः राजानं पश्यन्ति तद् गृहम्। काष्ठकर्मबहुलतया—नानाप्रकारककाष्ठसाध्यगवाक्षादि युक्तया। समासन्नजालत्वात्—समीपस्थितगवाक्षत्वात्।

कान्तासमीपमिति—मनोभिलाषात् स्नेहातिशयात् कान्तासमीपमुपगम्य प्रियानिकटमागम्य हर्म्याधिरोहणमतेः प्रसादारोहणात् मम का विशङ्का को वितर्कः? यद् नालगतं कण्टकं ततो भीतं चेतो यस्य स तयोक्तः कः पुष्करिणीं कमलिनीं संसक्तं मिलितं जहाति त्यजति, यथा नालगतकण्टकभयात्कमलिनीत्यागोऽनुचितस्तथैव स्नेहातिशयवशतः प्रियावासमासाद्य हर्म्यारोहणाद् भयमनुचितमित्यर्थः। दृष्टान्तोऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ १५ ॥

तयोक्तम्—धात्रीकथितम्। उपहसितः—निन्दितः।

हंसाः स्वपन्तीति—मणिरत्नशिलातलेषु मणिमयशिलाशकलेषु हंसाः तन्नामप्रथिताः पक्षिणः स्वपन्ति निद्रामुपभुञ्जते, सिकताप्रतानाः वालुकाराशयः वैदूर्यमौक्तिककृताः वैदूर्यमणिभिः मौक्तिकैश्च विहिताः सन्तीति शेषः। स्तम्भाः

---

प्रियतमा के पास आकर प्रासाद पर चढ़ने में मुझे क्या शङ्का? नाल में वर्तमान कण्टक के भय से कौन प्यासा नलिनी का त्याग करता है? ॥ १५ ॥

अस्तु, चढ़ता हूँ। इसी जालयन्त्र के बारे में धात्री ने कहा था। (खोलकर पैठकर और देखकर) साधु कुन्तिभोज, आपके इस भवन ने स्वर्ग को मात कर दिया।

मणिरत्नमय शिलाखण्डों पर हंस सो रहे हैं, यहाँ की बालुका वैदूर्य तथ

अविमारकः—( दृष्ट्वा सानन्दम् ) इयमियं सा । यत्र मम,

दृष्टिर्न तृप्यति परिष्वजतीव साङ्गं
बुद्धिस्त्वरां व्रजति बोधयतीव सुप्ताम् ।
रागोऽभिचोदयति सादयतीव चाङ्गं
हर्षात् प्रसीदति विमुह्यति चान्तरात्मा ॥ १७ ॥

नलिनिका—( आत्मगतम् ) एसो खु भअवं कामदेवो ओघो विअ उभअपक्खं पीडेइ । ( प्रकाशम् ) भट्टिदारअ ! अलङ्करीअदु सअणअलं [ एष खलु भगवान् कामदेव ओघ इवोभयपक्षं पीडयति । भर्तृदारक ! अलंक्रियतां शयनतलम् । ]

अविमारकः—बाढम् । ( उपविशति )

नलिनिका—भट्टिदारअ ! किं ओबोधेमि भट्टिदारिअं । [भर्तृदारक ! किमवबोधयामि भर्तृदारिकाम् । ]

---

दृष्टिर्न तृप्यतीति—दृष्टिर्मम नयनं न तृप्यति सन्तोषं न लभते, सा दृष्टिः अङ्गम् प्रियाशरीरावयवम् परिष्वजति आलिङ्गतीव । बुद्धिः त्वरां व्रजति शीघ्रकारितां लभते, सुप्ताम् प्रियाम् बोधयति जागरयति इव । रागः उत्कण्ठातिशयः अभिचोदयति प्रेरयति, अङ्गम् मदीयं शरीरावयवं च सादयति क्लेशयति, अन्तरात्मा च हर्षात् प्रसीदति विमुह्यति मोहमाप्नोति च ॥ १७ ॥

अलङ्करोतु—स्वसंयोगेन भूषयतु ।

---

अविमारक—( देखकर, सानन्द ) यही तो है वह, जिसमें—

मेरी आँख तृप्त नहीं हो रही है, अङ्गों का आलिङ्गन सा करती है, बुद्धि जल्दी कर रही है, और सोती प्रिया को जगा रही है, उत्कण्ठा प्रबल हो रही है, अङ्ग सन्न हो रहे हैं, हर्ष से आत्मा प्रसन्न भी हो रही है और मुग्ध भी हो रही है ॥१७॥

नलिनिका—( स्वगत ) यह भगवान् काम जलराशि की तरह दोनों तटों को पीड़ित कर रहे हैं । ( प्रकट )राजकुमार, इस शयनतल को अलङ्कृत करें ।

अविमारक—अच्छी बात है । ( बैठता है )

नलिनिका—राजकुमार, क्या राजकुमारी को जगा दूँ ।

अविमारकः—प्राप्तं खलु मया जीवितस्य फलं, येनेयमीदृशं मोहं गता।

कुरङ्गी—( आत्मगतम् ) हं परिब्भट्ठम्हि। ( प्रकाशम् ) हला! किं मए भणिदं। [ हं परिभ्रष्टास्मि! हला किं मया भणितम्। ]

नलिनिका—भट्टिदारिए! किञ्चि ण मन्तिदं। [ भर्तृदारिके! किञ्चिन्न मन्त्रितम्। ]

अविमारकः—अयमस्या मोहविस्तरेण द्वितीयो मे मोहः।

कुरङ्गी—णलिणिए! चिरं खु उवविट्ठा। का वेला। [ नलिनिके! चिरं खलूपविष्टा। का वेला। ]

नलिनिका—संवुत्तं अद्धरत्तं। [ संवृत्तोऽर्धरात्रः। ]

कुरङ्गी—तेण हि परिस्सन्तासि। एहि परिस्सजेहि मं। [ तेन हि परिश्रान्तासि। एहि परिष्वजस्व माम्। ]

नलिनिका—( अपवार्य ) अहं संवाहेमि। भट्टिदारअ! परिस्सजेहि भट्टिदारिअं। [ अहं संवाहयामि। भर्तृदारक! परिष्वजस्व भर्तृदारिकाम्। ]

अविमारकः—( सहर्षम् ) वाढम्। एवमेव त्वमपि प्रियशतानि शृणु।

कुरङ्गी—अलं अदिसिणेहेण। एहि दाव। [ अलमतिस्नेहेन। एहि तावत्। ]

---

अविमारक—मेरा जीवन सफल हुआ जब कि मेरे लिये यह मूर्च्छित हो रही है।

कुरङ्गी—( स्वगत ) मैं भटक गई। ( प्रकट ) सखि, मैंने क्या कहा था।

नलिनिका—राजकुमारी, आपने कुछ नहीं कहा था।

अविमारक—इसके मोह के बढ़ते जाने से मुझे दूसरा मोह हो रहा है।

कुरङ्गी—नलिनिके, मैं बड़ी देर से बैठी हूँ, क्या समय हुआ होगा।

नलिनिका—आधीरात हो रही है।

कुरङ्गी—मैं थक गई हूँ, आओ मुझ से लिपट जाओ।

नलिनिका—( छिप कर ) मैं पैर दबाती हूँ। राजकुमार, आप राजकुमारी से लिपट जायें।

अविमारक—अच्छी बात है, इसी तरह प्रिय-कथायें तुमको भी सुनने को मिला करें।

कुरङ्गी—अधिक स्नेह की जरूरत नहीं है, शीघ्र आओ।

नलिनिका—भट्टिदारिए ! इअम्हि । [ भर्तृदारिके ! इयमस्मि । ]

कुरङ्गी—( बलादाकृष्याविमारकमालिङ्गति ) हं को दाणिं मं संवाहेदि । [ हं क इदानीं मां संवाहयति । ]

नलिनिका—( कर्णे ) एवं विअ । [ एवमिव । ]

कुरङ्गी—( ससम्भ्रमम् ) हा हीणं चारित्तं । भीदम्हि । [ हा हीनं चारित्रम् । भीतास्मि । ]

अविमारकः—

न त्वं प्रिये ! मम नवासि मनोभियोगात्
किं कम्पसे पवनवेगहता लतेव ।
भद्रे ! भयं त्यज कुरुष्व मयि प्रसादं
किं वा प्रलप्य बहुधा शरणागतोऽस्मि ॥ १९ ॥

( कुरङ्गी सलज्जं नलिनिकां विलोकयति )

---

न त्वं प्रिये इति—हे प्रिये, त्वं मनोभियोगात् मानसिकसंयोगस्य चिरवृत्तत्वात् मम नवा अपरिचिता नासि, पवनवेगहता वायुवेगाच्चलिता लता वल्लीव किं कम्पसे किमिति वेपसे । अयि भद्रे शुभशीले, भयम् त्यज, मयि प्रसादं कृपां कुरु, बहुधा नानाविधेन रूपेण प्रलप्य किम् , अहं तव शरणागतोऽस्मि, अतोऽलं भीत्येति भावः ॥ १९ ॥

---

नलिनिका—राजकुमारी, यही तो हूँ ।

कुरङ्गी—( बलपूर्वक अविमारक का आलिङ्गन करती है ) इस समय मेरे पैर कौन दाब रहा है ।

नलिनिका—( कान में ) यह बात है ।

कुरङ्गी—( घबड़ा कर ) हाय, मेरा चरित्र नष्ट हो गया, मैं डरती हूँ ।

अविमारक—प्रिये, चिर प्रणय के कारण तुम मेरे लिये अपरिचित नहीं हो फिर वात-चालिता लता की तरह क्यों काँप रही हो । भद्रे, भय दूर करो, मुझ पर कृपा करो, अधिक क्या कहूँ, मैं तेरी शरण में हूँ ।

( कुरङ्गी लज्जा से नलिनिका की ओर देखती है )

नलिनिका—भट्टिदारअ ! उट्ठेहि उट्ठेहि । भट्टिदारिआ भणादि । उट्ठेहि किल । [भर्तृदारक ! उत्तिष्ठोत्तिष्ठ । भर्तृदारिका भणति । उत्तिष्ठ किल ।]

अविमारकः—बाढम् । ( उत्तिष्ठति )

( प्रविश्य )

धात्री—जेदु भट्टिदारओ । [ जयतु भर्तृदारकः । ]

अविमारकः—कथं भवती ।

धात्री—णलिणिए ! अब्भन्तरमण्डवे खु रइदं सअणं । भट्टिदारिअं भट्टिदारअं च तहिं एव पवेसेहि । [ नलिनिके ! अभ्यन्तरमण्डपे खलु रचितं शयनम् । भर्तृदारिकां भर्तृदारकं च तत्रैव प्रवेशय । ]

नलिनिका—तह । [ तथा । ]

( निष्क्रान्ता धात्री )

नलिनिका—भट्टिदारअ ! अब्भन्तरमण्डवे खु रइदं सअणं । तहिं एव पविसदु भट्टिदारिआए सह । [ भर्तृदारक ! अभ्यन्तरमण्डपे खलु रचितं शयनम् । तत्रैव प्रविशतु भर्तृदारिकया सह । ]

अविमारकः—त्वमप्येवं प्रियशतानि शृणु ।

( हस्तेन तस्या हस्तं गृहीत्वोत्तिष्ठति । )

नलिनिका—एदु एदु भट्टिदारओ । [ एत्वेतु भर्तृदारकः । ]

---

नलिनिका—राजकुमार, उठो उठो, भर्तृदारिका कहती हैं कि उठिये ।

अविमारक—( उठता है ) ( प्रवेश कर के )

धात्री—जय हो राजकुमार की ।

अविमारक—क्यों, आप आई हैं ।

धात्री—नलिनिके, भीतर में बिछावन लगा हुआ है, राजकुमार तथा राजकुमारी को वहीं पहुँचा दो ।

नलिनिका—अच्छा । ( धात्री का प्रस्थान )

नलिनिका—राजकुमार, भीतर मण्डप में बिछावन लगा है, आप राजकुमारी के साथ वहीं चलें ।

अविमारक—तुम को भी इसी तरह की प्रिय कथा सुनने को प्राप्त हो ।

( हाथ से उसका हाथ पकड़े उठता है )

नलिनिका—आइये राजकुमार,

अविमारकः—अयमयमागच्छामि । ( उभौ परिक्रामतः )

अविमारकः—( सहर्षम् ) अनृणोऽस्मि यौवनस्य । कुतः,

नेत्रे वाष्पपरिप्लुते करघृतौ व्यावल्गमानौ स्तनौ
श्रोणी चाधिकभारिका न विशदौ पादौ ह्रिया स्यन्दिनौ ।
एतत् सप्तपदप्रमाणमिह भोः ! सम्पाद्यते योजना
यद्येषा क्षणदा भवेद् युगशतं धन्यो मदन्यः कुतः ॥ २० ॥

( निष्क्रान्ताः सर्वे । )

तृतीयोऽङ्कः

---

नेत्रे वाष्पपरिप्लुते इति—नेत्रे अस्या मम प्रियायाः नयने वाष्पपरिप्लुते आनन्दाश्रुसिक्ते, करधृतौ हस्तावलम्बितौ स्तनौ व्यावल्गमानौ चलन्तौ, श्रोणी जघनभागः अधिकभारिका समधिकभारवती । ह्रिया लज्जया स्यन्दिनौ, सस्वेदौ पादौ चरणौ न विशदौ न स्पष्टौ । एतत् सप्तपदप्रमाणम्—इत्येव, विवाहाङ्गभूता आवयोः सप्तपदीचङ्क्रमणम् । योजना सम्पाद्यते मनसि चिन्तिता क्रियते । यदि एषा अद्यतनी क्षणदा रात्रिः युगशतम् भवेत् तदा मदन्यः कः धन्यः, आनन्दातिरेकादस्या नयनं साश्रु, सात्त्विकभावेनास्या हृदयं वेपत इति स्तनौ चलौ, श्रोणी भारवती, पादौ सात्त्विकस्वेदयुतौ, तदस्याः समागमस्य रात्रिः यदि युगशतपरिमाणाऽभविष्यत्तदा मम समधिकं सौभाग्यमभविष्यत् इत्यर्थः ॥२०॥

श्रीरामचन्द्रमिश्र कृतेऽविमारक 'प्रकाशे' तृतीयाङ्क 'प्रकाशः' ॥

---

अविमारक—आ रहा हूँ । ( दोनों जाते हैं )

अविमारक—( सहर्ष ) आज मैंने यौवन का ऋण चुका दिया, क्योंकि—

इस मेरी प्रिया की आँखें आनन्दाश्रु से भरी हैं, हाथ द्वारा थामे गये स्तन सात्त्विक भावोदय से काँप रहे हैं, श्रोणी अधिक भारवती, एवं चरण स्वेद से गीले हो रहे हैं । यही हम दोनों की सप्तपदी रही, योजना कार्यान्वित हो रही है । यदि आज की रात युगशत प्रमाण हो जाय तो मुझसा धन्य कौन होगा ? ॥२०॥

तृतीय अङ्क समाप्त

# चतुर्थोऽङ्कः

( ततः प्रविशति चाङ्गेरिकाहस्ता मागधिका )

मागधिका—अहो परिजणस्स पमादो। आसुय्योदअं पि ण किदा पासादरअणा। ण सुणीअदि गोट्ठीजणकोलाहलो। किं णु खु भवे। आ, रत्तिजागरदाए पभादप्पसुत्ता भवे। जाव भट्टिदारिअं ओबोधेमि। (परिक्रामति) [ अहो परिजनस्य प्रमादः। आसूर्योदयमपि न कृता प्रासादरचना। न श्रूयते गोष्ठीजनकोलाहलः। किं नु खलु भवेत्। आ, रात्रिजागरतया प्रभातप्रसुप्ता भवेत्। यावद् भर्तृदारिकामवबोधयामि। ]

( ततः प्रविशति विलासिनी वीजनेन )

विलासिनी—मागधिए! चिट्ठ चिट्ठ। [ मागधिके! तिष्ठ तिष्ठ। ]

मागधिका—हला! मा वारेहि। भट्टिदारिआए सुमणावण्णअं मए आणीअदि। [ हला! मा वारय। भर्तृदारिकायै सुमनोवर्णकं मया नीयते। ]

---

चाङ्गेरिकाहस्ता—करे वंशनिर्मितं पुष्पादिधारणोपयुक्तं पात्रविशेषं धारयन्ती।

परिजनस्य—भृत्यपरिचारकगणस्य। प्रमादः—असावधानता। प्रासादरचना—प्रासादस्यालङ्क्रिया। प्रभातप्रसुप्ता—प्रातःकाले प्राप्तनिद्रासुखा। अवबोधयामि—जागरयामि। सुमनोवर्णकम्—पुष्पमाल्यम्।

---

चतुर्थ अङ्क

( हाथ में चंगेरी लिये मागधिका का प्रवेश )

मागधिका—परिजन की असावधानता देखो, सूर्योदय के हो जाने पर भी प्रासाद को अलङ्कृत नहीं किया है। गोष्ठीजनों का कोलाहल भी नहीं सुना जा रहा है। क्या बात है? आः, रात में जगी रहने के कारण सवेरे नींद लग गई हो, तब तक राजकुमारी को जगाऊँ।

( इसके बाद पङ्खा लिये हुए विलासिनी का प्रवेश )

विलासिनी—मागधिके, ठहर, ठहर,

मागधिका—सखी, रोको मत। मैं राजकुमारी के लिये पुष्पमाल्य लाई हूँ।

विलासिनी—किं भट्टिदारिआए सुमणावण्णएण वा अलङ्कारेण वा। [ किं भर्तृदारिकायाः सुमनोवर्णकेन वालङ्कारेण वा। ]

मागधिका—अविणीदे ! मा अमङ्गलं भणाहि। सददालङ्किदा भट्टिदारिआ होदु। [ अविनीते ! मा अमङ्गलं भण। सततालङ्कृता भर्तृदारिका भवतु। ]

विलासिनी—ण खु। आइदी एव भट्टिदारिआए अलङ्कारो त्ति भणामि। [ न खलु। आकृतिरेव भर्तृदारिकाया अलङ्कार इति भणामि। ]

मागधिका—उम्मत्तिए ! णणु पुप्फं वि वासीअदि। [ उन्मत्तिके ! ननु पुष्पमपि वास्यते। ]

विलासिनी—सदिसं एदं। सभावरमणीआणि मण्डिदाणि अदिरमणीआणि होन्ति। [ सदृशमेतत्। स्वभावरमणीयानि मण्डितान्यतिरमणीयानि भवन्ति। ]

---

अविनीते—अभद्रव्यवहारिणि। सततालङ्कृता—सदाभूषिता।

आकृतिः—स्वरूपम्। स्वभावसुन्दर्यास्तस्या भूषणान्तरस्यापेक्षा नास्तीत्यर्थः। पुष्पमपि वास्यते—द्रव्यान्तरसम्पर्केणातिशयितसुगन्धशालि सम्पाद्यते। यथा स्वभावसुरभि पुष्पमपि वासयित्वाऽधिकसौरभं सम्पाद्यते तथैव स्वभावसुन्दर्यपि भर्तृदारिका पुष्पमाल्यादिना विशेषयिष्यते इत्याशयः। स्वभावरमणीयानि—स्वतः सुन्दराणि। मण्डितानि भूषितानि।

---

विलासिनी—भर्तृदारिका को पुष्पमाल्य अथवा अलङ्कार की क्या आवश्यकता है।

मागधिका—अरी अविनीते, अमङ्गल बात मत कह।

विलासिनी—नहीं नहीं। मेरे कहने का तात्पर्य यह था कि राजकुमारी का अलङ्कार उसकी आकृति ही है।

मागधिका—पगली कहीं की, फूल भी तो सुवासित किया जाता है।

विलासिनी—हाँ, यह ठीक कहा। जो स्वभावतः रमणीय होता है वह अलङ्कृत होने पर और अलङ्कृत हो जाता है।

मागधिका—हला ! सुजोजिदो खु भट्टिदारिआए रूवाणुरूवो भत्ता। [ हला ! सुयोजितः खलु भर्तृदारिकाया रूपानुरूपो भर्ता । ]

विलासिनी—अलं पक्खवादेण भट्टिदारअस्स समीवे भट्टिदारिआ पदुमिणिआ विअ दिस्सदि । [ अलं पक्षपातेन । भर्तृदारकस्य समीपे भर्तृदारिका पद्मिनीव दृश्यते । ]

मागधिका—सुट्ठु भणादि । अहं वि चिन्तेमि—ससरीरो भअवं कामदेवो ईदिसो भवेत्ति । [ सुष्ठु भणति । अहमपि चिन्तयामि—सशरीरो भगवान् कामदेव ईदृशो भवेदिति । ]

विलासिनी—तह एव्व भट्टिदारिआ भट्टिदारअं विणा खणमत्तं वि ण रमदि । [ तथैव भर्तृदारिका भर्तृदारकं विना क्षणमात्रमपि न रमते । ]

( ततः प्रविशति सास्रा नलिनिका )

नलिनिका—( सशोकम् ) सच्चो खु लोअप्पवादो—बहुविग्घाणि सुहाणि

---

रूपानुरूपः—रूपस्य योग्यः सदृश इत्यर्थः ।

पद्मिनी—कमलिनीव ।

सशरीरः—देहधारी । यदि कामः शरीरमाधायोपस्थितो भवति तदा राजकुमारेणानेन सादृश्यं धारयेदित्यर्थः ।

न रमते—न प्रसीदति ।

सास्रा—साश्रुनयना ।

---

मागधिका—राजकुमारी को अपने रूप के योग्य स्वामी मिल गये हैं।

विलासिनी—पक्षपात करना ठीक नहीं है। राजकुमार के सामने राजकुमारी कमलिनी की तरह लगती है।

मागधिका—ठीक कहती हो, मैं भी सोचती हूँ कि यदि कामदेव सशरीर हो उठे तो राजकुमार के ऐसा लगे।

विलासिनी—और राजकुमारी तो राजकुमार के बिना क्षण भर भी प्रसन्न नहीं दीख पड़ती है।

( रोती हुई नलिनिका का प्रवेश )

नलिनिका—( शोक के साथ ) लोग ठीक ही कहते हैं कि सुख में बहुत

त्ति। एसो खु संवच्छरो अदिक्कन्दो भट्टिदारिआए अविच्छिण्णसुहस- म्भोएण रदिं करिअ। अम्हाअं पुण गोट्ठीजणस्स उत्तरकुरुवासो संवुत्तो। अज्ज उण महाराएण विदिदो एसो खु वुत्तन्तो त्ति सुणिअ सीददि विअ सरीरं। भट्टिदारिआ च लज्जाभअमअणेहिं अभिताडिअमाणा सन्दावेण मुद्धा अवगदचेदणा विअ संवुत्ता। एसो खु पासादो णिव्वाविददीवो विअ मे पडिभादि। तेण भट्टिदारएण विरहिदाए मम एक्कं पि हिअअप्पीदिकरं ण जादं। भट्टिदारओ अविग्घेण णिग्गदो त्ति सुणिअ अज्ज पहादिदं विअ मे हिअअं। सव्वदि सुरुद्धं कण्णाउरं। (परिक्रम्य) अम्मो सहोओ। हला माअधिए! किं एदं। [ सत्यः खलु लोकप्रवादः-बहुविघ्नानि सुखानीति। एष खलु संवत्सरोऽतिक्रान्तो भर्तृदारिकाया अविच्छिन्नसुखसम्भोगेन रतिं कृत्वा। अस्माकं पुनर्गोष्ठीजनस्योत्तरकुरुवासः संवृत्तः। अद्य पुनर्महाराजेन विदित एष खलु वृत्तान्त इति श्रुत्वा सीदतीव शरीरम्। भर्तृदारिका च लज्जा- भयमदनैरभिताड्यमाना सन्तापेन मुग्धापगतचेतनेव संवृत्ता। एष खलु प्रासादो निर्वापितदीप इव मे प्रतिभाति। तेन भर्तृदारकेण विरहिताया ममैकमपि हृदयप्री-

---

बहुविघ्नानि—नानाप्रतिबन्धपूर्णानि। संवत्सरः—वर्षम्। अतिक्रान्तः— व्यतीतः। अविच्छिन्नसुखसंभोगेन—निरन्तरानन्दोपभोगेन। उत्तरकुरुवासः— प्रवासः, निरन्तरं विहरन्त्या राजकुमार्या गोष्ठीजनेन सहावस्थानावसरालाभेन विप्रयोग इत्यर्थः। एष वृत्तान्तः—राजकुमारेण सह कुरङ्ग्या गुप्तमिलनसमाचारः। सीदतीव—व्यथामिवानुभवति। लज्जाभयमदनैः—लोकैर्गुप्तमिलनं ज्ञातमिति- लज्जा, पिता कोपिष्यतीति भयम्, अस्यां स्थितौ राजकुमारेण सह मिलनं न संभविष्यतीति मदनः कामस्तैर्भावैः। अपगतचेतना—मूर्च्छिता। संवृत्ता— जाता। विरहितायाः—वियुक्तायाः। निर्गतः—कन्यान्तःपुराद् बहिर्गतः। प्रह्ला- दितम्—प्रसन्नम्। सुरुद्धम्—सर्वतो निरुद्धप्रसरं कृतम्।

---

विघ्न हुआ करते हैं। एक वर्ष हुआ राजकुमारी निरन्तर सुखोपभोग करती रही है। हमलोग इस बीच में प्रवासित सी हो रही थीं। आज महाराज को इस बात की खबर मिल गई है यह सुन कर हमारे अङ्ग शिथिल हो रहे हैं। राजकुमारी तो लाज, काम, तथा भय से पीड़ित हो कर और सन्ताप से व्यथित हो बेहोश सी हो रही है। मुझे ऐसा लगता है मानो इस महल का दीप ही बुझ

तिकरं न जातम्। भर्तृदारकोऽविघ्नेन निर्गत इति श्रुत्वाह्लादितमिव मे हृदयम्। सम्प्रति सुरुद्धं कन्यापुरम्। अस्मो सख्यौ। हला मागधिके! किमेतत्। ]

मागधिका—हला! किं पुच्छसि। णं मण्डणवेला भट्टिदारिआए। [ हला! किं पृच्छसि। ननु मण्डनवेला भर्तृदारिकायाः। ]

नलिनिका—अदिक्कन्दो उच्छवो। ( रोदिति ) [ अतिक्रान्त उत्सवः। ]

उभे—सिविणं विअ किं एदं। भणाहि समाणा भवामो। [ स्वप्न इव किमेतत्। भण समाना भवामः। ]

नलिनिका—सव्वहा गओ भट्टिदारओ। [ सर्वथा गतो भर्तृदारकः। ]

उभे-हं।

नलिनिका—अहं पि भट्टिदारिआए दुक्खं पेक्खिदुं असहन्ती इह आअदम्हि। [ अहमपि भर्तृदारिकाया दुःखं प्रेक्षितुमसहमानेहागतास्मि। ]

---

मण्डनवेला—अलङ्करणकालः।

समानाः—समदुःखाः, ज्ञाते उत्सवापगमहेतौ वयमपि त्वया समानदुःखा जायेमहीत्यर्थः।

असहमाना—अक्षमा।

---

गया हो। राजकुमार के वियोग में मुझे कुछ भी भला नहीं लग रहा है। राजकुमार सकुशल यहाँ से निकल गये यह जान कर थोड़ी खुशी हुई है। इस समय कन्यापुर में बड़ा-कड़ा पहरा है। अरी मागधिके, यह क्या है?

मागधिका—सखी, क्या पूछती हो, राजकुमारी के अलङ्करण का यही समय है।

नलिनिका—उत्सव के दिन तो बीत गये ( रोती है )

दोनों—स्वप्न की तरह यह क्या बात है? कहो, हम सभी एक सी हो जायें।

नलिनिका—राजकुमार तो चले गये।

दोनों—हाँ।

नलिनिका—मैं भी राजकुमारी का दुःख नहीं देख सकी, अतः यहाँ चली आई हूँ।

मागधिका—ण सक्कं खु भट्टिदारिआए अवत्थादंसणं। तह वि भट्टिदारिअं अस्सासइस्सामो। [ न शक्यं खलु भर्तृदारिकाया अवस्थादर्शनम्। तथापि भर्तृदारिकामाश्वासयिष्यामः। ]

उभे—एवं करेम्ह [ एवं कुर्मः। ]

( सर्वा निष्क्रान्ताः )

प्रवेशकः।

( ततः प्रविशत्यविमारकः )

अविमारकः—( सशोकम् )

कन्यापुरात् कथमपीह विनिर्गतं मे
भाग्यावशेषमवलम्ब्य शरीरमात्रम्।
अद्यापि तन्मम मनो न तु मामुपैति
नावेक्षते मयि तया प्रियया विरुद्धम्॥ १॥

---

अवस्थादर्शनम्—प्रियवियोगदुःखावलोकनम्।

कन्यापुरादिति—भाग्यावशेषम् अवशिष्यमाणं जीवनादृष्टम् अवलम्ब्य आधारीकृत्य इह अस्मिन् समये मे शरीरमात्रम् केवलं वपुः कथमपि केनापि प्रकारेण कन्यापुरात् विनिर्गतम् बहिर्यातम्, तु किन्तु अद्यापि सम्प्रत्यपि मम मनः माम् न उपैति कुरङ्गीसकाशान्मम पार्श्वे नोपैति तथा किञ्च प्रियया कुरङ्गया अवरुद्धं स्वाधीनीकृतम् नावेक्षते ममोपरि दृक्पातमपि न करोति अयमाशयः—प्राक्तनपुण्यशेषेण यद्यपि मम शरीरं कन्यान्तःपुरतो निर्गतं परं मम

---

मागधिका—राजकुमारी का दुःख देखा नहीं जाता है, फिर भी राजकुमारी को आश्वासित करूंगी॥

दोनों—हाँ, ऐसा करेंगी।

( सब का प्रस्थान )

( अविमारक का प्रवेश )

अविमारक—( शोक के साथ ) भाग्य शेष था अतः किसी प्रकार मेरा शरीर मात्र कन्यापुर से निकल आया है, मेरा मनतो वहीं है, उसे मेरी प्रियतमा ने इस तरह रोक लिया है कि वह मेरी ओर ताकता भी नहीं है॥ १॥

का नु खलु भवेदवस्था कुरङ्ग्याः ।

ह्रीता भवेत् प्रेष्यजनप्रवादैर्भीता च राज्ञा दृढसन्निरुद्धा ।
बाष्पाविला मामनवेक्षमाणा मोहं व्रजेद् रात्रिषु किं करिष्ये ॥ २ ॥

हन्त दृष्टः प्रतीकारः । तयापि तावदस्मदपेक्षया नापेक्षित आत्मा । तस्मादहमपि तावत् तदर्थे प्राणान् परित्यजामि । ( परिक्रम्य ) कतिपयदिवसप्रोषितोऽहमस्मि । अद्य तु मानसं शारीरं च दुःखमसह्यमिव मे प्रतिभाति । इह हि,

---

मनस्तत्रैव विद्यते, तत्तु कुरङ्ग्या निरुद्धं सन्मयि पश्यत्ययि नेत्यतिकष्टं वर्त्ते । वसन्ततिलकं वृत्तम् ॥ १ ॥

**ह्रीता भवेदिति**—प्रेष्यजनप्रवादैः परिचारकजनमिथ्याव्याहारैः ह्रीता लज्जिता भवेत्, राज्ञा कुन्तिभोजेन दृढसन्निरुद्धा अतिकठोरे कारावासे क्षिप्ता भीता प्राणापहारादिभयशालिनी भवेत् । माम् अनवेक्षमाणा अपश्यन्ती मम प्रेयसी बाष्पाविला शोकाश्रुपूर्णमुखी रात्रिषु सुखविहारोपयुक्तासु निशासु मोहं व्रजेत् मूर्च्छिता स्यात्, किङ्करिष्ये अहं किं प्रतिविधास्यामि । भृत्याः किमपि मिथ्याव्याहरेयुस्ततस्तस्या लज्जा संभवति, राज्ञा दृढे निरोधे प्राणभयमपि संभवति; इदन्तु निश्चितमेव यत्सा निशासु मूर्च्छेत्, परमहं किंकर्तुं शक्नोमि, नास्ति मम तत्र प्रवेश इत्यर्थः ॥ २ ॥

दृष्टः—बुद्धावारूढः । प्रतीकारः—उपायः ।
तया—कुरङ्ग्या । अस्मदपेक्षया—मदर्थम् । नापेक्षितः—न ध्यातः ।
कतिपयदिवसप्रोषितः— कियद्भिरहोभिर्वियुक्तः ।
असह्यम्—सोढुमशक्यम् ।

---

कुरङ्गी की क्या दशा होगी ।

वह परिजन की बातों से लज्जित, तथा राजा के द्वारा कड़ी निगरानी में रखी जाने से डरी होगी । मुझे नहीं पाकर वह रोती होगी, रात में वह मूर्च्छित हो जायेगी, मैं क्या करूँगा ॥ २ ॥

अहा ! उपाय सूझ गया । उसने भी मेरे लिये जानकी परवाह नहीं की थी, अतः मैं भी उसके लिये प्राण त्याग करूँगा । ( चल कर ) कुछ दिनों से मैं वियुक्त हूँ, आज मानस तथा शारीर क्लेश असह्य हो रहा है । यहाँ—

निर्व्याजं परिचयवर्धमानरागां
रूपाढ्यामभिनवयौवनां मनोज्ञाम्।
त्यक्त्वा तां क्षणमपि वञ्चितोऽस्मि जीवन्
कष्टोऽन्यः क इह भवेत् कृतघ्नभावः ॥ ३ ॥

सम्प्रति हि मदनेनान्तर्दह्यमानस्य क्षारीभवितुमारब्धो भगवान् सूर्यः सहस्ररश्मिः। (सर्वतो विलोक्य) अहो प्रतिभयता निदाघस्य। सम्प्रति हि,

अत्युष्णा ज्वरितेव भास्करकरैरापीतसारा मही

---

निर्व्याजमिति—निर्व्याजम् निश्छलभावेन परिचयेन अन्योन्यपरिज्ञानेन वर्धमानः उपचीयमानो रागः परस्परप्रेम यस्यास्तां तथोक्ताम् रूपाढ्याम् अतिसुन्दरीम् अभिनवयौवनाम् नूतनयुवत्वशालिनीम् मनोज्ञाम् हृदयहारिणीम् ताम् प्रियां प्रेयसीम् त्यक्त्वा परित्यज्य क्षणमपि जीवन् प्राणान् धारयन् वञ्चितोऽस्मि, इह कष्टः कष्टप्रदः अन्यः कः कृतघ्नभावः भवेत्? नेतः परमकृतज्ञत्वं सम्भवति यत्तादृशीमपि प्रियां परित्यज्यापि जीवामीत्याशयः ॥ ३ ॥

मदनेनान्तर्दह्यमानस्य—कामेन मनसि पीड्यमानस्य। क्षारीभवितुम्—कष्टप्रदत्वमूरीकर्तुम्।

प्रतिभयता—भीतिजनकता।

अत्युष्णेति—भास्करकरैः सूर्यकिरणैः आपीतसारा निःशेषशोषितजला अतएव अत्युष्णा अतितप्ता मही पृथ्वी ज्वरिता सञ्जायमानज्वरा इव लक्ष्यत इति शेषः, एवमग्रेऽप्याहृतक्रियया वाक्यपूर्तिः। दवाग्न्याश्रयात् दावाग्निकव-

---

अकपट परिचय में प्रेम बढ़ाने वाली सुरूपा, नवयौवना, तथा प्रियतमा कुरङ्गी से दूर रह कर मैं क्षणभर भी यदि जीवित हूँ तो इससे बड़ी और कौन सी कृतघ्नता हो सकती है ॥ ३ ॥

इस समय काम से जलते हुए मेरे शरीर पर भगवान् सूर्य क्षार का कार्य कर रहे हैं। (चारो ओर देख कर) अहा! ग्रीष्म काल कितना भयङ्कर हो रहा है, इस समयः—

सूर्य-किरणों ने जिस का रस खींच लिया है ऐसी यह पृथ्वी ज्वरिता की

यक्ष्मार्ता इव पादपाः प्रमुषितच्छाया दवाग्न्याश्रयात् ।
विक्रोशन्त्यवशादिवोच्छ्रितगुहाव्यात्ताननाः पर्वता
लोकोऽयं रविपाकनष्टहृदयः संयाति मूर्च्छामिव ॥ ४ ॥

किमिदानीं करिष्ये । न चास्म्यहं गन्तुं समर्थः । कुतः,

लिम्पन्ति रूक्षपवनाः सिकताग्निचूर्णैः
संस्वेदयन्ति च नगाः परुषैः पलाशैः ।
दावैर्द्रवीकृततनुः स्रवतीव भास्वा-
नादित्यपाकचलितः फलतीव लोकः ॥ ५ ॥

---

लितत्वात् प्रमुषितच्छायाः नष्टपत्रादिच्छायाः पादपाः वृक्षाः यक्ष्मार्त्ता इव यक्ष्माख्यरोगविशेषपीडिता इव जाता इति शेषः । उच्छ्रिताः दीर्घाः गुहाः एव व्यात्तानि प्रसारितानि आननानि येषां ते तथा पर्वताः अवशात् पारवश्यात् विक्रोशन्ति रुदन्तीव, रविपाकनष्टहृदयः सूर्यकरसन्तापशुष्यद्धृदयः अयं लोकः संसारः मूर्च्छाम् इव संयाति प्रपद्यते । तदयं भीषणो निदाघसमयो विजृम्भत इत्यर्थः । सर्वत्रोत्प्रेक्षाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

गन्तुं समर्थः—चलनक्षमः ।

लिम्पन्ति रूक्षेति—रूक्षपवनाः अत्युल्बणाः वायवः सिकताग्निचूर्णैः अग्निचूर्णोपमाभिः वालुकाभिः लिम्पन्ति भुवं व्याप्नुवन्ति, नगाः वृक्षाश्च परुषैर्नितान्तरूक्षैः पलाशैः पत्रैः संस्वेदयन्ति सञ्जातस्वेदान् कुर्वन्ति, दावैः वनाग्निभिः

---

तरह तप रही है, दवाग्नि लगने से वृक्षों की छाया समाप्त हो गई है, वह ऐसे लगते हैं मानों उन्हें यक्ष्मा हो गया है । गुहा रूप मुँह फैलाये यह पर्वत वेवसी में चिल्ला रहे हैं, यह संसार सूर्य की किरणों से दग्ध हृदय हो कर मूर्च्छित सा हो रहा है ॥ ४ ॥

मैं अब क्या करूँगा ? मैं चल भी नहीं सकता हूँ, क्योंकि—

वालुका रूप अग्नि चूर्ण से यह रूक्ष वायु संसार को व्याप्त कर रही है, कर्कश पत्रों से यह वृक्ष लोगों को स्वेदित कर रहे हैं, दावाग्नि से पिघल कर सूर्य चू रहा है, और सूर्य के पाक से यह संसार पक हो रहा है ॥ ५ ॥

हा प्रिये! हा सुन्दरि! देहि मे प्रतिवचनम्। (मूर्च्छां नाटयति। पुनर्निःश्वस्य। ऊर्ध्वमवलोक्य) रुद्धः खलु भगवान् सूर्यः सहस्ररश्मिः। अथवा,

किमत्र चित्रं विततः पयोदा
रुन्धन्ति सूर्यं ननु वातनीताः।
अन्तःस्थितं मे यदि वारयन्ति
कामं भवेद् विस्मयनीयमेतत् ॥ ६ ॥

किमनेन जीवन्मरणेन। विसर्जयिष्याम्यात्मानम्। (उत्थाय परि-

---

द्रवीकृततनुः द्रुतगात्रः भास्वान् सूर्यः स्रवति उष्णधाराक्रमेण क्षरतीव, तदित्थम् आदित्यपाकज्वलितः सूर्यसन्तापकदर्थितः लोकः फलति पच्यत इव ॥ ५ ॥

प्रतिवचनम्—प्रत्युत्तरम्।

**किमत्रेति**—यदि वातनीताः वायुना नीताः एकत्रीकृताः अमी विततः सर्वत्र प्रसृताः पयोदाः मेघाः सूर्यं रुन्धन्ति छादयन्ति अत्र किं चित्रम् न किम-पीत्यर्थः, यदि वायुप्रेरणया संहन्यमानैः प्रसारिभिश्च मेघैर्यदि भास्वानाव्रियते न तत्र किमपि विस्मयावहमित्याशयः। यदि मे मम अन्तःस्थितं मनसि विद्य-मानम् कामं वारयन्ति अपसारयन्ति, तदा इदं विस्मयनीयम् आश्चर्यस्थानं भवेत्। यदीमे मेघा मम मनसि सन्तं कामसन्तापं शमयेयुस्तदा चित्रं स्यादित्यर्थः ॥ ६ ॥

**जीवन्मरणेन**—जीवतोऽपि मृत्युना, अतिकष्टमयेन जीवनेन। विसर्जयिष्या-मि त्यक्ष्यामि।

---

हा प्रिये, हा सुन्दरि, मुझे उत्तर दो। (मूर्च्छित होता है) (फिर साँस लेकर ऊपर देख कर) भगवान् सूर्य छिप गये। अथवा—

हवा द्वारा लाये गये मेघ सूर्य को छिपा रहे हैं इस में आश्चर्य की क्या बात है, वह मेघ यदि मेरे हृदय में वर्त्तमान काम को छिपा दे, तो कुछ विस्मय की बात हो ॥ ६ ॥

इस जीकर भी मृतक की तरह रहने से क्या लाभ? मैं जान दे दूँगा।

क्रामति ) किन्तु खलु करिष्ये । भवतु दृष्टम् । अस्मिन्नारण्यतटाके विसर्जयिष्याम्यात्मानम् । विगतधर्मः खलु मे मरणमार्गः । अभिमानमोहान्महापथो विस्मृतः । अन्यथा प्रयतिष्ये । ( विलोक्य ) भवतु दृष्टम् । अये अदूरे दृश्यते दवाग्निः । तस्मिन् प्राणाहुतिं करिष्यामि । ( उपगम्य प्रणम्य च ) भगवन् ! अग्ने !

इष्टं चेदेकचित्तानां यद्यग्निः साधयिष्यति ।
परत्रापि च मे कान्ता सा भवेदेककीर्तनी ॥ ७ ॥

( अग्निं प्रविश्य सकुतूहलम् ) किमिदं वर्तते ।

---

आरण्यतटाके—वन्यसरसि । मरणमार्गः—मृत्युप्रकारः । अभिमानमोहात्–अभिमाने स्वाभिमाने देहाभिमाने वा मोहात् ममतातिशयात् । अन्यथा प्रयतिष्ये उपायान्तरमवलम्बिष्य इत्यर्थः ।

अदूरे—समीपे । प्राणाहुतिम्—प्राणहोमम् ।

इष्टं चेदिति—यदि चेत् एकचित्तानाम् अनन्यासक्तमनसाम् परस्परानुरक्तानामित्यर्थः । इष्टम् अभिलषितम् अग्निः साधयिष्यति सम्पादयिष्यति, सा मम कान्ता प्रेयसी कुरङ्गी परत्रापि अन्यजन्मन्यपि एककीर्त्तिनी अनन्यव्याहारिणी मदेकानुगा स्यात् । अग्नौ प्राणान् हुतवतां हितं यद्यग्निः करोति तदा तत्कृपयाग्निः परजन्मन्यपि मम प्रियां कुरङ्गीम् मदनुगामिनीं करोत्वित्याशयः ॥ ७ ॥

किमिदं वर्त्तते—विस्मयावहमिदमिति भावः ।

---

( उठ कर चलता है ) क्या करूंगा ? अच्छा, उपाय तो सूझ गया, इसी वन के सरोवर में आत्मत्याग करूँगा, मेरे मरने का मार्ग अधर्म पूर्ण है । अभिमान के मोह में मैंने प्रशस्तमार्ग भुला दिया, दूसरा प्रयास करूंगा । ( देख कर ) अच्छा, देख लिया, समीप में ही तो दावाग्नि दीख रही है । इसी में प्राणों को होम कर दूँगा । ( समीप जाकर, प्रणाम कर के )

भगवन् अग्निदेव, यदि हृदय से स्नेह करने वालों का हित आप करते हों, तो हमारी प्रिया जन्मान्तर में भी मेरी रहे ( ऐसा उपाय कीजियेगा ) ॥ ७ ॥

( आग में पैठ कर, साश्चर्य ) आग की चिनगारियां से उड़ कर कुछ गिर

दग्धाः स्फुलिङ्गनिकरैर्निपतन्ति वृक्षा
ज्वालाश्च मे मलयचन्दनपङ्कशीताः ।
अग्निर्दयां हि कुरुते मदनातुरेऽपि
पुत्रं पितेव च परिष्वजति प्रहृष्टः ॥ ८ ॥

भोः! किमतः परं विस्मयनीयम्। अग्निः खलु मां न दहति। अथवा एतदप्यस्ति कारणम्। अन्यथा प्रयतिष्ये (परिक्रम्य) एष खलु महान् पर्वतः,

असितजलदवृन्दैर्मिश्रसन्दिग्धशृङ्गो
गगनचरकुलानां विश्रमस्थानभूतः ।

दग्धा इति—स्फुलिङ्गनिकरैः अग्निकणसमूहैः दग्धाः वृक्षा निपतन्ति धराशायिनो भवन्ति, च पुनः मे मम अविमारकस्य कृते ज्वालाः वह्निदीप्तयः मलयचन्दनपङ्कशीताः मलयजलेपवच्छीतलाः । मदनातुरे मादृशे कामपीडया-व्याकुले अग्निः दयां कुरुते कृपां प्रकटयति, प्रहृष्टः अतिशयप्रसन्नो भूत्वा पुत्रं पितेव परिष्वजति आलिङ्गति, मादृशं कामपीडितं जनमनुकम्पमानोऽयमग्निः पुत्रं पितेव सस्नेहमालिङ्गति नतु दहति तत्किमिदमिति पूर्वेणान्वये वाक्यविश्रान्तिः ॥८॥

एतदप्यस्ति कारणम्—अत्रापि कारणमस्ति। अन्यथा प्रयतिष्ये—उपायान्तरं करोमि ।

असितजलदेति—असितजलदवृन्दैः श्यामलमेघसमूहैः मिश्राणि मिलितानि सन्दिग्धानि संशयितानि च शृङ्गाणि शिखराणि यस्य तथोक्तः गगनचर-

रहे हैं, और मेरे लिये आग की ज्वाला चन्दन के लेप की तरह शीतल हो रही है, यह अग्निदेव मुझ कामातुर के प्रति दया दिखला रहे हैं, जैसे पिता प्रसन्न हो कर पुत्र का आलिङ्गन करता है उसी तरह यह अग्निदेव हमारा आलिङ्गन कर रहे हैं ॥ ८ ॥

इससे बड़ा क्या आश्चर्य हो सकता है? आग मुझे नहीं जला रही है। अथवा—इसका भी कारण है। दूसरा प्रयास करूंगा। (चल कर) यह एक विशाल पर्वत है।

काले मेघ इस पर्वत पर फल रहे हैं जो इस पर्वत के शृङ्ग के समान दीख रहे हैं, यह देख आकाशचारियों के लिये विश्रामस्थान है, कवि बुद्धि की

सुकविमतिविचित्रो मित्रसंयोगहृद्यो
नरपतिरिव नीचो दृश्यते निष्फलाढ्यः ॥ ९ ॥

भवतु तावदस्मिञ्छैले प्राणान् परित्यजामि । मरुत्प्रपातो हि सर्वार्थसाधकः । यावदारोहामि । ( आरुह्यावलोक्य ) एतत् पानीयं गोत्रस्थं स्नात्वोपस्पृश्य मन्त्रं जपामि । ( तथा कृत्वा जपति )

( ततः प्रविशति विद्याधरः सह प्रियया )

विद्याधरः—

प्राक्सन्ध्या कुरुषूत्तरेषु गमिता स्नातं पुनर्मानसे

---

कुलीनाम् आकाशचारिणां विश्रामस्थानभूतः विश्रामभूमिः सुकविमतिरिव विचित्रः मित्रसंयोगेन सूर्यसंपर्केण हृद्यः रमणीयः मित्रजनसम्पर्कप्रियश्चायं पर्वतः निष्फलाढ्यः व्यर्थधनः नीचः नीचस्वभावः नरपतिः राजेव दृश्यते । श्यामलामेघाः अस्य पर्वतस्य शृङ्गेषु मिलिताः शृङ्गभ्रमं जनयन्ति, आकाशचारिणोऽत्र विश्राम्यन्ति, कविबुद्धिरिवायं विचित्रो मित्रसंपर्कप्रियश्च । किञ्चास्याढ्यत्वमपि व्यर्थमलोकोपकारित्वात्, तदयं निष्फलसम्पत्तिकराजेव प्रतिभातीत्यर्थः, मालिनी वृत्तम् ॥ ९ ॥

मरुत्प्रपातः—पर्वतशिखरात् पतनम् । गोत्रस्थम्—पर्वतस्थितम् । पानीयम्—जलम् । उपस्पृश्य—आचम्य ।

प्राक्सन्ध्येति—उत्तरेषु कुरुषु प्राक्सन्ध्या प्रथमा सन्ध्या प्रातःकालो गमिता

---

तरह यह विचित्र है, मित्र के संयोग से इसे प्रसन्नता होती है; निष्फल धन रखने वाले नीच नृपति की तरह यह भी निष्फल धन रखता है ॥ ९ ॥

अस्तु, इसी पर्वत पर प्राणत्याग करता हूँ। पर्वत-शिखर से गिर कर प्राण देना सर्वार्थ साधक है। चढ़ता हूँ।

( चढ़ कर और देख कर ) यह है पर्वत पर जल, इसमें स्नान आचमन कर के मन्त्र जप लूँ।

( वैसा करके जप करता है )

( प्रिया के साथ विद्याधर का प्रवेश )

विद्याधर—प्रातःकाल उत्तर कुरु देश में व्यतीत हुआ, मानस सरोवर में

भूयो मन्दरकन्दरान्तरतटेष्वामोदितं यौवनम् ।
क्रीडार्थं हिमवद्गुहासु चरिता दृष्टिश्च संलोभिता
यास्यावो मलयस्य चन्दननगान्मध्याह्ननिद्रासुखान् ॥ १० ॥

( आकाशयानं निरूप्य ) सौदामनि ! पश्य पश्य भगवत्या वसुन्धराया दूरस्थां दर्शनीयामाकृतिम् । इह हि

शैलेन्द्राः कलभोपमा जलधयः क्रीडातटाकोपमा
वृक्षाः शैवलसन्निभाः क्षितितलं प्रच्छन्ननिम्नस्थलम् ।

---

अतिवाहिता, मानसे मानसाख्ये सरोवरे स्नानम् स्नानं कृतम्, भूयः पुनश्च मन्दरस्य पर्वतभेदस्य कन्दरान्तरतटेषु गुहासु यौवनम् आमोदितम् विहृत्य सफलतां गमितम् । क्रीडार्थम् मनोविनोदाय हिमवद्गुहासु हिमालयस्य कन्दरासु चरिता प्रचलिता दृष्टिः नयनम् संलोभिता, सम्प्रति मध्याह्ननिद्रासुखान् मध्यन्दिननिद्रोपयुक्तान्, मलयस्य चन्दननगान् चन्दनद्रुमान् यास्यामः । अस्माभिः प्रातःकाल उत्तरकुरुषु व्यतियापितः, मानसे सरोवरे स्नातम्, मन्दरकन्दरान्तरे विहृतम्, विनोदाय हिमालयकन्दरासु सञ्चलिता दृष्टिर्विनोदप्राप्तया सफलीकृता, सम्प्रति च मध्याह्नरमणीयं चन्दनद्रुमभूषितं मलयपर्वतं गत्वा विहर्तुमिच्छावे इत्याशयः ॥ शार्दूलविक्रीडितमेव वृत्तम् ॥ १० ॥

वसुन्धरायाः—पृथिव्याः । दूरस्थाम्—विप्रकृष्टाम् । दर्शनीयाम्—रमणीयाम् । आकृतिम्—रूपम् ।

शैलेन्द्रा इति—शैलेन्द्राः महान्तः पर्वताः कलभोपमाः करिशावकसमाः, जलधयः सागराः क्रीडातटाकोपमाः क्रीडार्थनिर्मितस्वल्पजलाशयसदृशाः, वृक्षाः शैवलसन्निभाः जम्बालतुल्याः, क्षितितलम् भूतलं प्रच्छन्ननिम्नस्थलम् तिरोहित-

---

स्नान किया, मन्दराचल की कन्दरा में यौवन के आनन्द लूटे, क्रीड़ा के लिये ललचाई आँखें हिमालय पर विचरती रहीं; अब हम मध्याह्न कालिक निद्रा के लिये मलय पर्वत स्थित चन्दनवन में जायेंगे ॥ १० ॥

( आकाश गमन को देखकर ) सौदामनि, देखो तो यह भगवती पृथ्वी दूर से कितनी भली लगती है ।

पर्वत हाथी के बच्चों की तरह, सागर क्रीड़ा-सरोवर की तरह, वृक्ष शैवाल की

सीमन्ता इव निम्नगाः सुविपुलाः सौधाश्च विन्दूपमा
दृष्टं वक्रमिवाभिभाति सकलं संक्षिप्तरूपं जगत् ॥ ११ ॥

भद्रे ! अवहिता भव । शीतचन्दननिलयं मलयं प्रयास्यावः ।

सौदामनी—अय्य ! तह । [ आर्य ! तथा । ]

( उभावाकाशयानं निरूपयतः )

सौदामनी—अय्य ! ण पारेमि अविस्समन्ता गन्तुं । [ आर्य ! न पारयाम्यविश्रान्ता गन्तुम् । ]

विद्याधरः—तेन हि कस्मिंश्चित् पर्वते मुहूर्तं विश्रम्य गमिष्यावः ।

---

निम्नभूमिकम् , निम्नगाः नद्यः सीमन्ताः केशान्तररेखा इव, सुविपुलाः विशालाः सौधाः प्रासादाश्च विन्दूपमाः विन्दुसमानाः, तदित्थं दृष्टं संक्षिप्तरूपं संहृतपरिमाणं जगत् विश्वं वक्रमिव अन्यादृशं कुटिलमिवाभाति । अयमाशयः—दूराद् दृश्यमानं विशालमपि वस्तु लघु प्रतीयते तत्पर्वताः करिशावका इव, सागराः स्वल्पजलाशया इव, वृक्षा जम्बालवत् , पृथ्वीतलं तिरोहितनिम्नभूभागम् , नद्यः केशान्तरालरेखावत् प्रासादा विन्दव इव, तदित्थं जगदेव विपरीतं भासत इति । शार्दूलविक्रीडितम् ॥ ११ ॥

अवहिता—सावधाना । शीतचन्दननिलयम्—शीतलस्य चन्दनस्योत्पत्तिस्थानम् । मलयं तदाख्यं दक्षिणदिगवस्थं पर्वतभेदम् ।

पारयामि—शक्नोमि । अविश्रान्ता—विना विश्रामम् ।

मुहूर्तम्—स्वल्पकालम् ।

---

तरह दीखते हैं, पृथ्वी के सभी निम्नस्थल छिप रहे हैं, नदियाँ पृथ्वी की मांग की तरह लगती हैं, यह प्रासाद बिन्दुओं के सदृश दीखते हैं, यह समस्त संसार संक्षिप्त रूप तथा वक्र दीख रहा है ॥ ११ ॥

भद्रे, सावधान हो जा, हम शीतल चन्दन वाले मलयगिरि पर पहुँच गये ।

सौदामनी—बहुत अच्छा, ( दोनों आकाश-गमन देखते हैं )

सौदामनी—आर्य, बिना विश्राम किये मैं आगे नहीं बढ़ सकती हूँ ।

विद्याधर—तो किसी पर्वत पर थोड़ा विश्राम करके चलेंगे ।

सौदामनी—अय्य ! पिअं मे । [ आर्य ! प्रियं मे । ]

( उभाववतरतः )

विद्याधरः—सौदामनि ! पश्य पश्य ।

जलदगहनमुज्झतीव वेगा-
दभिपततीव मही समुद्रमुद्रा ।
जलदसमयतोयदा इवामी
भृशमभिभान्ति नगा विजृम्भमाणाः ॥ १२ ॥

भवति ! अयं पर्वतः समर्थ इवास्माकं मुहूर्तमातिथ्यं कर्तुम् । तस्माद् विश्रान्तौ गमिष्यावः ।

सौदामनी—अय्य ! एवं करेम्ह । [ आर्य ! एवं कुर्वः । ]

---

जलदगहनेति—वेगात् गतिवेगवशात् समुद्रमुद्रा सागरवेष्टिता मही पृथ्वी जलदगहनम् मेघमालाम् उज्झती विसृजन्तीव अभिपतति संम्मुखमागच्छति, अमी विजृम्भमाणाः स्फुटभावमापद्यमानाः नगाः वृक्षाः जलदसमयतोयदाः वर्षाकालिकमेघा इव भृशमभिभान्ति अत्यर्थं शोभन्ते । समीपमागच्छन्ती धरणी जलदगहनं परित्यज्य प्रकटन्तीव भाति, स्फुटत्वमुपयान्तो वृक्षाश्च वर्षाकालमेघा इव प्रतीयन्त इत्यर्थः ॥ १२ ॥

अयम् पर्वतः— मलयगिरिः । आतिथ्यम्—अतिथिसत्कारम् । विश्रान्तौ—कृतविश्रामौ ।

---

सौदामनी—आर्य, यह तो मुझे अच्छा लगेगा ।

( दोनों उतरते हैं )

विद्याधर—सौदामिनी, देखो-देखो,

समुद्र से घिरी हुई यह पृथ्वी मेघ के जंगल से निकल कर वेग पूर्वक समीप आती जा रही है, और प्रकट होते जाने वाले यह वृक्ष बरसात के मेघों की तरह मालूम पड़ रहे हैं ॥ १२ ॥

भद्रे, यह पर्वत कुछ काल तक हमारा आतिथ्य करने में समर्थ है, अतः विश्राम कर के चलेंगे ।

सौदामनी—आर्य, ऐसा ही करेंगे ।

विद्याधरः—सौदामनि ! पुष्पितानां नगानां षड्भागग्रहणमस्माकं धर्मः। तस्मादनृणान् वृक्षान् करिष्यावः।

सौदामनी—अय्य ! तह। [आर्य ! तथा।]

( पुष्पापचयं नाटयतः )

विद्याधरः—(अविमारकं विलोक्य) अये को नु खल्वयम्। आ ज्ञातम्। विद्याधरः खलु मन्त्रभ्रष्टः। कुतः, रूपमीदृशं हि नान्येषाम्। दिष्ट्या यदयं दृष्टः। भवत्वहमपि विस्मृतं पृच्छामि।

अविमारकः—भवतु कृतं देवकार्यम्। प्रपतामि। (पार्श्वतो विलोक्य, विद्याधरं दृष्ट्वा) भोः ! को नु खल्वयम्। अथवा, स्वप्नोऽयं भवेत्। न ह्यहं सुप्तः। आ अन्तकाले मनुष्याः किमपि पश्यन्ति। तदेतत् स्यात्।

---

नगानाम्—वृक्षाणाम्। षड्भागग्रहणम्—षष्ठस्य भागस्य स्वीकरणम्। धर्मः—अधिकारः। अनृणान्—शोधितर्णान्। वृक्षाः षड्भागं पुष्पं विद्याधरेभ्यो दत्त्वा शोधितर्णा जायन्ताम् इति तात्पर्यम्। षड्भागः षष्ठो भागः, स चायं शब्दः कालिदासेनाप्येवमेवार्थे प्रयुक्तो दृश्यते शाकुन्तले, 'तपः षड्भागमक्षय्यं ददत्यारण्यका हि नः ॥'

मन्त्रभ्रष्टः—मन्त्रस्यासिद्धया च्युतः। विस्मृतम्—अनेनास्मर्यमाणमिदमीयं विद्याधरभावम्।

प्रपतामि—पर्वतशिखरात् पतित्वाऽऽत्मानं व्यापादयामि।

---

विद्याधर—इन फूले हुए वृक्षों से षष्ठभाग लेना हमारा धर्म है, अतः इन्हें ऋणमुक्त करेंगे।

सौदामनी—अच्छी बात है। ( फूल चुनते हैं )

विद्याधर—( अविमारक को देखकर ) अरे, यह कौन है ? आः, समझ गया, कोई मन्त्रभ्रष्ट विद्याधर ही होगा, ऐसा रूप दूसरों का कहाँ से होगा। भाग्यवश यह मिल गया, मैं विस्तार से इसका वृत्तान्त पूछूँगा।

अविमारक—देवकार्य कर लिया, अब गिरता हूँ। ( बगल की ओर देखकर ) अजी, यह कौन है ? अथवा यह स्वप्न होगा। अन्तकाल में मनुष्य कुछ देखते

तदपि संमूढानां खलु। अहं तु सर्वं जानामि। भवतु पृच्छाम्येनम्। भोः! कतरकुलान्वयो भवताऽलङ्क्रियते।

विद्याधरः—श्रूयताम्—'अहं मेघनादो नाम विद्याधरः। इयं तावदस्मत्कुटुम्बिनी सौदामनी नाम। अद्य भगवन्तमगस्त्यमाराधयितुं मलयपर्वते विद्याधरैरुत्सवः प्रारब्धः। तत्र वयमपि सङ्केतिताः। इह मुहूर्तं विश्रम्य गमिष्याव इत्यवतीर्णाः। एषोऽस्माकं वृत्तान्तः। अथ किमर्थमिदानीं भवान् क्षितितलं देवलोकीकरोति।

अविमारकः—(आत्मगतम्) किन्नु खलु वक्तव्यम्। वर्तमाने ममान्तकालेऽनृतं न वक्तव्यम्। (प्रकाशम्) भोः! सौवीरराजपुत्रोऽविमारको नाम्नास्मि।

---

संमूढानाम्—अज्ञानाम्। कतरकुलान्वयः—को वंशः। अलङ्क्रियते—आत्मनो जन्मना सनाथीक्रियते।

कुटुम्बिनी—स्त्री। आराधयितुम्—पूजयितुम्।

क्षितितलं देवलोकीकरोति—भवान् देवलोकवासयोग्यः पृथिव्यां वसन् पृथ्वीं देवलोकतां प्रापयतीत्यर्थः।

वर्तमाने ममान्तकाले—उपस्थिते मम मृत्युसमये। अनृतम्—मिथ्या।

---

है, यहाँ कुछ होगा, वह भी देवरूपों के लिये है, मैं तो सब जानता हूँ। अच्छा इसे पूछता हूँ। आप किस वंश को अलङ्कृत करते हैं?

विद्याधर—सुनिये, मैं मेघनाद नाम का विद्याधर हूँ और यह है मेरी स्त्री सौदामनी। आज भगवान् अगस्त्य की आराधना के लिये विद्याधरों ने उत्सव प्रारम्भ किया है जिसमें हमें भी बुलावा है, वहाँ क्षणभर विश्राम कर के आगे बढ़ूंगा, इसी लिये उतर गया हूँ। यही हमारा वृत्तान्त है।

अब आप यह बताइये कि आप इस धराधाम को क्यों देवलोक बना रहे हैं।

अविमारक—(स्वगत) क्या कहूँ? अपने मरणकाल में मिथ्या तो नहीं कहूँगा (प्रकट) अजी मैं अविमारक नाम का सौवीरराजकुमार हूँ।

विद्याधरः—( आत्मगतम् ) एतदनृतम् । नेयमाकृतिर्मानुषी । ( प्रकाशम् ) अथ किमर्थमेकाकी भवानिहागतः ।

अविमारकः—( आत्मगतम् ) किन्तु खलु वक्ष्यामि । (अधोमुखस्तिष्ठति)

विद्याधरः—( आत्मगतम् ) भवत्वहमेवज्ञास्यामि । ( विद्यामावर्तयति ) भोः ! कष्टम् । अयं खलु भगवतोऽग्नेः पुत्र आत्मानं न जानाति, कुन्तिभोजदुहितरं कुरङ्गीमभिलषमाणो रममाणश्च तत्र विदिते सति निर्गतः, पुनः प्रवेशोपायमलभमानः प्राणपरित्यागाभिलाषी मरुत्प्रपातं कर्तुमिहारूढः । सापि च तत्र जीवन्मरणमनुभवति । अहमस्यास्मिन् कार्ये सहायो भविष्यामि । ( प्रकाशम् ) भो अविमारक ! अच्छलं मित्रत्वं नाम । न शक्नोषि मया विदितमर्थं प्रच्छादयितुम् ।

---

एकाकी—सहायान्तररहितः ।

विद्यामावर्त्तयति—यया विद्यया परकीयं वृत्तं ज्ञायते तां विद्यां स्मरतीत्यर्थः ।

अभिलषमाणः—कामयमानः । रममाणः—उपभुञ्जानः । विदिते—त्वयि प्रच्छन्नभावेन कन्यान्तःपुरनिवासे राज्ञा ज्ञाते सति । प्रवेशोपायम्—कुन्तिभोजस्य कन्यान्तःपुरे भूयः प्रवेशस्य मार्गम् । मरुत्प्रपातम्—पर्वतशिखरात् पतित्वा प्राणपरित्यागम् । जीवन्मरणम्—जीवनदशायामेव मृत्युसमं कष्टम् । अच्छलत्वम्—छलराहित्यम् । प्रच्छादयितुम्—गोपयितुम् ।

---

विद्याधर—( स्वगत ) झूठी बात है । यह मनुष्य की आकृति नहीं हो सकती है । ( प्रकट ) आप अकेले यहाँ क्या करने आये हैं ।

अविमारक—( स्वगत ) क्या कहूँगा ? ( मुंह नीचा कर के बैठा रहता है )

विद्याधर—( स्वगत ) अच्छा, मैं स्वयं जान लूंगा । ( विद्या की आवृत्ति करता है ) अहा, बड़ा कष्ट है, यह व्यक्ति यह नहीं जानता है कि यह अग्निदेव का पुत्र है । इसे कुन्तिभोज-पुत्री कुरङ्गी से प्रेम हो गया, उसके साथ विहार करता रहा, भेद खुलजाने पर वहाँ से निकल भागा । फिर वहाँ प्रवेश करने के उपाय को नहीं पाकर प्राणत्याग की इच्छा से पर्वत-शिखर पर चढ़ा था । वह इसकी प्रेयसी भी वहाँ जीते ही मरण का अनुभव कर रही है । मैं इसके इस कार्य में सहायक बनूँगा । ( प्रकट ) अजी अविमारक, मित्रता में छल नहीं किया जाता । मैं जिस बात को जानता हूँ उसे तुम छिपा नहीं सकते ।

अविमारकः—उच्यताम् ।

विद्याधरः—अद्यप्रभृत्यावयोः सख्यमस्तु । सकला च भवतोऽस्माभिरवस्था विदिता । प्राणपरित्यागार्थमिहारूढो भवान् ननु ।

अविमारकः—वयस्य ! एवमेतत् ।

विद्याधरः—भोः ! प्रीतोऽस्म्यनेन विस्रम्भेण । यदि तत्राज्ञातमेव प्रवेष्टुं स्यादुपायः, किं करिष्यति भवान् ।

अविमारकः—( सहर्षम् ) किमन्यत् । अनुप्रवेक्ष्यामि । तदर्थो हि व्याक्षेपः ।

विद्याधरः—तेन हि सखे ! दृश्यतामङ्गुलीयम् । ( इत्यङ्गुलीयकं दर्शयति )

अविमारकः—वयस्य ! किमनेन प्रयोजनम् ।

विद्याधरः—एतदङ्गुलीयकं दक्षिणाङ्गुल्या धारयन्नदृश्यो भवति, वामेन प्रकृतिस्थः ।

---

सख्यम्—मित्रत्वम् ।

विस्रम्भेण—विश्वासं कृत्वा स्पष्टोक्त्या । तत्र—कुन्तिभोजस्य कन्यान्तःपुरे ।

तदर्थो हि व्याक्षेपः—तत्र प्रवेशार्थमेव सकलोऽयमुन्मादः ।

अदृश्यः—अन्येन द्रष्टुमशक्यः । प्रकृतिस्थः—स्वाभाविकरूपेण दृश्यः ।

---

अविमारक—कहिये ।

विद्याधर—आज से हमलोगों की मित्रता हुई । मैंने तुम्हारी सारी अवस्था जान ली है । तुम प्राण देने के लिये इस पर्वत पर चढ़ आये हो ।

अविमारक—मित्र, बात तो यही है ।

विद्याधर—मैं तुम्हारे इस विश्वस्त भाव से खुश हूँ । यदि छिपे छिपे वहाँ प्रवेश का कोई उपाय हो जाय तब तुम क्या करोगे ?

अविमारक—( सहर्ष ) और क्या, वहाँ जाऊंगा । इसीलिये तो पागल हो रहा हूँ ।

विद्याधर—अच्छा तो यह अँगूठी देखो, ( अँगूठी दिखलाता है )

अविमारक—मित्र, इससे क्या कार्य होगा ।

विद्याधर—इस अंगूठी को दाहने हाथ की अंगुली में धारण करने से आदमी

अविमारकः—वयस्य ! एतदप्यस्ति ।

विद्याधरः—अयं ते प्रत्ययं करिष्यामि । वयस्य ! किं मां पश्यसि ।

अविमारकः—एवम् ।

विद्याधरः—अवहितो भव ।

अविमारकः—अवहितोऽस्मि ।

विद्याधरः—( दक्षिणाङ्गुल्यां प्रक्षिप्य ) वयस्य ! किं मां पश्यसि ।

अविमारकः—वयस्य ! छायापि न दृश्यते, किं पुनः शरीरम् । एते खलु लोके सुखिनो नाम ।

ये सञ्चरन्ति गगने वनितासहायाः
क्रीडन्ति पर्वततटेषु कृतोपदेशाः ।
सर्वं विदन्त्यपि च मन्त्रकृतैः प्रभावै-
रन्तर्हिताश्च विवृताश्च सुखं भ्रमन्ति ॥ १२ ॥

---

प्रत्ययम्—प्रतीतिम् , विश्वासम् ।

अवहितः—सावधानमनाः ।

**ये सञ्चरन्तीति**—ये वनितासहायाः स्त्रिया सहिताः गगने व्योम्नि सञ्चरन्ति भ्रमन्ति कृतोपदेशाः कृतमन्त्रोपदेशाः पर्वततटेषु क्रीडन्ति विहरन्ति, मन्त्र-

---

अदृश्य हो जाता है, और बायें हाथ की अंगुली में धारण करने से पुनः प्रकृतिस्थ दृश्य हो जाता है ।

अविमारक—मित्र, यह भी बात है ।

विद्याधर—अभी-अभी तुझे विश्वास कराता हूँ । मित्र, क्या तुम मुझे देखते हो ?

अविमारक—हाँ ।

विद्याधर—सावधान रहो ।

अविमारक—सावधान हूँ ।

विद्याधर—( अँगूठी दायें हाथ में पहनकर ) क्या मुझे देख रहे हो ?

अविमारक—मित्र, छाया भी नहीं दीख रही है, देह की क्या बात ? यही संसार में सुखी हैं—

स्त्रियों के साथ आकाश में भ्रमण किया करते हैं, पर्वतों पर क्रीडा किया करते हैं, मन्त्र के प्रभाव से सारी बातें जानते हैं तथा इच्छानुसार प्रकट या अन्तर्हित हुआ करते हैं ॥ १२ ॥

भवतु, प्रविष्ट एवास्म्यनेन ।

विद्याधरः—( वामाङ्गुल्या प्रक्षिप्य ) तेन हि गृह्यतामङ्गुलीयकम् ।

अविमारकः—( प्रतिगृह्य ) अनुगृहीतोऽस्मि ।

विद्याधरः—न न, अहमेवानुगृहीतः । कुतः,

न तथा रत्नमासाद्य सुजनः परितुष्यति ।
यथा तत् तद्गताकाङ्क्षे पात्रे दत्त्वा प्रहृष्यति ॥ १४ ॥

अविमारकः—एकस्तु मे संशयः । मम शरीरे परीक्षितुमिति वक्तुमसदृशमिव ।

---

कृतैः प्रभावैः सर्वं विदन्ति जानन्ति, सुखम् यथारुचि अन्तर्हिताः गुप्ताः विवृताः-प्रकाशितात्मानश्च भवन्ति ( ते खलु सुखिनो नाम ) ॥ १३ ॥

अनेन—करधृतेनाङ्गुलीयकेन । प्रविष्ट एवास्मि—निश्चितो मम प्रवेशः ।

अहमेवानुगृहीतः—अङ्गुलीयं मया दीयमानं गृह्णता त्वयाऽहमेवानुकम्पितः ।

न तथेति—सुजनः रत्नम् आसाद्य प्राप्य तथा तावत् न परितुष्यति तृप्यति, यथा यावत् गताकाङ्क्षे निर्लोभे पात्रे तत् रत्नं दत्त्वा प्रहृष्यति सुखी भवति, रत्नादानापेक्षया रत्नप्रदानपात्रलाभस्याधिकानन्दजनकतया न मया त्वमनुकम्पितोऽपि तु त्वयैवाहमनुकम्पित इति भावः ॥ १४ ॥

मम शरीरे परीक्षितुम्—इदमङ्गुलीयकं मम शरीरे भवच्छरीर इव कार्यकरं भवति न वेति परीक्षणीयम् ।

---

अस्तु, इस अँगूठी के सहारे प्रवेश तो हो ही गया ।

विद्याधर—( अँगूठी बायें हाथ में लेकर ) अच्छा तो लीजिए यह अंगूठी ।

अविमारक—( लेकर ) बड़ी कृपा ।

विद्याधर—नहीं नहीं, इसमें अनुगृहीत तो मैं हुआ । क्योंकि :—

सज्जन लोग रत्न पाकर उतना प्रसन्न नहीं होते, जितना प्रसन्न उस रत्न को किसी निर्लोभ पात्र के हाथ सौंप कर होते हैं ॥ १४ ॥

अविमारक—मुझे एक संदेह है । तनिक इसकी परीक्षा मेरे शरीर पर की जाती ?

विद्याधरः—तेन हि प्रक्षिप दक्षिणाङ्गुल्याम् ।

अविमारकः—बाढम् । ( तथा करोति )

विद्याधरः—वयस्य ! गृह्यतामसिः ।

अविमारकः—बाढम् । ( खड्गं गृहीत्वा सविस्मयम् ) अहो खड्गस्य प्रभावः ।

प्रच्छन्नरूपस्त्वशनिः कथञ्चित्
खड्गीकृतः स्यात्तु तडित्कलापः ।
निर्भर्त्सयन् सूर्यकृतां प्रदीप्तिं
वनं दवाग्निः सहसाभ्युपैति ॥ १५ ॥

विद्याधरः—अहो वीर्यमग्निपुत्रस्य । अस्य खड्गस्य प्रभावं विद्याः

---

प्रच्छन्नरूप इति—प्रच्छन्नरूपः तिरोहितनिजस्वरूपः अशनिः वज्रं स्यात्, कथञ्चित् केनापि विधिविशेषेण खड्गीकृतः खड्गभावं गमितः तडित्कलापः विद्युत् समूहः स्यात्, सूर्यकृतां प्रदीप्तिं सूर्यस्यप्रभां निर्भर्त्सयन् अभिभवन् दवाग्निः सहसा हठात् वनम् अभ्युपैति प्राप्नोति । नायं खड्गः साधारणोऽपि त्वयं तिरोहितनिजरूप-वज्रवत् प्रतीयतेऽथवा तडिदेव केनापि प्रकारेण खड्गरूपं प्राप्तवती स्यादिति प्रति-भाति, अनेन खड्गेनात्रस्थितेन तथा कान्तिर्विस्तार्यते यथा सूर्यस्यापि प्रभामधरयन् दवाग्निर्वनं व्याप्नुवन्निव प्रतिभासत इत्यर्थः । उत्प्रेक्षाऽलङ्कारः ॥ १५ ॥

अस्य खड्गस्य प्रभावं विद्याधरेष्वपि कतिचित् सहन्ते— न सर्वे विद्याधरा

---

विद्याधर—तो इसे तुम दायें हाथ की अङ्गुली में पहन लो ।

अविमारक—अच्छी बात है । ( वैसा करता है )

विद्याधर—मित्र यह तलवार पकड़ो ।

अविमारक—अच्छी बात है । ( खड्ग लेकर साश्चर्य ) खड्ग का कैसा अद्भुत प्रभाव है ?

यह छिपा हुआ वज्र है, या बिजलीने ही किसी तरह खड्ग के रूप में बदल गई है, या सूर्य के प्रभाको मन्द करती हुई दावाग्नि ही वन में फैल रही है ॥१५॥

विद्याधर—अग्निपुत्र का कैसा अद्भुत पराक्रम है । इस खड्ग के प्रभाव को

अरेष्वपि कतिचित् सहन्ते। अग्निः खलु भगवानिमं रक्षति।

अविमारकः—( खड्गं दृष्ट्वा ) अहो भगवतीनां विद्यानां प्रभावः।

दिव्यं स्वभावं समुपागतोऽस्मि
स एव नामास्मि गुणैर्विशिष्टः।
इदं यदा निर्गुणमर्त्यवृन्दै-
र्न ज्ञायते चास्ति च मे शरीरम्॥ १६॥

वयस्य! कृतमस्मत्कार्यम्। गृह्यतामसिः।

विद्याधरः—यदिष्टं भवतः। वयस्य! अन्तर्हितश्चान्तर्हितस्पृष्टश्च तत्स्पृष्टश्चान्तर्हिता भवन्तीति निश्चयः।

---

अपि तु अल्पीयांस एव विद्याधराः खड्गमिमं धारयितुं क्षमन्तेऽयं चाग्निपुत्रतया खड्गमिमं धारितवान्, इत्यहो अग्निपुत्रस्य प्रभाव इत्याशयः।

दिव्यमिति—( अहमधुना ) दिव्यं विलक्षणम् एव स्वभावं प्रकृतिं समुपागतोऽस्मि प्राप्तवानस्मि। स एव नाम सम्प्रति गुणैरदृश्यताजनकैः प्रभावविशेषैः विशिष्टः पूर्वापेक्षया विलक्षणः अस्मि नाम। यदा इदं मे शरीरं निर्गुणमर्त्यवृन्दैः साधारणैर्मानुषैः न ज्ञायते अस्ति च, तदवश्यमस्ति विद्यानां कोऽपि प्रभावातिशयो येन सन्तमपि मम देहं सम्प्रति मानवा द्रष्टुन्नेशत इत्याशयः॥ १६॥

योऽङ्गुलीयकं धृत्वाऽन्तर्धानं भजते सोऽन्तर्हितः, तेन स्पृष्टोऽन्तर्हितस्पृष्टः,

---

विद्याधरों में भी कुछ ही लोग बरदास्त कर सकते हैं। अग्निदेव ही इसकी रक्षा करते हैं।

अविमारक—( खड्ग को देखकर ) विद्याओं में भी क्या ही अद्भुत प्रभाव है? इस समय मुझे दिव्य प्रभाव प्राप्त हो रहा है, मैं हूँ वही, किन्तु हमारे गुण विशिष्ट हो रहे हैं। मेरा शरीर है फिर भी इसे साधारण मानव देख नहीं सकते हैं॥ १६॥

वयस्य, हमारा कार्य आपने कर दिया, अपनी यह तलवार लीजिये।

विद्याधर—तुम्हारी जैसी इच्छा। मित्र, अंगूठी पहनने पर तुम स्वयं अदृश्य हो जाओगे, जिसे तुम छूते रहोगे वह अदृश्य होगा, वह जिसे छूता रहेगा वह भी अदृश्य होगा।

अविमारकः—सखे ! प्रीतोऽस्मि । अयमभ्युदयादभ्युदयः । सखे ! अस्मदपेक्षया विलम्बितमिति तर्कयामि । मा भूदिदानीं वेलातिक्रमः ।

विद्याधरः—प्रविष्टोऽस्मि, यदापृष्टो भवान् ।

अविमारकः—किं बहुना भाषितेन ।

विद्यावशानां तु भवद्विधानां
कोऽस्मद्विधः स्यात् प्रतिकर्तुकामः ।
क्रीतोऽस्म्यहं जीवितसम्प्रदानात्
प्रशाधि मां किं करवाणि भृत्यः ॥ १७ ॥

---

तादृशेन चान्तर्हितस्पृष्टेन स्पृष्टः अन्तर्हितस्पृष्टस्पृष्टत्रयोऽपीमेऽन्तर्धानं लभन्ते इति निश्चयः । प्रीतः—प्रसन्नः । अभ्युदयादभ्युदयः—महानभ्युदयः ।

*विलम्बितम्—विलम्बः कृतः । वेलातिक्रमः—समयातिपातः ।*

आपृष्टः—गमनानुज्ञां याचितः । त्वया गन्तुमाज्ञप्तमात्र एवाहं प्रवेशं लभे, नास्ति संप्रति कोऽपि प्रतिबन्ध इत्यर्थ, । बहुना भाषितेन—बहुप्रलपितेन ।

**विद्यावशानाम् इति**—विद्याः तिरस्करिण्यादिविद्या वशयन्ति स्वाधीनीः कुर्वन्ति ये तेषाम् विद्यावशानाम् तिरस्करिण्यादिविविधविद्याज्ञातृणाम् भवद्विधानाम् भवादृशां कः अस्मद्विधः मादृशः प्रतिकर्तुकामः प्रत्युपकाराय प्रवृत्तः स्यात् ? न कोऽपीत्यर्थः । *भवादृशानां विद्याविदां प्रत्युपकाराय नहि मादृशः क्षमत इत्यर्थः ।* अहम् भवता जीवितसंप्रदानात् प्राणदानात् क्रीतः स्वायत्तीकृतोऽस्मि, अहं भृत्यः किंकरवाणि त्वदर्थं किमनुतिष्ठामि ? इति त्वम् प्रशाधि आज्ञापय ॥ १७ ॥

---

अविमारक—सखे, मैं प्रसन्न हूँ। अभ्युदय पर अभ्युदय हो रहा है। सखे, हमारे कारण आप को देर हो गई, मैं समझता हूँ। अब देर मत कीजिये।

विद्याधर—आपने अनुमति देदी, अब मुझे पहुँचा हुआ ही समझिये।

अविमारक—अधिक क्या कहूँ,

आपको विद्या सिद्ध है, हमारे समान आदमी आपका क्या प्रत्युपकार कर पायेगा। आपने जीवनदान देकर खरीद लिया है, बताइये मैं भृत्य आप का कौनसा प्रत्युपकार करूँ॥ १७ ॥

विद्याधरः—जानाम्यहं भवतोऽच्छलां बुद्धिम्। यदि च भवानस्मद्वचनमनुवर्तते,

सख्यै मम प्रतिनिवेदय मामिमां च
त्वं मामनुस्मर सखे! गतिरीक्ष्यतां मे।
क्रीडारसैः प्रतिविलोभय राजपुत्रीं
कार्यान्तरेषु पुनरप्यहमस्मि पार्श्वे ॥ १८ ॥

अहो पुरुषसारो हि नाम नेच्छति विसर्जयितुं मे मनः। वयस्य! गच्छामस्तावत्।

अविमारकः—गच्छतु भवान् पुनर्दर्शनाय।

विद्याधरः—बाढम्।

---

अच्छलाम्—निर्व्याजाम्। अस्मद्वचनमनुवर्त्तते—मदीयं वचनमनुरुध्यते।

सख्यै ममेति—माम् विद्याधरम् इमां स्वसखीं सौदामनीं च मम सख्यै तव प्रियायै कुरङ्ग्यै निवेदय कथय, मम सखीकृत्य चर्चां स्वप्रियतमासमक्षं कुर्वित्यर्थः। त्वम् माम् अनुस्मर स्मृतिपात्रतां नयस्व, मे मम गतिः वर्त्तमानाऽऽकाशयात्रा ईक्ष्यताम् विलोक्यताम्। क्रीडारसैः विहारजन्मभिरानन्दैः राजपुत्रीं कुरङ्गीं प्रति विलोभय मुग्धां कुरु, कार्यान्तरेषु अन्येषु केषुचन कार्यविशेषेषु पुनरपि अहं तव पार्श्वेऽवश्यमुपस्थातव्यमित्याशयः ॥ १८ ॥

पुरुषसारः पुरुषश्रेष्ठः, (अत इमम्) मे मनः विसर्जयितुमनुमन्तुं नेच्छति।

---

विद्याधर—मैं आप की निश्छल बुद्धि का अन्दाजा रखता हूँ अगर आप मेरी बात मानें तो—

आप अपनी प्रियतमासे मेरी तथा मेरी स्त्री सौदामनी की चर्चा करें, खुद मुझे याद करें, मेरी गति देखें, अपनी क्रीडाओं से राजकुमारी को खुश करें, कार्यान्तर में मुझे अपने पास ही समझें ॥ १८ ॥

यह कैसा पुरुष श्रेष्ठ है, मन नहीं चाहता है कि इसे छोड़ें। मित्र, विदा होता हूँ।

अविमारक—अच्छा, जाइये, फिर दर्शन दीजिएगा।

विद्याधर—अच्छी बात।

( उत्थितो विद्याधरः सह प्रियया )

अविमारकः—( ऊर्ध्वमवलोक्य ) एष हि तत्रभवान् मेघनादो गगनार्णवमवगाढः । य एषः,

वातोद्धूताग्रकेशः सलिलधरदरीमृष्टदृष्टाङ्गरागः
सम्यग्बद्धासिकक्ष्यः प्रिययुवतिकरस्पृष्टसङ्गूढमध्यः ।
वातोद्धूतोत्तरीयो मुकुटमणिगणैस्तारकाः सम्प्रमृद्नन्
श्रीमान् विद्याधरोऽसावुपरिगतिजवैः क्षीयमाणः प्रयाति ॥१९॥

इयमपि विद्याबलेन प्रियमनुवर्तते । येषा,

जवशिथिलविमुक्तपार्श्वकेशी

---

गगनार्णवम्—आकाशसागरम् । अवगाढः—प्रविष्टः ।

वातोद्धूताग्रकेश इति—वातेन वायुना उद्धूताः कम्पिताः अग्रकेशाः केशाग्रभागा यस्य सः तथोक्तः, सलिलधरदरीभिः मेघगुहाभिः मृष्टः निह्नुतः दृष्टः च अङ्गरागः कायवर्णो यस्य तादृशः, सम्यग्बद्धासिः कक्ष्या यस्य तथोक्तः परिकरे खड्गं सम्यग्धारयन् प्रिययुवतिकरेण प्रिया बाहुना स्पृष्टं संगूढं सम्यगालम्बितं च मध्यं यस्य तादृशः प्रियया पार्श्वस्थितया स्वकरेणालम्बितकटिदेश इत्यर्थः । वातोद्धूतोत्तरीयः वायुप्रचलितोर्ध्ववस्त्रः मुकुटमणिगणैस्तारकाः नक्षत्राणि सम्मृद्नन् सङ्घर्षयन् श्रीमान् अतिशोभाशाली असौ विद्याधरः उपरिगतिजवैः ऊर्ध्वगमनवेगवशात् क्षीयमाणः क्षीणदर्शनः सन् प्रयाति । स्रग्धरावृत्तम् ॥ १९ ॥

जवशिथिलेति—जवेन ऊर्ध्वगमनवेगेन शिथिलाः श्लथबन्धनाः विमुक्ताः

---

( विद्याधर अपनी प्रिया के साथ उठता है )

अविमारक—( ऊपर देखकर ) यह मेघनाद आकाश सागर में पैठ गये ।

इनके बाल हवा में लहरा रहे हैं, मेघ की गुफा में इनकी देह कभी छिप जाती है, कभी दृष्टिगोचर होती है, कमर में तलवार भलीभाँति बँधी हुई है, प्रियतमा के हाथों से मध्यभाग वेष्टित है, चादर हवा में उड़ रही है, मुकुट की मणियाँ तारों से घिस रही हैं इस प्रकार यह विद्याधर ऊपर जाने की तीव्रगति से क्रमशः अदृश्य होता जा रहा है ॥ १९ ॥

यह सौदामनी भी विद्या के प्रभाव से अपने प्रियतम का अनुगमन कर रही है। वेग के कारण इसके पार्श्व के केश खुल गये हैं, स्तनतट के काँपते रहने से

स्तनतटवल्गनखिन्नसन्नमध्या ।
वियति दयितदत्तपूर्वकाया
तडिदिव तोयधरेषु दृष्टनष्टा ॥ २० ॥

गतस्तत्रभवान् मेघनादः । अहमप्यद्यैव नगराभिमुखो भविष्यामि। यावदवतरामि । (अवतीर्य) परिश्रान्त इवास्मि । भवतु, एतस्मिन् शिलातले मुहूर्तं विश्रम्य गमिष्यामि । (उपविशति ।)

(ततः प्रविशति विदूषकः ।)

विदूषकः—अहो तत्तहोदो सुगहीदणामहेअस्स सोवीरराअस्स अधण्णदा, जाए चिरं अपुत्तो भविअ अत्तणो णिअमविसेसेण देव्वप्पसादेण अ माणुसलोअदुल्लभं सुपुत्तं लभिअ पुणो वि तादिसो एव संवुत्तो। सव्वहा मम अ समत्तजीविददाए बन्धुजणस्स अधण्णदाए परिब्भट्ठो

---

लम्बमानाः च पार्श्वकेशाः यस्याः सा तथोक्ता ऊर्ध्वगमनवेगवशाद्विमुक्तपार्श्ववर्तिकचानिचयेत्यर्थः । स्तनतटयोः वल्गनेन चलनेन खिन्नं श्रान्तं सन्नं शून्यं च मध्यम् यस्याः सा तथोक्ता । वियति आकाशे दयिताय दत्तः दयितोपरि न्यस्तः पूर्वकायः शरीरपूर्वभागो यया तया सति तोयधरेषु मेघेषु तडित् विद्युदिव दृष्टनष्टा तत्काल एव दृष्टा सत्यनुपदमेव नष्टा विलीना (विभाति) सेयं विद्याधरस्त्री ऊर्ध्वगतिवेगेन विकीर्णकचनिचया स्तनचलनश्रान्तमध्या प्रियन्यस्तपूर्वकाया च सती मेघेषु तडिदिव कदाचिद् दृश्यते कदाचिन्नेति भावः ॥ २० ॥

---

इसका मध्यभाग खिन्न हो रहा है, आकाश में जाकर इसने अपने शरीर का पूर्वभाग प्रियतम की गोद में डाल दिया है, अतः वह मेघ में बिजली सी लग रही है ॥ २० ॥

मेरे मान्य मेघनाद चले गये, मैं भी आज ही नगर की ओर प्रस्थान करूँगा। उतरता हूँ (उतर कर) थक गया हूँ। अच्छा, इसी शिलातल पर थोड़ा विश्राम करके जाऊँगा। (बैठता है)

(विदूषक का प्रवेश)

विदूषक—हमारे वन्दनीय ख्यातनामा सौवीर राजा का अभाग्य है कि बहुत दिन तक अपुत्र रहकर अपने नियमों तथा देवताओं की कृपा से अतिमानव सुपुत्र

कुमारो । ( परिक्रम्य ) अज्ज खु तत्तहोदीए भणिदं—खेमेण गदो कुमारो त्ति । अहव को एत्थ जाणादि अदिसुउमारो राअउमारो एआई वम्महेण अभितालिअमाणो परिब्भट्ठो कुसलो होदि त्ति । अहं वि कुमारं वा कुमारस्स सरीरं वा पेक्खिस्सामि दाव सव्वलोअं परिब्भमिअ । जदि ण पेक्खामि, तत्तहोदो परत्त सहाओ होमि । परिस्सन्तो खु अहं । भोदु, एदस्सिं पादपच्छाआअं मुहुत्तअं विस्समिअ गमिस्सं । ( स्वपिति ) [ अहो तत्रभवतः सुगृहीतनामधेयस्य सौवीरराजस्याधन्यता, यया चिरमपुत्रो भूत्वात्मनो नियमविशेषेण दैवप्रसादेन च मानुषलोकदुर्लभं सुपुत्रं लब्ध्वा पुनरपि तादृश एव संवृत्तः । सर्वथा मम च समाप्तजीविततया बन्धुजनस्याधन्यतया परिभ्रष्टः कुमारः । अद्य खलु तत्रभवत्या भणितं—क्षेमेण गतः कुमार इति । अथवा कोऽत्र जानाति अतिसुकुमारो राजकुमार एकाकी मन्मथेनाभिताड्यमानः परिभ्रष्टः कुशलो भवतीति । अहमपि कुमारं वा कुमारस्य शरीरं वा प्रेक्षिष्ये तावत् सर्वलोकं परिभ्रम्य । यदि न प्रेक्षे, तत्रभवतः परत्र सहायो भवामि । परिश्रान्तः खल्वहम् । भवतु, एतस्यां पादपच्छायायां मुहूर्तकं विश्रम्य गमिष्यामि । ]

---

तत्रभवतः—पूजनीयस्य । सुगृहीतनामधेयस्य—ख्यातनाम्नः । अधन्यता—भाग्यराहित्यम् । नियमविशेषेण—तपश्चर्याविशेषेण । दैवप्रसादेन—भाग्यानुकूलतया । मानुषलोक दुर्लभम् मर्त्यलोके दुरापम् । तादृशः—पूर्वसदृशः, अपुत्रः । संवृत्तः-जातः । समाप्तजीविततया जीवनस्य समाप्तया । अधन्यतया—हतभाग्यतया । परिभ्रष्टः-अदृश्यत्वं गतः । क्षेमेण गतः—सकुशलं प्रस्थितः । मन्मथेनाभिताड्यमानः-कामेनाकुलीक्रियमाणः । कुमारस्य शरीरम्—प्राणापगमेऽपि तस्य देहम् । प्रेक्षे-पश्यामि । परत्र-स्वर्गे । पादपच्छायायाम्-वृक्षस्याधस्तात् ।

---

प्राप्त किया और फिर अपुत्र हो गये । हमारे मृत्यु-मुखगत होने तथा बान्धवों के अभाग्य से वह राज कुमार खो गये हैं । आज महारानी ने कहा है कि कुमार सकुशल गये हैं ।

अथवा—कौन जानता है कि अति सुकुमार राजकुमार—असहाय अवस्था में कामातुर होकर भी सकुशल होंगे । मैंने भी प्रतिज्ञा कर ली है कि सारी पृथ्वी घूम कर कुमार को या उनकी देह को अवश्य देखूँगा । यदि नहीं देख सका तो

अविमारकः—का नु खलु सन्तुष्टस्यावस्था। सुष्ठु भवेद् यदि मे निर्गमनं तेन श्रुतं, न श्रुतं चेद् विपत्स्यते स ब्राह्मणः। अथवा किं मम सर्वारम्भैस्तेन विना। स हि,

गोष्ठीषु हास्यः समरेषु योधः
शोके गुरुः साहसिकः परेषु।
महोत्सवो मे हृदि किं प्रलापै-
र्द्विधा विभक्तं खलु मे शरीरम्॥ २१॥

(सर्वतो विलोक्य) अये को नु खलु च्छायायामध्वगः प्रसुप्तः। (उपेत्य) अभ्युदयो मे हृदयस्य यदृच्छयागतः। त्वरते मे मनः परिष्वंक्तुमेनम्।

---

विपत्स्यते—मरिष्यति। सर्वारम्भैः—सकलैरपि कार्यैः।

**गोष्ठीषु हास्य इति**—गोष्ठीषु लोकसमाजेषु हास्यः हास्यकरः समरेषु युद्धेषु योधो योद्धा शोके खेदावसरे समुपस्थिते गुरुः उपदेशदानेन सान्त्वनाप्रदः, परेषु शत्रुषु (प्राप्तेषु) साहसिकः असाधारणसाहसकरः, मे मम हृदि हृदये महोत्सवः अत्यानन्दकरः, प्रलापैः अनर्थकवचनैः किम्? अनर्थकोक्तितो नास्ति किमपि फलमित्यर्थः, स हि विदूषकः मे मम द्विधा विभक्तं शरीरं खलु द्वितीयं वपुरिव अस्तीति शेषः॥ २१॥

अध्वगः—पान्थः। प्रसुप्तः—प्राप्तनिद्रः। अभ्युदयः—उत्सवः, मदीयस्य हृदयस्य उत्सवस्वरूपोऽयं मम सुहृत्सन्तुष्टो नाम विदूषकः स्वयमायात इत्यर्थः।

परिष्वङ्क्तुम्—आलिङ्गितुम्।

---

परलोक जाकर कुमार का सहायक बनूंगा। थक गया हूँ। इस वृक्ष की छाया में थोड़ा विश्राम कर के जाऊंगा। ( सोता है )

अविमारक—सन्तुष्ट की क्या स्थिति है? अच्छा होता कि उसे मेरे निकल आने की खबर लग जाती, यदि यह खबर उसे नहीं लगी तो वह ब्राह्मण मर जायगा। फिर, उसके नहीं रहने पर मेरे इन प्रयासों का क्या फल? वह—

सभा में हास्य कर, युद्ध में योद्धा, शोककाल में गुरु, शत्रुओं के सामने साहसी, और मेरे हृदय के लिये महोत्सव स्वरुप है, और क्या कहा जाय, वह तो दो भागों में विभक्त मेरा ही शरीर है॥ २१॥

( चारो ओर देखकर ) अरे, इस छाया में यह कौन सा यात्री सो रहा है? ( समीप जाकर ) यह तो मेरे हृदय का उत्सव स्वयं आ गया है। इसे गले से

विदूषकः—(बुद्ध्वा) चिरं खु सुत्तम्हि। जाव गच्छामि। को विस्समो णाम विब्भट्ठमणोरहाणं। परिक्रम्याविमारकं विलोक्य ) कहं तत्तभवं अविमारओ। [चिरं खलु सुप्तोऽस्मि। यावद् गच्छामि। को विश्रमो नाम विभ्रष्टमनोरथानाम्। कथं तत्रभवान् अविमारकः। ]

अविमारकः—अये वयस्यः सन्तुष्टः।

( उभौ परिष्वजेते )

विदूषकः—( उच्चैर्विहस्य ) भो वअस्स ! कहेहि कहेहि एत्तिअं कालं किं तुए किदं। [ भो वयस्य ! कथय कथयैतावन्तं कालं किं त्वया कृतम्। ]

अविमारकः—वयस्य ! एतत् कृतम्। ( अङ्गुलीयकं दक्षिणाङ्गुल्यां प्रक्षिप्य तिरस्कृतः। )

विदूषकः—हा हा कहिं कहिं तत्तभवं। कहं ण दिस्सदि। आ तस्सि गदाए चिन्ताए तं विअ पेक्खामि। अहव फुडीकरिस्सं। भो वअस्स ! सावेण साविदो सि, जदि अत्ताणं छादेसि। [हा हा क्व क्व तत्रभवान्। कथं न

---

विभ्रष्टमनोरथानाम्—नष्टमनोरथानाम्।

एतावन्तम् कालम्—एतावद्दिनपर्यन्तम्।

---

लगाने के लिये मेरा हृदय उतावला हो रहा है।

विदूषक—( जगकर ) बड़ी देर तक सोता रहा, अब जाता हूँ, जिसके मनोरथ नष्ट हो गये उसे क्या विश्राम ? ( चलकर, अविमारक को देख कर ) क्यों, यह मेरे अविमारक हैं ?

अविमारक—अरे, यह तो मेरा मित्र सन्तुष्ट है।

( दोनों गले लगते हैं )

विदूषक—( जोरों से हंसकर ) अजी मित्र, इतने दिनों तक तुम क्या करते रहे ? बताओ।

अविमारक—यही किया है। (अँगूठी को दायें हाथ में डालकर छिप जाता है)

विदूषक—हाय हाय ! कहाँ गया मेरा मित्र, दीखता क्यों नहीं है ? उसी की चिन्ता करते रहने के कारण सर्वत्र उसी की छाया देखा करता हूँ, अथवा—

दृश्यते । आ तस्मिन् गतया चिन्तया तमिव पश्यामि । अथवा स्फुटीकरिष्यामि । भो वयस्य ! शापेन शापितोऽसि, यद्यात्मानं छादयसि । ]

अविमारकः—वयस्य ! अयमस्मि ।

विदूषकः—कहिं कहिं सि । [ क्व क्वासि । ]

अविमारकः—( वामाङ्गुल्यामङ्गुलीयकं प्रक्षिप्य ) वयस्य ! अयमस्मि ।

विदूषकः—पुढमं सुद्धो अविमारओ, इदाणिं माआविमारओ संवुत्तो । एवं माआवित्तअ ! किस्स तुवं कण्णाउरे पच्छण्णरूवो ण चरसि । ] [प्रथमं शुद्धोऽविमारकः, इदानीं मायाविमारकः संवृत्तः । एवं मायावित्तक ! कस्मात् त्वं कन्यापुरे प्रच्छन्नरूपो न चरसि ! ]

अविमारकः—वयस्य ! इदानीं खल्वेतदुपलब्धम् ।

विदूषकः—अच्छरीअं अच्छरीअं । कुदो दाणिं एदस्स आगमो । [ आश्चर्यमाश्चर्यम् । कुत इदानीमेतस्यागमः । ]

अविमारकः—सर्वमन्तःपुरे कथयिष्यामि ।

---

शापेन शापितोऽसि—शापः प्रदास्यते । छादयसि—गोपयसि ।

मायाविमारकः—मायया प्रसिद्धोऽविमारकः मायाविमारकः । मध्यमपदलोपी समासः ।

मायावित्तक—मायानिपुण ।

एतत्—अङ्गुलीयकम् , येन धृतेनात्मा निह्नूयते ।

कुत एतस्यागमः—कुतोऽद्भुतमिदमङ्गुलीयकं प्राप्तम् ?

---

सफाई कर लूंगा, अजी मित्र, मैं शाप दे दूंगा अगर तुम छिपे रहे ।

अविमारक—मित्र, यही तो हूँ ।

विदूषक—कहाँ हो कहाँ हो ?

अविमारक—( अँगूठी बायें हाथ में डालकर ) मित्र, यही तो हूँ ।

विदूषक—पहले तुम शुद्ध अविमारक थे, अब मायावी अविमारक बन गये । अरे मायाप्रवीण, क्यों नहीं अब तुम छिपकर कन्यापुर में भ्रमण किया करते हो?

अविमारक—अभी तो यह मिला है ।

विदूषक—आश्चर्य है आश्चर्य, इस समय यह कहाँ मिला है ?

अविमारक—सारी बातें अन्तःपुर में कहूँगा ।

विदूषकः—सम्पदि बुभुक्खिदो सि । [ संप्रति बुभुक्षितोऽसि । ]

अविमारकः—वैधेय ! शीघ्रमागच्छ प्रक्षेपभूमिप्रवेशाय । नैवायं हस्तो मोचयितव्यः ।

विदूषकः—अच्छरीअं अच्छरीअं । अहं पि दाव अदिस्सो । मम सरीरं अत्थि वा णत्थि वा । उच्छिट्ठं करिस्सं । थु थु । [आश्चर्यमाश्चर्यम् । अहमपि तावददृश्यः । मम शरीरमस्ति वा नास्ति वा । उच्छिष्टं करिष्यामि । थु थु । ]

अविमारकः—मूर्ख ! अलमलं विलंबितेन । त्वरते मे मनः कान्तादर्शनाय । ( आकर्षति )

विदूषकः—ण मे सद्धा । [ न मे श्रद्धा । ]

अविमारकः—हन्त भोजनवेलां प्रतिपालयामि ।

विदूषकः—कञ्चि कालं विस्समिअ गमिस्सामो । [ कंचित् कालं विश्रम्य गमिष्यावः । ]

---

वैधेय—मूर्ख । प्रक्षेपभूमिप्रवेशाय—मायया प्रच्छन्नरूपताप्राप्तये ।

उच्छिष्टं करिष्यामि—थूत्करिष्यामि, येन स्वशरीरस्यास्तित्वमनुमातुं शक्येतेति भावः । कान्तादर्शनाय—प्रियायाः प्रेक्षणाय ।

---

विदूषक—क्या अभी भूख लग रही है ?

अविमारक—मूर्ख, शीघ्र आओ अदृश्य होने के लिये, देखना मेरा हाथ न छोड़ देना ।

विदूषक—क्या आश्चर्य है, मैं भी अदृश्य हो गया । मेरी देह है कि नहीं, थूकूंगा ।

अविमारक—मूर्ख, देर मत करो, प्रियतमा से मिलने के लिये मेरा मन व्यग्र हो रहा है ।

( खींचता है )

विदूषक—मुझे श्रद्धा नहीं हो रही है ।

अविमारक—खाने के समय की प्रतीक्षा करता हूँ ।

विदूषक—थोड़ा विश्राम करके चलूंगा ।

अविमारकः—किं न स्मरति मां कुरङ्गी।

विदूषकः—किण्णु खु जीवदि णग्गन्धस्समणिआ। [ किं नु खलु जीवति नग्नान्धश्रमणिका। ]

अविमारकः—वयस्य ! याचे भवन्तं, शीघ्रमागम्यताम्।

विदूषकः—किस्स तुवं किदसमावुत्तो वडुओ विअ तुवरसि। [ कस्मात् त्वं कृतसमावर्तो वटुक इव त्वरसे। ]

अविमारकः—मूर्ख ! इतस्तावत्।

विदूषकः—मा कड्ढेहि, अअं अणुधावामि। [ मा कर्ष, अयमनुधावामि। ]

अविमारकः—( परिक्रम्य ) एतन्नगरम्।

विदूषकः—पेक्खामि दाव णअरस्स सोहं। [ पश्यामि तावन्नगरस्य शोभाम्। ]

अविमारकः—इदं राजकुलम्।

---

नग्नान्धश्रमणिका—नग्नान्धा श्रमणिका तपस्विनी। यदि जीवति तदा-स्मरति न वा स्मरतीति द्वैविध्यम्, मम तु तस्या जीवन एव संशय इति भावः।

कृतसमावर्तः—विहितसमावर्त्तनसंस्कारः, तादृशो हि वटुः व्रतसमाप्तौ स्वच्छन्दं वस्तुं त्वरया गृहं धावतीति तथोक्तिः।

---

अविमारक—क्या कुरंगी मुझे याद भी करती है।

विदूषक—क्या वह नग्ना तपस्विनी जीती ही है ?

अविमारक—मैं प्रार्थना करता हूँ, मित्र, शीघ्र चलो।

विदूषक—क्यों तुम समावर्त्तन किये गये वटुक की तरह शीघ्रता कर रहे हो ?

अविमारक—मूर्ख, इधर चलो।

विदूषक—खींचो मत, यह तो चल ही रहा हूँ।

अविमारक—( चलकर ) यही नगर है।

विदूषक—तब तक नगर की शोभा देखता हूँ।

अविमारक—यही राजकुल है।

पतन्नरेन्द्रभवनं निशि जातशङ्को
यत् साहसं समुपलभ्य तथा प्रविष्टः ।
भूयस्तदेव दिवसे सुसहायमायो
वृन्दं सतामिव पटुः प्रविशाम्यशङ्कः ॥ २२ ॥

( परिक्रम्य ) इदानीं प्रसादे स्नातयाभ्यन्तरस्थया कुरङ्ग्या भवितव्यम् ।

विदूषकः—जहिं वा तहिं वा पविसामो । अदिक्कमदि भिक्खवेला । [ यत्र वा तत्र वा प्रविशावः । अतिक्रामति भिक्षावेला । ]

अविमारकः—एहि तावदभ्यन्तरमेव प्रविशावः ( प्रविश्य ) इह हि,

पुरे गृहे वापि पुरा सुखोषितै
र्मनस्विभिर्दुर्लभचिन्तयागतैः ।

---

पतन्नरेन्द्रेति—एतत् नरेन्द्रभवनम् तदेवेदं राजकुलम् यत् अहम् प्रथमप्रवेशकाले तथा तादृशं साहसं समुपलभ्य आश्रित्य प्रविष्टः प्रवेशं कृतवान्, भूयः पुनरधुना तदेव राजकुलम् दिवसे दिने सुसहायमायः मायाकृतसाहायकः अशङ्कः निर्भयो भूत्वा सतां वृन्दं सज्जनमण्डलं पटुश्चतुरो जन इव प्रविशामि । यथा चतुरो लोकोऽशङ्कभावेन सज्जनमण्डलं प्रविशति तथैवाहमपि दिन एव साहसप्रवेश्यं राजकुलं प्रविशामि, तदिदं सर्वं मायाविजृम्भितमिति तात्पर्यम् ॥ २२ ॥

प्रासादे—सौधोपरिभागे । स्नातया—कृतस्नानया ।

पुरे गृहे वेति—पुरे नगरे गृहे राजप्रासादे वापि पुरा पूर्वं सुखोषितैः ससुखं कृतवासैः दुर्लभचिन्तयाऽऽगतैः दुर्लभस्य वस्तुनः प्राप्तेरिच्छया समायातैः मनस्विभिः

---

यही वह राजभवन है जहाँ पहले मैंने रात में डरते-डरते साहस कर के प्रवेश किया था । आज उसी में दिनदहाड़े माया के बल पर प्रवेश कर रहा हूँ, जैसे सज्जनों के दल में बालक निर्भय प्रवेश करते हैं ॥ २२ ॥

( घूमकर ) इस समय कुमारी छत पर नहा कर भीतर बैठी होगी ।

विदूषक—जहाँ तहाँ पैठ चलो, भिक्षा का समय बीत रहा है ।

अविमारक—चलो भीतर चलें । ( जाकर ) यहाँ ग्राम में या घर में आराम से

पुनः कृतार्थैर्मुदितान्तरात्मभिः
सुखं प्रवेष्टुं सविशेषकर्मभिः ॥ २३ ॥

( निष्क्रान्तौ )

चतुर्थोऽङ्कः ।



---

पुनः कृतार्थैः प्राप्तप्राप्तव्यैः मुदितान्तरात्मभिः प्रसन्नैः सविशेषकर्मभिः कार्यविशेष-मुद्दिश्यागतैः प्रवेष्टुं सुखम् सुकरम् । यत्र क्वचन गृहे पुरे वा मनस्विनः दुर्लभवस्तु प्रार्थनया ससुखं निवसन्ति, तत्रैव कृतार्थाः प्रसन्नाश्च ससुखं प्रविशन्तीति तात्पर्यम्, तन्मयाऽप्यत्र पूर्वं कृतवासेन सम्प्रति कुरङ्गीप्राप्तौ सञ्जाताशेन च सुखं प्रवेष्टुं शक्यत इति परमार्थः ॥ २३ ॥

इति श्रीरामचन्द्रमिश्रकृते 'अविमारकप्रकाशे' 'चतुर्थाङ्कप्रकाशः' ॥



---

रहने वाले किसी कार्यवश आये हुए, कृतकार्य, प्रसन्न जन सुख से प्रवेश कर पाते हैं ॥ २३ ॥

( दोनों का प्रस्थान )

चतुर्थ अङ्क



## पञ्चमोऽङ्कः

( तत प्रविशति कुरङ्गी नलिनिका च )

नलिनिका—भट्टिदारिए ! अलं सन्दावेण । कण्णाउरप्पासादं आलुहिअ दिट्ठिविलोभणं करिस्सामो । [ भर्तृदारिके ! अलं सन्तापेन । कन्यापुरप्रासादमारुह्य दृष्टिविलोभनं करिष्यावः । ]

कुरङ्गी-हला ! किं तुए मम हिअअं परिक्खादं । एत्थ हि अजाणन्तेण परिजणेण मम परितोसणिमित्तं वउलसरलसज्जज्जुणकदम्बणीवणिउलप्पहुदीणि मेहकालवल्लहाणि परमसुरहीणि आणीअमाणाणि मं उस्सादअन्ति । अह अ इमे मोरा अम्हाअं राअउलमाणसे अदिपीठमद्दभावं करन्ति । अम्हेहिं सददलालिदा वि अदेसकालण्णदाए अत्तणो अहिकण्णभावं दंसेंदि । सुअसारिआ वि वक्खाणं एव कहेदुं आरद्धा । मम णिव्वेदभावं अजाणन्ती भूदिअसारिआ वि सव्वलोअवुत्तन्तं कहइस्सामि त्ति आअदा । मम रोआवत्थं पुच्छिदुं आअदो परिजणो मं णिब्बन्धिअ णिवेदेदि । ता इच्छामि मुहुत्तअं पासादे अच्छिदुं । [ हला ! किं त्वया मम हृदयं

---

अलं सन्तापेन—माऽधिकं सन्तापं कार्षीरित्यर्थः । दृष्टिविलोभनम्—नयनसुखदवस्तुविलोकनेन मनोविनोदम् ।

---

पञ्चम अङ्क ।

( नलिनिका तथा कुरङ्गी का प्रवेश )

नलिनिका—राजकुमारी, सन्ताप मत करें, चलिये कन्यापुर-प्रासाद पर चलकर आँखों को आनन्दित करें ।

कुरङ्गी—सखी, तुमने हमारा हृदय क्या समझा है ? नहीं जानने वाले परिजन द्वारा मुझे प्रसन्न करने के लिये मेघकाल में भले लगने वाले परम सुगन्धित वकुल, सरल, सर्ज, अर्जुन, कदम्ब वगैरह फूल लाये जाते हैं, उनसे मेरा सन्ताप बढ़ता ही है । यह मयूर हमारे कन्यापुर में पीठमर्द का कार्य करते हैं । मैंने इन्हें पाला है, जानते यह कम हैं, परन्तु अपनी विशेषज्ञता प्रकट करते हैं । यह

परिज्ञातम् । अत्र ह्यजानता परिजनेन मम परितोषनिमित्तं बकुलसरलसर्जार्जुन-कदम्बनीपनिचुलप्रभृतीनि मेघकालवल्लभानि परमसुरभीण्यानीयमानानि मामुन्मा-दयन्ति । अथ चेमे मयूरा अस्माकं राजकुलमानसे अतिपीठमर्दभावं कुर्वन्ति । अस्माभिः सततलालिता अप्यदेशकालज्ञतयात्मनोऽधिकज्ञभावं दर्शयन्ति । शुक-सारिकापि व्याख्यानमेव कथयितुमारब्धा । मम निर्वेदभावमजानन्ती भूतिकसारि-कापि सर्वलोकवृत्तान्तं कथयिष्यामीत्यागता । मम रोगावस्थां प्रष्टुमागतः परिजनो मां निर्बध्य निवेदयति । तदिच्छामि मुहूर्तकं प्रासादे आसितुम् । ]

नलिनिका—जं भट्टिदारिआए रुइदं । होदु । [ यद् भर्तृदारिकायै रुचितम् । भवतु । ]

( उभे आरोहतः । )

कुरङ्गी—हला ! एत्थ वि महन्तो अणत्थो उट्ठिदो विज्जुप्पदीवं

---

अजानता—मम मनोदशानभिज्ञेन । परितोषनिमित्तम्—सन्तोषणाय । बकु-लम्—नागकेशरम् , सरलः—देवद्रुमः, अर्जुनः—पार्थः, निचुलः—वेतसः, नीपः-कदम्बः, । मेघकालवल्लभानि वर्षाकालमनोरमाणि । परमसुरभीणि—अति-सुगन्धीनि । उन्मादयन्ति—उन्मादं कुर्वन्ति व्यथां वर्धयन्ति । अतिपीठमर्द-भावं कुर्वन्ति—विशिष्टस्य पीठमर्दस्य कार्यं विदधति, पीठमर्दः शृङ्गारे सहायो भवति, तद्विधेयं कार्यं कर्तुमारभमाणा इमे मयूराः कामं दीपयन्तीत्यर्थः । एकदेश-कालज्ञतया—असमस्तवस्तुस्थितिज्ञतया । अधिकज्ञभावम्—बहुज्ञताम् ।

शुकसारिका—शुकी । निर्वेदभावमजानन्ती—मम मनः क्लेशमविदन्ती ।

---

सारिका व्याख्यान प्रारम्भ कर देती है । भूतिकवाली सारिका भी सारे संसार की कथा ही कहने आ गई है । मेरी रोगावस्था जानने जो दासी आती है वही मुझ से आग्रह करके कुछ कह जाती है । अतः मैं चाहती हूँ कि कुछ देर प्रासाद पर बैठूं ।

नलिनिका—आपको जो अच्छा लगे वही हो ।

( दोनों प्रासाद पर चढ़ती हैं )

कुरङ्गी—यहाँ भी महानर्थकारी बिजली का प्रदीप लिये काला मेघ उपस्थित है।

घारिअ कालमेहो। [ हला ! अत्रापि महाननर्थ इत्यितः विद्युत्प्रदीपं धृत्वा कालमेघः। ]

नलिनिका—भट्टिदारिए ! अलं उक्कण्ठिदेण। पेक्ख पेक्ख णवसलिलधररुद्धसुय्यं पविरलजलणिवाददस्सणीअं गअणअलं। [ भर्तृदारिके ! अलमुत्कण्ठितेन। पश्य पश्य नवसलिलधररुद्धसूर्यं प्रविरलजलनिपातदर्शनीयं गगनतलम्। ]

कुरङ्गी—पेक्खामि अ रमणीअं आआसं। [ पश्यामि च रमणीयमाकाशम्। ]

( ततः प्रविशत्यविमारको विदूषकश्च )

अविमारकः—वयस्य ! दृष्टा सा कुरङ्गी। यैषा,

**रोगादकालागुरुचन्दनार्द्रा**
**विमुक्तभूषा गतहावभावा।**

---

कालमेघः—श्यामवर्णो वारिदः, सोऽनर्थरूपेणोपस्थितः, कामोद्दीपकतया तस्यात्रानर्थरूपत्वमुक्तम्।

नवसलिलधररुद्धसूर्यम्—नवीनमेघान्तर्हितरविबिम्बम्। प्रविरलजलनिपातदर्शनीयम्—अल्पवृष्टिरमणीयम्।

**रोगादिति**—रोगात् मनःसन्तापात् कारणात् अकालागुरुचन्दनार्द्रा देहे कालागुरुचन्दनलेपमधारयन्ती विमुक्तभूषा त्यक्तसर्वाभरणा गतहावभावा प्रोषित-

---

नलिनिका—उत्कण्ठित होने की आवश्यकता नहीं है। देखो-देखो नये मेघोंने सूर्य को छिपा दिया, झीनी-झीनी वर्षा पड़ रही है, आकाश कैसा भला लग रहा है ?

कुरङ्गी—रमणीय आकाश को देख रही हूँ।

( अविमारक तथा विदूषक का प्रवेश )

अविमारक—मित्र, देखा तुमने कुरङ्गी को।

रोग के कारण इसने चन्दन का लेप नहीं लगाया है, इसने गहने उतार

विभाति निर्व्याजमनोहराङ्गी
वेदश्रुतिर्हेतुविवर्जितेव ॥ १ ॥

विदूषकः—भो ! तुट्ठो म्हि । तुवं खु सव्वलोए अहं सुरूवो त्ति अत्ताणं आअरसि । जिदो दाणि तत्तहोदीए सहावरमणीएण रूवेण । चिन्तेमि भवदो विओएण इअं तणुआ जादा । एवं पि एसा बालचन्दलेहा विअ दिट्ठिं तोसेदि । [ भोः ! तुष्टोऽस्मि ! त्वं खलु सर्वलोकेऽहं सुरूप इत्यात्मानमाचरसि । जित इदानीं तत्रभवत्याः स्वभावरमणीयेन रूपेण । चिन्तयामि भवतो वियोगेनेयं तनुका जाता । एवमप्येषा बालचन्द्रलेखेव दृष्टिं तोषयति । ]

अविमारकः—सखे ! अतिपण्डित इव किमेतत् ।

---

समस्तविभ्रमा निर्व्याजमनोहराङ्गी अव्याजसुन्दरशरीरा हेतुविवर्जिता तर्कविद्यारहिता श्रुतिरिव विभाति शोभते । 'योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः' इत्युक्त्या वेदे हेतुर्वर्ज्यते, तथा च यथा हेतुविवर्जिता श्रुतिः शोभते तथैवेयं कुरङ्गी सन्तापादनादृतचन्दनलेखा त्यक्तालङ्कारा परित्यक्तविभ्रमापि चाव्याजसुन्दरावयवतया शोभत इत्यर्थः । उपमालङ्कारः ॥ १ ॥

सर्वलोके—समस्ते संसारे । सुरूपः—सुन्दरः । आत्मानम् आचरसि—प्रशंससि ।

तत्रभवत्याः—पूज्याया राजकुमार्याः । तनुका—कृशा । बालचन्द्रलेखा—पक्षप्रारम्भिकचन्द्रकला । तोषयति—सुखयति ।

अतिपण्डित इव—महापाण्डित्याभिमानी ।

---

दिये हैं, इसके सारे विलास लुप्त हो रहे हैं, फिर भी इसके अङ्ग निश्छल सौन्दर्य से रमणीय लगते हैं, जैसे हेतुवर्जित श्रुति मनोहर लगती है ॥ १ ॥

विदूषक—अजी, मैं खुश हूँ, तुम गर्व करते थे कि विश्वमें मैं सुन्दर हूँ, इसने अपने स्वभावरमणीय रूप से तुम्हें पराजित कर दिया। मैं सोचता हूँ यह तुम्हारे वियोग में दुबली हो गई है, फिर भी यह बालचन्द्रकला की तरह आँखों को तृप्त करती है ॥

अविमारक—अजी महापण्डित, यह क्या है ?

विदूषकः—भो ! णिच्चपरिचएण मं परिहससि । अपुव्वो जणो मम बुद्धिं अजाणन्तो अहिअदरं पसंसेदि । अहं पि तं जाणिअ एदस्सिं णअरे केण वि विस्सम्भं ण करेमि । [ भोः ! नित्यपरिचयेन मां परिहससि । अपूर्वो जनो मम बुद्धिमजानन्नधिकतरं प्रशंसति । अहमपि तद् ज्ञात्वैतस्मिन्नगरे केनापि विस्रम्भं न करोमि । ]

अविमारकः—अलमौदासीन्येन । बहुजनपरिवारतया न लब्धः क्षणः कान्तां प्रबोधयितुम् । तदिदानीं प्रासादगतामपि तत्रैव तां बोधयिष्यावः ।

विदूषकः—सुट्ठु भवं भणादि । पासादं आलुहामो । [ सुष्ठु भवान् भणति । प्रासादमारोहावः । ]

अविमारकः—सखे ! प्रयत्नादारोढव्यं यथा तथा न प्रवर्तते प्रासाद-शब्दः ।

---

नित्यपरिचयेन—चिरपरिचिततया । अपूर्वः—नवपरिचितः । मम बुद्धिम-जानन्—ममबुद्धेर्विषये सर्वथा ज्ञानमरक्षन् । अधिकतरं प्रशंसति—बहुस्तौति । तज्ज्ञात्वा—अल्पपरिचयो मामधिकं प्रशंसतीति विज्ञाय । विस्रम्भम्—बहु-परिचयम् ।

बहुजनपरिवारतया—बहुजनपरिवृतत्वेन । क्षणः—कालः । प्रबोधयितुम्—संबोध्याभिधातुम् । प्रासादगताम्—हर्म्योपरिस्थिताम् ।

प्रासादशब्दः—प्रासादसोपाने चरणपातध्वनिः ।

---

विदूषक—अजी, अतिपरिचय के कारण तुम मेरा उपहास करते हो, नया आदमी जो मेरी बुद्धि को नहीं जानता है वह मेरी बहुत प्रशंसा करता है, इसी लिये मैं भी इस नगर में किसी के साथ अधिक आत्मीयता नहीं कर रहा हूँ ।

अविमारक—उदास होने की बात नहीं है । बहुत लोग थे अतः मुझे प्रियतमा को समझाने का अवसर नहीं मिला, इस समय वह प्रासाद पर गई है, वहीं उसे तुम्हारे विषय में समझा दूँगा ।

विदूषक—ठीक कहते हो, चलो प्रासाद पर चलें ।

अविमारक—मित्र, इस तरह प्रयास करके चढ़ो कि सीढ़ी पर आवाज नहीं हो सके ।

विदूषकः—भो ! ण सक्कं एदं। को सक्कदि उच्छिट्ठं णकरन्तो भुञ्जिदुं। अहं एत्थ चिट्ठामि। तुवं एव आरुह। [ भोः ! न शक्यमेतत्। कः शक्नोत्युच्छिष्टमकुर्वन् भोक्तुम्। अहमत्र तिष्ठामि। त्वमेवारोह। ]

अविमारकः—यदि विमुञ्चे, दृश्यते भवान्।

विदूषकः—भो ! विस्सरिदं खु मए एदं। पुणो पुणो कहेहि। [ भोः ! विस्मृतं खलु मयैतत्। पुनः पुनः कथय। ]

अविमारकः—इतस्तावत्। ( आरुह्यावलोक्य ) सखे ! इयमस्मत्कान्ता शिलातले नलिनिकया सहास्ते। येषा,

सव्ये करे समुपवेश्य मुखं सुदीनं
कालं मनोभवसहायमनुष्यमाणा।

---

उच्छिष्टमकुर्वन्—विनैवोच्छिष्टविधानम्। यथा भोज्यं पदार्थमनुच्छिष्टमकृत्वा न शक्नोति कोऽपि भोक्तुम्, तथैव सोपानशब्दमकृत्वा प्रासादाधिरोहणमपि कर्तुं न कोऽपि शक्तस्तदलं तादृशेनादेशेनेति भावः।

विमुञ्चे—त्वामत्र त्यक्त्वा गच्छामि। दृश्यते भवान्—मत्स्पृष्टस्यैव भवतोऽदृश्य-भावः, मत्स्पर्शविगमे भवान् लोकैर्दृश्येत, तच्च नेष्टमतो यथाकथञ्चिन्मया सहैव भवतापि प्रासादाधिरोहणं कर्त्तव्यमेवेत्यर्थः।

अस्मत्कान्ता—मम प्रिया।

**सव्ये कर इति**—सुदीनं सन्तापकदर्थिततयाऽतिदीनम् मुखम् आत्मनो वद-नम् सव्ये वामे करे हस्ते समुपवेश्य स्थापयित्वा मनोभवसहायम् कामसुहृदं कालं

---

विदूषक—यह संभव नहीं है। बिना जूठा किये कौन खा सकता है। मैं यहीं रहता हूँ, तुम्हीं चढ़ो।

अविमारक—यदि मैं छोड़ दूँगा तो तुम दीखने लगोगे।

विदूषक—अजी, यह बात तो मैं भूल रहा था, फिर कहो।

अविमारक—इधर आओ, ( चढ़कर तथा देखकर ) सखे, यही हमारी प्रिया नलिनिका के साथ शिलातल पर बैठी है।

उदास मुखड़े को बायें हाथपर रखकर, इस काम के सखा वर्षाकाल को

व्यग्रा विचिन्तयति किञ्चिदलोलदृष्टि-
र्बाष्पं निवारयितुमूर्ध्वमवेक्षमाणा ॥ २ ॥

कुरङ्गी—( स्वगतम् ) किं एदेण जीवन्मरणेण । ( प्रकाशम् ) णलिणिए ! गच्छ माअधिअं आणेहि उवण्हाणेण । [ किमेतेन जीवन्मरणेन । नलिनिके ! गच्छ मागधिकामानयोपस्नानेन । ]

नलिनिका—एआइणिं भट्टिदारिअं उज्झिअ कहं गमिस्सं । ण हु एत्थ को वि जणो । [ एकाकिनीं भर्तृदारिकामुज्झित्वा कथं गमिष्यामि । न खल्वत्र कोऽपि जनः । ]

( प्रविश्य )

हरिणिका—जेदु भट्टिदारिआ । भट्टिदारिए । भट्टिणी भणादि—

---

वर्षासमयम् असृष्यमाणा सोढुमक्षमा अलोलदृष्टिः स्थिरनयना बाष्पं निवारयितुम् अश्रुपातं निरोद्धुम् ऊर्ध्वमवेक्षमाणा उपरि पश्यन्ती व्यग्रा व्याकुलहृदया किञ्चित् विचिन्तयति शोचति । सन्तापक्लिष्टं मुखं करतले कृत्वा कामोद्दीपकं वर्षाकालं सोढुमपारयन्ती इयं मम प्रेयसी स्थिरनयना किमपि शोचति, मुखनमने नयनाश्रु-निपतेत् तथा च परिजनो वृथा प्रबोधनमारभेरन्निति सोर्ध्वमेवेक्षते, तदियमतिकष्टायां दशायां वर्त्तत इति भावः । वसन्ततिलकं वृत्तम् ॥ २ ॥

उपस्नानेन—स्नानोपकरणेन । सहेति शेषः ।

उज्झित्वा—त्यक्त्वा ।

---

सहन करने में असमर्थ हो, व्यग्रभाव से, स्थिरदृष्टि किये कुछ सोच रही है, आंसूको रोकने ही के लिये वह ऊपर की ओर देख रही है ॥ २ ॥

कुरङ्गी—( स्वगत ) इस जीवनमरण से क्या लाभ ? ( प्रकट ) नलिनिके, जाओ, स्नानोपकरण के साथ मागधिका को बुला लाओ ।

नलिनिका—अकेली राजकुमारी को छोड़कर कैसे जाऊँगी ? यहाँ कोई दूसरा है नहीं ।

( प्रवेश कर के )

हरिणिका—जय हो राजकुमारी की । महारानी ने पूछा है कि इस समय

सम्पदि कीदिसी सीसवेदणत्ति। एदं वि ओसधं लिम्पेहि किल। [ जयतु भर्तृदारिका। भर्तृदारिके! भट्टिनी भणति-सम्प्रति कीदृशी शीर्षवेदनेति। एतदप्यौषधं लिम्प किल। ]

कुरङ्गी—णलिणिए! गच्छ दाणि तुवं। तक्केमि देवो वरिसिदुं आरद्धो। अहं इच्छामि अहिणवेण आआसतोएण ण्हादुं। ता तुवारेहि उवण्हाणं। [ नलिनिके! गच्छेदानीं त्वम्। तर्कयामि देवो वर्षितुमारब्धः। अहमिच्छाम्यभिनवेनाकाशतोयेन स्नातुम्। तत् त्वरयोपस्नानम्। ]

नलिनिका—जं भट्टिदारिआ आणवेदि। [ यद् भर्तृदारिकाज्ञापयति। ]

अविमारकः—किन्नु खल्वनया व्यवसितम्।

कुरङ्गी—हला! एहि दाव! [ हला! एहि तावत्। ]

नलिनिका—भट्टिदारिए! इअम्हि। [ भर्तृदारिके! इयमस्मि। ]

कुरङ्गी—हला! णं सीदलं दे सरीरं। [ हला! ननु शीतलं ते शरीरम्। ]

नलिनिका—भट्टिदारिए! ण आणामि। [ भर्तृदारिके! न जानामि। ]

---

शीर्षवेदना—शिरःपीडा।

देवो वर्षितुमारब्धः—वृष्टिः प्रारब्धा। आकाशतोयेन—वर्षाया जलेन। त्वरय—शीघ्रमानय।

किन्नु खल्वनया व्यवसितम्—इयं किंकर्त्तुमिच्छति।

---

शिर दर्द कैसा है? यह दवा भी लगा लेने को कहा है।

कुरङ्गी—नलिनिके, अब तुम जाओ, मैं सोचती हूँ मेघ बरसने लगा। मैं चाहती इस नये आकाशजल से स्नान करूं। अतः स्नानोपकरण लाने में शीघ्रता करो।

नलिनिका—राजकुमारी की जैसी आज्ञा।

अविमारक—यह क्या करना चाह रही है।

कुरङ्गी—सखी, इधर आओ तो।

नलिनिका—राजकुमारी, यही तो हूँ।

कुरङ्गी—सखी, तुम्हारा शरीर कैसा शीतल है।

नलिनिका—राजकुमारी, मैं नहीं जानती हूँ।

कुरङ्गी—हला ! एहि परिस्सजेहि मं। [हला ! एहि परिष्वजस्व माम् ।]

नलिनिका—भट्टिदारिए ! तह ! ( परिष्वजते ) [ भर्तृदारिके ! तथा । ]

कुरङ्गी—हला ! अदिसीदलं मणोहरं च दे सरीरं। [ हला ! अतिशीतलं मनोहरं च ते शरीरम् । ]

नलिनिका—अणुग्गहीदम्हि । [ अनुगृहीतास्मि । ]

कुरङ्गी—हला ! सम्पदि णस्सदि विअ मे सरीरदाहो। ( स्वगतम् ) हन्त किदो सहिप्पणओ । समत्तो अ अज्ज एदाए सरीरसंसग्गो । ( प्रकाशम् ) गच्छ दाणि तुवं । [ हला ! सम्प्रति नश्यतीव मे शरीरदाहः । हन्त कृतः सखीप्रणयः । समाप्तश्चाद्यैतस्याः शरीरसंसर्गः । गच्छेदानीं त्वम् । ]

नलिनिका—जं भट्टिदारिआ आणवेदि। ( निष्क्रान्ता ) [ यद् भर्तृदारिकाज्ञापयति । ]

हरिणिका—भट्टिदारिए ! भट्टिणीए किं णिवेदेमि। [ भर्तृदारिके ! भट्टिन्यै किं निवेदयामि । ]

---

एहि—आगच्छ। परिष्वजस्व—आलिङ्ग।

नश्यतीव मे शरीरदाहः—समाप्तप्रायो मम देहसन्तापः। कृतः सखीप्रणयः—सख्या प्रणयानुरोधेन यावत् कर्तुं शक्यते तावद् त्वया कृतमित्यर्थः। एतस्याः शरीरसंसर्गः—मम शरीरस्पर्शः, अनुपदमेव मयि मृतायां मम कायस्पर्शस्त्वया

---

कुरङ्गी—सखी आओ, मुझसे लिपट जाओ।

नलिनिका—राजकुमारी, अच्छी बात। ( आलिङ्गन करती है )

कुरङ्गी—सखी, तुम्हारा शरीर अतिशीतल तथा मनोहर है।

नलिनिका—मैं अनुगृहीत हूँ।

कुरङ्गी—अब मेरे शरीर का सन्ताप समाप्त हो गया। ( स्वगत ) हाय, सखी के प्रति स्नेह कर लिया, अब इसके शरीर का संसर्ग नहीं हो सकेगा। ( प्रकट ) अब तुम जाओ।

नलिनिका—राजकुमारी की जैसी आज्ञा। ( जाती है )

हरिणिका—राजकुमारी, महारानी से क्या कहूँगी।

कुरङ्गी—अज्ज विअदरोआ सोत्था होदि त्ति। [अद्य विगतरोगा स्वस्था भवतीति।]

हरिणिका—कहं तुए विण्णादं त्ति पुच्छिदा किं विण्णवेमि। [कथं त्वया विज्ञातमिति पृष्टा किं विज्ञापयामि।]

कुरङ्गी—सुट्ठु तुए विण्णादं। एदेण ओसधविसेसेण त्ति भणेहि। [सुष्ठु त्वया विज्ञातम्। एतेनौषधविशेषेणेति भण।]

हरिणिका—जं भट्टिदारिआ आणवेदि। (निष्क्रान्ता) [यद् भर्तृदारिकाज्ञापयति।]

अविमारकः—किन्नु खल्वनया व्यवसितम्।

उष्णं श्वसिति तन्वङ्गी सर्वतः प्रेक्षते मुहुः।
नेत्राभ्यां बाष्पपूर्णाभ्यां किन्नु कर्तुं व्यवस्थिता॥ ३॥

कुरङ्गी—होदु, उत्तरीअवासेण अत्ताणं उब्बन्धिअ वावादइस्सं।

---

न लभ्य इत्यर्थः। विगतरोगा—निवृत्तामया। (मृता सती सर्वेभ्यो रोगेभ्यो-मुक्ता भवतीति तस्या गूढोऽभिप्रायः।

किन्नु खल्वनया चिन्तितम्—किमनया कर्तुमिष्टमिति न ज्ञायते, चेष्टाभिस्तु ज्ञायते यदियं किमपि भीषणं कार्यं कर्तुं कृतमतिरिति भावः।

**उष्णं श्वसितीति**—इयं तन्वङ्गी कृशाङ्गी कुरङ्गी उष्णं श्वसिति मुहुः वारं वारं सर्वतः, बाष्पपूर्णाभ्याम् अश्रुपूरिताभ्याम् नेत्राभ्याम् सर्वतः प्रेक्षते पश्यति, तदियमसाधारणी स्थितिरेवास्याः कमपि भीषणं सङ्कल्पं गमयतीति तात्पर्यम्॥३॥

---

कुरङ्गी—कह देना कि आज स्वस्थ तथा नीरोग हो गई।

हरिणिका—यदि पूछेंगी कि तुमने कैसे जाना? तब मैं क्या कहूंगी।

कुरङ्गी—तुमने ठीक समझा है। कहना कि इसी औषध से नीरोग हो गई।

हरिणिका—राजकुमारी की जैसी आज्ञा। (जाती है)

अविमारक—यह करना क्या चाहती है,

यह कृशाङ्गी गरम सांस लेती है, बार-बार चारो ओर देखती है, आँखों में आँसू भरे हैं, न जाने यह क्या करना चाह रही है॥ ३॥

कुरङ्गी—अच्छा, इसी चादर से फांसी लगा कर अपना अन्त कर दूंगी।

( उत्थाय तथा कुर्वती मेघस्तनितं श्रुत्वा ) हं परित्ताआहि परित्ताआहि मं। [ भवतु, उत्तरीयवाससात्मानमुद्बध्य व्यापादयिष्यामि। हं परित्रायस्व परित्रायस्व माम्। ]

अविमारकः—सखे! न शक्यमतः परमुपेक्षितुम्। ( अङ्गुलीयकं वामाङ्गुल्यां प्रक्षिप्य ) कान्ते! न भेतव्यं न भेतव्यम्। ( इति कुरङ्गीमुत्थापयति )

कुरङ्गी—( सहर्षम् ) किण्णु खु सच्चं एदं। मूढा विअ जादा। [ किन्तु खलु सत्यमेतत्। मूढेव जाता। ]

अविमारकः—कान्ते। व्यपनीयतां शङ्का। ( परिष्वजते )

कुरङ्गी—अच्छरीअं एकक्खणेण णस्सदि विअ मे सरीरदाहो। [ आश्चर्यम्। एकक्षणेन नश्यतीव मे शरीरदाहः। ]

अविमारकः—अयं खल्वस्याः परिष्वङ्गः,

---

उत्तरीयवाससा—उत्तरीयवस्त्रेण। उद्बध्य—गलं बद्ध्वा। व्यापादयिष्यामि—आत्मानं घातयिष्यामि।

वामाङ्गुल्यां प्रक्षिप्य—सव्यकराङ्गुलिधृतां कृत्वा, दृश्यत्वयोग्यतासम्पादनार्थमिदमङ्गुलिपरिवर्त्तनमन्यथाऽशरीरिणीं वाचं श्रुत्वा सा भीता स्यादिति दृश्यत्वमपेक्षितम्।

मूढा—मूर्च्छिता।
व्यपनीयतां शङ्का—भयं त्यज।
नश्यतीव—समाप्त इव भवति।

---

( उठकर, फाँसी लगाती हुई मेघ का शब्द सुनकर ) मुझे बचाओ, बचाओ।

अविमारक—मित्र, इससे आगे उपेक्षा नहीं की जा सकती है। ( अँगूठी बायें हाथ में डाल कर ) प्रिये, मत डरो, मत डरो। ( कुरङ्गी को उठाता है )

कुरङ्गी—( सहर्ष ) क्या यह सत्य है? मैं मूर्च्छित सी हो रही हूँ।

अविमारक—प्रिये, शङ्का दूर करो। ( आलिङ्गन करता है )

कुरङ्गी—आश्चर्य, एक ही क्षण में मेरे देह का दाह दूर हो गया।

अविमारक—इसका यह आलिङ्गन—

सततपरिचितो मनोभियोगा-
दधिकरसः प्रथमात् समागमात् ।
रणशिरसि नृपेण साहसाप्तो
विजय इवाद्य मयानुभूयते ॥ ४ ॥

विदूषकः—कहं रोदिदुं आरद्धा । अलं अदिमत्तं सन्दावेण । अहव अहं वि रोदामि । एक्कं पि तहिं दुल्लहं मम णअणादो वप्फं ण णिग्गच्छइ । जदा मे पिदा उवरदो, तदा वि महन्तेण आरम्भेण रोदिदुं आरद्धो । वप्फं ण णिग्गच्छइ किं पुण अण्णसन्दावस्स । तह वि अणुस्सुओ रोदामि । [ कथं रोदितुमारब्धा । अलमतिमात्रं सन्तापेन । अथवा अहमपि रोदिमि । एकमपि तत्र दुर्लभं मम नयनाद् बाष्पं न निर्गच्छति । यदा मे पितोपरतस्तदापि महतारम्भेण रोदितुमारब्धः । बाष्पं न निर्गच्छति । किं पुनरन्यसन्तापस्य । तथाप्यनुत्सुको रोदिमि । ]

---

सततेति—मनोभियोगात् एतस्याः मनसा सह मम मनसो मिलनात् सततपरिचितः सर्वदाऽनुभूतपूर्वः ( एतस्याः कुरङ्ग्याः स्पर्शः ) प्रथमात् समागमादपि । आद्यसंपर्कादपि अधिकरसः अधिकानन्ददायी वर्तत इति शेषः । यः स्पर्शः अद्य सम्प्रति नृपेण रणशिरसि युद्धक्षेत्रे साहसाद् विजय इव मयाऽनुभूयते । यथा केनचन नृपेण रणे साहसं कृत्वा प्राप्तो विजयः सुखप्रदतयाऽनुभूयते तद्वत् अस्या अयं स्पर्शः पूर्वपरिचितोऽपि सम्प्रति प्रथमादपि समागमात् मया समधिकरसोऽनुभूयत इत्याशयः ॥ ४ ॥

आरब्धा—प्रारब्धवती । उपरतः—मृतः । महतारम्भेण—अतिप्रयासेन । अन्य-सन्तापस्य—पितरि मृते यस्य नेत्राद्बाष्पं न निर्गतं तस्य नेत्रादन्यस्मिन्-

---

सदा का परिचित होकर भी मनोयोग होने के कारण पहले आलिङ्गनों से अधिक सुखप्रद, लग रहा है, जैसे युद्ध में किसी राजा को साहस द्वारा प्राप्त विजय अधिक सुखप्रद होती है ॥ ४ ॥

विदूषक—यह रोने क्यों लगी ? सन्ताप करना व्यर्थ है । अथवा मैं भी रोता हूँ । मेरी आँखों में आँसू आते ही नहीं । जब हमारे पिता मरे थे तब मैंने जोरों से रोना प्रारम्भ किया था । आँसू नहीं निकला । दूसरे सन्तापों की क्या बात ? फिर भी शान्तभाव से रोता हूँ ।

अविमारकः—अलमुत्प्रहसितेन । अच्छलो हि स्नेहो नाम ।

न ते न बुद्धिर्मम दूषणीया
येन प्रकामं भवितास्मि हास्यः ।
प्राज्ञस्य मूर्खस्य च कार्ययोगे
समत्वमभ्येति तनुर्न बुद्धिः ॥ ५ ॥

( प्रविश्य )

नलिनिका—हरिणिए ! हरिणिए !। कहं दुवारं रुद्धं। हद्धि दुवारणिरोहेण अवअदसन्दावं अत्ताणं करिस्सदि त्ति तक्केमि । हरिणिए ! हरिणिए !। हद्धि तं एव संवुत्तं। [ हरिणिके ! हरिणिके !। कथं द्वारं रुद्धम् । हा धिग् द्वारनिरोधेनापगतसन्तापमात्मानं करिष्यतीति तर्कयामि ! हरिणिके ! हरिणिके !। हा धिग् तदेव संवृत्तम् । ]

---

सन्तापे कथमिव बाष्पं निर्गच्छेदित्यर्थः ।

उत्प्रहसितेन—विशिष्यहासेन । अच्छलः—अव्याजः ।

न ते नेति—न ते तव न मम वा बुद्धिर्दूषणीया निन्दनीया, येन प्रकामं हास्यः भवितास्मि उपहासपात्रं भवेयम् , कार्ययोगे कर्मसिद्धौ प्राज्ञस्य मूर्खस्य च तनुः समत्वमेति समानरूपेण व्याप्रियते न बुद्धिः । अयमाशयः—न तावकी मामकी वा बुद्धिर्निन्दनीया वर्त्तते, येन त्वमहं वोपहस्येय, अस्ति हि मकर्मणि तनोरुपयोगो न बुद्धेरतोबुद्धिदोषेणोपहासोऽप्राप्तावसर एवेति ॥ ५ ॥

द्वारनिरोधेन—द्वारि कपाटपिधानेन । अपगतसन्तापम्—विगतखेदम् ।

---

अविमारक—हँसने की आवश्यकता नहीं है, मित्रता में छल नहीं किया जाता है।

तुम मेरी बुद्धि की शिकायत नहीं कर सकते जिससे मैं उपहास्य होता। प्राज्ञ और मूर्ख की कार्य-सिद्धि में शरीर का समान योग होता है, बुद्धि समान नहीं होती है ॥ ५ ॥

नलिनिका—हरिणिके, हरिणिके, हाय, तू दरवाजा बन्द कर यह अपने को गत सन्ताप करना चाहती है, हाय, आखिर वही हुआ।

अविमारकः—नलिनिकाया इव स्वरः। वयस्य ! विघाट्यतां द्वारम्।

विदूषकः—जं भवं आणवेदि। (विघाट्य) एदु एदु भोदी। [ यद् भवानाज्ञापयति। एत्वेतु भवती। ]

नलिनिका—हं को दाणिं एसो पुरिसो। [ हं क इदानीमेष पुरुषः। ]

विदूषकः—सुट्ठु विण्णादं तुए। अहो राअउलस्स विसेसो। को अण्णो जणो मं पेक्खिअ पुरिसो त्ति भणादि। इत्थिआ खु अहं। [ सुष्ठु विज्ञातं त्वया। अहो राजकुलस्य विशेषः। कोऽन्यो जनो मां प्रेक्ष्य पुरुष इति भणति। स्त्री खल्वहम्। ]

अविमारकः—नलिनिके ! प्रविशेदानीम्।

नलिनिका—कहं भट्टिदारओ। भट्टिदारअ ! वन्दामि। भट्टिदारअ ! को एसो पुरिसो। [ कथं भर्तृदारकः ! भर्तृदारक ! वन्दे। भर्तृदारक ! क एष पुरुषः। ]

विदूषकः—अहं पुक्खरिणी णाम चेडी। [ अहं पुष्करिणी नाम चेटी। ]

अविमारकः—योऽस्माभिः सदा कथ्यते सन्तुष्ट इति, सोऽयं ब्राह्मणः।

---

विशेषः—विशिष्टो व्यवहारः, यत् स्त्रियमपि मां पुरुषमभिदधति।

---

अविमारक—नलिनिका की आवाज मालूम पड़ रही है। मित्र, दरवाजा खोलो।

विदूषक—जो तुम्हारी आज्ञा। ( दरवाजा खोल कर ) आइये आइये।

नलिनिका—अरे, यहाँ यह कौन पुरुष है ?

विदूषक—आपने खूब पहचाना ! राजकुल की यही विशेषता है, दूसरा कौन आदमी मुझे देख कर पुरुष कह सकता है, मैं तो औरत हूँ।

अविमारक—नलिनिके, आओ।

नलिनिका—राजकुमार ! राजकुमार को नमस्कार। राजकुमार, यह कौन पुरुष है।

विदूषक—मैं पुष्करिणी नाम की दासी हूँ।

अविमारक—जिस सन्तुष्ट की चर्चा हम बराबर किया करते थे, वही ब्राह्मण यह है।

नलिनिका—आ दिट्ठपुरुव्रो णअरापणालिन्दे अअं बम्हणो। [ आ दृष्टपूर्वो नगरापणालिन्देऽयं ब्राह्मणः । ]

विदूषकः—आम भोदि। जण्णोपवीदेण बम्हणो, चीव्ररेण रत्तपडो। जदि वत्थं अवणेमि, समणओ होमि। भोदि! किं एदं। [ आम भवति! यज्ञोपवीतेन ब्राह्मणः, चीवरेण रक्तपटः यदि वस्त्रमपनयामि श्रमणको भवामि। भवति! किमेतत्। ]

नलिनिका—भट्टिदारिआए उवण्हाणं [ भर्तृदारिकाया उपस्नानम् ]

विदूषकः—किं एदिणा वुभुक्खिदाए रोदन्तीए अत्तहोदीए उव्रण्हाणेण कय्यं। गच्छ सिग्घं भोअणं आणेहि। अहं अग्गासणीओ होमि। [ किमेतेन बुभुक्षिताया रुदन्त्या अत्रभवत्या उपस्नानेन कार्यम्। गच्छ शीघ्रं भोजनमानय। अहमग्राशनीयो भवामि। ]

नलिनिका—दुव्वम्हण! एदं पि भोअणं चिन्तेसि। सव्वं दाव चिट्ठदु। कहं दिअसे अणेअपुरुससम्पादे राअमग्गे भट्टिदारओ

---

सदा कथ्यते—वार्त्तालापे स्मर्यते।

नगरापणालिन्दे—नगरस्य क्वचन बहिर्देशे।

चीवरेण—वस्त्रखण्डेन। श्रमणकः—बौद्धसंन्यासी।

उपस्नानम्—स्नानोपकरणम्।

बुभुक्षितायाः—भोक्तुमिच्छन्त्याः। उपस्नानेन कार्यम्—स्नानोपकरणेन प्रयोजनम्। बुभुक्षितया भोजनमिष्यते न स्नानोपकरणमित्याशयः। अग्राशनीयः—भोजनात् पूर्वं गृहस्थेन ब्राह्मणादिभ्यो दातुं यदन्नं पृथक् क्रियते तद्भोक्ता

---

नलिनिका—इस ब्राह्मण को तो नगर के आपण में मैंने पहले देखा था।

विदूषक—हाँ जी, यज्ञोपवीत से ब्राह्मण हूँ, कपड़े से रक्त-पटधारी योगी हूँ, अगर कपड़ा उतार दूँ तो क्षपणक बन जा सकता हूँ। यह क्या बात है जी।

नलिनिका—यही है राजकुमारी का स्नानोपकरण।

विदूषक—भूख से रोती हुई यह राजकुमारी इस स्नानोपकरण को लेकर क्या करेगी? जाओ जल्दी से भोजन ले आओ। मैं उसमें से पहले थोड़ा पा लूँगा।

नलिनिका—अभागा ब्राह्मण, यहाँ भी भोजन की ही सोचता है। छोड़ो इन

पविट्ठो। [ दुर्ब्राह्मण। एतदपि भोजनं चिन्तयसि। सर्वं तावद् तिष्ठतु। कथं दिवसेऽनेकपुरुषसम्पाते राजमार्गे भर्तृदारकः प्रविष्टः ]

अविमारकः—सर्वं भवत्यै सन्तुष्टः कथयिष्यति।

नलिनिका—विसज्जिदम्हि इमिणा बहुमाणवअणेण। भोदु, इमं गह्णिअ चउस्सालं एविसिअ गोट्ठीजणेण सह वुत्तन्तं सुणामि। एहि बम्हण! (इत्याकर्षति।) [ विसर्जितास्म्यनेन बहुमानवचनेन। भवतु, इमं गृहीत्वा चतुःशालं प्रविश्य गोष्ठीजनेन सह वृत्तान्तं शृणोमि। एहि ब्राह्मण!। ]

विदूषकः—अब्बम्हण्णं अब्बम्हण्णं। [ अब्रह्मण्यमब्रह्मण्यम्। ]

कुरङ्गी—हस्सो खु अअं बम्हणो। [ हास्यः खल्वयं ब्राह्मणः। ]

अविमारकः—वयस्य। हास्यः खलु भवान्।

विदूषकः—को एत्थ मम असद्धेअं भणादि। अहं ण हस्सो, तत्त-होदी एव हस्सा। जा अत्तणो अवत्थं जाणिअ किं पि कत्तुं ववसिअ

---

ब्राह्मणादिरप्राशनीयः। अनेकपुरुषसम्पाते—बहुजनसङ्कुले राजभवने। भर्तृदारकः—राजकुमारोऽविमारकः। विसर्जिता—अन्यत्र गन्तुमाज्ञप्ता। बहुमानवचनेन—आदरवाक्येन। गोष्ठीजनेन—सखीवर्गेण, वृत्तान्तम्—राजकुमारस्य कन्यापुरप्रवेशवृत्तम्॥

हास्यः—उपहासास्पदम्।

---

सारी बातों को। दिन में जब राजमार्ग पर बहुत से पुरुष वर्त्तमान थे, राजकुमार ने किस प्रकार यहाँ प्रवेश किया?

अविमारक—खुश होने पर यह सन्तुष्ट सारी बातें तुम्हें बता देगा।

नलिनिका—इन आदर पूर्ण शब्दों से यह मुझे यहाँ से टरका देना चाहते हैं, अस्तु। इसे लेकर चतुःशाल में जाती हूँ और वहाँ बैठ कर सखियों के साथ सारी बातें सुनूंगी। आओ ब्राह्मण देवता।

विदूषक—अनर्थ हो गया, अनर्थ हो गया!

कुरङ्गी—यह ब्राह्मण बड़ा हँसोड़ है।

अविमारक—मित्र, क्या तुम हँसोड़ हो?

विदूषक—कौन मेरे बारे में ऐसी बात कहता है? मैं नहीं, कुरङ्गी ही हँसोड़

मेहसद्दं सुणिअ सव्वं विसुमरिअ पडिदा। [ कोऽत्र ममाश्रद्धेयं भणति। अहं न हास्यः, तत्रभवत्येव हास्या। यात्मनोऽवस्थां ज्ञात्वा किमपि कर्तुं व्यवस्य मेघशब्दं श्रुत्वा सर्वं विस्मृत्य पतिता। ]

कुरङ्गी—हं एदं पि इमेहि दिट्ठं। [ हम् एतदप्याभ्यां दृष्टम्। ]

नलिनिका—याचेमि अहं। इदो एहि बम्हण! [ याचेऽहम्। इत एहि ब्राह्मण!। ]

विदूषकः—जइ भोअणं देसि, तदो गच्छामि अहं। इट्ठं आअन्तुअस्स भोअणदाणं। [ यदि भोजनं ददासि, ततो गच्छाम्यहम्। इष्टमागन्तुकस्य भोजनदानम्। ]

नलिनिका—एहि मे सव्वाभरणं देमि। [ एहि मे सर्वाभरणं ददामि। ]

विदूषकः—णहि घिदवअणेण पित्तं णस्सदि। मम हत्थगदं करेहि। [ नहि घृतवचनेन पित्तं नश्यति। मम हस्तगतं कुरु। ]

---

अश्रद्धेयम्—अविश्वास्यम्। अवस्थाम्—वियोगदशाम्। किमपि कर्तुं व्यवस्य—उद्बन्धनादिना प्राणत्यागादिरूपं, किमपि कर्तुं निश्चित्य।

एतदपि—इदमपि मया प्रच्छन्नभावेन कर्तुमिष्यमाणम्।

याचे—प्रार्थये।

आगन्तुकस्य—अतिथेः।

मे सर्वाभरणं ददामि—ममशरीरे वर्तमानं सकलमप्याभरणं तुभ्यं ददामि।

नहि घृतवचनेन पित्तं नश्यति—घृतशब्दस्योच्चारणमात्रेण पित्तं न नश्यति किन्तु घृतस्योपभोगेनैव पित्तं नश्यति, तद्वत् भूषणं दास्यामीति कथनेन मम न

---

है। कहाँ तो वह अपनी वियोगावस्था से ऊब कर कुछ करने जा रही थी, मेघ शब्द सुना और सब कुछ भूल कर गिर पड़ी।

कुरङ्गी—क्या यह भी इन लोगों ने देख लिया?

नलिनिका—मैं प्रार्थना करती हूँ, ब्राह्मण देवता, आप इधर चलिये।

विदूषक—यदि भोजन दो तो मैं चलूँ। अतिथि को भोजन देना चाहिये ही।

नलिनिका—आइये, मैं अपने सारे गहने देती हूँ।

विदूषक—घी का नाम लेने से पित्त नहीं शान्त होता है। मेरे हाथ में दो।

नलिनिका—एवं होदु । ( आभरणान्यवमुच्य ददाति ) [ एवं भवतु । ]

विदूषकः—सुणादि होदी । [ शृणोतु भवती । ]

नलिनिका—मूढ ! बम्हण ! चउस्साले उवविसिअ गोट्ठीजणेण सह सुणामि । [ मूढ ! ब्राह्मण ! चतुःशाल उपविश्य गोष्ठीजनेन सह शृणोमि । ]

विदूषकः—तत्तहोदीं पुच्छिअ आअच्छामि । [ तत्रभवतीं पृष्ट्वा-गच्छामि । ]

नलिनिका—को तुवं, मम सव्वाभरणं गहिअ वल्लहो जादो । एहि दाव । ( विदूषकं हस्ते गृह्णाति । ) [ कस्त्वं, मम सर्वाभरणं गृहीत्वा वल्लभो जातः । एहि तावत् । ]

विदूषकः—भोदि ! मा मा एवं । अदिसुउमारो खु अहं । [ भवति ! मा मैवम् । अतिसुकुमारः खल्वहम् । ]

नलिनिका—जाणामि जाणामि दे सुउमारत्तणं। जइ सुउमारो, सिग्घं एहि । [ जानामि जानामि ते सुकुमारत्वम् । यदि सुकुमारः, शीघ्रमेहि । ]

---

किमपि फलं किन्तु त्वया भूषणे दत्त एव मम तृप्तिः । उन्मुच्य—शरीरादवतार्य ।

वल्लभो जातः—प्रियः संवृत्तः ।

सुकुमारः—कोमलतनुः ।

---

नलिनिका—यही हो । ( गहने उतार कर देती है )

विदूषक—सुनिये ।

नलिनिका—मूर्ख ब्राह्मण, चतुःशाल में बैठ कर सखियों के साथ सुनूंगी ।

विदूषक—राजकुमारी से पूछ कर आऊंगा ।

नलिनिका—तुम कौन होते हो पूछने वाले, मेरे सारे गहने लेकर मालिक बन गये हैं, आओ इधर ।

( विदूषक का हाथ पकड़ती है )

विदूषक—अजी, इस तरह मत खींचो, मैं बड़ा सुकुमार हूँ ।

नलिनिका—मैं तुम्हारी सुकुमारता को जानती हूँ । सुकुमार हो तो शीघ्र आओ ।

विदूषकः—भोदि ! अअं आअच्छामि । [ भवति ! अयमागच्छामि । ]

( निष्क्रान्तौ । )

अविमारकः—प्रिये ! पश्य पश्य परमदर्शनीयान् प्रावृट्कालवल्लभान् कालमेघान् । इमे हि,

**जलदसमयघोषणाडम्बरानेकरूपक्रियाजम्भका वज्रभृद्गृष्टयो**
**भगणयवनिकास्तडित्पन्नगीवासवल्मीकभूता नभोमार्गरूढक्षुपाः ।**
**मदनशरनिशानशैलाः प्ररुष्टाङ्गनासन्धिपाला गिरिस्नापनाम्भोघटाः**

---

परमदर्शनीयान्—अतिरमणीयान् । प्रावृट्कालवल्लभान्—वर्षाकाले प्रियान् द्रष्टुं योग्यानित्यर्थः । कालमेघान्—श्यामलान् जलदान् ।

**जलदसमयेति**—जलदसमयो वर्षाकालस्तस्य घोषणायाः वर्षाकालः समागत इति कथायाः साधिकारायाः सूचनाया य डम्बरः आडम्बरस्तत्र या अनेकरूपाः क्रियाः नानाविधानि कर्तव्यानि तासां जम्भकाः प्रवर्त्तयितारः, अमी मेघा दृश्यमानाः सन्तो वर्षाकालः समागत इति घोषणामिव कुर्वन्तीति तत्क्रियाप्रवर्त्तकत्वेनात्र रूपिताः । वज्रभृद्गृष्टयः—इन्द्रस्य गावः सद्यः पयःप्रदानादिमे मेघा गाव इति रूपिताः, भगणयवनिकाः नक्षत्रसमूहस्यावरणकराः, तडित् विद्युदेव पन्नगी सर्पिणी तस्या वासे निवासे वल्मीकभूताः वामलूरक्षेत्रसमाः, नभोमार्गे आकाशवर्त्मनि रूढा उत्पन्नाः क्षुपाः क्षुद्रवृक्षाः, मदनशराणां कामवाणानां निशाने तीक्ष्णीकरणे शैलाः शिलाराशिभूताः, प्ररुष्टानां कुपितानाम् अङ्गनानां सन्धिपालाः प्रियैः सह सन्धिविधायिनः, गिरीणां पर्वतानां स्नापने सेचनेऽम्भोघटाः पानीयकलशाः,

---

विदूषक—भद्रे, अभी आ रहा हूँ ।

अविमारक—प्रिये, देखो इन परम दर्शनीय, वर्षाऋतु के प्यारे काले बादलों को,

यह काले मेघ ऐसे लगते हैं मानो वर्षा समय के आने की घोषणा करने वाले हों, इन्द्र की धेनु गायें हों, ग्रह नक्षत्र के छिपने के लिये पर्दे हों, बिजली रूप सर्पिणी के निवास स्थान स्वरूप वल्मीक हों, आकाशमार्ग में पैदा होने वाले क्षुद्र वृक्ष हों, काम के बाणों को पिजाने के लिये पत्थर हों, क्रुद्धवनिताओं का पतियों के साथ सन्धि करवाने वाले हों, पर्वत के सेचन के लिये जल-पूर्ण घट हों,

उदधिसलिलभैक्षहारा रवीन्द्वर्गला देवयन्त्रप्रपा भान्ति नीलाम्बुदाः ॥६॥

कुरङ्गी—अय्यउत्त ! दस्सणीआ दाणिं संवुत्ता । [ आर्यपुत्र ! दर्शनीया इदानीं संवृत्ताः । ]

अविमारकः—अहो विपुलता विरलता धाराणाम् । तथाहि,

व्योमार्णवोर्मिसदृशा निनदन्ति मेघा
मेघप्ररोहसदृशाः प्रपतन्ति धाराः ।
रक्षोङ्गनाभ्रुकुटिवत् तडितः स्फुरन्ति
प्राप्तोऽग्रयौवनघनस्तनमर्दकालः ॥ ७ ॥

---

उदधेः सागरात् सलिलभैक्षहाराः पानीयभिक्षाग्राहिणः, रवेः सूर्यस्येन्दोश्चन्द्रमसश्च अर्गलाः पिधानसाधनभूताः, देवानां यन्त्रप्रपाः देवैः प्रवर्त्तिता यन्त्रचालिताः पानीयशालाः अमी नीलाम्बुदाः कालमेघा विभान्तीत्यर्थः । अत्र-श्लोके मेघोऽनेकधा रूपितः, अतएव मालारूपकमलङ्कारः । दण्डकभेदो वृत्तम् ॥ ६ ॥

दर्शनीया इदानीं संवृत्ताः—त्वयि मिलिते सत्येवेमे मेघा रमणीयाः प्रतिभान्ति, कामोपभोगस्य संभवित्वात् , प्राक् त्वद्विरहे त्विमे व्यथकत्वेनारमणीया एवाभासन्तेत्यर्थः ॥ विपुलता विरलता—क्षणेऽधिकता क्षणे न्यूनता चेत्यर्थः । ]

व्योमार्णवेति—मेघाः जलदाः व्योमार्णवोर्मिसदृशाः आकाशसागरे तरङ्गा इव निनदन्ति शब्दायन्ते, यथा सागरस्य तरङ्गाः प्रचुरं नदन्ति तथैवामी मेघाः शब्दायन्ते इत्याशयः । मेघप्ररोहसदृशाः मेघाख्यस्य तरोः प्ररोहाः इव धाराः वर्षासाराः निपतन्ति । तडितः विद्युतः रक्षोऽङ्गनानाम् राक्षसस्त्रीणां भ्रुकुटिवत् कटाक्षनिक्षेपसमाः स्फुरन्ति चलन्ति, तदयम् अग्रयौवनस्य यौवनप्रारम्भस्य

---

समुद्र से जल की भिक्षा माँगने वाले हों, रवि तथा चन्द्रमा को छिपाने वाले कपाट हों या देवों द्वारा प्रवर्त्तित यन्त्र-चालित पनशालायें हों ॥ ६ ॥

कुरङ्गी—आर्यपुत्र, अब यह मेघ देखने योग्य लग रहे हैं ।

अविमारक—अहा, कभी कम कभी अधिक पड़ती हुई यह वर्षा कितनी भली लगती है, आकाशरूप सागर की तरङ्गों के समान यह मेघ गरज रहे हैं, मेघ के

कुरङ्गी—अय्यउत्त ! आरद्धो सम्पदि वरिसिदुं देवो। [ आर्यपुत्र ! आरब्धः सम्प्रति वर्षितुं देवः । ]

अविमारकः—प्रिये ! एहि अभ्यन्तरमेव प्रविशावः ।

कुरङ्गी—( सहर्षम् ) जं अय्यउत्तो आणवेदि। [ यद् आर्यपुत्र आज्ञापयति । ]

( निष्क्रान्तौ । )

पञ्चमोऽङ्कः ।

---

घनो निविडः स्तनमर्दः कुचोपगूहनं तस्य कालः तदुचितः समयः प्राप्तः आयातः, कामसुखोपभोगोपयुक्तोऽवसर उपस्थितः इत्यर्थः ॥ ७ ॥

देवो वर्षितुमारब्धः—प्रारब्धा वृष्टिर्मेघैरित्यर्थः ।

अभ्यन्तरम्—गृहमध्यम् ।

इति श्रीरामचन्द्रमिश्रकृतेऽविमारक 'प्रकाशे' 'पञ्चमाङ्क-प्रकाशः' ।

---

प्ररोह के समान यह जल-धारायें गिर रही हैं, राक्षस स्त्रियों की भ्रुकुटि के समान बिजली चमक रही है, प्रौढ़ यौवन के स्तन-मर्दन का काल आ गया है ॥ ७ ॥

कुरङ्गी—आर्यपुत्र, अब मेघ बरसने लगे ।

अविमारक—प्रिये, आओ भीतर चलें ।

कुरङ्गी—( सहर्ष ) आर्यपुत्र की जो आज्ञा ।

( दोनों का प्रस्थान )

पञ्चम अङ्क समाप्त

## षष्ठोऽङ्कः

( ततः प्रविशति धात्री । )

धात्री—अहो अणवत्था किदन्तस्स, जं राअदारिआ पढमं महाराएण सोवीरराएण तं विहृणुसेणं उद्दिसिअ वरिदा। अज्ज अविदिअसम्भवेण माणुसलोअदुल्लभाकिदिगुणविसेसेण केण वि संओओ जादो। अहअ दाणि कासिराअपुत्तो जअवम्मा णाम भट्टिणीए सुदस्सणाए सह अमच्चेण भूदिएण आणीदो सम्पदि राअउलं पविट्ठो। सअं किल कासिराओ जण्णवावारेण ण आअदो। किणु खु एदं भविस्सदि। [ अहो अनवस्था कृतान्तस्य, यद् राजदारिका प्रथमं महाराजेन सौवीरराजेन तं विष्णुसेनमुद्दिश्य वृता। अद्याविदितसम्भवेन मानुषलोकदुर्लभाकृतिगुणविशेषेण केनापि संयोगो जातः। अथ चेदानीं काशिराजपुत्रो जयवर्मा नाम भट्टिन्या सुदर्शनया सहामात्येन भूतिकेनानीतः संप्रति राजकुलं प्रविष्टः। स्वयं किल काशिराजो यज्ञव्यापारेण नागतः। किन्नु खल्वेतद् भविष्यति। ]

---

अनवस्था—अस्थिरत्वम्। कृतान्तस्य—भाग्यस्य। वृता—याचिता, विष्णुसेननामकेन स्वपुत्रेण सह विवाहाय प्रार्थिता। अविदितसम्भवेन—अज्ञातपरिचयेन। मानुषलोकदुर्लभाकृतिगुणविशेषेण—आकृत्या गुणैश्च मानुषलोके स्थितेन केनापि तुलयितुमशक्येन। आकृत्या गुणैश्च मनुष्येभ्यः श्रेष्ठतमेन। केनापि संयोगो जातः—राजपुत्र्याः प्रणयो बद्धः। यज्ञव्यापारेण—यज्ञव्यापृतत्वेन। किन्तु

---

छठा अङ्क

( धात्री का प्रवेश )

धात्री—भाग्य कितना चञ्चल होता है। राजदारिका का विवाह महाराज ने सौवीर राजपुत्र विष्णुसेन के साथ स्थिर किया था। आज अज्ञातकुल तथा अतिमानुप गुण वाले किसी युवक के साथ संयोग हुआ। अब भूतिक अपने साथ काशिराजपुत्र जयवर्मा को उसकी माता सुदर्शना के साथ ले आये हैं। स्वयं काशिराज यज्ञ में लगे रहने के कारण नहीं आसके। इसमें क्या होगा, कहा नहीं जा सकता है।

( ततः प्रविशति वसुमित्रा । )

वसुमित्रा—अहो विसमसीला संवच्छरिआ णाम अत्तणो णक्खत्तविसेसं एव्व चिन्तअन्ति, कम्मगोरवं ण जाणन्ति। अज्ज पविट्ठो कुमारो, अज्ज एव विवाहो णिउत्तो। ( परिक्रम्य ) किण्णु खु जअदा इअं किं वि चिन्तअन्ती अप्पसण्णा विअ उस्सुआ दीसइ। जअदे! भट्टिणी भणादि—आअच्छेहि त्ति। [ अहो विषमशीलाः सांवत्सरिका नामात्मनो नक्षत्रविशेषमेव चिन्तयन्ति, कर्मगौरवं न जानन्ति। अद्य प्रविष्टः कुमारोऽद्यैव विवाहो नियुक्तः। किं नु खलु जयदेयं किमपि चिन्तयन्त्यप्रसन्नेवोत्सुका दृश्यते। जयदे! भट्टिनी भणति-आगच्छेति। ]

धात्री—हला! जाणासि किं णिमित्तं त्ति। [ हला! जानासि किं निमित्तमिति। ]

वसुमित्रा—किं अण्णं, एदस्सिं कय्ये कत्तव्वं चिन्तेदुं। [ किमन्यत्,

खल्वेतद् भविष्यति—अस्मिन् त्रिसंशये किं करिष्यति, सौवीरराजेन स्वपुत्रार्थं वृता कुरङ्गी, मध्ये तस्याः प्रणयः केनाप्यज्ञातवंशेन सुभगेन युवकेन सह वर्द्धितः, ततश्च परतः काशिराजपुत्रो जयवर्मा मात्रा सह भूतिकेन कुरङ्गीं परिणेतुमानीतः। तदियं महती अप्रतिपत्तिकरी त्रिसंशया स्थितिः, अत्र किं भविष्यतीति न ज्ञायते। विषमशीलाः—दुष्टस्वभावाः। सांवत्सरिकाः—ज्यौतिषशास्त्रज्ञाः। नक्षत्रविशेषम्—ग्रहस्थितिम्। कर्मगौरवम्—कार्यस्य महत्त्वम्। प्रविष्टः—अत्र नगरे समागतः। नियुक्तः—निर्धारितः, विवाहस्वरूपे महत्त्वशालिनि कार्ये इयत्या त्वरया समयनिर्धारणं तेषां कर्ममहत्त्वानभिज्ञतां गमयति। प्रसन्ना—खिन्ना।

( वसुमित्रा का प्रवेश )

वसुमित्रा—ज्यौतिषी लोग भी बड़े विचित्र होते हैं, वह अपने नक्षत्र की ही चिन्ता करते हैं कार्य के महत्त्व की चिन्ता नहीं रखते। आज ही कुमार आये और आज ही विवाह का लग्न स्थिर कर दिया। क्यों यह जयदा कुछ सोचती हुई अप्रसन्न सी दीख रही है, जयदे, महारानी की आज्ञा है कि आओ।

धात्री—सखी, जानती हो कि क्यों बुला रही हैं महारानी जयदा को।

वसुमित्रा—और क्या, इसी सम्बन्ध में कर्त्तव्य-निर्णय करने के लिये बुलाती होंगी।

एतस्मिन् कार्ये कर्तव्यं चिन्तयितुम् । ]

धात्री—सम्पदि भट्टिणीए को अभिप्पाओ । [ संप्रति भट्टिन्याः कोऽभिप्रायः । ]

वसुमित्रा—अत्तणो वंसजादस्स विहुसेणस्स अवत्थं अजाणिअ णेच्छदि जअवम्मणो दारिअं दादुं । किन्तु महाराओ सोवीररा अउत्तं अजाणन्तो अज्ज किल अहिअसन्दावो जादो । [ आत्मनो वंशजातस्य विष्णुसेनस्यावस्थामज्ञात्वा नेच्छति जयवर्मणे दारिकां दातुम् । किन्तु महाराजः सौवीरराजपुत्रमजानन्नद्य किलाधिकसन्तापो जातः । ]

( प्रविश्य )

नलिनिका—अज्ज किदसङ्केदा विअ अम्हाअं सव्वसङ्कडा । ( परिक्रम्यावलोक्य ) किण्णु हु एसा मम मादा वसुमित्ताए सह किं वि चिन्तेदि । इमं उपसप्पिअ असुहवुत्तन्तं सुणामि । [ अद्य कृतसंकेतानीवास्माकं सर्वसंकटानि । किं नु खल्वेषा मम माता वसुमित्रया सह किमपि चिन्तयति । इमामुपसर्प्याशुभवृत्तान्तं शृणोमि । ]

---

भट्टिन्याः कोऽभिप्रायः—राज्ञी किमिच्छति, राज्ञी कस्मै स्वां कन्यां दित्सतीति प्रश्नाशयः । आत्मनो वंशजातस्य—स्ववंशे लब्धजन्मनः । अवस्थामज्ञात्वा-कस्यां स्थितौ वर्तते विष्णुसेन इति यथार्थतोऽविज्ञाय । दारिकाम्—स्वसुताम् । सौवीरराजपुत्रम्—विष्णुसेनम् अजानन्—कुत्र गत इति ज्ञातुमशक्नुवन् । अधिकसन्तापः—अतिखिन्नः । कृतसङ्केतानि—आगन्तुं कृतनिश्चयानि । सर्वसङ्कटानि—सर्वा

---

धात्री—इस समय महारानी की क्या इच्छा है ?

वसुमित्रा—अपने वंश में उत्पन्न विष्णुसेन की स्थिति को बिना जाने वह नहीं चाहती हैं जयवर्मा के हाथ में अपनी कन्या को देना । महाराज को जब विष्णुसेन की कोई खबर नहीं मिली तो उनका क्लेश बढ़ गया ।

( प्रवेश करके )

नलिनिका—आज हमारे सारे सङ्कट आ रहे हैं । ( चलकर-देखकर ) क्यों, यह हमारी माता वसुमित्रा के साथ कुछ सोच रही हैं, उसके पास जाकर कुछ अशुभ समाचार जानूं ।

वसुमित्रा—हला णलिणिए। एहि दाव। तुमं कञ्चुइसहवासेण राअउलवुत्तन्तं जाणासि। [ हला नलिनिके ! एहि तावत्। त्वं कञ्चुकिसहवासेन राजकुलवृत्तान्तं जानासि। ]

नलिनिका—अभिणवो वुत्तन्तो। णं तं णिवेदिउं आअदम्हि। [ अभिनवो वृत्तान्तः। ननु तं निवेदयितुमागतास्मि। ]

वसुमित्रा—भणाहि जादे !। [ भण जाते !। ]

नलिनिका—पेसिदो खु सोवीरराअस्स अमच्चेहि दूदो—अम्हाअं सामी तुम्हाणं णअरे सपुत्तकलत्तो पच्छण्णो पडिवसदि त्ति अम्हाअं गूढपुरुसेहि वुत्तन्तो जाणिअदु सामिणेत्ति। [ प्रेषितः खलु सौवीरराजस्यामात्यैर्दूतः—अस्माकं स्वामी युष्माकं नगरे सपुत्र-कलत्रः प्रच्छन्नः प्रतिवसतीत्यस्माकं गूढपुरुषैर्वृत्तान्तो ज्ञायतां स्वामिनेति। ]

उभे—कहं पच्छण्णवेसो वत्तदित्ति। तदो तदो। [ कथं प्रच्छन्नवेषो वर्तत इति। ततस्ततः। ]

---

आपदः। इमामुपसर्प्य—अस्याः समीपं गत्वा। असुखवृत्तान्तम्—कष्टप्रदं समाचारम्।

कञ्चुकिसहवासेन—कञ्चुकिना सह निवासेन।

अस्माकं स्वामी—सौवीरराजः। सपुत्रकलत्रः—पुत्रेण स्त्रिया च सहितः। प्रच्छन्नः—आत्मानं गोपयन्। गूढपुरुषैः—गुप्तचरैः।

प्रच्छन्नवेषः—गुप्तरूपः।

---

वसुमित्रा—आओ नलिनिका, कञ्चुकी के साथ रहने से तुम राजकुमार की बातें जानती होगी।

नलिनिका—बड़ी नई खबर है। वही तो कहने आयी हूँ।

वसुमित्रा—बताओ बेटी।

नलिनिका—सौवीरराज के मन्त्रियों ने महाराज के पास दूत भेजा है, कहलाया है कि हमारे स्वामी स्त्री-पुत्र के साथ छिपकर आपके नगर में रहते हैं, हमारे गुप्तचरों ने पता लगाया है, आप भी जान लें।

दोनों—क्यों, छिपकर रहते हैं। इसके बाद।

नलिनिका—तदो एवं सव्वं सुणिअ तस्स लेहस्स अवसाणं पेक्खिअ अय्यभूदिएण सह गओ किल महाराओ तं अण्णेसिदुं। [ तत् एतत् सर्वं श्रुत्वा तस्य लेखस्यावसानं प्रेक्ष्यार्यभूतिकेन सह गतः किल महाराजस्त मन्वेषितुम्। ]

धात्री—किण्णु खु भवे। [ किन्नु खलु भवेत्। ]

वसुमित्रा—णलिणिए !। तुवं दाव अब्भन्तरं पविस। [ नलिनिके ! त्वं तावदभ्यंतरं प्रविश। ]

नलिनिका—जं अय्या भणादि। ( निष्क्रान्ता ) [ यदार्या भणति। ]

वसुमित्रा—एहि दाव वअं भट्टिणीं पेक्खामो। [ एहि तावत्। आवां भट्टिनीं पश्यावः। ]

धात्री—एवं करेम्ह। [ एवं कुर्वः। ]

( निष्क्रान्ते। )

प्रवेशकः

( ततः प्रविशति कुन्तिभोजः सौवीरराजभूतिकाभ्याम् )।

कुन्तिभोजः—वयस्य !

**किं प्रेक्षसे मम मुखं चिरकालदृष्टो**

---

तस्य लेखस्य—अमात्यैर्लिखितस्य पत्रस्य। अवसानम्—अन्तिमांशम्। तम्—सौवीरराजम्। अन्वेषितुम्—गवेषयितुम्।

**किं प्रेक्षस इति**—हे सखे प्रिय मित्र, चिरकालदृष्टः बहोः कालात् परतो

---

नलिनिका—इसके बाद सारी बातें सुनकर तथा पत्र का अन्तिम अंश देखकर महाराज भूतिक के साथ उन्हें ढूँढ़ने गये हैं।

धात्री—देखें, क्या बात है।

वसुमित्रा—नलिनिका, तुम अन्दर चलो।

नलिनिका—आपकी जो आज्ञा। ( जाती है )

वसुमित्रा—चलो हमलोग महारानी के पास चलें।

धात्री—हाँ यही करती हैं॥ ( प्रस्थान )

प्रवेशक।

( कुन्तिभोज, भूतिक और सौवीरराज का प्रवेश )

कुन्तिभोज- बहुत दिनों पर दर्शन हुए हैं, मेरा मुँह क्या देख रहो ? आओ

गाढं परिष्वज सखे ! स्मर बालभावम् ।
प्रीत्या भवन्तमनिमेषमवेक्षितुं मे
स्नेहान्नवीकृत इवाद्य वयस्यभावः ॥ १ ॥

सौवीरराजः—यदिष्टं भवतः ।

( उभौ परिष्वजेते )

कुन्तिभोजः—

चिन्ताकुलत्वं व्रजतीव बुद्धि-
र्वाक्यं च बाष्पाहतगद्गदं च ।

---

मया साक्षात् कृतः त्वं किम् कुतो मम मुखं प्रेक्षसे पश्यसि, ( माम् ) गाढं परिष्वज दृढमालिङ्ग, बालभावम् बाल्यावस्थाम् ( तत्काले कृतामनेकविधां प्रणयपूरितां कार्यावलिम् ) स्मर ध्याने नय । अनिमेषं निर्निमेषभावेन प्रीत्या सस्नेहं भवन्तमवेक्षितुं द्रष्टुम् स्नेहात् प्रणयोद्रेकवशात् वयस्यभावः मित्रत्वम् नवीकृतः नूतनतामिव प्रापितः, अस्तीति शेषः । हे सखे, बहुकालानन्तरं दृशोरग्रे समायातो भवान् किमिति मूढवन्मम मुखं पश्यसि, सरभसमेहि, दृढं परिष्वजस्व । बाल्ये यः प्रणयोऽस्माभिः संवर्धितस्तं स्मर, भवन्तमनिमिषन्त्यादृशा वीक्षितुमिवाद्य मम वयस्यभावः स्नेहोद्रेकवशान्नूतनमामिव प्रपन्न इत्यर्थः । वसन्ततिलकं वृत्तम् ॥१॥

यदिष्टं भवतः—यथात्वमिच्छसि तथैव भवत्वित्यर्थः ।

परिष्वजेते—अन्योन्यमालिङ्गतः ।

चिन्ताकुलत्वमिति—( तव ) बुद्धिः चिन्ताकुलत्वं व्रजतीव चिन्तया व्यग्रेव प्रतिभाति, वाक्यं त्वयोच्यमानं वचनं च बाष्पाहतगद्गदम् साश्रु अस्पष्टाक्षरञ्च, नेत्रे त्वदीये नयने सबाष्पे अश्रुपूर्णे, मुखम् अप्रसन्नम् खिन्नम्,

---

मुझसे लिपट जाओ, लड़कपन की याद करो । स्नेह से आपको देखने ही के लिए मेरा मित्रत्व आज नवीनता को धारण कर रहा है ॥ १ ॥

सौवीरराज—आप की जैसी इच्छा । ( दोनों परस्पर आलिङ्गन करते हैं )

कुन्तिभोज—आपकी बुद्धि चिन्ताकुल हो रही है, वचन बाष्प से गद्गद हो

नेत्रे सवाष्पे मुखमप्रसन्नं
किं हर्षकाले क्रियते विकारः ॥ २ ॥

सौवीरराजः—न खल्वहमप्रहृष्टो भवत्सङ्गमेन। किन्तु बलवान् पुत्रस्नेहो नाम।

यो मे पुत्रगतः शोको हृदयस्थो विजृम्भते।
सोऽद्य लब्ध्वा सहायं त्वां बाष्परूपेण निर्गतः ॥ ३ ॥

कुन्तिभोजः—कथं पुत्रगतः शोक इति।

---

तदयम् हर्षकाले मित्रमिलनरूपप्रमोदावसरे उपस्थिते विकारः मनःखेदः किं किमर्थं क्रियते। तव मतिश्चिन्ताकुला वाक्यं बाष्पगद्गदम्, नयने साश्रुणी, मुखं खिन्नं तदयं हर्षकाले कुतो विकार उदित इति भावः ॥ २ ॥

अप्रहृष्टः—अनानन्दी, भवत्संगमेन ममानन्दो जात एव, परं कारणान्तरेणाहं खिन्नवत्प्रतीये इत्यर्थः। पुत्रस्नेहः—पुत्रप्रेम। (यः कारणान्तरोत्पन्नमानन्दमप्यभिभवति)।

**यो मे पुत्रगत इति**—यः मे पुत्रगतः पुत्रव्यापत्तिनिमित्तः हृदयस्थः मनसि स्थितः शोको विजृम्भते अनुक्षणं वर्धमान इव तिष्ठति, सः मे पुत्रशोकः अद्य सम्प्रति त्वां सहायं साहाय्यकरं सुहृदम् लब्ध्वा प्राप्य बाष्परूपेण अश्रुभावेन निर्गतः। चिरान्मनसि वर्त्तमानो मम पुत्रशोको भवति दृष्टेऽश्रुप्रवाहरूपेण प्रकटतां यात इत्यर्थः। उक्तश्चायमर्थो भवभूतिना—'स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥' ३ ॥

कथं पुत्रगतः शोकः—पुत्रस्य किं जातम्?

---

रहे हैं, आँखों में आँसू भरा है, मुख अप्रसन्न है, हर्ष काल में यह सब विकार क्यों हो रहे हैं ॥ २ ॥

सौवीरराज—आप से मिलकर मैं अप्रसन्न नहीं हूँ, किन्तु पुत्रस्नेह बड़ा बलवान है।

जो मेरा पुत्र शोक हृदय में बढ़ता रहा है, वह आज आपके सदृश मित्र को पाकर बाष्प के रूप में उमड़ पड़ा है ॥ ३ ॥

कुन्तिभोज—क्यों, पुत्रशोक की क्या बात?

भूतिकः—विदितमस्तु स्वामिना। न दृश्यते किलास्मिन् संवत्सरे कुमारः।

सौवीरराजः—बलवान् पुत्रस्नेहो नाम। पश्यतु भवान्

अनुपमबलवीर्यरूपवन्तं
सुतमविमारकमद्य चिन्तयामि।
तव चरणरजोञ्चिताग्रकेशो
यदि स भवेदिह को नु मद्विशिष्टः॥ ४॥

भूतिकः—( आत्मगतम् ) महान् खल्वयं सन्तापो वर्धत एव हि कुमारमन्तरेण। विलोपयाम्येनम्। ( प्रकाशम् ) कथं स्वामिनोऽभ्यागता व्यापत्।

---

संवत्सरे कुमारः—अस्मिन् वर्षे कुत्रापि कुमारस्य दर्शनं न जायते,

अनुपमेति—अनुपमबलवीर्यरूपवन्तम् अप्रतिमशक्तिसौन्दर्यशालिनम् अविमारकं नाम सुतम् आत्मनः पुत्रम् अद्य एषु दिनेषु चिन्तयामि क्व गतो मे पुत्र इति भावयामि। यदि सः मम पुत्रोऽविमारकः तव चरणरजसा त्वदीयपादपरागेण अञ्चितः पूजितः अग्रकेशो यस्य तादृशः त्वदीये चरणयुगे प्रणम्य तद्रजसा स्वकचाग्रभागं धूसरयन् स्यात् तदा इह अत्र भुवने को नु मद्विशिष्टः मदपेक्षयोत्कृष्टः भवेत्, सर्वतोऽधिकमुत्कर्षं प्राप्तोऽहं स्यामित्यर्थः॥ ४॥

अयं सन्तापः—पुत्रशोकः। विलोपयामि—शोकप्रसङ्गमिमं कथान्तरेण तिरोदधामि।

---

भूतिक—महाराज को विदित हो कि वर्ष भर से कुमार नहीं मिल रहे हैं।

सौवीरराज—पुत्रस्नेह बड़ा बलवान् होता है।

आज मैं अनुपम बलवीर्य-शाली पुत्र अविमारक की चिन्ता कर रहा हूँ। अगर वह आज आपके चरणों में झुक कर आपके चरण रज से अपने केश को युक्त करता, तो मुझ से बड़ा भाग्यवान् कौन होता॥ ४॥

भूतिक—( स्वगत ) कुमार के बिना इनका यह सन्ताप बढ़ता ही जाता है। बात को दूसरी ओर ले जाता हूँ। ( प्रकट ) श्रीमान् पर यह आपत्ति आई कैसे ?

कुन्तिभोजः—अहमप्यनेन व्याक्षेपेण विस्मृतवानेतत् प्रष्टुम् ।

सौवीरराजः—श्रूयताम् । अथवा भूतिकस्तु विजानाति । अप्यस्मन्मुखाच्छ्रोतुमिच्छति ।

कुन्तिभोजः—वयमवहिताः स्मः ।

सौवीरराजः—अपि ज्ञायते चण्डभार्गवो नामात्यन्तरोपी ब्रह्मर्षिः ।

कुन्तिभोजः—श्रूयते तत्रभवांस्तपोनिधिः ।

सौवीरराजः—सोऽस्मद्विषयमभ्यागतः । कान्तारे तस्य शिष्यो व्याघ्रेणाभिभूय मारितः ।

कुन्तिभोजः—ततस्ततः ।

सौवीरराजः—ततोऽहमपि तस्मिन् काले मृगयावशात् यदृच्छयैव तं देशमभ्युपगतः ।

---

व्याक्षेपेण—खेदेन । एतत्—एतादृशशोककारणम् ।

अप्यस्मन्मुखाच्छ्रोतुमिच्छति—मयैवोच्यमानमाकर्णयितुमिच्छति किम् ?

अत्यन्तरोपी—अतिकोपनः । ब्रह्मर्षिः—ब्राह्मणवंशजो मुनिः ।

तत्र भवान्—पूजनीयः । तपोनिधिः—तपसां राशिः ।

अस्मद्विषयम्—मम प्रदेशम् । कान्तारे—वने । अभिभूय—आक्रम्य ।

मृगयावशात्—आखेटकारणात् । यदृच्छयैव—अचिन्तितरूपेणैव ।

---

कुन्तिभोज—मैं भी इसी सन्ताप के कारण यह पूछना भूल गया था ।

सौवीरराज—सुनिये, अथवा भूतिक को सब ज्ञात है, क्या आप मेरे मुख से सुनना चाहते हैं ?

कुन्तिभोज—हम सावधान हैं ।

सौवीरराज—क्या आप चण्डभार्गव नामक अति क्रोधी ब्रह्मर्षि को जानते हैं ।

कुन्तिभोज—हाँ, मैंने उन्हें सुना है ।

सौवीरराज—एक बार वह हमारे देश में आये, जङ्गल में उनके शिष्य को व्याघ्र ने मार दिया ।

कुन्तिभोज—इसके बाद ?

सौवीरराज—संयोग वश शिकार खेलता हुआ मैं भी वहाँ पहुँच गया ।

कुन्तिभोजः—ततस्ततः ।

सौवीरराजः—अथ मां दृष्ट्वा विजृम्भमाणरोषभ्रुकुटीपुटविषमीकृतवदनः प्रलम्बजटाभारः शिष्ये स न्यस्तकरः क्रुद्धो दहन्निव क्रोधाग्निना मद्वचनमश्रोतुकामः संरम्भस्खलितवचनो मां बहुधा क्षेप्तुमारब्धः ।

कुन्तिभोजः—ततस्ततः ।

सौवीरराजः—ततोऽहमपि भवितव्यस्यार्थस्य प्राबल्येनाधृतिः 'वृत्तान्तं न ब्रवीषि, निष्कारणं क्षिपसि' इति संक्रुद्धवानस्मि ।

न भाषसे वृत्तमुपैषि रोषं
निष्कारणं प्रक्षिपसि प्रकामम् ।
अभाजनं त्वं तपसां प्रकोपाद्

---

**विजृम्भमाणेति**—विजृम्भमाणः वर्धमानः रोषः कोपो यस्मिन् तादृशेन भ्रुकुटीपुटेन भ्रुकुट्या विषमीकृतं निम्नोन्नततां गमितं वदनं यस्य तथोक्तः । प्रलम्बजटाभारः—लम्बमानसटः । शिष्ये न्यस्तकरः—शिष्योपरि हस्तं धारयन्, संरम्भस्खलितवचनः—कोपत्रुट्यद्वचनः । क्षेप्तुम्—आक्रोष्टुम् ।

भवितव्यस्यार्थस्य प्राबल्येन—भवितव्यताया दुर्वारतया । अधृतिः—च्युतधैर्यः । अकारणं क्षिपसि—विनैव कारणमाक्रोशसि । संक्रुद्धवान्—कुपितः ।

**न भाषस इति**—वृत्तम् वृत्तान्तम् न भाषसे न कथयसि, रोषमुपैषि कोपं धारयसि, निष्कारणम् विनैव कारणम् प्रकामम् प्रचुरं क्षिपसि आक्रोशसि । प्रको·

---

कुन्तीभोज—तब ?

सौवीरराज—मुझे देखते ही उनका कोप बढ़ने लगा, भवें तन गयीं, मुँह विषम हो गया, जटायें फैल गईं, शिष्य के शरीर पर हाथ रखकर क्रोधाग्नि से मुझे दग्ध करने लगे, मेरी बातें नहीं सुनीं, कोप से उनकी बातें लटपटा रही थीं, उन्होंने मुझे बहुत फटकारा ।

कुन्तिभोज—तब ?

सौवीरराज—भावी के प्रबल होने के कारण मैं भी अधीर हो गया—कहा कि कुछ बात बताते हैं नहीं, बिना कारण फटकार रहे हैं ।

आप बात कुछ बताते हैं नहीं, बिना कारण फटकारते चले जा रहे हैं । इस

ब्रह्मर्षिरूपेण भवाञ्छ्वपाकः ॥ ५ ॥

कुन्तिभोजः—असदृशमुक्तं भवता ।

सौवीरराजः—ततस्तच्छ्रुत्वैवाज्यधारावसिक्तो भगवान् हुताशन इव प्रज्वलितनेत्रो बहुशः शिरः कम्पयन् 'कथं कथम्' इत्युक्त्वा मां शप्तुमारब्धवान् ।

यस्माद् ब्रह्मर्षिमुख्योऽहं श्वपाक इति भाषितः ।
तस्मात् सपुत्रदारस्त्वं श्वपाकत्वमवाप्स्यसि ॥ ६ ॥

इति ।

कुन्तिभोजः—अहो अल्पमूलत्वं महतां चानर्थस्य ।

---

पात् अतिरोपात् कारणात् त्वम् तपसाम् अभाजनम् अपात्रम् तपश्चर्यानधिकृत इत्यर्थः, भवान् ब्रह्मर्षिरूपेण श्वपाकः चण्डालः असीति शेषः ॥ ५ ॥

असदृशम्—वक्तुमयोग्यम् ॥

आज्यधारावसिक्तः—घृतधारया प्रोक्षितः, हुताशनः—अग्निः । प्रज्वलितनेत्रः—कोपरक्तनयनः ।

**यस्मादिति**—यस्मात् कारणात् त्वया ब्रह्मर्षिमुख्यः ब्रह्मर्षिगणप्रधानभूतः अहं चण्डभार्गवः श्वपाक इति भाषितः चण्डालोऽसीत्युक्तः, तस्मादेव कारणात् सपुत्रदारः स्त्रीपुत्रसमन्वितः त्वम् श्वपाकत्वम् चाण्डालभावम् अवाप्स्यसि प्राप्तो भविष्यसि ॥ ६ ॥

अल्पमूलत्वम्—साधारणकारणोत्पन्नत्वम् ।

---

कोप के कारण आप तपस्या के पात्र नहीं हैं, आप ब्रह्मर्षि के रूप में चाण्डाल हैं ॥

कुन्तिभोज—आपने अनुचित कहा ।

सौवीरराज—इतना सुनते ही वह जल उठे जैसे घी की धार पड़ने से अग्निदेव । उनकी आँखें प्रज्वलित हो उठीं, उन्होंने बार-बार सिर हिलाया, क्यों ? क्या कहा ? इतना कह कर शाप देना प्रारम्भ किया ।

'मुझ महर्षि को तुमने श्वपाक कह दिया, अतः अपनी स्त्री तथा पुत्र के साथ तुम चाण्डाल हो जाओ' ॥ ६ ॥

कुन्तिभोज—इस महान् अनर्थ की जड़ बहुत कम है ।

भूतिकः—सभाग्यं सौवीरराजकुलम् । कुतः,

ब्रह्मर्षिणा प्रदुष्टेन श्वपाकत्वं तदा कृतम् ।
तस्मात् तेनैव रूपेण न सर्वं भस्मसात् कृतम् ॥ ७ ॥

कुन्तिभोजः— युक्तमभिहितं भवता । ततस्ततः ।

सौवीरराजः—ततस्तच्छापप्रक्षुब्धमनसा मया सुचिरमनुनीयमानः शनैः शनैः प्रकृतिस्थो भूत्वानुग्रहं कृतवान्—

तावत् प्रच्छन्नरूपेण यावत् संवत्सरं व्रजेः ।
ततः संवत्सरे पूर्णे मुक्तशापो भविष्यसि ॥ ८ ॥

---

सभाग्यम्—भाग्यशालि । श्वपाकभावमात्रशापादेव निवृत्तश्चण्डभार्गव इति मन्ये भाग्योदयं सौवीरराजकुलस्यान्यथा स कोपनो मुनिस्तत्कुलं भस्मसादपि कर्तुं क्षमते, तदा त्वतीवदौर्भाग्यं प्रकटीभवेदित्यर्थः ।

ब्रह्मर्षिणेति—तदा तस्मिन् समये प्रदुष्टेन कुपितेन ब्रह्मर्षिणा चण्डभार्गवेण श्वपाकत्वं कृतम् चाण्डालभावमात्रं शप्त्वा निवृत्तम्, तस्मात् तत एव कोपात् तेनैव रूपेण सर्वं सौवीरराजकुलं न भस्मसात्कृतम् दग्धम् । अतः सभाग्यं सौवीर-राजकुलमिति युक्तमुक्तमित्यर्थः ॥ ७ ॥

तच्छापप्रक्षुब्धमनसा—तदीयशापक्षुब्धहृदयेन । अनुनीयमानः—प्रसाद्यमानः ।

प्रकृतिस्थः—प्राप्तनिजरूपः । अनुग्रहम्—कृपाम् ।

**तावदिति**—तावत् प्रच्छन्नरूपेण क्वचिद् गुप्तरूपेण यावत् संवत्सरं वर्षं यावत् व्रजेः गच्छेः, वर्षं यावत्क्वचित् स्थाने गुप्तरूपेण तिष्ठेत्यर्थः । ततः वर्षात्

---

भूतिक—सौवीर राजकुल बड़ा भाग्यवान् है, क्योंकि:—

जिस कोप के कारण ब्रह्मर्षि ने श्वपाक होने का शाप दिया, उसी कोप के कारण सारे वंश को भस्म नहीं कर दिया ॥ ७ ॥

कुन्तिभोज—आप ठीक कहते हैं । तब ?

सौवीरराज—शाप सुनकर मैं क्षुब्ध हो गया, मैंने बड़ी अनुनय विनय की, धीरे-धीरे वह प्रकृतिस्थ हुए, कृपा करके कहा कि:—

श्वपाक के रूप में छिप कर किसी तरह वर्ष बिताओ, एकवर्ष पूर्ण हो जाने पर तुम्हारा शाप छूट जायगा ॥ ८ ॥

इति। एवमुक्त्वा प्रसन्नचित्तेन एहि भोः काश्यप! इत्याहूयत, स तमनुगतो व्याघ्रेण मारितो बटुः चरितं च मया संवत्सरं श्वपाकव्रतम्। अद्यास्मि शापान्मुक्तः।

कुन्तिभोजः—अहो व्यापदः प्रवृत्तिर्निवृत्तिश्च। दिष्ट्या भवान् वर्धते।

भूतिकः—जयतु स्वामी।

कुन्तिभोजः—ननु विष्णुसेनमाता सपरिवारमन्तःपुरं प्रविष्टा।

भूतिकः—तत्रभवती प्रविश्याभ्यन्तरं चिरकालप्रसुप्तं प्रणयमुद्बोधयति।

कुन्तिभोजः—अथेदानीं विष्णुसेनः कथमविमारको जातः।

---

परतः संवत्सरे पूर्णे व्यतीते सति मुक्तशापो भविष्यसि निवृत्ताभिशापो भविष्यसीत्यर्थः ॥ ८ ॥

प्रसन्नचित्तेन—सन्तुष्टेन हृदयेन। आहूयत—आकारितः स्वशिष्यः काश्यप इत्यर्थः। तमनुगतः—तत्पश्चाच्चलितः—यं बटुं व्याघ्रो मारितवान् स तदाह्वानमात्रेण शयितप्रतिबुद्ध इवोत्थाय तमनु जगामेत्यर्थः॥

व्यापदः—आपत्तेः। प्रवृत्तिः—आगमः, निवृत्तिः—अवसानम्।

चिरकालप्रसुप्तम्—बहुकालं यावत् अप्राप्तप्रीतिव्यवहारम्। प्रणयम्—स्नेहम्। उद्बोधयति—जागरयति।

विष्णुसेनः कथमविमारको जातः—विष्णुसेनसंज्ञया प्रथितस्य कथमविमारक

---

मुझे ऐसा कहकर उन्होंने व्याघ्र द्वारा मारे गये उस विद्यार्थी को प्रसन्न मन से पुकारा, कहा—आओ काश्यप, और वह लड़का उनके पीछे चल पड़ा। मैंने वर्ष पूराकर लिया है, आज मैं शापमुक्त हो गया हूँ।

कुन्तिभोज—आप पर आपत्ति आई और गई, आपके बड़े भाग्य हैं।

भूतिक—जय हो महाराज की।

कुन्तिभोज—क्या विष्णुसेन की माता अपने दल के साथ अन्तःपुर गयीं।

भूतिक—वह अन्तःपुर में जाकर चिरसुप्त प्रणय को जागृत कर रही हैं।

कुन्तिभोज—अच्छा यह तो बताइये-विष्णुसेन कैसे अविमारक बन गया?

भूतिकः—शृणोतु स्वामी—अस्ति धूमकेतुर्नामासुरः। सर्वलोकमारणाय परिभ्रमन् स कदाचित् सौवीरराष्ट्रमुत्सादयितुं प्रवृत्तः।

कुन्तिभोजः—अपूर्वा खलु कथा। ततस्ततः।

भूतिकः—ततः स्वदेशे सर्वप्रजानामार्तिं दृष्ट्वा तस्य राक्षसस्य च प्रतिक्रियामनवेक्षमाणः स्वामी क्लेशमुपगतः।

कुन्तिभोजः—ततस्ततः।

भूतिकः—ततस्तत् सर्वं बुद्ध्वा कुमारो विष्णुसेनः क्षितिरेणुपरुषगात्रः प्रलम्बमानकाकपक्षः शिशुभिस्तुल्यवयोभिः प्रक्रीडमानो दैवयोगात् प्रमत्तेषु रक्षिपुरुषेषु सहसैव तं देशमभ्युपगतो यत्रासौ राक्षसः।

कुन्तिभोजः—अहो आश्चर्यमाश्चर्यम्। ततस्ततः।

---

इति नामान्तरेण प्रसिद्धिः। उत्सादयितुम्—ध्वंसयितुम्।

अपूर्वा—अश्रुतपूर्वा, अद्भुता च।

आर्तिम्—पीडाम्। प्रतिक्रियाम्—निवारणोपायम्। अनवेक्षमाणः—अपश्यन्। क्षितिरेणुपरुषगात्रः—धूलिधूसराङ्गः। प्रलम्बमानकाकपक्षः—वर्द्धमानकचराशिः। तुल्यवयोभिः—अवस्थया समानैः। प्रमत्तेषु—असावधानेषु। रक्षिपुरुषेषु—रक्षाऽधिकृतेषु भृत्येषु।

---

भूतिक—सुनिये महाराज, धूमकेतु नाम का एक असुर है। सब लोगों को मारने के लिये घूमता हुआ वह एक समय सौवीर राष्ट्र को समाप्त करने लगा।

कुन्तिभोज—बड़ी अपूर्व कथा है। तब?

भूतिक—इसके बाद अपने देश की प्रजा की पीड़ा देख कर उपाय के नहीं होने से सौवीरराज क्लेश में पड़ गये।

कुन्तिभोज—तब?

भूतिक—सारी बातें सुनकर कुमार विष्णुसेन भाग्यवश रक्षिपुरुषों की आँखें बचा कर वहाँ पहुँच गये जहाँ वह राक्षस था, उसकी देह में धूल लगी थी, उसके बाल लटक रहे थे, और उसके साथ उसी उम्र के कुछ लड़के थे।

कुन्तिभोज—आश्चर्य, तब क्या हुआ?

भूतिकः—ततः स राक्षसः प्रीत्या सुसम्पन्नमिवाहारं कुमारमभिसमीक्ष्य स्वकर्म कर्तुमारब्धः।

कुन्तिभोजः—अहो नृशंसता राक्षसस्य। ततस्ततः।

भूतिकः—अथ कुमारेण किञ्चित् प्रहस्य,

प्रपतदशनिना यथा गिरीन्द्रो
दवदहनेन यथा वनप्रदेशः।
युधि ललितमनायुधेन तेन
क्षितिपसुतेन तदा हतः स नीचः॥ ९॥

कुन्तिभोजः—प्रथममेव हस्तिसम्भ्रमे मयोक्तं—दैवादुत्पादितोऽयं केवलो मानुषो न भवतीति।

---

सुसम्पन्नम्—स्वादु प्रीतितृप्तिकरम्। स्वकर्म—मारणीयमम्।

नृशंसता—क्रूरता।

**प्रपतदशनिनेति**—प्रपतदशनिना पतता वज्रेण यथा गिरीन्द्रः पर्वतः (हन्यते) दवदहनेन दावाग्निना यथा वनप्रदेशः अरण्यम् (हन्यते विनाश्यते) तथा तदा तेन अनायुधेन अशस्त्रेण क्षितिपसुतेन राजपुत्रेण स नीचः जघन्यकर्मा राक्षसः हतः मारितः। यथा पतन्नशनिः पर्वतं नाशयति, यथा वा दावाग्निर्वनं क्षपयति तथैवाशस्त्रोऽप्यसौ कुमारस्तं क्रूरकर्माणं राक्षसं निहतवानिति भावः॥ ९॥

दैवादुत्पादितः—भाग्यवशाद् गृहीतजन्मा। केवलो मानुषः—साधारण-

---

भूतिक—विष्णुसेन के आने पर उस राक्षस ने सुसम्पन्न आहार आया जान अपना कार्य प्रारम्भ किया।

कुन्तिभोज—आश्चर्य जनक है राक्षस की क्रूरता? तब क्या हुआ?

भूतिक—इसके बाद कुमार ने हँसकर—

जैसे गिरते हुए वज्र से पर्वत और दावाग्नि से वन-प्रदेश नष्ट होता है उसी तरह बिना किसी शस्त्र के खेलते-खेलते उस नीच राक्षस को राजकुमार ने मार डाला॥ ९॥

कुन्तिभोज—पहले ही हस्तिद्वारा किये गये उपद्रव के दिन मैंने कहा था कि यह युवक साधारण मनुष्य नहीं है।

सौवीरराजः—भवान् सहस्रनेत्रश्चरैः कथं चिन्तयत्यविमारकं प्रति ।

भूतिकः—स्वामिन् !

गम्यास्तु देशाः सुपरीक्षिता मे
न दृश्यते क्वापि चरैः कुमारः ।
परीक्षितुं तं मनसोऽस्ति शक्ति
र्नूनं हि मायामनुगच्छतीति ॥ १० ॥

( ततः प्रविशति नारदः )

नारदः—

वेदैः पितामहमहं परितोषयामि
गीतैः करोमि हरिमुद्गतरोमहर्षम् ।

---

मनुष्यः । चरैः सहस्र नेत्रः—गुप्तचरैः सर्वतोद्रष्टा, यथा सहस्रनेत्रः सर्वा दिशः पश्यति तथा चरैः सर्वा दिशः पश्यन्नित्यर्थः ।

गम्यास्तु देशा इति—गम्याः गन्तुं शक्याः देशाः भूखण्डानि मया सुपरीक्षिताः साधु गवेषिताः, तेषु गम्येषु देशेषु क्वापि कुत्रापि कुमारो न दृश्यते नावलोक्यते, नूनं निश्चयेन तं परीक्षितुं गवेषयितुं मनसः शक्तिरस्ति मनसैवासौ गवेषयित्वा प्राप्तव्यः नतु चक्षुषेत्यर्थः, यतोऽसौ मायाम् कामपि तिरस्करिणीं विद्यामनुगच्छतीति, यतोऽसौ कामपि मायामाश्रयति अतो नासौ चक्षुषा द्रष्टुं शक्योऽपि तु तस्य मनसैव प्राप्तिः संभविनीति तात्पर्यम् ॥ १० ॥

वेदैः पितामहमिति—अहं नारदः वेदैः वेदाध्ययनैः पितामहं स्वपितरं ब्रह्माणं परितोषयामि प्रसन्नं करोमि, गीतैः हरिं विष्णुम् उद्गतरोमहर्षं समुचित-

---

सौवीरराज—आप गुप्तचरों के द्वारा सहस्र नेत्र हैं आप अविमारक के संबन्ध में क्या सोचते हैं ।

भूतिक—जहाँ तक जाया जा सकता है, मैंने वहाँ तक अच्छी तरह खोज करवाली है, कहीं भी गुप्तचरों ने कुमार को नहीं पाया, उन्हें अब मन ही खोज सकता है, निश्चय ही इन दिनों वह माया का आश्रय ले रहे हैं ॥ १० ॥

( नारद का प्रवेश )

नारद—मैं वेदों के अध्ययन से अपने पिता ब्रह्मा को प्रसन्न और गीत से

उत्पादयाम्यहरहर्विविधैरुपायै-
स्तन्त्रीषु च स्वरगणान् कलहांश्च लोके ॥ ११ ॥

भोः! कुन्तिभोजस्य पित्रा दुर्योधनेन वयं सुचिरमाराधिताः! तस्मिन् मानुषस्वभावमुपगते कुन्तिभोजश्चास्मासु भृत्यत्वमाचरति। अद्य कुन्तिभोजस्य सौवीरराजस्य च महानविमारकादर्शनेन कार्यसङ्कटो वर्तते। तदिदानीमहमविमारकप्रदर्शनेन तयोर्व्याक्षेपं समाक्षिपामीत्यवतीर्णोऽस्मि भूम्याम् (इति कुन्तिभोजसौवीरराजयोः पुरतः स्थितः।)

कुन्तिभोजः—अये भगवान् देवर्षिर्नारदः। भगवन्! अभिवादये।

नारदः—स्वस्ति भवते।

---

रोमाञ्चं करोमि। अहरहः प्रतिदिनं विविधैरुपायैः नानाविधाभिः क्रियाभिः तन्त्रीषु वीणायन्त्रेषु स्वरगणान् निषादादिस्वरभेदान् लोके कलहांश्च विवादांश्च उत्पादयामि। मदीयेन वेदाध्ययनेन मम पिता ब्रह्मा प्रसीदति, मदीयैर्गीतैश्च हरिस्सञ्जातरोमहर्षो भवति, अहन्यहनि चाहं वीणया नानाविधं स्वरं लोकेषु परस्परं विवादञ्च समुत्पादयामि, सोऽहं नारदोऽस्मीति भावः ॥ ११ ॥

सुचिरम्—बहुकालं यावत्। आराधिताः—पूजया सत्कृताः। मानुषस्वभावम्—मृत्युम्।

कार्यसङ्कटः—कर्त्तव्यव्याक्षेपः कार्यहानिरिति यावत्। व्याक्षेपम्—सङ्कटम्। समाक्षिपामि—समापयामि। अवतीर्णः—आगतः।

---

विष्णु को रोमाञ्चित किया करता हूँ, प्रतिदिन नाना उपायों द्वारा वीणा से स्वर तथा लोक में कलह उत्पन्न किया करता हूँ ॥ ११ ॥

कुन्तिभोज के पिता दुर्योधन ने चिरकाल तक हमारी आराधना की थी। उसके मर जाने पर कुन्तिभोज हमारे सेवक बने हुए हैं। इन दिनों अविमारक के गुम हो जाने से कुन्तिभोज तथा सौवीरराज पर बड़ा सङ्कट आया हुआ है। अतः मैं अविमारक का प्रत्यक्ष कराके कुन्तिभोज की तथा सौवीरराज की विपत्ति दूर करूँ, इसीलिये पृथ्वी पर उतरा हूँ।

(कुन्तिभोज तथा सौवीरराज के सामने उपस्थित होते हैं)

कुन्तिभोज—अहा भगवान् नारद आये हैं। भगवन्, प्रणाम।

नारद—आपका कल्याण हो।

कुन्तिभोजः—अनुगृहीतोऽस्मि ।

सौवीरराजः—भगवन् ! अभिवादये ।

नारदः—शान्तिरस्तु ते ।

सौवीरराजः—अनुगृहीतोऽस्मि ।

कुन्तिभोजः—( कर्णे ) भूतिक ! एवं क्रियताम् ।

भूतिकः—यदाज्ञापयति स्वामी । ( निष्क्रम्य प्रविश्य ) इदमर्घ्यं पाद्यं च ।

कुन्तिभोजः—भगवन् ! क्रियतामनुग्रहः ।

नारदः—एवमस्तु ।

कुन्तिभोजः—( अभ्यर्च्य ) भगवन् ! अस्मद्गृहं परिपूतं भवदवतरणेन ।

सौवीरराजः—इदानीं मुक्तशापोऽस्मि देवर्षिदर्शनेन ।

नारदः—नाहं साम्प्रतं युष्मद्दर्शनार्थमेवागतोऽत्र । अविमारकादर्शनेन सम्भूतं दुःखं भवतोर्ज्ञात्वावतीर्णोऽस्मि ।

---

परिपूतम्—पवित्रं कृतम् ।

युष्मद्दर्शनार्थमेव—केवलं भवद्भ्यो दर्शनं दातुम् । संभूतम्—जातम् ।

---

कुन्तिभोज—यह आपका अनुग्रह है ।

सौवीरराज—भगवन्, प्रणाम ।

नारद—आपको शान्ति प्राप्त हो ।

सौवीरराज—यह आपका अनुग्रह है ।

कुन्तिभोज—( कान में ) भूतिक, यह सब किया जाय ।

भूतिक—महाराज की जैसी आज्ञा । ( बाहर जाकर, फिर लौटकर ) यह अर्घ्य तथा पाद्य उपस्थित है ।

कुन्तिभोज—भगवन्, कृपया अर्घ्य तथा पाद्य को स्वीकार करें ।

नारद—एवमस्तु ।

कुन्तिभोज—( पूजा करके ) आपके शुभागमन से मेरा घर पवित्र हो गया ।

सौवीरराज—देवर्षि के दर्शन से अब मेरा शाप समाप्त हो गया ।

नारद—मैं इस समय केवल आप लोगों के दर्शनार्थ नहीं आया हूँ, अविमारक के अदर्शन से उत्पन्न आप दोनों के कष्ट को जान कर आया हूँ ।

उभौ— यद्येवं, विमुक्तसन्तापौ स्वः।

नारदः—भूतिक ! सुदर्शनामानय।

भूतिकः—यदाज्ञापयति भगवान्। ( निष्क्रम्य सुदर्शनया सार्धं प्रविष्टः )

सुदर्शना—अब्भाअदो देवरिसी। [ अभ्यागतो देवर्षिः ]।

भूतिकः—एवम्।

सुदर्शना—सणाहो दाणि मे पुत्तअस्स विवाहो संवुत्तो। ( उपगम्य ) भअवं वन्दामि। [ सनाथ इदानीं मे पुत्रकस्य विवाहः संवृत्तः। भगवन् ! वन्दे। ]

नारदः—

एवमेव महाभागे ! नित्यं प्रीतिमवाप्नुहि।
कुन्तिभोजश्च भूपालो नित्यं स्यात् प्रीतिपीडितः॥ १२॥

सुदर्शना—अणुग्गहीदम्हि। [ अनुगृहीतास्मि। ]

नारदः—इदानीं प्रष्टव्यं भवन्तौ प्रष्टव्यम्।

---

विमुक्तसन्तापौ—विगतक्लेशौ।

एवमेवेति—हे महाभागे सौभाग्यातिशयशालिनि, एवमेव इत्थमेव नित्यं सदा प्रीतिम् सुखम् अवाप्नुहि प्राप्नुहि, भूपालो राजा कुन्तिभोजश्च नित्यं सदा प्रीतिपीडितः सुखेन युक्तः स्यात् जायेत॥ १२॥

---

दोनों—यदि ऐसी बात है तब तो हमारे सारे सन्ताप दूर हो गये।

नारद—भूतिक, सुदर्शना को बुला लाओ।

भूतिक—आप की जैसी आज्ञा। ( जाकर पुनः सुदर्शना के साथ प्रवेश )

सुदर्शना—देवर्षि नारद पधारे हैं ?

भूतिक—हाँ।

सुदर्शना—अब हमारे पुत्र का विवाह सनाथ हो गया। ( समीप जाकर ) भगवन्, प्रणाम।

नारद—हे सौभाग्यशालिनि, इसी तरह सदा तुम्हारी प्रसन्नता बढ़ती रहे, और राजा कुन्तिभोज भी सदा प्रसन्नता से पूर्ण हों॥ १२॥

सुदर्शना—यह आपका अनुग्रह है।

नारद—अब आप लोगों को जो पूछना हो, पूछिये।

उभौ—अनुगृहीतौ स्वः।

कुन्तिभोजः—भगवन्! किं जीवति सौवीरराजपुत्रः।

नारदः—बाढम्।

सौवीरराजः—केन कारणेन न दृश्यते।

नारदः—विवाहव्याक्षेपात्।

सौवीरराजः—कथं निर्विष्टः कुमारः?।

कुन्तिभोजः—अथ कस्मिन् प्रदेशे।

नारदः—नगरे वैरन्त्ये।

कुन्तिभोजः—वैरन्त्यं नाम नगरमप्यस्तीति। भवतु कस्य जामातृत्वमुपगतः।

नारदः—कुन्तिभोजस्य।

---

विवाहव्याक्षेपात्—विवाहे समासक्तत्वात्।

निर्विष्टः—गृहस्थतां प्रविष्टः कृतविवाह इत्यर्थः।

वैरन्त्यं नाम नगरमप्यस्ति—इदमेकं मम नगरं वैरन्त्यम् अन्यदपि वैरन्त्यं नाम नगरं जगत्यस्तीति तदाश्चर्यम्। भवतु-आस्तां वैरन्त्यं नाम नगरम्।

---

दोनों—यह आपकी कृपा है।

कुन्तिभोज—क्या सौवीरराज का पुत्र अविमारक जीवित है।

नारद—अवश्य।

सौवीरराज—फिर दीखता क्यों नहीं है।

नारद—विवाह में आसक्त है।

सौवीरराज—क्यों, कुमार ने विवाह कर लिया?

कुन्तिभोज—कहाँ विवाह किया?

नारद—वैरन्त्य नगर में।

कुन्तिभोज—वैरन्त्य नामक कोई दूसरा भी नगर है। अच्छा, किसका दामाद बना।

नारद—कुन्तिभोज का।

कुन्तिभोजः—कः सः।

नारदः—

पिता कुरङ्गया भूपालो वैरन्त्यनगरेश्वरः।
दुर्योधनस्य तनयः कुन्तिभोजो भवान् ननु ॥ १३ ॥

कुन्तिभोजः—किं बहुभिः प्रश्नैः। मत्सुतायां कुरङ्ग्यां निर्विष्ट इत्युच्यते भगवता।

नारदः—एवमेतत्।

कुन्तिभोजः—लज्जित इवास्मि। केन दत्ता, कथं वा, कथं चायं प्रविष्टः कन्यापुरम्।

नारदः—

दत्ता सा विधिना पूर्वं दृष्टा सा गजसम्भ्रमे।

---

कः सः—कोऽयमपरः कुन्तिभोजनामा वैरन्त्यनगरेश्वरः।

**पिता कुरङ्ग्या इति**—कुरङ्गयाः पिता जनकः, भूपालो राजा वैरन्त्यनगरेश्वरः वैरन्त्याख्यनगरस्य शासिता, दुर्योधनस्य तनयो भवान् कुन्तिभोजो ननु मया कुन्तिभोजपदेनाभिलपितो नान्यः कुन्तिभोज इति स्पष्टार्थः ॥ १३ ॥

विर्निष्टः—विवाहपूर्वकमासक्तः।

**दत्ता सेति**—सा कुरङ्गी पूर्वं सर्वप्रथमं विधिना ब्रह्मणा अविमारकाय दत्ता,

---

कुन्तिभोज—वह कौन है?

नारद—कुरङ्गी के पिता, वैरन्त्य नगर के स्वामी, दुर्योधन के पुत्र आप ही वह कुन्तिभोज हैं ॥ १३ ॥

कुन्तिभोज—अधिक क्या पूछूँ, आपके कहने का अर्थ है कि अविमारक का सम्बन्ध हमारी कन्या से है।

नारद—हाँ, यही बात है।

कुन्तिभोज—मैं लज्जित हो रहा हूँ, किसने दिया, कैसे दिया, कैसे वह कन्यापुर में प्रवेश कर सका?

नारद—ब्रह्मा ने पहले ही कुरङ्गी का दान अविमारक को दिया था, हस्तिकृत

पूर्वं पौरुषमाश्रित्य प्रविष्टो मायया पुनः ॥ १४ ॥

कुन्तिभोजः—भवत्वेवं तावन्निष्प्रतिवचनमृषिवचनम् । भगवन्! इदानीं किं प्राप्तकालं कुमारस्य कुरङ्ग्याश्च । विवाहः पूर्वमारब्धव्यः।

नारदः—निष्ठितो विवाहो ननु गान्धर्वः स्वसमय एव इदानीम्

कुन्तिभोजः—अग्निसाक्षिकमिच्छामि ।

नारदः—नित्यमग्निः सादयेव । तथापि स्वजनपरितोषणार्थमभ्यन्तर-समयमात्रमुपाध्यायेन कारयित्वा शीघ्रमानीयतामिह कुमारः सह भार्यया ।

कुन्तिभोजः—भगवन्! एष गच्छामि ।

---

सा कुरङ्गी अविमारकेण गजसंभ्रमे हस्तिकृतोपद्रवकाले दृष्टा साक्षात्कृता, पूर्वं प्रथमवारम् पौरुषमाश्रित्य अविमारकः कन्यापुरं प्रविष्टः पुनः द्वितीयवारञ्च मायया विद्याधरदत्ताङ्गुलीयकप्रभावतः प्रविष्टः, तदित्थं सर्वमपि कुन्तिभोजस्य सन्देहजातमुत्तरितं बोध्यम् ॥ १४ ॥

निष्प्रतिवचनम्—अनुत्तरणीयम् । प्राप्तकालं–कर्त्तुमुचितम् ।

निष्ठितः—सम्पन्नः ।

अग्निसाक्षिकम्—वह्निं साक्षिणं कृत्वा क्रियमाणम् ।

स्वजनपरितोषणार्थम्—आत्मीयजनानां सन्तोषमुत्पादयितुम् ।

अभ्यन्तरसमयमात्रम्—अन्तःपुरकरणीयमाचारमात्रम् । उपाध्यायेन–गुरुणा पुरोहितेन ।

---

उपद्रव के दिन उसे देखा, पहली बार तो पराक्रम से उसने कन्यापुर में प्रवेश किया था, इस बार माया से प्रवेश किया है ॥ १४ ॥

कुन्तिभोज—इसप्रकार यह ऋषिवचन अनुत्तरणीय है। महाराज, इस समय कुमार और कुरङ्गी को क्या करना उचित है, क्या विवाह किया जाय।

नारद—गान्धर्व विवाह अपने समय में पहले ही हो चुका है।

कुन्तिभोज—मैं अग्नि-साक्षिक विवाह चाहता हूँ।

नारद—अग्नि सदा साक्षी रहा है। तथापि आप अपने बान्धवों के सन्तोषार्थ पुरोहित द्वारा रीति-व्यवहार कराकर सस्त्रीक कुमार को शीघ्र यहाँ मँगवाइये।

कुन्तिभोज—भगवन्, अभी जा रहा हूँ।

नारदः—तिष्ठतु भवान्। भूतिक ! गच्छ त्वम्।

भूतिकः—यदाज्ञापयति भगवान्। ( निष्क्रान्तः। )

कुन्तिभोजः—भगवन् ! विज्ञाप्यमस्ति।

नारदः—इतस्तावत्। स्वैरमभिधीयताम्।

कुन्तिभोजः—भगवन् सुदर्शनायाः पुत्राय जयवर्मणे कुरङ्गीं दास्यामीति मयानीता सा पूर्वं सनाथा। किं कर्त्तव्यमिदानीम्, अभिधीयताम्।

नारदः—एवं करोमि। मुहूर्तमेकान्ते तिष्ठ।

कुन्तिभोजः—तथास्तु। ( तथा करोति। )

नारदः—सुदर्शने ! इतस्तावत्।

सुदर्शना—भअवं ! इअम्हि। [ भगवन् इयमस्मि। ]

नारदः—ननु श्रुतमस्मद्वचनम्।

सुदर्शना—सुदं सोवीरराअउत्तस्स गुणसङ्कीत्तणं। [ श्रुतं सौवीरराजपुत्रस्य गुणसङ्कीर्तनम्। ]

---

विज्ञाप्यम्—कथनीयम्।

सौवीरराजपुत्रस्य—विष्णुसेनस्य। गुणसङ्कीर्तनम्-गुणानां प्रशंसनम्।

---

नारद—आप ठहरिये, भूतिक, आप जाइये।

भूतिक—जो आज्ञा। ( जाता है )

कुन्तिभोज—भगवन्, कुछ निवेदन करना है।

नारद—मजे में कह सकते हैं।

कुन्तिभोज—महाराज, सुदर्शना के पुत्र जयवर्मा के साथ कुरङ्गी का विवाह होगा इस अभिप्राय से मैंने सपुत्रा सुदर्शना को बुलवा लिया था, अब उसका क्या होगा ? कृपया आदेश दें।

नारद—इस तरह करूँगा। आप कुछ देर के लिये एकान्त में बैठें।

कुन्तिभोज—जो आज्ञा। ( एकान्त में बैठता है )

नारद—सुदर्शने, इधर आओ।

सुदर्शना—महाराज, यही तो हूँ।

नारद—तुमने हमारी बातें सुनीं।

सुदर्शना—मैंने सौवीर-राजपुत्र का सारा गुणगान सुना है।

नारदः—मा मैवम्। भवत्या विस्मृतोऽग्निदेवादुत्पन्नोऽग्रजस्ते पुत्रः।

सुदर्शना—हं, एदं पि भअवं जाणादि। [हम्, एतदपि भगवान् जानाति।]

नारदः—ममैवमाज्ञां कुरुष्व तावत्।

सुदर्शना—एवं करोमि। भअवं भणादु। [एवं करोमि। भगवान् भणतु।]

नारदः—तवायं पुत्रोऽग्नेरुत्पन्नः। त्वद्भगिन्याः सुचेतनायाः प्रसवसमकाल एव तत्सुतः स्वर्गं गतः। तवायं पुत्रस्त्वद्भगिन्यै त्वया दत्तः। सौवीरराजश्चासावत्यन्तसन्तुष्टः प्रीतिसदृशीः क्रियाः कृत्वा विष्णुसेन इति संज्ञामकरोत्। अमानुषस्वरूपबलवीर्यपराक्रमेणानेन वर्धमानेन यस्माद्विरूपधारी मारितोऽसुरः, तस्माद्विमारक इति विष्णुसेनं लोको ब्रवीति। ततः सोऽपि ब्रह्मशापपरिभ्रष्टो हस्तिसम्भ्रमदिवसे कुरङ्गीं दृष्ट्वा समुत्प-

मामैवम्—विष्णुसेनः सौवीरराजस्य पुत्र इति मा भाषिष्ठाः, सहि वह्नेरुत्पन्नस्ते पुत्र इत्याशयः।

प्रसवसमकाले—पुत्रोत्पत्तिसमये। अमानुषस्वरूपबलवीर्यपराक्रमेण-स्वरूपे बले वीर्ये पराक्रमे च मानुषातिशायिना। अविरूपधारी-मेषरूपधरः।

ब्रह्मशापपरिभ्रष्टः—ब्रह्मर्पेर्वर्षं यावत् श्वपाकत्वमासादयेति शापेन गतप्रभावः। हस्तिसंभ्रमदिवसे-हस्तिकृतोपद्रवदिने। समुत्पन्नाभिलापः—सञ्जात-

नारद—ऐसी बात मत कहो। अग्निदेव से उत्पन्न अपने बड़े लड़के को तुमने भुला दिया है क्या?

सुदर्शना—हुं, आप यह भी जानते हैं।

नारद—मेरी आज्ञा मानो।

सुदर्शना—ऐसा ही करूँगी, आप आदेश दें।

नारद—अविमारक अग्निदेव से उत्पन्न तुम्हारा पुत्र है। तुम्हारी बहन सुचेतना का लड़का प्रसवकाल में ही मर गया था, तुमने अपना पुत्र उसे दे दिया। सौवीरराज को बड़ी खुशी हुई, उन्हों ने प्रेमपूर्वक सारे संस्कार किये और विष्णुसेन नाम रखा। अतिमानव रूप बलवीर्य शाली इस बालक ने अविरूपधारी असुर को मारा, अतः विष्णुसेन को लोग अविमारक कहा करते हैं।

ऽभिलाषः परेण पौरुषेण सङ्गम्य कुरङ्ग्या दर्शनशङ्कितैः कन्यापुररक्षिभिः परीक्ष्यमाणोऽग्निना भगवता प्रच्छादितो निर्गतः। तेन निर्वेदेनाग्निं प्रविष्टः पित्रा भगवताग्निना प्रीत्या परिष्वज्यमानो न दह्यत्यग्निरिति मरुत्प्रपातार्थं कञ्चित् पर्वतमारूढः।

सुदर्शना—अहो अच्चाहिदं। [ अहो अत्याहितम्। ]

नारदः—तत्र केनापि विद्याधरेण तद्रूपदर्शनमात्रप्रहृष्टेन प्रीत्यान्तर्धानकार्यमात्रमङ्गुलीयकं दत्तं, यद् दक्षिणाङ्गुल्या धारयन्नदृश्यो भवति, वामेन प्रकृतिस्थश्च।

सुदर्शना—अच्छरीअं अच्छरीअं। [ आश्चर्यमाश्चर्यम्। ]

नारदः—ततस्तद् दक्षिणाङ्गुल्या धारयन् सन्तुष्टनामधेयेन

---

स्नेहः। सङ्गम्य-कुरङ्ग्याः सङ्गं कृत्वा। दर्शनशङ्कितैः-किमिदं वह्निपरीतं यस्तु कन्यापुराद् वहिर्यातीतिभीतैः। तेन निर्वेदेन-कुरङ्गीवियोगजन्मना खेदेन। मरुत्प्रपातार्थम्-पर्वतशिखरात्पतित्वा प्राणान् परित्यक्तुम्।

अत्याहितम्—महद्भयमुपस्थितम्।

तद्रूपदर्शनमात्रप्रहृष्टेन--तदीयं सौन्दर्यं दृष्ट्वा प्रसन्नेन। अन्तर्धानकार्यमा-

---

बाद में महर्षि के शाप से जातिच्युत वह बालक हाथी द्वारा किये गये उपद्रव के दिन कुरङ्गी को देखकर उसके लिये सकाम हो गया। बड़ी बहादुरी से उसने उससे भेंट की। कन्यापुर के रक्षक उसके दर्शन से आतङ्कित हुए, अग्निदेव की सुरक्षा में वह कन्यापुर से निकल सका। कुरङ्गी के वियोग में उसने आग में जलकर मरने की ठानी, परन्तु अग्नि ने पुत्र-प्रेम से उसे गले लगा लिया, तब उसने पर्वत से गिरकर प्राण देने की इच्छा से पर्वत-शिखर पर आरोहण किया।

सुदर्शना—यह तो बड़ा अनर्थ हुआ।

नारद—उस समय किसी विद्याधर ने उसका रूप देख प्रसन्न होकर उसे एक अँगूठी दी जिसे दायें हाथ में रखे तो अदृश्य एवं बायें हाथ में रखे तो दृश्य हो सकता है।

सुदर्शना—आश्चर्य है आश्चर्य।

नारद—उसी अंगूठी को दायें हाथ में लेकर सन्तुष्ट नामक ब्राह्मण के साथ

ब्राह्मणेन सह कुन्तिभोजस्य कन्यापुरं स्वगृहवत् प्रविश्य कुरङ्ग्या यथेष्टमभिरममाणः सुखमास्ते। एष वृत्तान्तः। किमिदानीं कर्तव्यम्।

सुदर्शना—अणन्तरं अय्याए वञ्चिदाए चलदी विअ मे हिअअं, कोदूहलेण तुस्सदि। भअवं! एसु दिअसेसु कुरङ्गी जअवम्मणो भय्यत्ति पुच्छदि। अज्जप्पहुदि तस्स वन्दणीआ संवुत्ता। [ अनन्तरमार्यया वञ्चितया चलतीव मे हृदयं, कौतूहलेन तुष्यति। भगवन् एषु दिवसेषु कुरङ्गी जयवर्मणो भार्येति पृच्छयते। अद्य प्रभृति तस्य वन्दनीया संवृत्ता। ]

नारदः—अभिजनयुक्तमेवाभिहितं भवत्या। कथमिदानीं ज्येष्ठपत्नी कनीयसे दीयते। सुदर्शने अभिधीयतां काशिराजाय जयवर्मणः कुरङ्गी वयसाधिकेति। नन्वस्ति कुरङ्ग्याः कनीयसी सुमित्रा नाम। सा जयवर्मणो भार्या भविष्यति।

सुदर्शना—पडिग्गहिदं इसिवअणं। [ प्रतिगृहीतमृषिवचनम्। ]

---

ब्रम्-तिरस्करिणीसाधनम्। यथेष्टमभिरममाणः-सुखं विहरन्।

आर्यया वञ्चितया चलतीव मे हृदयम्-स्वपुत्रस्य जयवर्मणः कृते कुरङ्गीं प्रार्थयमानाऽहं स्वभगिनीं सुचेतनां वञ्चितवत्यस्मि, तद्विभेति ततो मम मानसम्।

अभिजनयुक्तम्—कुलोचितम्। ज्येष्ठस्य अविमारकस्य पत्नी कुरङ्गी कनीयसे जयवर्मणे कथं दीयते। काशिराजाय-स्वपतये। वयसाऽधिका-ज्येष्ठा।

---

वह कुन्तिभोज के कन्यापुर में अपने घर की तरह पैठ गया, इस समय कुरङ्गी के साथ सानन्द रहा करता है। यही समाचार है। अब क्या करना चाहिये।

सुदर्शना—इस बीच में मैंने अपनी बड़ी बहन को वञ्चित किया, अतः मेरा हृदय काँप रहा है। भगवन्, कुरङ्गी जयवर्मा की स्त्री मानी जाने लगी थी, अब वह उसकी प्रणम्य हो गई।

नारद—यह तो तुमने कुल के सदृश ही कहा। बड़े की स्त्री छोटे को कैसे दी जायेगी। काशिराज से कह देना कि कुरङ्गी जयवर्मा से बड़ी थी। कुरङ्गी की छोटी बहन सुमित्रा अब जयवर्मा की स्त्री होगी।

सुदर्शना—यह ऋषि-वचन स्वीकृत है।

नारदः—गच्छ कुन्तिभोजमनुवर्तस्व।

सुदर्शना—जं भअवं आणवेदि। [ यद् भगवानाज्ञापयति। ]

( ततः प्रविशति वरवेषेणाविमारकः कुरङ्गी भूतिकश्च )

अविमारकः—भोः ! लज्जित इवास्म्यनेन वृत्तान्तेन।

दृष्ट्वा तदानीं गजसम्भ्रमे मां
मद्विक्रमं ये परिकीर्तयन्ति।
ते किन्तु वृत्तान्तमिमं विदित्वा
चारित्रदोषं मयि पातयन्ति॥ १५॥

( परिक्रम्य दृष्ट्वा ) अये अयं खलु भगवान् नारदः। य एषः,

शापे प्रसादेषु च सक्तबुद्धि-

---

अनुवर्तस्व—तदादेशानुसारमाचर।

अनेन—मम कन्यापुरप्रवेशपूर्वकं कुरङ्गया सह स्नेहसम्बन्धस्थापनेन।

दृष्ट्वा तदानीमिति—तदानीं तस्मिन्समये गजसंभ्रमे हस्तिना क्रियमाणाया-मस्तव्यस्ततायाम् ये मद्विक्रमं परिकीर्तयन्ति स्तुतवन्तः, किम् ते मम प्रशंसकाः इमं वृत्तान्तं मम कन्यापुरप्रवेशादिवृत्तजातं विदित्वा ज्ञात्वा मयि चारित्रदोषं दुश्चरित्रतां पातयन्ति आरोपयन्ति। गजसम्भ्रमदिवसे ये मम प्रशंसकाः आसंस्त एव सम्प्रति मम निन्दका भवेयुरित्यस्ति लज्जास्थानमिति भावः॥ १५॥

शापे प्रसादेष्विति—शापे परस्मै शापप्रदाने प्रसादेषु अनुग्रहेषु च सक्त-

---

नारद—जाओ, कुन्तिभोज का साथ दो।

सुदर्शना—आप की जैसी आज्ञा।

( वरवेष में अविमारक, भूतिक, एवं कुरङ्गी का प्रवेश )

अविमारक—मैं इस घटना से लज्जित सा हो रहा हूँ।

उस समय, हस्तिकृतोपद्रव को शान्त कर सकने के कारण जो लोग हमारी प्रशंसा करते थे, वही जब हमारी यह बात सुनेंगे तब चरित्रदोष मढ़ेंगे॥ १५॥

( चलकर, देखकर ) यही हैं भगवान् नारद, यह—

शाप एवं अनुग्रह में समभाव से समर्थ हैं, वेद और संगीत में इनका कण्ठ

वेदेषु गीतेषु च रक्तकण्ठः ।
स्निग्धेषु वैराण्युपपाद्य यत्ना-
न्नष्टानि कार्याणि समीकरोति ॥ १६ ॥

कुन्तिभोजः—इत इतः कुमारः । अभिवादयस्वात्मकुलदैवतं देवर्षिम् ।

अविमारकः—भगवन् ! अभिवादये ।

नारदः—स्वस्ति भवते सपत्नीकाय ।

अविमारकः—अनुगृहीतोऽस्मि । मातुल ! अभिवादये ।

कुन्तिभोजः—एह्येहि वत्स !

क्षमया जय विप्रेन्द्रान् दयया जय संश्रितान् ।
तत्त्वबुद्ध्या जयात्मानं तेजसा जय पार्थिवान् ॥ १७ ॥

---

बुद्धिः समासक्तहृदयः समभावेन शापमनुग्रहञ्च यथायोग्यं कर्तुं शक्नुवन्नित्यर्थः। वेदेषु गीतेषु गानविद्यासु च रक्तकण्ठः समभावेन गीतं वेदञ्च गातुं कृताभ्यास इत्यर्थः । स्निग्धेषु परस्परप्रीतिशालिषु यत्नात् प्रयासपूर्वकं वैराण्युपपाद्य नष्टानि नाशं प्राप्तानि कार्याणि शमीकरोति शमयति, समभावेनैव कलहं शान्तिञ्च करोतीति नारदस्य सर्वत्रानासक्तिरावेदिता ॥ १६ ॥

अभिवादयस्व—प्रणम । आत्मकुलदैवतम्-स्वकुलस्याराधनीयम् ।

क्षमयेति—क्षमया सहनशीलतया विप्रेन्द्रान् ब्राह्मणश्रेष्ठान् जय, ब्राह्मणेभ्योऽपि अधिकक्षमाशीलः स्या इत्यर्थः । दयया कृपया संश्रितान् स्वाश्रितजनान्

---

भजा हुआ है, मित्रों में परस्पर कलह उत्पन्न करके यह नष्ट कार्यों को संभाला भी करते हैं ॥ १६ ॥

कुन्तिभोज—कुमार, इधर आओ, अपने कुलपूज्य देवर्षि नारद को प्रणाम करो।

अविमारक—भगवन् , प्रणाम करता हूँ ।

नारद—सपत्नीक आपका कल्याण हो ।

अविमारक—बड़ी कृपा, मामाजी, प्रणाम ।

कुन्तिभोज—आओ वत्स, आओ ।

क्षमा द्वारा ब्राह्मणों पर विजय प्राप्त करो, दया द्वारा आश्रितों को जीतो, तत्त्व ज्ञान द्वारा अपने ऊपर विजय प्राप्त करो, और पराक्रम से दूसरे नृपतियों पर विजय प्राप्त करो ॥ १७ ॥

अविमारकः—अनुगृहीतोऽस्मि ।

कुन्तिभोजः—वत्स ! इत इतः पितरमभिवादयस्व ।

अविमारकः—भोस्तात ! अभिवादये ।

सौवीरराजः—एह्येहि वत्स !

विरचितवरवेषदर्शनीयो
गुरुजनवन्दनमिश्रशुभ्रवक्त्रः ।
वयमिव भव हर्षबाष्पनेत्र-
स्त्वमिह भवत्तनयं समीक्षमाणः ॥ १८ ॥

पुत्र ! अभिवादयस्व मातुलम् ।

अविमारकः—मातुल ! अभिवादये ।

---

जय अनुरञ्जय । तत्त्वबुद्ध्या वस्तुतत्त्वज्ञानेन आत्मानं जय वशीकुरु, तेजसा पराक्रमेण पार्थिवान् राज्ञो जय ॥ १७ ॥

विरचितेति—विरचितेन वरवेषेण जामातृरूपेण दर्शनीयः विशेषसुन्दरः गुरुजनानां श्वशुरादीनां वन्दने नमने मिश्रं संलग्नं शुभ्रं वक्त्रं मुखं यस्य तादृशस्त्वम् वयमिव अहमिव हर्षबाष्पनेत्रः सानन्दाश्रुः भवत्तनयं समीक्षमाणस्त्वं सहर्षबाष्पनेत्रो भव । वरवेषरमणीयं गुरुजनवन्दनपरं च त्वां दृष्ट्वा यथाहं सानन्दाश्रुनयनो भवामि तथैव त्वमपि वरवेषधरं स्वसुतं वीक्ष्य सानन्दाश्रुनयनो जायस्वेत्यर्थः ॥ १८ ॥

---

अविमारक—बड़ी कृपा ।

कुन्तिभोज—इधर आकर अपने पिता को प्रणाम करो ।

अविमारक—पिता जी, प्रणाम ।

सौवीरराज—आओ बेटा, आओ,

जैसे मैं तुझे इस वरवेष में देखकर प्रसन्न हो रहा हूँ, उसी तरह तुम भी वरवेष में दर्शनीय तथा गुरुजन की वन्दना में निरत अपने पुत्र को देखकर प्रसन्नता प्राप्त करो ॥ १८ ॥

बेटा, मामा को प्रणाम करो ।

अविमारक—मामा जी, प्रणाम ।

कुन्तिभोजः—एह्येहि वत्स !

यज्ञैः शुभैर्हरिसमो भव नित्ययुक्तैः
सत्यैर्दृढैर्दशरथप्रतिमो भव त्वम् ।
नित्यार्पितैः पितृसमो भव सम्प्रदानैः
स्वेनात्मना सुसदृशेन पराक्रमेण ॥ १९ ॥

सौवीरराजः—पुत्र ! सुदर्शनामभिवादयस्व ।

कुन्तिभोजः—अयुक्तमिव सुचेतनामनभिवाद्य सुदर्शनामभिवादयितुम् ।

नारदः—अस्ति कारणम् । अभिवाद्यतां सुदर्शना ।

---

**यज्ञैः शुभैरिति**—त्वं नित्ययुक्तैः अहन्यहन्यनुष्ठीयमानैः शुभैः अनाभिचारिकैः यज्ञैर्हरिसमः इन्द्रोपमो भव, दृढैः प्राणापायेऽप्यचलैः सत्यैः सत्यवचनैः दशरथप्रतिमः दशरथेन समो भव, नित्यार्पितैः सम्प्रदानैः पितृसमो भव यथा तव पिता दाता त्वमपि दाता भवेत्यर्थः, सुसदृशेन स्वोपयुक्तेन पराक्रमेण स्वेनात्मना ( सदृशो भव ) पराक्रमे कोऽपि त्वत्सदृशो नास्तु, स्वसदृशः स्वयमेव भवेत्यर्थः ॥ १९ ॥

सुचेतनाम् ज्येष्ठां मातरञ्च । सुचेतनामभिवाद्यैव सुदर्शनाभिवादनं युक्तमित्यर्थः ।

अस्ति कारणम्—सुदर्शनैवास्य वस्तुतो माता, अतो ज्येष्ठामपि सुचेतनां विहाय अनेन सुदर्शनैव प्रथमं प्रणम्या, 'न मातुर्दैवतं परम्' इति न्यायादिति भावः ।

---

कुन्तिभोज—आओ वत्स, आओ,

तुम नित्य शुभ यज्ञों से हरि के समान, दृढ़ सत्य से दशरथ के समान, नित्यप्रवृत्त दान से पिता के समान एवं अपने पराक्रम से अपने समान ( अद्वितीय ) बनो ॥ १९ ॥

सौवीरराज—बेटा, सुदर्शना को प्रणाम करो ।

कुन्तिभोज—सुचेतना को छोड़ कर सुदर्शना को प्रणाम करना ठीक नहीं होगा ।

नारद—इसका कारण है ।

उभौ—एवं क्रियताम् ।

अविमारकः—भवति ! अभिवादये ।

सुदर्शना—पुत्र ! चिरं जीव एदाए सह । ( परिष्वज्य ) चिरेण दिट्ठो सि । अज्ज मए अणुभूदो पुत्तसम्पत्तिरसो । [ पुत्र ! चिरं जीवैतया सह । चिरेण दृष्टोऽसि । अद्य मयानुभूतः पुत्रसंपत्तिरसः । ] ( रोदिति )

कुन्तिभोजः—

इमां तु बाष्पार्द्रकुतूहलाक्षीं
सम्प्रस्नवद्दुग्धपयोदयुग्माम् ।
अवेक्षितां मातरमप्रकाश्य
धात्रीत्वमेवैति सुचेतना मे ॥ २० ॥

पुत्रसम्पत्तिरसः--पुत्रजन्मन आनन्दः ।

इमां त्विति—बाष्पार्द्रे कुतूहले सकौतुके च अक्षिणी यस्यास्तां तथोक्ताम् सदश्रुकौतुकपूर्णनेत्राम् संप्रस्नवद् दुग्धं यस्तत्स्तन्यं पयोधरयुग्मं यस्यास्तां तथोक्ताम् च इमां सुदर्शनाम् मातरम् अविमारकस्य जननीम् अप्रकाश्य अप्रकटय्य मम सुचेतना धात्रीत्वमेव एति । अविमारकस्य माता त्वियं सुदर्शना या पुत्रं दृष्ट्वा सहर्षाश्रुनयना परिस्नुतस्तनी च जायते, सुचेतना तु सुदर्शनाया जननीत्वं गोपयित्वा धात्रीकार्यं पोषणादिकमेव कृतवती । अन्या धात्री मातरमन्यां प्रकाश्य क्वचन बालं पोषयति, सुचेतना तु सुदर्शनां मातरमप्रकाश्यैवाविमारकस्य धात्रीभावं कृतवतीति विशेषः ॥ २० ॥

दोनों—ऐसा करो ।

अविमारक—श्रीमती जी ! मैं प्रणाम करता हूँ ।

सुदर्शना—बेटा, इसके साथ तुम चिरजीवी बनो । ( गले लगाकर ) बहुत दिनों पर तुम्हें देख सकी, आज ही मैंने पुत्र होने का आनन्द प्राप्त किया है । ( रोती है )

कुन्तिभोज—बाष्पपूर्ण तथा कुतूहल भरे नयनों वाली एवं दुग्धस्रावयुक्त स्तनों वाली इस सुदर्शना को माता के रूप में अप्रकाशित करके सुचेतना वस्तुतः धात्री का ही कार्य करती रही है ॥ २० ॥

नारदः—अलमतिस्नेहेन । प्रविशतु कन्यापुरं सुचेतना सुचेतना सुदर्शना सुदर्शना च सभार्येण पुत्रेण ।

कुन्तिभोजः—यदाज्ञापयति भगवान् ।

सुदर्शना—जं भअवं आणवेदि । [ यद् भगवानाज्ञापयति ]

नारदः—अचिरेण सौवीरराजो विसृज्यतां स्वदेशगमनाय । जयवर्मणे सुमित्रा प्रदीयतां काशिराज्ञे । त्वमपि सन्निहितो भव ।

कुन्तिभोजः—अनुगृहीतोऽस्मि ।

नारदः—कुन्तिभोज ! किमन्यत् ते प्रियमुपहरामि ।

कुन्तिभोज—भगवान् यदि मे प्रसन्नः, किमतः परमहमिच्छामि ।

गोब्राह्मणानां हितमस्तु नित्यं
सर्वप्रजानां सुखमस्तु लोके ।

नारदः—सौवीरराज ! किं ते भूयः प्रियमुपहरामि ।

सौवीरराजः—यदि मे भगवान् प्रसन्नः, किमतः परमहमिच्छामि ।

---

सुचेतना–सुबुद्धिः । सुदर्शना–सुन्दरी । विशेषणयोरयमर्थः, विशेष्ये तु पुनर्नामनी । विसृज्यताम्–गन्तुमनुमन्यताम् । सन्निहितः–विवाहमण्डपे समुपस्थितः ।

गोब्राह्मणानामिति—गोब्राह्मणानाम् गवां विप्राणाञ्च नित्यं सदा हितं

---

नारद—विशेष स्नेह अनावश्यक है, सुचेतना तथा सुदर्शना सस्त्रीक पुत्र के साथ अन्तःपुर में जाये ।

कुन्तिभोज—आप की जैसी आज्ञा ।

सुदर्शना—आपकी जैसी आज्ञा ।

नारद—सौवीरराज को शीघ्र अपने देश जाने की अनुमति दें, जयवर्मा को सुमित्रा प्रदान करें, तुम भी उसमें सम्मिलित होना ।

कुन्तिभोज—यह सब आपका अनुग्रह है ।

नारद—मैं आपका और क्या कल्याण करूँ ।

कुन्तिभोज—जब आप मुझपर प्रसन्न हैं तो इससे बढ़कर मैं और क्या चाहूँगा ।
गायों तथा ब्राह्मणों का कल्याण हो, प्रजायें सुखी हों ।

नारद—सौवीरराज, आपको क्या उपहार दूँ—

सौवीरराज—यदि आप मेरे ऊपर प्रसन्न हैं तो इसके अलावा और क्या मैं

इमामुदीर्णार्णवनीलवस्त्रां
नरेश्वरो नः पृथिवीं प्रशास्तु ॥ २१ ॥

( भरतवाक्यम् )

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २२ ॥

( निष्क्रान्ताः सर्वे )

षष्ठोऽङ्कः ।

---

कल्याणमस्तु, लोके सर्वप्रज्ञानां सर्वेषां जनानां सुखं कल्याणमस्तु, उदीर्णः विस्तृतः अर्णव एव नीलं वस्त्रं यस्यास्तां तथोक्तामिमां पृथिवीं नः नरेश्वरः कुन्तिभोजः प्रशास्तु पालयतु ॥ २१ ॥

भवन्त्विति—गावः इन्द्रियाणि अरजसः रजोगुणरहिताः शुद्धसत्त्वाश्रया भवन्तु परचक्रं शत्रुमण्डलं प्रशाम्यतु क्षीणं सत् निर्वीर्यं जायताम्, इमां कृत्स्नाम् समस्ताम् महीं नः राजसिंहः सिंहोपमो राजा कुन्तिभोजः प्रशास्तु ॥ २२ ॥

यो जातो धरणीसुरान्वयसरोहंसात् प्रसर्पद्यशो-
ज्योत्स्नाद्योतितदिङ्मुखान्मधुरिपुध्यानैकबद्धाशयात् ॥
मिश्राख्यान्मधुसूदनान्नयमणौ सीमन्तिनीनां मणौ
तस्य श्रीयुतरामचन्द्रसुधियो व्याख्या प्रसिद्ध्यादियम् ॥

इति मैथिलपण्डितश्रीरामचन्द्रमिश्रकृतेऽविमारकप्रकाशे षष्ठाङ्कप्रकाशः ।

समाप्तोऽयं ग्रन्थः

---

चाहूँ ? इस सागरवसना पृथ्वी का पालन हमारे नरेश करते रहें ॥ २१ ॥

( भरत वाक्य )

हमारी इन्द्रियाँ सात्विक हों, शत्रुमण्डल शान्त हो, राजसिंह समस्त पृथ्वी पर शासन करें ॥ २२ ॥

( सबका प्रस्थान )

षष्ठ अङ्क समाप्त ।

॥ ग्रन्थ समाप्त ॥



# परिशिष्ट

## अविमारकगतानि सुभाषितानि

१—कन्यापितुर्हि सततं बहु चिन्तनीयम् ।
२—विवाहा नाम बहुशः परीक्ष्य कर्त्तव्या भवन्ति ।
३—निष्परिहारा व्यापदाः ।
४—अहो प्रच्छन्नरत्नता पृथिव्याः ।
५—कः शक्तः सूर्यं हस्तेनाच्छादयितुम् ।
६—न भृत्यदूषणीया राजानः ।
७—कस्तावदौषधमुपलभ्य मन्दीभवत्यातुरः ।
८—सर्वमलङ्कारो भवति सुरूपाणाम् ।
९—स्वभावरमणीयानि मण्डितानि अतिरमणीयानि भवन्ति ।
१०—न तथा रत्नमासाद्य सुजनः परितुष्यति यथा तत्तद्गताकाङ्क्षे पात्रे दत्वा प्रहृष्यति ।
११—को विश्रमो नाम विभ्रष्टमनोरथानाम् ।
१२—नहि घृतवचनेन पित्तं नश्यति ।

## नाटकीयवस्तुलक्षणानि

प्रकरणम्—भवेत्प्रकरणं वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ॥
नान्दी—आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥
माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥
सूत्रधारः—आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥
प्रयोगातिशयः—यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥
नेपथ्यम्—कुशीलवकुटुम्बस्य गृहं नेपथ्यमुच्यते ।

प्रस्तावना—सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम्।
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम्॥
अङ्कः—अङ्क इति रूढशब्दो भावैश्च रसैश्च रोहयत्यर्थान्।
नानाविधानयुक्तो यस्मात्तस्माद् भवेदङ्कः॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः॥
विष्कम्भकः—वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
स्वगतम्—अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।
प्रकाशम्—सर्वश्राव्यं प्रकाशं स्यात्।
नायकः—त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता॥

## अविमारकगतानि च्छन्दांसि सलक्षणानि

१—अनुष्टुप्—पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीयादेतत् पद्यस्य लक्षणम्॥
वंशस्थम्—जतौ तु वंशस्थमुदीरितं जरौ।
वसन्ततिलका—उक्ता वसन्ततिलका तभजा जगौगः।
मालिनी—ननमयययुतेयं मालिनीभोगिलोकैः।
शालिनी—मात्तौ गौ चेच्छालिनी भोगिलोकैः।
शिखरिणी—रसैरीशैश्छिन्ना यमनसभलागः शिखरिणी।
पुष्पिताग्रा—अयुजि नयुगरेफतो यकारो युजि च यनजौ जरगाश्च पुष्पिताग्रा।
शार्दूलविक्रीडित—सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्।
स्रग्धरा—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्।
दण्डक—यदिह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः।

॥ श्रीः ॥

विद्याभवन-संस्कृत-ग्रन्थमाला

४६

भासनाटकचक्रे

# चारुदत्तम्

'प्रकाश' संस्कृत-हिन्दीव्याख्योपेतम्

व्याख्याकारः—

साहित्यशास्त्राचार्यः

श्री प० कपिलदेवगिरिः



चौखम्बा विद्याभवन, वाराणसी-१

सं० २०१६ ] [ ई० १९६०

# आत्म-निवेदन

प्रस्तुत पुस्तक की व्याख्या करते समय छात्रबन्धुओं की समस्याओं को ध्यान में रखकर लम्बे एवं जटिल शब्दों का समास-विधि से ही अर्थ-बोध कराने का प्रयास किया गया है। यथासम्भव भाषा को सरल और शैली को सुबोध बनाने की चेष्टा की गई है।

व्याख्या लिखने में जिन ग्रन्थों से सहायता मिली है, उनके लेखकों व प्रकाशकों का मैं परम कृतज्ञ हूँ। इसके अतिरिक्त गुरुदेव श्री पं० महादेव शास्त्री ( भूतपूर्व प्रधानाचार्य सं० महाविद्यालय, का० हि० वि० वि० ), श्री पं० कान्तानाथ जी शास्त्री तैलंग, श्री पं० राममूर्ति त्रिपाठी जी जैसे महानुभावों से समय-समय पर जो सक्रिय सहयोग मिला है उसके लिए आभारप्रदर्शन मात्र करना धृष्टता होगी। श्री तैलंगजी ने अपने अल्प परिचय में ही अमित प्रेरणाओं के साथ जिन तुलनात्मक एवं आलोचनात्मक सामग्री का ज्ञान कराया है वह उनके स्नेहगर्भ आशीः का प्रतीक है। बन्धुवर श्री शंकरदेव जी अवतरे ने अपने व्यस्त समय में भी जिस सतर्कता के साथ 'हिन्दी' पाण्डु-लिपि को आद्यन्त पढ़ा उसके लिये उन्हें धन्यवाद देना उपचारमात्र होगा।

प्रकाशक महोदय जी को बहुशः धन्यवाद है जिनकी प्रेरणा एवं दी हुई सुविधा से इस व्याख्या की रचना की जा सकी है।

अन्त में निवेदन है कि सहृदय एवं विज्ञ पाठक अपने सत्परामर्श द्वारा लेखक को अनुगृहीत करेंगे।

फाल्गुनी पूर्णिमा
सं० २०१६

कपिलदेव गिरि

# भूमिका

## महाकवि भास

ख्याति—महाकवि भास संस्कृत साहित्य के प्रख्यात एवं सम्मानित महाकवियों में से हैं। कालिदास ने अपने 'मालविकाग्निमित्र' नामक नाटक की प्रस्तावना में सूत्रधार(१) के मुख से स्पष्ट ही प्रश्न करवाया है कि प्रसिद्ध यशवाले भास, सौमिल्ल, कविपुत्र आदि महाकवियों के प्रबन्धों का अतिक्रमण कर कालिदास की कृति का इतना अधिक सम्मान क्यों हो रहा है? इस कथन से भलीभांति प्रतीत होता है कि कालिदास के समय में भास के नाटक अत्यन्त लोकप्रिय थे। कालिदास के बाद के कवियों ने भी भास के नाटकों का अत्यन्त सम्मान किया है। बाणभट्ट ने 'हर्षचरित' में इनके नाटकों की उत्कृष्टता बतलाते हुए कहा है कि भास ने सूत्रधार से आरम्भ किये गये, बहुत भूमिका वाले तथा पताका ( रूपक की मुख्य अवान्तर घटना तथा ध्वजा ) से शोभायमान देवकुलों की भांति अपने नाटकों से साहित्य-जगत् में अच्छी प्रतिष्ठा पाई। (२) राजशेखर ने 'काव्य-मीमांसा' में भास के नाटकों की अग्नि-परीक्षा तथा 'स्वप्नवासवदत्तम्' को सर्वोत्तम नाटक स्वीकार किया है।(३)

वाक्पतिराज ने अपने 'गउडवहो' नामक प्राकृतभाषा के महाकाव्य में 'जलणमित्ते'—ज्वलनमित्रं ( अग्नि का मित्र ) बताया है(४)। प्रख्यात आलंकारिक जयदेव ने भास को 'प्रसन्नराघव' की प्रस्तावना में कविताकामिनी का हास माना है(५)।

---

( १ ) 'प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य कथं वर्तमानस्य कवेः कालिदासस्य कृतौ बहुमानः'। ( मालविकाग्निमित्रम् )

( २ ) सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ ( हर्षचरितम् )

( ३ ) भासनाटकचक्रेऽस्मिन्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ ( काव्यमीमांसा )

( ४ ) भासम्मि जलणमित्ते कन्तीदेवे जहावि रहुआरे।
सोबन्धवे अ बन्धम्मि हारि अन्दे अ आणन्दो ॥ ( गउडवहो )

( ५ ) यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥ ( प्रसन्नराघव )

उपर्युक्त विशेषणों से यह बात स्पष्ट हो जाती है कि अतीत काल में सर्वसाधारण के बीच भास के रूपकों की अधिक ख्याति एवं प्रचार था और उनके बृहद् नाटक-चक्र में स्वप्नवासवदत्तम् प्रधान था।

संस्कृत साहित्य के एक विख्यात कवि होने पर भी बहुत दिनों तक विद्वानों के मध्य भास का केवल नाम ही सुना जाता था। इनके समय, ग्रन्थ तथा जीवनवृत्त के विषय में लेशमात्र भी ज्ञान नहीं था। केवल अनेक संस्कृत-काव्यों और नाटकों में उनका नामोल्लेख एवं उद्धरण देखकर ही अनुमान किया जाता था कि अतीतकाल में भास नामक कोई प्रख्यात नाटककार हो गया है। ऐसी स्थिति अनेक काव्यों की है, जिनका केवल नाममात्र ही श्रवणगोचर होता है, जैसे 'कण्ठाभरण' 'जाम्बवतीविजय' आदि; परन्तु महत्सौभाग्य की बात है कि १९१२ ई० में ट्रावनकोर के पं० श्री टी० गणपति शास्त्री ने स्वप्नवासवदत्तम् आदि तेरह नाटकों का अन्वेषण कर अनन्तशयनग्रन्थमाला में प्रकाशित कराया और उन्हें भास की असंदिग्ध कृति बतलाई। उसी समय से भास और उनके रूपकों की चर्चा साहित्य-संसार एवं सहृदय विद्वानों में होने लगी। श्री शास्त्री जी द्वारा अनुसंधान किए गए तेरह नाटकों में केवल 'स्वप्नवासवदत्तम्' भासकृत हो सकता है, क्योंकि राजशेखर के पूर्वोक्त निर्देश के अतिरिक्त आचार्य अभिनव गुप्त ने भी 'अभिनवभारती' में इस नाटक का उल्लेख किया है(१)। किन्तु शेष रूपकों को भास की रचना स्वीकार करने में कोई भी उत्कृष्ट प्रमाण नहीं है ऐसा कुछ विद्वानों का मत है। किन्तु श्री शास्त्री जी ने इन रूपकों की प्रामाणिकता सिद्ध करने के लिये जो अकाट्य युक्तियाँ दी हैं, उनमें शंका का लेशमात्र भी कारण नहीं है। प्रकरणानुसार इसकी चर्चा आगे की जायगी।

## भास का समय

महाकवि कालिदास ने अपने नाटक 'मालविकाग्निमित्र' में भास का बड़े सम्मान से नामोल्लेख किया है जैसा कि ऊपर निर्देश किया जा चुका है। इससे यह सिद्ध एवं सुस्पष्ट हो जाता है कि भास कालिदास से प्राचीन थे। कालिदास के समय के विषय में विद्वानों में मतैक्य नहीं है। कुछ लोग महाकवि का समय ४०० ई० बताते हैं। उनके कथनानुसार भास ४०० ई० से प्राचीन होते हैं। कुछ विद्वान् कालिदास की स्थिति प्रथम शतक निश्चित करते हैं। उनके आधार पर भास ईसा के प्रथम शतक से प्राचीन होते हैं। भास को इतना सर्वमान्य होने में, कि कालिदास जैसे महाकवि भी उनका नाम गौरव एवं प्रतिष्ठा से लें,

(१) क्वचित् क्रीडा—यथा वासवदत्तायाम्।

अवश्यमेव एक निश्चित समय लगा होगा। भास के १३ नाटकों के आविष्कारक एवं आश्रयदाता श्री गणपति शास्त्री ने भास को पाणिनि और चाणक्य से भी प्राचीन बतलाने का प्रयत्न किया है। सैनिकों को लड़ाई के लिये प्रोत्साहित करने के प्रसङ्ग में चाणक्य ने अपने 'अर्थशास्त्र' नामक ग्रन्थ में 'अपीह श्लोकौ भवतः' का उल्लेख कर जिन दो श्लोकों को प्रमाणकोटि में स्थापित किया है उनमें से एक(१) भास के प्राप्त 'प्रतिज्ञायौगन्धरायणम्' में उपलब्ध होता है। ऐसा ज्ञात होता है कि उक्त श्लोक को चाणक्य ने भास के नाटक से लिया है। इतिहासकारों ने चाणक्य का समय ई० पू० ४०० निश्चित किया है। एतदर्थ भास ई० पू० ४०० से अर्वाचीन कदापि नहीं स्वीकार किए जा सकते।

भास के द्वारा रचित 'प्रतिमानाटक' में रावण के बृहस्पति(२)कृत अर्थशास्त्र में दक्षता प्राप्त करने का उल्लेख किया गया है। बार्हस्पत्य अर्थशास्त्र चाणक्य से भी पहले का है। यदि वे कौटिल्य से बाद के होते तो बृहस्पतिरचित अर्थशास्त्र की जगह चाणक्यरचित अर्थशास्त्र का नामोल्लेख मिलता। बार्हस्पत्य अर्थशास्त्र यह निर्देश करता है कि भास चाणक्य से भी प्राचीन थे। प्रयोगों की अपाणिनीयता यह बतलाती है कि पाणिनि के सर्वसम्मानित पद पर प्रतिष्ठित होने के पूर्व इन नाटकों का निर्माण हुआ था। कालिदास के प्राकृतों की अपेक्षा भास के प्राकृत अतीव प्राचीन प्रतीत होते हैं। भास के रूपकों से प्रतिभासित होनेवाली सामाजिक दशा मौर्यकालीन सामाजिक दशा के अनुरूप है। उक्त प्रमाणों के आधार पर भास का समय कम से कम ई० पू० पाँचवीं शताब्दी निश्चित होता है किन्तु अधिकांश समीक्षक इस सिद्धान्त से सहमत नहीं हैं। वे भास तथा चाणक्य के पद्य को किसी दूसरे ग्रन्थ का सङ्कलन बतलाते हुए उक्त मत को अप्रामाणिक सिद्ध करते हैं।

प्राकृतभाषा की आलोचना के आधार पर डा० लेस्नी, सुखथनकर इत्यादि पाश्चात्य और पौरस्त्य विद्वानों ने भास को कालिदास से तो प्राचीन बतलाया है, पर अश्वघोष से अर्वाचीन। साथ ही वे यह भी कहते हैं कि अश्वघोष की प्राकृत की छाया भास के रूपकों में पाई जाती है। उक्त विद्वानों की निजी धारणा के अनुसार कालिदास का समय पञ्चम शताब्दी था और वे अश्वघोष से बाद के कवि थे। अतएव वे कालिदास और अश्वघोष के मध्यकाल में

(१) नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य मा भून्नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत॥

(२) भोः काश्यपगोत्रोऽस्मि, साङ्गवेदमधीये, मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं, बार्हस्पत्यमर्थशास्त्रं, प्राचेतसं श्राद्धकल्पञ्च।

भास की स्थिति मानकर उनका समय तृतीय शताब्दी स्वीकार करते हैं। भास के नाम के साथ जिन नाटकों का उल्लेख किया गया है उनका लेखक कोई अज्ञात दक्षिणी कवि होना चाहिये, जिसकी स्थिति ईसा के बाद सप्तम शताब्दी में ठहरती है। ऐसी किंवदन्ती है, पर इस मत में भी विद्वज्जन रुचि नहीं लेते। श्री टी० गणपति शास्त्री जी ने अनेक प्रमाणों से यह प्रमाणित किया है कि भास कवि ई० पू० चौथी शताब्दी में हुए थे और जब शास्त्री जी के द्वारा दिये गये प्रमाणों का खण्डन करने के लिए कोई प्रबल प्रमाण उपलब्ध नहीं है तो ई० पू० चौथी शताब्दी को ही स्वीकार करना युक्तियुक्त होगा।

## जीवनी

भास के द्वारा रचित नाटकों के आदि या अन्त में कहीं भी लेखक का नाम-निर्देश नहीं है। ऐसी स्थिति में महाकवि भास के जीवन का रहस्योद्‌घाटन करना सहज कार्य नहीं। पर उनके ग्रन्थों का पर्यवेक्षण करने से जो निष्कर्ष निकलता है उसी के आधार पर कवि की जीवनसम्बन्धी घटनाओं पर किञ्चित् प्रकाश डाला जा सकता है। श्री पुसालकर जी की शब्दावली में 'भास धर्मभीरु ब्राह्मण थे'। वे दक्षिण के नहीं, बल्कि उत्तर भारत के अधिवासी थे। इसके प्रमाण में 'स्वप्नवासवदत्तम्' और 'बालचरित' का भरतवाक्य प्रस्तुत है—

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः॥

प्रस्तुत भरतवाक्य में कवि परमात्मा से प्रार्थना करता है कि जिस पृथ्वी के दोनों हिस्सों में हिमालय तथा विन्ध्य पर्वत दो कुण्डलों की भांति सुशोभित हैं, हमारे राजा ससागरा उस वसुन्धरा के मध्य एकच्छत्र राज्य करें। प्रकृत श्लोक में हिमालय तथा विन्ध्य पर्वत को भगवती वसुन्धरा के कर्ण-कुण्डलों से उपमा दी है। भास ने दक्षिण कर्ण ( कान ) विन्ध्य तथा वाम कर्ण हिमगिरि कल्पित किया है। भास की वसुन्धरा का विस्तार पूर्व से पश्चिम पर्य्यन्त है। उनकी पृथ्वी उत्तर में हिमालय एवं दक्षिण में विन्ध्य पर्य्यन्त है। यही पृथ्वी भास की पृथ्वी थी। इसी सीमा के अन्दर कहीं कवि का स्थान था। भास वर्णाश्रम-धर्म के पक्षपाती थे। देवता तथा यज्ञ से सम्बन्धित स्तोत्रों में उनकी आस्था थी। गौ को भी वे सम्मान की दृष्टि से देखते थे। वे किसी राजा के राजपण्डित थे। भास ने अपने राजा को 'राजसिंह' शब्द से अभिहित किया है। यह शब्द किसी व्यक्ति की संज्ञा है या साधरणतः राजमात्र का बोधक, यह बात नहीं है। भास राजघरानों एवं राजकीय जीवन से सुपरिचित थे। वे हास्यप्रिय तथा नम्र प्रकृति के थे। वे बातचीत की कला में निपुण, मानव स्वभाव तथा प्राकृतिक सुन्दरता के

प्रेमी एवं चतुर पारखी थे। सम्भव है कवि का पारिवारिक जीवन आनन्दपूर्ण एवं सुख-शान्तिदायक रहा हो। वे कर्तव्यपरायण पुत्र के पिता, साध्वी पत्नी के पति तथा संतानप्रिय पिता थे। अविभाजित-कुटुम्बप्रणाली के परिपोषक एवं गुरुजनों की प्रतिष्ठा करनेवाले थे। कवि के जीवन में आशा का प्रतिबिम्ब तथा राष्ट्रीय भावनाओं की अभिव्यक्ति उपलब्ध होती है। वे स्वतन्त्रता तथा न्याय-परायणता के पक्षपाती एवं वैष्णवधर्मावलम्बी थे। इन विशेषणों के आधार पर यही कहना पड़ता है कि भास संस्कृत साहित्य के एक विशिष्ट अध्येता एवं सर्वतोमुखी प्रतिभासम्पन्न कवि थे।

## ग्रन्थ

महामहोपाध्याय गणपतिशास्त्री जी ने भास के जिन तेरह रूपकों की खोज की है वे निम्नलिखित हैं :—

१ प्रतिज्ञायौगन्धरायणम्, २ स्वप्नवासवदत्तम्, ३ प्रतिमानाटकम्, ४ पञ्चरात्रम्, ५ अभिषेकनाटकम्, ६ मध्यमव्यायोगः, ७ अविमारकम्, ८ चारुदत्तम्, ९ कर्णभारम्, १० दूतवाक्यम्, ११ दूतघटोत्कचम्, १२ ऊरुभङ्गम् तथा १३ बालचरितम्।

प्रतिज्ञायौगन्धरायण—प्रतिज्ञायौगन्धरायण में कौशाम्बी के राजा वत्सराज उदयन द्वारा उज्जयिनी के राजा प्रद्योत की पुत्री वासवदत्ता के हरण की कथा है। आखेट के प्रेमी राजा उदयन के कृत्रिम हाथी के छल से महासेन द्वारा पकड़े जाने पर उदयन का मन्त्री यौगन्धरायण राजा को बन्धन से मुक्ति दिलाने और कुमारी वासवदत्ता के साथ उनका पाणिग्रहण कराने की प्रतिज्ञा करता है। मन्त्री की दृढ़ प्रतिज्ञा तथा कुटिल नीति का यह सर्वोत्कृष्ट निदर्शन है। इसी के आधार पर इस रूपक का नाम 'प्रतिज्ञायौगन्धरायण' पड़ा है।

स्वप्नवासवदत्तम्—भास की सभी कृतियों में यह सर्वोत्तम रचना है। इसे 'प्रतिज्ञानाटिका' का उत्तरार्ध ही समझना संगत एवं उचित होगा। इस रूपक में राजा उदयन का वासवदत्ता के साथ स्वप्नावस्था में योग होता है। इसी आधार पर इस रूपक का नाम 'स्वप्नवासवदत्तम्' रखा गया है। प्रद्योत के राजमहल से वासवदत्ता का हरण कर लाने के बाद राजा उदयन विषयवासना में लिप्त हो जाता है और राजकीय कर्तव्यों में किसी प्रकार की रुचि नहीं लेता। ऐसी दशा में विरोधियों का होना स्वाभाविक ही है। राजा अरुणि को आक्रमण करने का सुअवसर मिल जाता है। उदयन को अपने शत्रुओं को, परास्त करने के लिये मगधनरेश दर्शक की सहायता लेना अत्यावश्यक होता है। यौगन्धरायण वासवदत्ता के अग्नि में जल मरने का मिथ्या समाचार फैलाता है, परन्तु वास्तव में

उसे ले जाकर मगध के राजादर्शक की भगिनी पद्मावती के संरक्षण में रख आता है। कालान्तर में वत्सराज का पद्मावती के साथ शुभ विवाह हो जाता है। एक दिन राजा वासवदत्ता को स्वप्नावस्था में देखता है और उससे मिलने के लिये अत्यन्त उत्सुक हो जाता है। उसके जीवित होने में किञ्चित् विश्वास होने लगता है। बाद में वासवदत्ता राजा के समक्ष लाई जाती है और दोनों का आनन्द-मिलन होता है। इस विधि से इस रूपक का सुखमय पर्यवसान होता है।

प्रतिमानाटक—इस रूपक का आधार रामायण की कथा है। इसमें राम-वनगमन, सीताहरण आदि अयोध्याकाण्ड से आरम्भ होकर रावणवध पर्यन्त की घटनाओं का वर्णन किया गया है। इस नाटक के आधार पर अतीत भारत में ललितकलासम्बन्धी नूतन वृत्त का मूल्याङ्कन किया जा सकता है। अतीत काल में भारतीय नरेशों के देवकुल होते थे, जिनमें मानवशरीर बदलने के बाद राजाओं की प्रस्तर की बड़ी मूर्तियाँ रखी जाती थीं। इक्ष्वाकुवंश के नरेशों का भी देवकुल था, जिसमें दिवंगत राजाओं की प्रतिमायें रखी जाती थीं। राजा दशरथ की भी मूर्ति देवकुल में रखी गई है। भरत ने अपने मामा के घर से लौटते समय नगर से बाहर देवकुल में रखी हुई अपने पिता दशरथ की प्रतिमा को देखकर उनकी मृत्यु का अनुमान स्वयं ही कर लिया। इसी प्रतिमा के आधार पर इस रूपक का नाम 'प्रतिमानाटक' है।

पञ्चरात्र—महाभारत की कथा की एक घटना को लेकर इस नाटक की रचना हुई है। दुर्योधन यज्ञ में गुरु द्रोणाचार्य को मनोवांछित दक्षिणा देने के लिये उद्यत होता है। द्रोणाचार्य ने पाण्डवों के निमित्त आधा राज्य देने के लिए कहा—इस शर्त पर कि पांच रात्रियों के भीतर पांडव मिल जायंगे तो वह उन्हें राज्य दे देगा। द्रोणाचार्य इस प्रतिज्ञा को स्वीकार करते हैं। बाद में गोहरण के उपलक्ष्य में कौरव राजा विराट की राजधानी पर आक्रमण करते हैं। राजकुमार उत्तर कौरवों से युद्ध करने के लिए चल देता है। ऐसी स्थिति में अज्ञातावस्था में स्थित अर्जुन की सहायता पाकर उत्तर की विजय होती है। पाण्डव समय के साथ प्रकाश में आते हैं। द्रोणाचार्य दुर्योधन को पूर्वकृत प्रतिज्ञा का स्मरण दिलाते हैं। दुर्योधन उन्हें आधा राज्य दे देता है। महाभारत की कथा से कोई संगति न मिलने से यह घटना अंशतः कविप्रतिभा की उपज प्रतीत होती है।

अभिषेक—इस नाटक में किष्किन्धाकाण्ड, सुन्दरकाण्ड, लंकाकाण्ड तथा राम के राज्याभिषेक पर्यन्त की कथा वर्णित है। इसी राज्याभिषेक के कारण उक्त नाटक का नाम 'अभिषेक' पड़ा है।

मध्यमव्यायोग—इस नाटक में पाण्डुपुत्रों के वनवास के समय घटोत्कच के

हाथों से भीम द्वारा एक ब्राह्मणबालक की सुरक्षा की कथा वर्णित है। व्यायोग शब्द नाटकों का एक भेद है। मध्यम शब्द भीम और उस ब्राह्मण बालक के लिये प्रयुक्त हुआ है, जिसे भीम ने घटोत्कच के क्रूर हाथों से बचाया था। अतएव इसका नाम 'मध्यमव्यायोग' रक्खा गया है।

अविमारक—इस रूपक में सौवीर राजा के पुत्र विष्णुसेन, जो अविमारक के नाम से प्रख्यात है तथा राजा कुन्तिभोज की लड़की कुरङ्गी के विवाह और प्रणय की घटना का उल्लेख किया गया है। सम्भव है किसी प्रतीत परम्परागत आख्यायिका को प्रकृत नाटक का रूप दिया गया है, जिसका निर्देश कामसूत्र में पाया जाता है। विष्णुसेन ने भेड़रूपधारी 'अवि' नामक दैत्य को मारा था। इसलिये इस नाटक का नाम 'अविमारक' रक्खा गया है।

दरिद्रचारुदत्त—इस रूपक में ऐश्वर्यहीन पर चरित्रवान् विप्र चारुदत्त और गुणग्राहिणी वाराङ्गना वसन्तसेना की प्रेमलीला वर्णित है।

कर्णभार, दूतवाक्य, दूतघटोत्कच तथा ऊरुभङ्ग—महाभारत के महत्त्वपूर्ण तत्तद् घटनाचक्रों से उक्त नाटक सम्बन्ध रखते हैं।

भास की कृतियों को विषयानुसार पांच भागों में बांटा जा सकता है—रामायण पर आधारित नाटक, महाभारत पर आधारित नाटक, भागवत-कथाश्रित रूपक, लोकप्रचलित कथा पर आश्रित नाटक और उदयन की कथा से सम्बन्धित नाटक।

## प्रामाणिकता

म० म० श्रीगणपति शास्त्रीजी द्वारा अनुसन्धान किये गये तेरह नाटकों की प्रामाणिकता में विद्वानों में मतभेद है। कुछ लोग भासकृत प्रचलित नाटकों को उनकी वास्तविक कृति न मानकर उनके नाटकों का संक्षिप्त रूप मानते हैं। कुछ लोग उपलब्ध नाटकों के कुछ भागों को तो भास की रचना और कुछ अंश को किसी अन्य की कृति बतलाते हैं। साथ ही साथ यह भी कहते हैं कि भास के नाटक अपूर्ण अवस्था में मिले थे; संभव है किसी अन्य कवि ने उन्हें पूरा किया हो। कुछ विद्वान् 'स्वप्नवासवदत्तम्' को तो भासकृत मानते हैं, पर शेष नाटकों को, जो भास के नाम पर प्रचलित हैं, उनकी कृति मानने के लिये कदापि सहमत नहीं हैं। परन्तु इन बातों का उचित उत्तर देने के लिये (१)शास्त्रीजी, (२)पूज्यपाद श्री बलदेव जी उपाध्याय तथा (३)श्री कान्तानाथ जी

(१) देखिये—म. म. गणपति जी शास्त्री कृत 'स्वप्नवासवदत्तम्' आदि नाटकों की भूमिका।

(२) देखिये—संस्कृत साहित्य का इतिहास (उपाध्याय जी कृत)।

(३) देखिये—स्वप्नवासवदत्तम् की भूमिका (श्रीतैलंगशास्त्रीजी कृत)।

तैलंग आदि विद्वानों ने अनेक प्रमाण एवं युक्तियां प्रस्तुत की हैं। उनका कहना है कि नाटकों के रचनासादृश्य, भाषाविन्यास तथा कुछ विशेषताओं आदि पर दृष्टिपात करने से यह प्रतीत होता है कि इन तेरह नाटकों का निर्माता एक ही कवि है। इन विद्वानों ने प्रामाणिकता के पक्ष में जो युक्तियां एवं सम्मितियां दी हैं उनका सारांश निम्नलिखित है—

(अ) भास के नाम पर प्रख्यात एवं प्रचलित सब नाटक 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' से आरम्भ होते हैं। अनन्तर सूत्रधार रङ्गमञ्च पर आता है और मङ्गलगान करता है।

(आ) भास के नाटकों में सर्वत्र 'प्रस्तावना' के स्थान पर 'स्थापना' का प्रयोग किया गया है परन्तु न तो उनमें कवि का नामोल्लेख है और न नाटक का ही। ये विशेषतायें भारतीय नाट्यशास्त्र की परम्परा की प्रसिद्धि होने से पूर्व-काल की ओर संकेत करती हैं।

(इ) प्रत्येक ग्रन्थ की समाप्ति में भरतवाक्य के माध्यम से प्रार्थना में 'महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः' या अन्य किसी तत्सम पद्य का प्रयोग किया गया है। नाटकों का आद्यन्त एक-सा है। बहुत से नाटकों के आरम्भ में मुद्रालङ्कार के माध्यम से प्रमुख-प्रमुख पात्रों का नामनिर्देश किया गया है।

(ई) भाषा, छन्द, पद्य, भाव, कल्पना और घटना आदि प्रायः सब नाटकों में समान हैं। बहुत से अलङ्कार-शास्त्र के रचयिताओं ने भी भास के नाटकों से पद्य उद्धृत करके अपने ग्रन्थोंकी प्रतिष्ठा बढ़ाई है। वामन, दण्डी, आचार्य अभिनव गुप्त आदि कवियों ने उनके किसी न किसी श्लोक आदि को उद्धरण की कोटि में रखा है।

(उ) भासकृत नाटकों में प्रयुक्त अनेक अपाणिनीय प्रयोग भी इनकी रचनाओं की प्रामाणिकता एवं प्राचीनता में सहयोग देते हैं। डा० मैक्स लॉन्डेनेव आदि का कथन है कि प्रचलित नाटकों में भरतमुनिप्रणीत नाट्यशास्त्र में वर्णित नाटक के नियमों का उल्लंघन किया गया है, जैसे -'ऊरुभङ्ग' में दुर्योधन की मृत्यु मञ्च के ऊपर दिखलाना, 'प्रतिमा' में राम के द्वारा बाली का वध रङ्गमञ्च के ऊपर दिखलाना आदि बातें शास्त्रीय परम्परा के विरुद्ध हैं। उक्त प्रथा उस युग की ओर संकेत करती है जब कि भरतमुनि का यह नाट्यशास्त्र साहित्य-समाज में पूर्णरूपेण प्रतिष्ठित एवं विकसित नहीं हो सका था। इस आधार पर यह भी कहना उचित होगा कि उक्त नाटकों का निर्माता एक ही कवि रहा होगा और वह भास के अतिरिक्त दूसरा नहीं है।

## नाट्यकला

भास के नाटकों में मनुष्य-जीवन के विविध रूपों का पर्यवेक्षण करने का भरपूर अवसर उपलब्ध होता है। अतएव उनके रूपकों में विविधता एवं सर्वतोमुखी प्रतिभा की झलक विशेषतः दिखाई पड़ती है। दूतवाक्य, मध्यमव्यायोग, दूतघटोत्कच, कर्णभार और ऊरुभङ्ग 'एकांकी' नाटक की श्रेणी में आते हैं, पर प्रतिज्ञायौगन्धरायण, स्वप्नवासवदत्तम्, प्रतिमा इत्यादि पूर्ण विकसित नाटक माने जाते हैं। इनके सब नाटक बड़ी सरलता से रङ्गमञ्च पर खेले जाने योग्य बने हैं। अभिनेयता इन रूपकों की सबसे बड़ी विशेषता है। इन नाटकों में न तो वर्णन की प्रचुरता पायी जाती, न अनावश्यक कथावस्तु का विस्तार ही, जो अभिनेताओं की अभिनय-कला की गतिविधि के प्रतिरोधक हैं। भिन्न-भिन्न अवस्था में भिन्न-भिन्न भावों और विषयों के सूक्ष्म वर्णन में भास सिद्धहस्त हैं। वाग्बाहुल्य से मानों उनका स्पर्श ही नहीं है। इनका नाटक सुव्यवस्थित, सुसङ्घटित और चुस्त है। पात्रों के संवाद भी नपे-तुले शब्दों में हैं। पात्र उपयुक्त बातों को चुने हुए शब्दों में कहना अधिक पसन्द करते हैं। वे अनुपयुक्त बकवाद नहीं करते। भास संवादकला के विशेषज्ञ हैं। ये भली-भांति जानते हैं कि कौन व्यक्ति किस परिस्थिति में क्या कहेगा या कहना चाहेगा। वे मनुष्य के अन्तर्द्वन्द्व को सीधी भाषा में सरलता से व्यक्त कर देते हैं। अतएव भास के नाटक शास्त्र की दृष्टि से सुबोध, अभिनेय और सरल हैं।

## शैली

भास की शैली अपने ढङ्ग की निराली है। भाषा प्रभावोत्पादक और मुहावरेदार है। इनकी भाषा में जगह-जगह स्वभावोक्ति का पुट भरा मिलता है। इन्हें लम्बे-लम्बे समस्त पदों का प्रयोग पसन्द नहीं है। यद्यपि गद्यकाव्यों और महाकाव्यों में क्लिष्ट भाषा एवं समासयुक्त पदों की प्रचुरता दृष्टिगोचर होती है तथापि नाटक के लिये वह सर्वथा अनुपयुक्त है। नाट्यशास्त्र के लिये भाषा की सरलता, सरसता, स्फुटता, प्रसन्नता, गम्भीरता, मधुरता, मनोरञ्जकता आदि अपेक्षित हैं। भास के विचार और भाव उच्च तथा हृदयङ्गम करने योग्य हैं। इनकी भाषा में सरलता है। कथोपकथन और कवित्व की दृष्टि से भी इनके नाटक संस्कृतसाहित्य के किसी भी सर्वसम्मानित कवि और नाटककार से कम नहीं हैं। कालिदास जैसे प्रख्यात महाकवियों में भी, माधुर्य, प्रसाद आदि गुण उपलब्ध होते हैं, पर भास की रचना में ये गुण पूर्णरूपेण विकसित हुए हैं। इनके पद्य और गद्य दोनों प्रशंसनीय हैं। इनकी शैली और भाषा उस युग की ओर निर्देश करती है, जब संस्कृत जनसाधारण की भाषा थी।

भास की वर्णनकला बड़ी प्रौढ़ और अपने ढङ्ग की अनोखी है। जैसे नाटक का अङ्ग भाषा है वैसे ही उक्तिप्रकार भी। भास का उक्तिप्रकार भी विचित्र है, जैसे स्वीकृत्यर्थक 'आम्' तथा 'बाढम्' का प्रयोग, 'यदि' तथा 'चेत्' का प्रयोग, कुशल-प्रश्न के लिये 'सुखमार्यस्य' आदि का प्रयोग। कालिदास, भवभूति आदि कवियों ने इनके ग्रन्थों की छाया से स्वस्व-ग्रन्थों की प्रतिष्ठा बढ़ाई है। भास-रचित 'अविमारक' नाटक में वर्णित मध्याह्न में भगवान् भास्कर के प्रखर ताप से तपे हुए संसार को देखिये—

अत्युष्णा ज्वरितेव भास्करकरैरापीतसारा मही
यक्ष्मार्ता इव पादपाः प्रमुषितच्छाया दवाग्न्याश्रयात्।
विक्रोशन्त्यवशाद्विवोच्छ्रितगुहाव्यात्ताननाः पर्वता
लोकोऽयं रविपाकनष्टहृदयः संयाति मूर्च्छामिव॥

इस मध्याह्नकालीन वर्णन की 'मालविकाग्निमित्र' के 'पत्रच्छायासु हंसा' आदि कालिदास के मध्याह्नवर्णन से समता कीजिए। अन्तर इतना ही है कि कालिदास राजा के उद्यान में खड़े हैं और भास जंगल में।

भास ने अपने 'स्वप्नवासवदत्तम्' में तपोभूमि का वर्णन निम्नलिखित प्रकार से किया है—

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः॥

भास के द्वारा रचित तपोवन के वर्णन को पढ़कर 'अभिज्ञानशाकुन्तल' में वर्णित कालिदास के तपोवन के आभोग की स्मृति जागृत हो जाती है। स्वेच्छया इतस्ततः विचरण करनेवाले हरिण दोनों को आकर्षित कर रहे हैं।

भवभूतिरचित 'उत्तररामचरित' के दूसरे अङ्क का आत्रेयी-संवाद 'स्वप्न-वासवदत्तम्' के प्रथम अङ्क के विद्याधरसंवाद की प्रतिकृत या छाया कहा जा सकता है। भास बहिर्जगत् और अन्तर्जगत् के चित्रों को चित्रित करने में सिद्ध-हस्त हैं। उदाहरणार्थ स्वप्न नाटक का प्रथमांक द्रष्टव्य है।

भास के रूपक अनेक मनोरम चित्रों से चित्रित एवं सुसज्जित हैं। अस्तु, इस लघु निबन्ध में महाकवि की बहुमुखी प्रतिभा एवं गुणों को लिपिबद्ध करना मादृश जन के लिये अशक्य है।

# पात्र-चरित्र-चित्रण

भास के पात्र आकारमात्र नहीं, अपितु सजीव प्राणी हैं। उनका चरित्र इतना विशद एवं उत्कृष्ट है कि वे साहित्यसंसार में सदैव अमर रहेंगे।

## चारुदत्त

चारुदत्त प्रस्तुत रूपक का नायक है, जो एक उज्जयिनी के व्यावसायिक ब्राह्मण के रूप में उपस्थापित किया गया है। यह अपने परोपकारी प्रवृत्ति एवं असाधारण गुणों के कारण सबको प्रभावित करता है। वह जात्या तो ब्राह्मण है पर कर्म से वैश्य है। वह सार्थवाह का पुत्र और स्वयं भी सार्थवाह (व्यापारियों के काफिले का मुखिया या नेता) है। एतदर्थ दूसरे अङ्क में जब चेटी वसन्तसेना से यह जानने के लिए अभिलाषा प्रकट करती है कि 'क्या विद्याविशेष से रमणीय किसी ब्राह्मण को चाहती हो? तो वह उत्तर देती है 'पूजनीयः खलु स जनः' अर्थात् नहीं (पृ० ५२)। तथापि वह ब्राह्मणपुत्र चारुदत्त से अपना प्रणय-सूत्र जोड़ती है। इसका एकमात्र कारण यही है कि वह किसी ऐसे विप्र से अनुराग नहीं करती जो जाति तथा कर्म दोनों प्रकार से ब्राह्मण है। उसके हृदय में ऐसे पुरुष की प्रतिमा विराज रही है जो जन्म से ब्राह्मण है पर कर्मणा वैश्य। वह रूपवान एवं गुणसम्पन्न व्यक्ति है। दूसरे अङ्क में संवाहक आर्य चारुदत्त का परिचय देते हुए वसन्तसेना से कहता है 'आकृतिमान् अविस्मृत् अनुत्सिक्तो ललितः' इत्यादि (पृ० ६१)। वह संगीत विद्या का प्रेमी एवं चतुर पारखी भी है। इसीलिये तीसरे अङ्क के आरम्भ में वह विदूषक से वीणा की भूरि-भूरि प्रशंसा करता है, वह शरणागत-वत्सल है। वह वसन्तसेना को जो राजश्यालक (शकार) से त्रस्त है सुरक्षा का वचन देता है (पृ० ५८)।

चारुदत्त पहले धनवान था। पर वह अपनी असीमित उदारता एवं द्यूत (जुआ) की प्रवृत्ति के फलस्वरूप शीघ्र ही धनहीन हो जाता है। वह इतना निर्धन हो जाता है कि वह अपने महल की आवश्यक सफाई भी नहीं करवा पाता। उसके घर की देहली पर तृण एवं यव के अङ्कुर तक निकल आये हैं (पृ० १२)। उसे अपनी गरीबी पर पश्चात्ताप होता है। फिर भी अपनी इस दरिद्रमयी परिस्थिति में पार्श्ववर्ती वायुमण्डल का सूक्ष्म निरीक्षक बना रहता है। इस उजाड़ परिस्थिति में उसे मित्रों में अपनी उपेक्षा का कटु अनुभव होता है (१९)। वह इस निष्कर्ष पर पहुँचता है कि 'पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते', 'दारिद्र्यं षष्ठं महापातकम्' और 'सर्वं शून्यं दरिद्रस्य' इत्यादि। लेकिन इतने पर भी उसे सन्तोष इस बात पर है

कि वह इस दीनहीन दशा में अपने बौद्धिक सन्तुलन को खो नहीं दिया है—'सत्त्वं च न परिभ्रष्टं यद् दरिद्रेषु दुर्लभम्'।

चारुदत्त स्वभावतः गम्भीर तथा उदार है। जब भी उसे कोई सत्कार्य एवं मनोरम सेवा की सूचना देता है तो वह उसे पुरस्कार देता है। कर्णपूर उसका कृतज्ञ है। 'धरोहर' (न्यास) वस्तु को वह एक पवित्र एवं संरक्षणीय द्रव्य समझता है। वसन्तसेना के पास प्रेषित की गई 'मुक्तावली' इस बात की साक्षी है। चारुदत्त अपनी दरिद्रावस्था में भी मित्रों के झूठे कथन या अपराधों पर झुझलाता नहीं, अपितु उसको सहन कर लेता है। विदूषक (मैत्रेय) अलंकार की चोरी का उत्तरदायित्व उसी के माथे मढ़ता है और अपने यह कह करके अलग हो जाता है कि 'अच्छा किया कि अलंकार आपको दे दिया' (पृ० ९४)। परन्तु चारुदत्त उसके ऊपर क्रोधित होने की अपेक्षा केवल इतना ही कहकर सन्तोष करता है—'हन्त हृतं सुवर्णभाण्डम्'। चारुदत्त वीर स्वभाव का व्यक्ति है। जब विदूषक उसे सूचित करता है कि शकार वसन्तसेना को घर से निकालने की धमकी दे गया है, तो वह उसे केवल उपेक्षा भाव से सुन लेता है। इस प्रकार अनेकानेक वैयक्तिक गुणों के साथ-साथ देवी-देवताओं में निष्ठा की भी मात्रा पर्याप्त रूप में पाते हैं। जब विदूषक मातृका आदि देवताओं की अर्चना में अश्रद्धा प्रकट करता है तो वह कहता है—'मूर्ख! यथाविभवेनार्च्यताम्। भक्त्या तुष्यन्ति दैवतानि' इत्यादि (पृ० ३२)। वह भाग्यवादी है। प्रथम अंक में विदूषक के साथ बातचीत करते हुए वह कहता है कि धन भाग्य के अनुसार होते रहते हैं (पृ० १५)।

चारुदत्त विलासप्रिय व्यक्ति है। वह 'ब्राह्मणी' जैसी पत्नी को पाकर भी रूप एवं यौवन से सम्पन्न वसन्तसेना को हृदय से प्यार करता है। परन्तु यह स्मरणीय है कि वह वसन्तसेना पर मोहित होने पर भी अपने गार्हस्थ्य-जीवन एवं धर्म को भुला नहीं देता। उसे ब्राह्मणी जैसी पत्नी तथा विदूषक जैसे मित्र का विशेष गौरव प्राप्त है। वह स्वयं इसकी प्रशंसा करता है—'किञ्चाहं दरिद्रः, यस्य मम—'विभवानु वशा भार्या'''—इत्यादि (पृ० १७)। चारुदत्त में एक चतुर नागरिक का गुण है। उसे मालूम है कि अपनी प्रेयसी को किस भांति अनुकूल बनाया जा सकता है। यह ज्ञात होने पर कि जिसे वह रदनिका समझ रहा था वह वसन्तसेना है, वह उससे कहता है—'यद्येवमहमपि तावद्-विज्ञातप्रयुक्तेन प्रेष्यसमुदाचारेण सापराधो भवतीं प्रसादयामि (पृ० ४६)।

वसन्तसेना भी उसको हृदय से चाहती थी इसका स्वयं उसे पता है। विदूषक वसन्तसेना के समक्ष ही उसे कहता है—'भो चारुदत्त! वसन्तसेना खल्वियं, या भवता कामदेवानुयानप्रभृति नयनमात्रसंस्तुता सन्निहित-

मनोभवेन हृदयेनोद्धृते । तत्पश्यत्विमाम् ( पृ० ४७ ) वसन्तसेना उक्त बातका कोई प्रत्युत्तर नहीं देती बल्कि चारुदत्त की भांति वह भी यही कहती है कि—'अदत्तभूमिप्रवेशप्रधर्पणेनापराद्धाहमार्यं शीर्पेण प्रसादयामि' (पृ० ४६)। इस प्रकार हम देखते हैं कि चारुदत्त विलासमय जीवन में भी नैतिक नियमों का उचित पत्त उपस्थापित करता है।

चारुदत्त के चरित्रों का मूल्यांकन करते हुए हमें यही कहना पड़ता है कि उसका चरित्र अनेकानेक वैयक्तिक एवं नैतिक गुणों से परिपूर्ण है। इसमें दोप है तो यही है कि वह एक सामान्य स्त्री ( गणिका ) वसन्तसेना से अपना रागात्मक सम्बन्ध स्थिर करता है और दूसरा यह है कि उसमें द्यूतक्रीडा ( जुआ ) की प्रवृत्ति है।

## वसन्तसेना

वसन्तसेना प्रस्तुत कृति की नायिका के रूप में उपस्थापित की गई है। यह उज्जयिनी की एक गणिका है। यद्यपि यह एक सामान्य नायिका है, जिसने अपने आपको चारुदत्त के साथ रागात्मक सूत्र में जोड़ दिया है। फिर भी उसका स्तर गिरा हुआ नहीं है। वह भी एक अभिजात कुल की महिला होने का दम भरती है 'एप मे अभिनिवेशः अभिजनेन तोल्यते' (पृ० २८)। इस प्रकार चारुदत्त की भांति वसन्तसेना में भी आवश्यक गुण विद्यमान हैं। वह इस बात से अच्छी तरह परिचित है कि अपने प्रेमी के प्रणय-सम्पन्न व्यवहार का किस तरह पालन करना चाहिए। पहले अङ्क में जब चारुदत्त उससे उसके साथ भ्रमवश परिचारिका की तरह व्यवहार करने के अपराध की क्षमा-याचना करता है तो वह भी अपने अपराध की क्षमा की मांग करते हुए कहती है—

'अदत्तभूमिप्रवेशप्रधर्पणेनापराद्धाहमार्यं शीर्पेण प्रसादयामि' ( पृ० ४६ )।

वसन्तसेना चारुदत्त के उत्कृष्ट गुणों से मुग्ध होकर उसे हृदय से चाहती है। इस बात की पुष्टि प्रथम अङ्क में शकार के कथन से हो जाती है (पृ० २९)। उसमें साहस की वृत्ति तब दिखाई पड़ती है जब वह अपने आपको शकार से बचाने का प्रयत्न करती है 'अत्र स्वयमेव आत्मा रक्षितव्यः' चारुदत्त की भांति वसन्तसेना भी शरणागतवत्सला है। जब संवाहक उसके घर शरण लेता है तो वह शरणागत के नाते स्थान तो देती ही है साथ ही साथ संवाहक के चारुदत्त का परिचय देने पर वह उसका विशेप सत्कार करती है। चारुदत्त की दरिद्रता से वह अच्छी तरह परिचित है। फिर भी वह उसे चाहती है। अन्य वेश्याओं की भांति उसका प्रेम अर्थमूलक एवं कृत्रिम नहीं है। वह तो उसके गुणों से आकर्पित है। उसे यह भली भांति विदित है कि अति दरिद्र पुरुप पर आसक्त गणिका की प्रतिष्ठा लोक में सुरक्षित रहती है। उसकी अभिलापा चारुदत्त से

मिलने की है। द्वितीय अङ्क में मदनिका वसन्तसेना से कहती है कि जब चारुदत्त के प्रति तुम्हारा बहुत बड़ा सम्मान है तो स्वयं क्यों नहीं चली जाती? इसपर वह तर्कयुक्त उत्तर देती है कि मैं तो जाऊँगी ही पर ऐसा करने पर दरिद्रता के कारण अपने आपको प्रत्युपकार करने में असमर्थ पाकर कहीं वह फिर मेरे लिये दुर्लभ न बन जाय। एतदर्थ में विलम्ब कर रही हूँ। उक्त बातों से यह सिद्ध होता है कि वह उससे चिरस्थायी प्रणय-सम्बन्ध स्थापित करना चाहती है।

चारुदत्त के समान उसमें भी ललित कला की प्रवृत्ति निहित है। यही कारण है कि विदूषक उसकी इस कला पर मुग्ध हो जाता है 'अहो गणिकावाटस्य सश्रीकता' इत्यादि! वसन्तसेना में कृपणता का रञ्चमात्र भी स्थान नहीं है। वह स्वभावतः परोपकारी प्रवृत्ति की महिला है। उसकी उदारता संवाहक के संरक्षण में दृष्टिगोचर होती है। वह संवाहक को विजयी जुआड़ियों से मुक्ति पाने के लिये आशुतोष द्रव्य प्रदान करती है। वह भी यह कह करके कि आर्य चारुदत्त ही दे रहे हैं ऐसा समझें। वह यह कभी नहीं चाहती कि लोग उसका (परोपकारी प्रवृत्ति के उपलक्ष्य में) गुणानुवाद करें। वह उपकृत व्यक्ति से उपकार का बदला भी नहीं चाहती। संवाहक जब उसकी उदारता से मुग्ध होकर यह कहता है कि मेरी यह मालिश की कला आपके परिजन में उपयुक्त हो जाय, तो मैं आपका बड़ा ही आभार मानूँगा। इस पर वसन्तसेना उत्तर देती है—जिसके निमित्त तुमने इस कला की शिक्षा पाई है इससे उसी की सेवा करनी चाहिए। वह अपनी दासी के साथ अच्छा व्यवहार करती है और जब उसे ज्ञात होता है कि सज्जलक वास्तव में मदनिका से प्रेमसूत्र जोड़ता है तो वह उसे गुलामी से मुक्त ही नहीं करती, बल्कि अपने आभूषणों से अलंकृत करके परिणय भी करा देती है। यह इसके उदारता की पराकाष्ठा है। चारुदत्त के प्रति सम्मान अदा करने के लिये ही विदूषक के द्वारा भेजी हुई मुक्तावली हार को सहर्ष ग्रहण कर लेती है। वह एक गम्भीर प्रकृति की नायिका है और यह सदा प्रयत्न करती है कि समाज में उपहासास्पद न हो सके 'सखीजनेनापहसनीयत्वम् आत्मनः परिहरामि'।

चारुदत्त के प्रति उसका प्रेम पवित्र है। इस प्रकार हम देखते हैं कि वह चारुदत्त के अनुरूप अपना कर्तव्य प्रदर्शित करती है।

## सज्जलक

सज्जलक मदनिका का प्रेमी है। यह चौर्यकला में परम प्रवीण है। यह चोरी करने के लिये उपयोगी सभी सामग्रियों से सजधज कर चारुदत्त के घर चोरी करने जाता है। यह उज्जयिनी का नागरिक नहीं है। सम्भवतः कहीं बाहर से आकर उज्जयिनी में रहने लगा हो। यह मदनिका के प्रेम में इतना पागल हो

( ततः प्रविशति गणिका सम्भ्रान्ता विटेन शकारेण चानुगम्यमाना । )

शकारः—चिट्ठ चिट्ठ वशन्तशेणिए ! चिट्ठ,

किं याशि धावशि पधावशि पक्खलन्ती
शाहु प्पशीद ण मलीअशि चिट्ठ दाव ।
कामेण शम्पदि हि उज्झइ मे शलीलं
अङ्गालमज्झपडिदे विअ चम्मखण्डे ॥ ८ ॥

[ तिष्ठ तिष्ठ वसन्तसेने तिष्ठ,

किं यासि धावसि प्रधावसि प्रस्खलन्ती
साधु प्रसीद न मार्यसे तिष्ठ तावत् ।
कामेन सम्प्रति हि दह्यते मे शरीर-
मङ्गारमध्यपतितमिव चर्मखण्डम् ॥ ८ ॥ ]

---

अस्ति, अतः एतद्-दुर्लभत्रयसान्निध्यात् अहं सर्वसम्पन्नः अस्मि नाहं दरिद्र इत्याशयः ॥ ७ ॥

'तिष्ठ तिष्ठ' इति आवेगे द्विरुक्तम् ।

'शकारो राष्ट्रियः स्मृतः' इति वचनात् शकारस्य भाषा राष्ट्रिया विज्ञेया । शकारः पलायनपरां वसन्तसेनामनुसरन् कथयति—**किमिति**—( त्वम् ) प्रस्खलन्ती = स्खलितचरणा, किं = कथं यासि, धावसि, प्रधावसि=अति वेगं गच्छसीति भावः । साधु प्रसीद = मयि प्रसन्ना भव, न मार्यसे = नाहं त्वां हन्मीत्यर्थः, तिष्ठ = शीघ्रगमनात् विरता भव, तावदिति वाक्यालङ्कारे, किंवा यावत्कालं वयं ब्रूमः तावदिति कालनिर्देशः, अङ्गारमध्यपतितम् = प्रज्वलिताग्निमध्ये पतितम्

---

(तब विट और शकार से पीछा की गई सम्भ्रान्त एवं व्याकुल गणिका का प्रवेश । )

शकार (= राजा का साला )—ठहरो, ठहरो वसन्तसेना, ठहरो ।

क्यों जा रही हो, ( क्यों ) दौड़ रही हो ? नीचे ऊँचे मार्ग में लड़खड़ाती हुई भी ( अत्यन्त वेग से ) दौड़ रही हो । मेरे ऊपर प्रसन्न हो ओ । ठहरो, मैं तुम्हें नहीं मारूंगा । इस समय मेरा शरीर आग में पड़े हुए चर्म खण्ड की तरह कामरूपी अग्नि से जल रहा है ॥ ८ ॥

विटः—वसन्तसेने !

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्तोपदेशविशदौ चरणौ क्षिपन्ती।
उद्विग्नचञ्चलकटाक्षनिविष्टदृष्टि-
र्व्याघ्रानुसारचकिता हरिणीव यासि ॥ ९ ॥

शकारः—भावे ! एशा गच्छइ वशन्तशेणिआ,

---

चर्मखण्डमिव = मांसखण्डमिव, सम्प्रति = अधुना हि मे = मम शरीरम् , कामेन= मदनाग्निना, दह्यते = सन्तप्यते, पीड्यते इति भावः ॥ ८ ॥

मृदुमन्दगामिनीं वसन्तसेनां भीतिविह्वलतया द्रुतगामिनीमवलोक्य तदनुगामी विट आह—किमिति—त्वम् = वसन्तसेने, भयेन = भीत्या, परिवर्तितसौकुमार्या—परिवर्तितं = द्रुततमगमनाय परित्यक्तं सौकुमार्यं = गमनमृदुता मन्थरगमनमिति यावत् यया सा, एवंभूता सती नृत्तोपदेशविशदौ—नृत्तस्य = भावाश्रयस्य इत्यर्थः, 'भवेद् भावाश्रयं नृत्तं नृत्यं ताललयाश्रयम्' इति दशरूपके। उपदेशः = शिक्षणम् तत्र विशदौ=भूरिदक्षौ, निर्दोषनर्तनादिकलाभिज्ञौ इति यावत् एतादृशौ चरणौ क्षिपन्ती = क्षिप्रं पातयन्ती, वहन्ती वा (तया) उद्विग्नचञ्चलकटाक्षनिविष्टदृष्टिः = उद्विग्नश्च = अत्यन्तव्यग्रश्च, अतएव चंचलश्च = चपलश्च एतादृशः कटाक्षः = अपाङ्गदृष्टिः 'कटाक्षोऽपाङ्गदर्शने' इत्यमरः। तेन निविष्टा एवंभूता दृष्टिर्यस्याः सा तादृशी (सती) अर्थात् कियद् दूरं पापिष्ठौ स्तः इत्याननमीषत् परावर्त्य तिर्यङ् नयनेन सभीतिमवलोकयन्तीत्यभिप्रायः। व्याघ्रानुसारचकिता= व्याघ्रस्य अनुसारं = अनुगमनं, पश्चाद्धावनं वा तेन चकिता = भयभीता, चंचला वा एवंभूता हरिणी इव = मृगीव, किं = कथं, केन हेतुना वा यासि = गच्छसि। त्वत्स्नेहसूत्रनिबद्धौ (विटशकारौ) दृष्ट्वा भीतिर्नैव विधेयेति भावः ॥ ९ ॥

---

विट—अयि वसन्तसेने !

तुम भय के कारण अपनी सुकुमार गति को परिवर्तित करती हुई एवं नृत्त कला में दक्ष (दोनों) चरणों को रखती हुई, उद्विग्न एवं चञ्चल कटाक्षों से हमारे ऊपर आघात करती हुई तथा व्याघ्र के द्वारा पीछा की गई अतएव डरी हुई हरिणी की तरह क्यों जा रही हो ? ॥ ९ ॥

शकार—भाव ! यह वसन्तसेना जा रही है।

दुवेहि अम्हेहाणुवन्धअन्ती जहा शिगाली विअ कुक्कुलेहि ।
शणूपुला मेहलणादहाशा शवेट्टणं मे हलअं हलन्ती ॥ १० ॥
[ भाव ! एषा गच्छति वसन्तसेना,
द्वाभ्यामावाभ्यामनुवध्यमाना यथा शृगालीव कुक्कुराभ्याम् ।
सनूपुरा मेखलानादहासा सवेष्टनं मे हृदयं हरन्ती ॥ १० ॥ ]

विटः—वसन्तसेने ।

किं त्वं पदात् पदशतानि निवेशयन्ती
नागीव यासि पतगेन्द्रभयाभिभूता ।
वेगादहं प्रचलितः पवनोपमेयः

---

शकार इति—भाव !—भावयति चिन्तयति गूढतत्त्वमिति भावो विद्वान्, तत्सम्बोधने हे भाव ! = हे विद्वन्, 'भावो विद्वान्' इत्यमरः ।

द्वाभ्यामिति—द्वाभ्याम्=आवाभ्याम् ( विटशकाराभ्याम् ), अनुवध्यमाना= अनुगम्यमाना एषा वसन्तसेना कुक्कुराभ्याम् अनुगम्यमाना शृगालीव गच्छति = धावति ( तथा ) सनूपुरा = नूपुरेण सह वर्तमाना इत्यर्थः । मेखलानादहासा— मेखला = कांची तस्या नादः = शब्दः सः हासः = उल्लासः यस्याः सा एषा मे = मम, सवेष्टनम् = सावरणं धैर्यादिपूर्णम्, भावयुक्तम् हृदयम् हरन्ती ( गच्छति इति शेषः ) ॥ १० ॥

तथापि वेगात्पलायमानां तां विलोक्य विटः पुनरपि वदति— किमिति—त्वम् पदात् = प्रथमपदात् शतपदानि निवेशयन्ती = पदशतदूरे द्वितीयचरणं निक्षिपन्ती इति भावः, पतगेन्द्रभयाभिभूता—पतगानाम् इन्द्रः = श्रेष्ठः ( गरुडः ) तस्मात् भयम् तेन अभिभूता = आक्रान्ता नागीव = सर्पिणीव किम् = कथं यासि= गच्छसि ? । पवनोपमेयः = पवनेन तुल्यः अहम् वेगात् प्रचलितः अपि किं त्वां

---

हम दोनों से पीछा की गई यह वसन्तसेना, श्वान ( कुत्तों ) से पीछा की गई शृगाली की भांति भाग रही है; तथा नूपुर के सहित मेखला ( काञ्ची ) के शब्द भावयुक्त मेरे हृदय ( मन ) को हरण कर रहे हैं ॥ १० ॥

विट—वसन्तसेना,

तुम क्यों गरुड़ के भय से त्रस्त नागिनि की तरह शीघ्र, एक पैर में सैकड़ों पैर रखती हुई जा रही हो ? वायु के समान मैं शीघ्रता से चल कर क्या तुम्हें

किं त्वां ग्रहीतुमथवा न हि मेऽस्ति शक्तिः ॥ ११ ॥

गणिका—( समन्तादवलोक्य ) पल्लवअ ! पल्लवअ ! परहुदिए ! परहुदिए ! महुअरअ ! महुअरअ ! सारिए ! सारिए ! हद्धि, णट्ठो मे परिजणो । एत्थ सअं एव्व अप्पा रक्खिदव्वो । [ पल्लवक ! पल्लवक ! परभृतिके ! परभृतिके ! मधुकरक ! मधुकरक ! शारिके ! शारिके ! । हा धिक्, नष्टो मे परिजनः । अत्र स्वयमेवात्मा रक्षितव्यः । ]

शकारः—विलव विलव णाए ! विलव पल्लवं वा, परहुदिअं वा, महुअरं वा, शालिअं वा, शव्वं वशन्तमाशं वा । के के तुमं परित्तअशि ।

किं वाशुदेवे शवपट्टणेशे कुन्तीशुदे वा जणमेजए वा ।
अहं तुमं गहिअ केशहत्थे दुःशाशले शीदमिवाहलामि ॥ १२ ॥

[ विलप विलप ज्ञाते ! विलप पल्लवं वा, परभृतिकां वा, मधुकरं वा, शारिकां वा, सर्वं वसन्तमासं वा । कः कस्त्वां परित्रास्यते ।

किं वासुदेवः शवपत्तनेशः कुन्तीसुतो वा जनमेजयो वा ।

---

ग्रहीतुम् (समर्थः), अथवा त्वां ग्रहीतुं मे=मम शक्तिः न अस्ति हि=नास्त्येव ॥११॥

**पल्लव इति**—पल्लव इव पल्लवक स्तत्सम्बुद्धौ हे पल्लवक ! नूतनकिसलय-तुल्यरक्तवर्णशरीरत्वात् पूर्वोक्तनामधेयो वसन्तसेनाभृत्यः, परभृतिका नाम्नी दासी तत्सम्बोधने परभृतिके ! संज्ञायाम् कन् एवं मधुकरक ! शारिके इत्युभयत्रापि विवेचनीयम् सहृदयैः । मे = मम परिजनः = रक्षकः नष्टः, अत्र = अस्यां परिस्थितौ स्वयमेव आत्मा रक्षितव्यः स्वकीयां रक्षामहं कुर्याम् इति भावः ।

शकारो लोकविश्रुतवीराणामपि रक्षणासामर्थ्यं प्रदर्शयति—किमिति ! वासुदेवः=

---

पकड़ने के लिये समर्थ हूँ; अथवा तुम्हें पकड़ने के लिये मुझमें सामर्थ्य नहीं है ॥११॥

गणिका—( चारों ओर देखकर ) पल्लवक ! पल्लवक ! परभृतिके ! परभृतिके ! मधुकरक ! मधुकरक ! शारिके ! शारिके ! हा धिक् ! मेरा परिजन नष्ट हो गया । ऐसी दशा में मैं स्वयं अपनी रक्षा करती हूँ ।

शकार—ओ औरत ! विलाप करो, पल्लवक, परभृतिका, मधुकरक, शारिका इन्हीं को क्यों, ( बल्कि ) इकट्ठे वसन्तमास को भी बुलाओ । ( देखता हूँ ) कौन तुम्हारी रक्षा एवं सहायता करता है ?

क्या वासुदेव ( श्रीकृष्ण ) या श्मशान के स्वामी ( यमराज ) या कुन्तीपुत्र ( अर्जुन ) या जयमेजय तुम्हारी रक्षा करेंगे ? ( अर्थात् कोई नहीं तुम्हारी रक्षा

अहं त्वां गृहीत्वा केशहस्ते[1] दुःशासनः सीतामिवाहरामि ॥ १२ ॥ ]

विटः—वसन्तसेने ! सर्वत्र भयानभिज्ञहृदयं मां कुरु । पश्य,

. परिचिततिमिरा मे शीलदोषेण रात्रि-

श्रीकृष्णः किं त्वां परित्रास्यते ? इति अध्याहारः, एवमग्रेऽपि यथोचित पदं एतन्निवेशनीयम् । वा शवपत्तनेशः—शवानाम् पत्तनम् = स्थानम् , नगरं वा श्मशानम्, तस्य ईशः = यमराजः, वा = अथवा कुन्तीपुत्रः = कर्णोऽर्जुनो वा तयोरेव धनुर्धरत्वेन प्रसिद्धत्वादिति आशयः । कुत्रचित् युधिष्ठिर इति पर्यायोऽपि भवितुमर्हति युधिष्ठिरस्य धार्मिकत्वाद् धार्मिकस्यैव पुरुषस्य परनारीरक्षणसम्भवात् इत्याशयः, जनमेजयः = परिक्षितपुत्रः अर्थात् न कोऽपि परित्रास्यत इति भावः, अहं ( त्वां ) केशहस्तं = केशसमूहमित्यर्थः 'पाशः पक्षस्य हस्तश्च कलापार्थाः कचात्परे' इत्यमरः, ( तव इति शेषः ) गृहीत्वा = धृत्वा दुःशासनः सीतामिव आहरामि = आकृष्य नयामीत्यर्थः । वस्तुतस्तु दुःशासनः द्रौपदीमिव इत्येव समुचितः पाठः । परन्तु शकारस्य अविवेकपूर्णोक्तिः उपमा श्रेण्यां असत्पक्षं नावगाहते, यथोक्तमभियुक्तैः—'अपार्थमक्रमं व्यर्थं पुनरुक्तं हतोपमम् । लोकन्यायविरुद्धञ्च शकारवचनं विदुः । अपरञ्च, 'आगमलिंगविहीनं देशकालन्यायसमयविपरीतम् । व्यर्थैकार्थमपार्थं भवति हि वचनं शकारस्य ॥ एवमेवोत्तरोत्तरमपि विवेचनीयम् सहृदयैः ॥ १२ ॥

सर्वत्र = सर्वस्मिन् काले भयानभिज्ञहृदयम् = भयशून्यमिति भावः, कुरु = जानीहि, धातूनामनेकार्थत्वात् इत्यर्थो भवति ।

परिचितेति—शीलदोषेण=स्वभावदोषेण, चौर्यादिदोषेण वा मे रात्रिः परि-

कर पायेगा ) मैं तुम्हारे केशों को पकड़कर दुःशासन, जैसे [2]सीता को बलात् खींचकर ( सभा के बीच ) लाया था; वैसे ही खींचकर लाता हूँ ॥ १२ ॥

विट—अयि वसन्तसेने ! मुझे सब परिस्थिति में भयरहित जानो । देखो,

मेरे स्वभाव दोष के कारण, रात्रि का समय ( मेरे लिये ) विशेष परिचित है

१. 'केशहस्ते' इत्यत्र 'केशहस्तम्' एतदेव पाठो रमणीयः स्यात् ।

२. यह शकार लोगों को योग्यता पर फबती हैं जिन्हें ऐतिहासिक एवं पौराणिक जानकारी नहीं के बराबर होती थी और जिनकी अर्थयोजना भौंडी एवं अनगढ़ चला करती थी । यही बात प्रस्तुत शकार में भी दृष्टिगोचर हो रही है ।

वहुलतिमिरकालास्तीर्णपूर्वा विघट्टाः ।
युवतिजनसमक्षं काममेतन्न वाच्यं
विपणिषु हतशेषा रक्षिणः साक्षिणो मे ॥ १३ ॥

गणिका—( आत्मगतम् ) हं इदाणिं संसइदा संवुत्ता, जो अप्पगुणाणि सअं एव्व मन्तेदि । कहं एदे अकय्यं ण करिस्सन्ति । [ अहम् इदानीं संशयिता संवृत्ता, य आत्मगुणान् स्वयमेव मन्त्रयते । कथमेतेऽकार्यं न करिष्यन्ति । ]

विटः—भवति ! क्रियतामस्माकमनुनयप्रग्रहः । पश्य,

चिततिमिरा—परिचितं तिमिरं यस्या सा ( आसीत् ) तथा वहुलतिमिरकालाः = कृष्णपक्षानुकारकालवर्णाः विघट्टा = मासाः तीर्णपूर्वाः = पूर्वं भ्रान्ताः एतत् = कुकर्म वा क्रूरकर्म युवतिजनसमक्षम् कामम् = यथेष्टम् न वाच्यम् = कथनीयम् । परन्तु हतशेषाः—हतेभ्यः शेषा इत्यर्थः । विपणिषु = आपरोषु ( वाजार ) इति लोकभाषायाम् रक्षिणः = प्रहरिणः मे = मम साक्षिणः = वधादिकर्मसाक्षिणः, प्रत्यक्षद्रष्टारः अर्थात् राजपुरुष परिकीर्णेऽपि राजमार्गे, राजश्यालादिवन्धुसत्वात् मे वधादिसाहसकर्मसु स्वेच्छाचारित्वम् जानीहि इति भावः ॥ १३ ॥

संशयिता = संदेहयुक्ता संवृत्ता = कृता अनेनेति शेषः, आत्मगुणान् = स्वक्रूरकार्याणि मन्त्रयते = ख्यापयति अकार्यं = पापकर्म ।

**विट इति**—अनुनयप्रग्रहः—अनुनयस्य प्रग्रहः = प्रवाहः, अनुवन्धोवेति भावः ।

( तात्पर्य यह है कि मैं रात्रि में ही कुकर्म करता हूँ ), और मैंने पहले कृष्ण पक्ष में अन्धकार पूर्ण टेढ़ी-मेढ़ी गलियों का भ्रमण भी किया है। मैं इन सव वातों को युवतिजन के समक्ष निर्देश ( चर्चा ) करना नहीं चाहता, किन्तु वचे हुए जो रक्षक हैं वे ही मेरे ( वधादि क्रूर ) कर्म के साक्षी भी हैं ॥ १३ ॥

गणिका—(स्वगत) मैं ( पूर्वोक्त वृत्तान्त ) से इस समय सन्देह में पड़ गई हूँ, जो स्वयं अपने गुणों को प्रकाशित करता है क्या निन्दित कार्य को नहीं करेगा? अपितु करेगा ही।

विट—हे माननीये ! आप हमारे अनुनय को स्वीकार कीजिए। देखें—

जनयति खलु रोषं प्रश्रयो भिद्यमानः
किमिव च रुषितानां दुष्करं मद्विधानाम् ।
अनुनयति समर्थः खड्गदीर्घः करोऽयं
युवतिवधघृणाया मां शरीरं च रक्ष ॥ १४ ॥

गणिका—( आत्मगतम् ) अणुणओ वि खु से भाएदि । [ अनुनयोऽपि खल्वस्य भाययति । ]

शकारः—वसन्तसेणिए ! जुत्तं भावे भणादि । बहुमाणिदे खु णाम बलिअजणदुल्लहे अणुणए । पेक्ख दाव !

असि क्खु तिक्खे शिहिणीविसेसए
खिवेमि शीशं नव मालए हवा ।
अलं तु अम्हालिसकाणि लोशिअ
मडे खु जो होइ ण णाम जीवइ ॥ १५ ॥

---

जनयतीति—प्रश्रयः = विनयः भिद्यमानः = प्रत्याख्यायमानः सन् रोषम् = क्रोधम् जनयति खलु = निश्चयेन, मद्विधानां रुषितानाम् किमिव च दुष्करम् अर्थात् न किमपि अकरणीयम् स्यादिति भावः । अयम् समर्थः = वधादिक्रूरकर्मशक्तः खड्गदीर्घः—खड्गेन दीर्घः करः = हस्तः त्वाम् अनुनयति = प्रार्थयति अतः ( अनुनयपरिपालनं कृत्वा ) मां शरीरं च युवतिवधघृणायाः—युवत्याः वधः तत्र घृणा तस्याः रक्ष = परिपालय अर्थात् येन विधिना युवतिवधः न भवेत् तथा कुरु इति भावः ॥ १४ ॥

भाययति = भयमुत्पादयति इत्यर्थः ।

---

भंग होता हुआ अनुनय निश्चय ही क्रोध को उत्पन्न कर देता है। मेरे जैसे क्रोधित जन के लिये कुछ भी दुष्कर नहीं है। ( वधकर्म में ) समर्थ, लम्बी तलवार को धारण किए हुए यह हाथ ( आप से ) निवेदन करता है कि ( अनुनय को स्वीकार करके ) मुझे और मेरे शरीर को युवति वध की घृणा से बचाओ ॥ १४ ॥

गणिका—(स्वगत) इसका अनुनय भी मुझे भय उत्पन्न करता है।

शकार—वसन्तसेने ! माननीय विट उचित कहते हैं। बलवान् जन से जो अनुनय मिलता है वह दुर्लभ होने के कारण बहुत कीमत रखता है। देखो, बाबु !

[ वसन्तसेने ! सुष्ठु भावो भणति । बहुमान्यते खलु तावद् वलवज्जन-दुर्लभोऽनुनयः । पश्य वासु !

असिः खलु तीक्ष्णः शिखिग्रीवामेचकः क्षिपामि शीर्षं तव मारयेऽथवा ।
अलं त्वस्मादृशकान् रोषयित्वा मृतः खलु यो भवति न नाम जीवति ॥१५॥]

गणिका—अय्य ! कुलउत्तजणस्स सीलपरितोसोवजीविणी गणिआ खु अहं । [ आर्य ! कुलपुत्रजनस्य शीलपरितोषोपजीविनी गणिका खल्वहम् । ]

विटः—अतः खलु प्रार्थ्यसे ।

---

वलवज्जनदुर्लभोऽनुनयः—वलवज्जनात् दुर्लभः यदा कदा लभ्यः अनुनयः अपि लोकैः बहुमान्यते = शिरो धार्यते, परिपाल्यते इत्यर्थः । तस्मात् अस्माकम् प्रार्थनां स्वीकुरु इति फलितार्थः । हेवासु ! = हे वाले ! 'वाला स्याद्वासुः' इत्यमरः । अत्र वासू शब्दः कोमलामन्त्रणे प्रयुक्तः । तस्यैव वासू शब्दस्य सम्बुद्धौ 'वासु' इति रूपम् भवति । पश्य = विचारय इति भावः ।

असिरिति—शिखिग्रीवामेचकः—शिखिनः = मयूरस्य ग्रीवा तद्वत् मेचकः= श्यामः तीक्ष्णः = निशितः असिः = कृपाणः मे = मम ( हस्ते अस्ति इति शेषः, अनेन ) तव शीर्षम् = मस्तकं क्षिपामि भूमौ पातयामीति भावः, अथवा त्वाम् मारये - प्राणविनाशं करोमि । अस्मादृशकान् = मद्विधान् जनान् रोपयित्वा अलम् = व्यर्थं न किमपि फलं सेत्स्यतीति भावः । कुत = इत्याह—मृतरिति । यो जनो मृतः भवति स जनो खलु = निश्चयेन न जीवति नाम - न प्राणान् धारयति । अतः अस्मद्धस्तगतत्वेन तव मरणस्य अनिवार्यतया पलायनं निरर्थक-मिति भावः ॥ १५ ॥

शीलपरितोषोपजीविनी—शीलेन परितोषः इति शीलपरितोषः तेन जीवतीति शीलपरितोपजीविनी गणिका = वेश्या ।

---

मयूर के कंठ के समान श्याम मेरा तीक्ष्ण ( तेज ) तलवार है । ( इसलिये ) तुम्हारे सिर को काट डालूंगा अथवा तुम्हें मार दूँगा । मेरे जैसे जन को क्रोधित करना उचित नहीं है । और जो मर जाता है वह जीवित भी नहीं होता ॥ १५ ॥

गणिका—आर्य, मैं कुलपुत्रजन के शीलरूपी परितोष से जीवित रहनेवाली वेश्या हूँ ।

विट—इसीलिए तो मैं तुम्हारी प्रार्थना करता हूँ ।

गणिका—अय्य ! इमादो जणादो किं इच्छीअदि सरीरं वा आदु अलङ्कारो वा । [ आर्य ! अस्माज्जनात् किमिष्यते शरीरं वाथवालङ्कारो वा । ]

विटः—न पुष्पमोक्षणमर्हति लता । कृतमलङ्कारेण ।

गणिका—अहं खु दाणिं अत्ताणं ण सन्दावेअं । [ अहं खल्विदानीमात्मानं न सन्तापयेयम् । ]

शकारः—वशन्तशेणिए ! अहं भट्टिपुत्ते कामइदव्वे । [ वसन्तसेने अहं भर्तृपुत्रः कामयितव्यः । ]

गणिका—सन्तो सि । [ शान्तोऽसि । ]

शकारः—शुणाहि भावे ! शुणाहि । एशा वशन्तशेणिआ मं शन्तो शि त्ति भणादि । [ शृणु भाव ! शृणु । एषा वसन्तसेना मां श्रान्तोऽसीति भणति । ]

---

पुष्पमोक्षणम्—पुष्पाणां = कुसुमानां मोक्षणम् = त्रोटनं नार्हति, लता = वल्ली अतः कृतम् = अलम्, व्यर्थम् इत्यर्थः, अयमत्राशयः—यथा कुसुमसमृद्धा लता पुष्पापहरणेन अशोभना सम्पद्यते तथैव तव शरीरात् अलङ्कार विमोचनेन रमणीयताहानिर्भविष्यति । अनेन विशेषणेन वसन्तसेनायाः सयत्नवर्धितलावण्यमङ्गविलासपाटवञ्च सूचितं भवति ।

---

गणिका—आर्य, मुझ जैसे जन से क्या शरीर चाहते हैं अथवा अलङ्कार ।

विट—लता, पुष्प एवं पत्तों का मोक्षण ( मुक्ति ) नहीं चाहती ( अर्थात् जैसे लता, पुष्प एवं पत्तों से अलग होना नहीं पसन्द करती वैसे ही तुम भी लता की भांति अलङ्कार से पृथक नहीं हो सकती ) । अतएव अलङ्कार की आवश्यकता नहीं है ।

गणिका—मैं अपने आपको ( आपकी बातों का उल्लङ्घन करके ) दुःखी करना नहीं चाहती ।

शकार—वसन्तसेने ! मैं स्वामी का पुत्र, कामासक्त हूँ । अतः तुम मेरी कामना करो ।

गणिका—शान्त हो ओ ।

शकार—सुनो जी, सुनो । यह वसन्त सेना मुझे 'थक गये हो' ऐसा कहती है ।

विटः—( आत्मगतम् ) आक्रुष्टमात्मानं न जानाति मूर्खः । ध्वंस इत्युक्ते श्रान्त इत्यवगच्छति । अपि च,

**अभिनयति वचांसि सर्वगात्रैः**
**किमपि किमप्यनवेक्षितार्थमाह ।**
**अनुचितगतिरप्रगल्भवाक्यः**
**पुरुषमयस्य पशोर्नवावतारः ॥ १६ ॥**

( प्रकाशम् ) वसन्तसेने ! किमिदं मत्सन्निधौ वेशवासविरुद्धमभिहितम् । पश्य,

---

आक्रुष्टम् = निन्दितम् इत्यर्थः ।

**अभिनयतीति**—( एषः ) सर्वगात्रैः वचांसि अभिनयति = शरीरावयवभङ्गिभिः मनोभावं प्रकटयतीति भावः, किमपि किमपि अनवेक्षितार्थम्—न अनवेक्षितः इति अनवेक्षितः = अनालोचितः अर्थः = प्रयोजनं यस्मिन् तत्तथा, आह = कथयति । पुरुषमयस्य = पुरुषरूपस्य पशोः = जीवस्य ( एषः ) अनुचित गतिः—अनुचिता गतिः अस्य तथा अर्थात् निन्दितव्यवहार इत्यर्थः, अप्रगल्भवाक्यः—अप्रगल्भं = प्रतिभाशून्यम् वाक्यं यस्य स, नवावतारः = नवीनोत्पत्तिः इत्यर्थः ॥ १६ ॥

वेशवासविरुद्धम्—वेशे = गणिकाभवने वासः = स्थितिस्तस्य वेश्याभावस्येतिभावः, विरुद्धम् = अनुचितम् , विपरीतम् 'शान्त' इत्युक्तवचनं

---

विट—( स्वगत ) यह मूर्ख ( शकार ) अपने को निन्दित नहीं समझता । ( वसन्त सेना के द्वारा ) 'ध्वंस' (= विनाश एवं घृणा सूचक ) कहे जाने पर भी 'श्रान्त' (= थका हुआ ) ऐसा समझ रहा है ।

और भी—

यह सम्पूर्ण अङ्गों ( की भाव भङ्गिमा ) के द्वारा मनोगत भाव को प्रकट कर रहा है, तथा कुछ-कुछ अस्पष्ट अभिप्राय को कह रहा है । यह पुरुष रूपी पशु ( जीव ) का एक नया अवतार है, जिसका व्यवहार निन्दित एवं वाक्य प्रतिभाशून्य है ॥ १६ ॥

( प्रकाश रूप से ) वसन्त सेने ! तुमने क्यों मेरे सामने वेश्याओं के विरुद्ध वाक्य कहा ? देखो—

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव ।
वहसि हि धनहार्यं पण्यभूतं शरीरं
सममुपचर भद्रे ! सुप्रियं चाप्रियं च ॥ १७ ॥

गणिका—एसो मे अभिणिवेसो अभिजणेण तुलीअदि । [ एष मेऽभिनिवेशोऽभिजनेन तोल्यते । ]

---

किम् = कथं अभिहितम् = कथितम् त्वयेति शेषः । अयमत्राशयः—यदि त्वं पतिपरायणा आर्यमहिलाऽसि तर्हि गणिकाभवने कथं निवससि । शकारकृतप्रस्तावं 'शान्त' इत्यनेन वसन्तसेनया निन्दितमाकर्ण्य तदुक्तेरनौचित्यं निम्नश्लोकेन प्रस्तौति—

तरुणजनेति—वेशवासः—वेशे = वेश्यालये वासः = स्थितिः 'वेशो वेश्याजनाश्रयः' इत्यमरः, तरुणजनसहायः—तरुणजनः = युवजनः सहायः = आश्रयो यस्य तादृशः ( त्वया ) चिन्त्यताम् = स्मर्यताम् । त्वं मार्गजाता = पथि समुत्पन्ना सकलजनसंसर्गयोग्येति भावः, लता इव = वल्लीव गणिका = वेश्या । अर्थात् सामान्यजनोपभोग्या इति = एवंरूपा विगणय = जानीहि आत्मानमिति शेषः । हि= यतः पण्यभूतम् = विक्रेयवस्तुस्वरूपमत एव धनहार्यम्—धनेन हार्यम् अर्थात् अर्घविनिमये क्रय्यं शरीरं वहसि = धारयसि । ( अत एव ) हे भद्रे ! सुप्रियम् = स्वाभीष्टम् अप्रियम् च = अनभिमतञ्च (सर्वम् जनमिति भावः) समम् समानभावेन उपचर = भजस्व इत्यर्थः । 'निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि । वित्तमात्रं समालोक्य सा रागं दर्शयेद्‌बहिः ॥' इति वेश्यालक्षणात् अत्र वयमप्रिया अपि त्वया सेव्या इति आशयः ॥ १७ ॥

अभिनिवेशः = चारुदत्त—प्रति प्रेमसङ्कल्प इति भावः, अभिजनेन =

---

वेश्यालय, तरुणजन के सहायक हैं ऐसा तुम्हें सोचना चाहिये । तुम एक वेश्या हो और मार्ग में पड़ी हुई लता की भांति सर्वसाधारण के उपभोग की वस्तु हो । तुम पण्यभूत एवं धन के द्वारा एकमात्र खरीदने योग्य शरीर को धारण करती हो । अतएव हे भद्रे ! प्रिय ( रसिक ) और अप्रिय ( अरसिक ) दोनों को समान भाव से स्वीकार करो ॥ १७ ॥

गणिका—मेरा यह सङ्कल्प ( अर्थात् चारुदत्त के प्रति प्रेम संकल्प ) मातृ-पितृ कुल के अनुरूप है ।

शकारः—भावे ! एशा अन्धआलपूलिदगम्भीला लच्छा दीशइ। मा खु णाए एत्थ भंशइदव्वा। आ कामदेवाणुआणप्पहुदि णअणमत्तशत्थुलं दलिद्दशत्थवाहपुत्तं चालुदत्तवडुअं कामेदि एशा। इदं तश्श गेहश्श पक्खदुवालं। [ भाव ! एषान्धकारपूरितगम्भीरा रथ्या दृश्यते। मा खलु ज्ञाता अत्र भ्रंशयितव्या। आ कामदेवानुयानात् प्रभृति नयनमात्रसंस्थुलं दरिद्रसार्थवाहपुत्रं चारुदत्तवटुकं कामयत एषा। इदं तस्य गृहस्य पक्षद्वारम्। ]

गणिका—( सहर्षमात्मगतम् ) एदं तस्स गेहं। दिट्ठिआ दाणिं अमित्तजणणिरोहेण पिअजणसमीवं उवणीदम्हि। भोदु, एवं दाव करिस्सं। ( अपसरति। ) [ एतत् तस्य गेहम्। दिष्ट्येदानीममित्रजननिरोधेन प्रियजनसमीपमुपनीतास्मि। भवतु, एवं तावत् करिष्यामि। ]

शकारः—( विलोक्य ) भावे ! णट्ठा णाए णट्ठा। [ भाव ! नष्टा ज्ञाता नष्टा। ]

---

स्वकीयकुलपरम्परया इत्याशयः।

अन्धकारपूरित गम्भीरा—अन्धकारेण पूरिता = परिपूर्णा इति, अन्धकारपूरिताचासौ गम्भीरा च इति तथोक्ता। कामदेवानुयानात्—कामदेवस्य अनुयानम् = उत्सवे अनुगमनमिति भावः, तस्मात् प्रभृति = आरभ्य इत्यर्थः, नयनमात्रसंस्थुलम्—नयनमात्रम् संस्थुलः=रम्यः तम् (चारुदत्तवटुकं इति शेषः)।

दिष्ट्या = सौभाग्येन, अमित्रजननिरोधेन=शत्रुजन प्रेरणया प्रियजनसमीपम्= आर्यचारुदत्तसमीपम् इत्यर्थः।

---

शकार—भाव ! यह गली अन्धकार से परिपूर्ण एवं गम्भीर दिखाई पड़ रही है। ऐसे स्थान पर यह कहीं गायब न हो जाय। यह कामदेव के उत्सव में गई हुई थी और उसी दिन से केवल ( सौंदर्य के कारण ) आँखों को सुख देनेवाले, वणिक्पुत्र चारुदत्त के प्रति आकृष्ट हो गई। यह उसके ( चारुदत्त के ) घर का पक्षद्वार है।

गणिका—( अपने मन में हर्षित होती है ) यह उसी का ( चारुदत्त का ) घर है। सौभाग्यवश दुर्जनों के निरोध से प्रियजन के समीप लाई गई हूँ। ( वसन्त सेना का अपसरण )

शकार—( देखकर ) भाव ! ज्ञाता, जो अभी दिखाई पड़ रही थी ( दृष्टि से ) ओझल हो गई।

विटः—कथं नष्टा । अन्विष्यतामन्विष्यताम् ।

शकारः—भावे ! ण दिश्शदि । [ भाव ! न दृश्यते । ]

विटः—हन्त वञ्चिताः स्मः । वसन्तसेने ! उपलब्धेदानीमसि ।

कामं प्रदोपतिमिरेण न दृश्यसे त्वं
सौदामनीव जलदोदरसन्निरुद्धा ।
त्वां सूचयिष्यति हि वायुवशोपनीतो
गन्धश्च शब्दमुखराणि च भूषणानि ॥ १८ ॥

( गणिका मालामपनीय भूषणानि चोत्सारयति । )

विटः—अहो बलवांश्चायमन्धकारः । सम्प्रति हि,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।

---

गाढान्धकारतिरोहितां वसन्तसेनामुद्दिश्य अदर्शनेऽपि तस्या मालागन्धाद्यनुमेयतां प्रस्तौति—काममिति । त्वम् जलदोदरसंनिरुद्धा—जलदस्य = मेघस्य उदरम् = अभ्यन्तरम् तत्र सन्निरुद्धा = तिरोहिता सौदामनीव = विद्युदिव प्रदोषतिमिरेण—प्रदोषस्य = सन्ध्याकालस्य तिमिरेण = अन्धकारेण हेतुना कामं = निश्चितम् , पर्याप्तं यथा स्यात्तया न दृश्यसे ( अस्माभिरिति शेषः )। (परन्तु) वायुवशोपनीतः—वायोः वशेन उपनीतः गन्धः = तव मालासुरभिः शब्दमुखराणि शब्देन मुखराणि = वाचालानि भूषणानि च त्वाम् सूचयिष्यति हि ॥ १८ ॥

उत्सारयति = अङ्गात् अवतारयति इत्यर्थः । बलवान् = गाढ इत्यर्थः ।

गाढान्धकारविनष्टदृष्टिर्विटः किमपि द्रष्टुमसमर्थः स्वकीयां दशां वर्णयन् आह—लिम्पतीति—तमः अन्धकारः अङ्गानि = शरीराणि लिम्पतीव = म्रक्षतीव नभः=

---

विट—कैसे और कहाँ चली गई; यहीं खोजो, यहीं खोजो ।

शकार—भाव, नहीं दिखाई पड़ रही है ।

विट—हाय, हम छले गये । वसन्तसेने ! तुम इस समय मिल जाओगी ।

यद्यपि तुम मेघ के भीतर छिपी हुई सौदामिनी ( विद्युत ) की भांति सन्ध्याकालीन अन्धकार के कारण नहीं दिखाई पड़ती हो, तथापि हवा के संसर्ग से लाया हुआ (तुम्हारी माला का) गन्ध एवं अलङ्कार के शब्द तुम्हें प्रकाशित कर देंगे ॥१८॥

( वसन्तसेना ( उपलब्धि के साधन ) माला को दूर फेंककर अलङ्कार को भी ( शरीर ) से उतारती है । )

विट—अहो ! यह गाढ अन्धकार है । इस समय अन्धकार मानों अङ्गों का

असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १९ ॥

अपि च,

सुलभशरणमाश्रयो भयानां वनगहनं तिमिरं च तुल्यमेव ।
उभयमपि हि रक्षतेऽन्धकारो जनयति यश्च भयानि यश्च भीतः ॥२०॥

तथाहि—

आलोकविशाला मे सहसा तिमिरप्रवेशसञ्छन्ना ।
उन्मीलितापि दृष्टिर्निमीलितेवान्धकारेण ॥ २१ ॥

---

आकाशः अञ्जनम् = कज्जलं वर्षतीव = पातयतीव असत्पुरुषसेवा इव मम दृष्टिः निष्फलतां गता अर्थात् येन प्रकारेण हीनजनसेवा फलवती न भवेत्, तथैव मम दृष्टिः किञ्चिदपि द्रष्टुं न समर्था, अत एव निष्फला जाता इत्याशयः ॥ १९ ॥

दृष्टिव्याघातकस्य अन्धकारस्योपयोगित्वमपि प्रकारान्तरेण प्रस्तौति—अपि चेति । **सुलभेत्यादि—**सुलभशरणम्—सुलभं शरणं यत्र इत्यर्थः । तिमिरं = तमः वनगहनम् च = सघनवनञ्च तुल्यमेव भयानां = भयार्तानाम् आश्रयः । यश्च भयं जनयति यथा तस्करादयस्तथा यश्च भीतः इति उभयमपि अन्धकारः रक्षति= प्राणरक्षां करोति ॥ २० ॥

**आलोकेत्यादि—**आलोकविशाला—आलोके=दर्शनविषये विशाला=पटुः, अर्थात् तीव्रदर्शनशक्तियुक्तेति भावः । मे = मम दृष्टिः सहसा तिमिरप्रवेश-सञ्छन्ना—तिमिरस्य=अन्धकारस्य प्रवेशेन=आविर्भावेन, आगमनेन वा सञ्छन्ना= सन्निरुद्धा सती अर्थात् दर्शनशक्तिरहिता वा अतएव उन्मीलिताऽपि = वसन्त-

---

विलेपन कर रहा हो, आकाश मानों काले अञ्जन की वर्षा कर रहा हो, अत एव असत् पुरुष की सेवा की भांति मेरी दृष्टि निष्फल हो गई है ॥ १९ ॥

और भी—

गहन जंगल तथा घन अन्धकार दोनों समानरूप से भयभीत जन के लिये और जो भय उत्पन्न करता है उसके सुलभ शरण एवं आश्रय हैं ॥ २० ॥

और भी—

( वस्तु के ) दर्शन के विषय में ( देखने में ) पटु मेरी दृष्टि सहसा अन्धकार के आविर्भाव से आच्छन्न हो जाती है । यद्यपि मेरी दृष्टि खुली हुई है तथापि अन्धकार के द्वारा मानों मूंद सी गई है ॥ २१ ॥

गणिका—अम्महे भित्तिपरिणामसूइदं पक्खदुआलं । असम्भोअमलिणदाए इह अहिअं अन्धआरो । ता इह एव्व चिट्ठिस्सं । ( स्थिता । ) [ अहो भित्तिपरिणामसूचितं पक्षद्वारम् । असम्भोगमलिनतयेहाधिकमन्धकारः । तद् इहैव स्थास्यामि । ]

नायकः—मैत्रेय ! गच्छ, चतुष्पथे बलिमुपहर मातृभ्यः ।

विदूषकः—ण मे सद्धा, अण्णो गच्छदु । [न मे श्रद्धा, अन्यो गच्छतु ।]

नायकः—किमर्थम् ।

विदूषकः—मम बुद्धी आदंसमण्डलगआ विअ छाआ वामेसु दक्खिणा दक्खिणेसु वामा होइ । [ मम बुद्धिरादर्शमण्डलगतेव च्छाया वामेषु दक्षिणा दक्षिणेषु वामा भवति । ]

---

सेनां द्रष्टुं ( दृष्टिः ) व्यापारिताऽपि अन्धकारेण ( हेतुना ) निमीलिता = पुनः मुद्रिता इव ( भवति ) ॥ २१ ॥

भित्तिपरिणामसूचितम्—भित्तेः परिणामः = परिवर्तनम् तेन सूचितम् = बोधितं, चिह्नितम् वा पक्षद्वारम् = पार्श्वद्वारम् ( मुख्य द्वार के बगल की द्वार ), असम्भोगमलिनतया—असम्भोगेन = भित्त्यादेः असंस्कारेण मलिनतया इति भावः ।

आदर्शमण्डलगता—आदर्शस्य = दर्पणस्य मण्डलम् तम् गता छाया इव इत्यर्थः ।

---

गणिका—हाय ! ( चारुदत्त के घर का ) पक्षद्वार देख रही हूँ-भित्ति (दिवाल) में भी विशेष परिवर्तन आ गया है, एवं इसका दिवाल असंस्कार (सफेदी आदि के अभाव ) के कारण मलिन हो गया है, जिससे यहाँ अन्धकार का विशेष साम्राज्य परिलक्षित हो रहा है । अतएव मैं यहीं ठहरूँगी । ( ठहर गई । )

नायक—मैत्रेय, जाओ, चतुष्पथ ( चौराहे ) पर मातेश्वरी आदि शक्तियों को बलि चढ़ा आओ ।

विदूषक—इन सब में मेरी श्रद्धा नहीं है । अतः किसी दूसरे को जाने दीजिये ।

नायक—क्यों ?

विदूषक—मेरी बुद्धि दर्पण में पड़ी हुई छाया की भाँति अनुकूल विषय में प्रतिकूल एवं प्रतिकूल विषय में अनुकूल हो रही है ।

नायकः—मूर्ख ! यथाविभवेनार्च्यताम् । भक्त्या तुष्यन्ति दैवतानि । तद् गम्यताम् ।

विदूषकः—एआई अहं कहं गमिस्सं । [ एकाक्यहं कथं गमिष्यामि । ]

नायकः—रदनिके ! अनुगच्छात्रभवन्तम् ।

रदनिका—जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति । ]

विदूषकः—भोदि ! दीवं अहं णइस्सं । [ भवति ! दीपमहं नेष्यामि । ]

नायकः—यथा भवान् मन्यते तथास्तु ।

विदूषकः—( दीपं गृहीत्वा ) भो रदणिए ! अवावुद पक्खदुवालं । [ भो रदनिके ! अपावृणु पक्षद्वारम् । ]

रदनिका—तह । ( नाट्येन द्वारमपावृणोति ) [ तथा । ]

( गणिका वस्त्रान्तेन दीपं निर्वापयति । )

विदूषकः—अविहा ! अविहा ! । [ अविहा ! अविहा ! । ]

नायकः—वयस्य ! किमेतत् ।

---

**नायक इति**—यथाविभवम् = विभवमनतिक्रम्य यथा स्यात्तथेति भावः ।

'अविहा' । इति खेदे अव्ययम् ।

---

नायक—मूर्ख ! अपनी आर्थिक स्थिति के अनुरूप पूजा करो । भक्ति से ही देवता सन्तुष्ट होते हैं । अतः जाओ ।

विदूषक—मैं अकेला कैसे जाऊँगा ?

नायक—रदनिके ! इनके साथ जाओ ।

रदनिका—जो महाराज की आज्ञा ।

विदूषक—माननीये, मैं दीप लूँगा ।

नायक—जो आपकी इच्छा हो वही कीजिए ।

विदूषक—( दीप हाथ में लेकर ) अयि रदनिके ! पार्श्वद्वार खोलो ।

रदनिका—अच्छी बात है । ( अभिनय द्वारा पार्श्वद्वार ( दरवाजा ) को खोलती है । )

( इसी बीच में द्वार के खुलते ही वहीं बैठी हुई गणिका वसन्तसेना वस्त्राञ्चल के द्वारा दीप को बुझा देती है । )

विदूषक—हाय ! हाय !

नायक—मित्र ! क्या हुआ ?

विदूषकः—अवावुदपक्खदुवारपिण्डीकिदप्पविट्ठेण राअमग्गलङ्किण्णेण वादेण सहसा णिग्गच्छन्तस्स मम हत्थे णिव्वाविदो दीवो। [ अपावृतपक्षद्वारपिण्डीकृतप्रविष्टेन राजमार्गसङ्कीर्णेन वातेन सहसा निर्गच्छतो मम हस्ते निर्वापितो दीपः । ]

नायकः—मूर्ख ! धिक् त्वाम् ।

विदूषकः—अप्पं खु मे अवरद्धं । रदणिए ! गच्छ, चउप्पहे मं पडिवालेहि । जाव अहं वि अब्भन्तरचउस्सालादो दीवं गहिअ आअच्छामि । ( निष्क्रान्तः । ) [ अल्पं खलु मेऽपराद्धम् । रदनिके ! गच्छ, चतुष्पथे मां प्रतिपालय । यावदहमप्यभ्यन्तरचतुश्शालाद् दीपं गृहीत्वाऽऽगच्छामि । ]

चेटी—अय्य ! तह । ( परिक्रामति । ) [ आर्य ! तथा । ]

गणिका—दिट्ठिआ मम पवेसणिमित्तं अवावुदं पक्खदुवालं । अलं चारित्तभएण । जाव पविसामि । ( अभ्यन्तरं प्रविश्य तिष्ठति । ) [ दिष्टया मम प्रवेशनिमित्तमपावृतं पक्षद्वारम् । अलं चारित्रभयेन । यावत् प्रविशामि । ]

---

अभ्यन्तरचतुःशालात्—चतसृणां शालानाम् समाहारः इति चतुःशालम्, अभ्यन्तरस्य, अभ्यन्तरस्थं वा चतुःशालम् तस्मात् तथा ।

प्रवेशनिमित्तम् = प्रवेशस्य निमित्तम् अथवा प्रवेशः निमित्तं कारणम् यस्मिन् तत्तथा, अपावृतम् = उद्घाटितम् ।

---

विदूषक—ज्योंही मैं शीघ्रता से दीपक लिए हुए बाहर हो रहा था, उसी समय सङ्कीर्ण राजमार्ग से अचानक आया हुआ वायु खुले हुए पार्श्व द्वार में एकत्रित हो गया और उसने दीप को बुझा दिया ।

नायक—मूर्ख ! तुम्हें धिक्कार है ।

विदूषक—सचमुच में, मेरा बहुत थोड़ा अपराध है । रदनिके ! चलो, चौराहे पर मेरी प्रतीक्षा करना । तब तक मैं भी दीप लेकर आता हूँ । (निकल जाता है ।)

चेटी ( रदनिका )—आर्य, ऐसा ही हो । ( घूमती है । )

गणिका—सौभाग्य से मेरे प्रवेश के निमित्त चारुदत्त के घर का पार्श्वद्वार खोल दिया गया । चरित्र का भय करना अनुपयुक्त है । ( अर्थात् ऐसी परिस्थिति में चरित्र का भय करने से कार्य नहीं चलेगा । ) तब तक प्रवेश करती हूँ । ( भीतर प्रवेश कर बैठ जाती है । )

विटः—( विलोक्यात्मगतम् ) भवनान्निर्गत्य काचिदियमागच्छति । भवतु, अनया वराकं वञ्चयामि । ( प्रकाशम् ) सुरभिस्नानधूपानुविद्ध इव गन्धः ।

शकारः—आम भावे ! शुणामि गन्धं शवणेहिं । अन्धआलपूलिदेहिं णाशापुडेहिं शुट्ठु ण पेक्खामि । [ आम भाव ! शृणोमि गन्धं श्रवणाभ्याम् । अन्धकारपूरिताभ्यां नासापुटाभ्यां सुष्ठु न पश्यामि । ]

विटः—तिष्ठ तिष्ठ । क्व यास्यसि । ( चेटीं गृह्णाति । )

( चेटी सभयं भूमौ पतिता । )

शकारः—गण्ह भावे ! गण्ह । [ गृहाण भाव ! गृहाण । ]

विटः—

**एषा हि वयसो दर्पात् कुलपुत्रावमानिनी ।**

---

वराकम् = हतभाग्यम् ( शकारम् इति शेषः ) । सुरभिस्नानधूपानुविद्धः—स्नानस्य धूपः = गात्रानुलेपनद्रव्यविशेषः, इति स्नानधूपः, सुरभिः स्नानधूपः तेन अनुविद्ध इव गन्ध इति भावः ।

अन्धकारपूरिताभ्याम्–अन्धकारेण पूरिते ताभ्याम् ( नासापुटाभ्याम् इति भावः ) ।

**एषा इति**—वयसः = यौवनस्य, दर्पात् = अभिमानात् ( हेतोः ) कुलपुत्रावमानिनी—कुलपुत्राणाम् = अस्मद्विधानां कुलपुत्राणाम् अवमानिनी = अवमानकारि-

---

विट—( देखकर अपने आप ) भवन से निकलकर यह कोई आ रही है। अच्छा, मैं इसी के द्वारा ( शकार को ) छलूंगा। ( प्रकाश रूप से ) सुगन्धित स्नान द्रव्य से व्याप्त यह गन्ध है।

शकार—हाँ, ( बिल्कुल ठीक ) भाव ! मैं कानों के द्वारा गन्ध सुनता हूँ एवं अन्धकार से परिपूर्ण नासिका के द्वारा कुछ भी नहीं देख रहा हूँ।

विट—ठहरो, ठहरो। कहाँ जाओगी ? ( चेटी को पकड़ता है। )

( चेटी भय के कारण भूमि पर गिर पड़ती है। )

शकार—भाव, पकड़ो, पकड़ो।

विट—मैंने पुष्प के विन्यास से भूषण योग्य केशों के द्वारा ( इसे ) बलात्

केशेषु कुसुमन्यासैः सेवितव्येषु धर्षिता ॥ २२ ॥

शकारः—भावे ! किं गहीदा । [ भाव ! किं गृहीता । ]

विटः—अथ किम् । एषा गन्धानुसारेण गृहीता ।

शकारः—दाशीए पुत्तीए शीशं दाव छिन्दिअ पच्चा मालइश्शं । [ दास्याःपुत्र्याः शीर्षं तावच्छित्त्वा पश्चान्मारयिष्यामि । ]

विटः—गृह्यतां तावत् ।

शकारः—( चेटीं गृहीत्वा )

**एशा हि वाशू शिलशि ग्गहीदा केशेशु वालेशु शिलोलुहेशु ।**
**कूजाहि कन्दाहि लवाहि वात्तं महेश्शलं शङ्कलमिश्शलं वा ॥ २३ ॥**

[ एषा हि वासूः शिरसि गृहीता केशेषु वालेषु शिरोरुहेषु ।

---

णीति भावः अथवा कुलपुत्रम् अवमन्यते या सा इति यावत् । एषा = वसन्तसेनेति भावः, कुसुमन्यासैः—कुसुमानां = पुष्पाणां न्यासैः = विन्यासैः स्थापनैर्वा, सेवितव्येषु = भूषणोपेतेषु केशेषु धर्षिता = बलाद् गृहीता ॥ २२ ॥

शीर्षम् = 'शीर्षस्थकेशम्' इति लक्षणया अर्थो बोद्धव्य इति श्रीकुसुदरञ्जनः ।

**एषा हीति**—एषा वासूः = बाला शिरसि केशेषु = कचेषु, बालेषु, शिरोरुहेषु इत्यधिकं केशापरपर्यायत्वात् तथाहि—'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' इत्यमरः । एवमेवाग्रेऽपि शिवादिपदानामधिकपदत्वं ज्ञेयम् । गृहीता ( असि ) साम्प्रतम् शङ्करम् ईश्वरं = विष्णुं महेश्वरं वा आर्तम् = कातरभावेन

---

पकड़ लिया है, ( क्योंकि ) यह तरुणावस्था के अभिमान से हमारे जैसे कुलपुत्रों को अपमानित कर रही है ॥ २२ ॥

शकार—भाव, क्या वह पकड़ ली गई ?

विट—और क्या ? यह केशों में लगाए हुए गन्धयुक्त प्रसाधन द्रव्यों के प्रभाव से पकड़ी गई है ।

शकार—सर्वप्रथम इस दासीपुत्री ( दोगली ) का शिर काटूंगा तदनन्तर मारूंगा ।

विट—तब तक पकड़ो ।

शकार—मैंने इस बाला को सिर से, केशों से तथा सिर के बालों द्वारा

कूज क्रन्द लप वार्तं महेश्वरं शङ्करमीश्वरं वा ॥ २३ ॥ ]

( चेटीं बलादाकर्षति । )

चेटी—किं अय्यमिस्सेहि ववसिदं । [ किमार्यमिश्रैर्व्यवसितम् । ]

शकारः—भावे ! जाणामि शलयोगेण ण होइ वशन्तशेणिआ ।

[ भाव ! जानामि स्वरयोगेन न भवति वसन्तसेना । ]

विटः—न मोक्तव्या । वसन्तसेनैवैषा ।

**एषा रङ्गप्रवेशेन कलानां चैव शिक्षया ।**

**स्वरान्तरेण दक्षा हि व्याहर्तुं तन्न मुच्यताम् ॥ २४ ॥**

( प्रविश्य )

विदूषकः—( दीपं गृहीत्वा ) राअमग्गसङ्किण्णेण सीअसुउमारेण वादेण

---

लप = उक्तदेवमुद्दिश्य विलापं कुरु, क्रन्द, कूज वा तथापि त्वां गृह्णामि इति भावः ॥

आर्यमिश्रैः = पूज्यवर्यैः, व्यवसितम् = प्रारब्धम् ।

**शकार इति**—एषा = वसन्तसेना रङ्गप्रवेशेन = नाट्यागारप्रवेशेन बहुविध-वाचिकाभिनयसम्पादनेन ( हेतुना ) इति यावत्, कलानां = विविधगानभङ्गीनां शिक्षया = अभ्यासेन चैव स्वरान्तरेण = भिन्नस्वरेण व्याहर्तुम् = आक्रन्दितु-मित्यर्थः । दक्षा = चतुरा तस्मात् ( एषा ) न मुच्यताम् त्वया इति शेषः ॥२४॥

---

**पकड़ा है । ( चेटी को लक्ष्य करके ) तुम विलाप करो, चिल्लाओ या कातरभाव से शङ्कर, ईश्वर या महेश्वर को बुलाओ; तथापि मैं तुम्हारे केशों को पकड़े रहूँगा ॥**

( चेटी को बलपूर्वक खींचता है । )

चेटी—आर्य लोगों के द्वारा यह क्या किया जा रहा है ?

शकार—भाव ! स्वर के योग से ( वाणी से ) मैं समझ रहा हूँ कि यह वसन्तसेना नहीं है ।

विट—छोड़ना नहीं । यह वसन्तसेना ही है । क्योंकि, यह रंगशाला में नाटकीय ढङ्ग से प्रवेश करने के कारण तथा नानाविध धोखा देने की कलाओं के अभ्यास के कारण विभिन्न स्वरों के माध्यम से बोलने में प्रवीण है । अतः इसे छोड़ना नहीं ॥ २४ ॥

( प्रवेश कर )

विदूषक—( दीपक लेकर ) राजमार्ग की संकीर्णता के कारण, शीत एवं

पदे पदे विक्खोहिअमाणजणिअतरङ्गतेल्लपुण्णभाअणं दीवं कहं वि रक्खिअ गण्हिअ आअदो म्हि । [ राजमार्गतद्धोणेन शीतसुकुमारेण वातेन पदे पदे विक्षोभ्यमाणजनिततरङ्गतैलपूर्णभाजनं दीपं कथमपि रक्षित्वा गृहीत्वा-गतोऽस्मि । ]

चेटी—( शकारं पादेन ताडयन्ती रुदित्वा ) अय्य ! मेत्तेअ ! अयं परिभवो आदु अवलेवो । [ आर्य ! मैत्रेय ! अयं परिभवोऽथवावऽलेपः । ]

विदूषकः—मा दाव, मा दाव । ( सखड्गं विटं शकारं च दृष्ट्वा शङ्कित-स्तिष्ठति । ) [ मा तावद्, मा तावत् । ]

विटः—अये आर्यचारुदत्तस्य वयस्यो मैत्रेयः खल्वयम् । नेयमपि वसन्तसेना । महाब्राह्मण ! अन्यशङ्कया खल्विदमस्माभिरनुष्ठितं; न दर्पात् । पश्यतु भवान्,

---

शीतसुकुमारेण = शीतस्निग्धेन इति भावः । वातेन = वायुना विक्षोभ्यमाण-जनिततरङ्गतैलपूर्णभाजनम्—विक्षोभ्यमाणम् = आलोडितम् अत एव जनिततरङ्गम् तैलपूर्णं भाजनं = तैलाधारः यस्य एवंभूतं दीपं गृहीत्वा = आदाय इति भावः । अतएव एतादृशं दीपकं गृहीत्वा रक्षित्वा च आगमने मे विलम्बः सञ्जात इत्यभिप्रायः ।

अवलेपः = दर्पः ।

महाब्राह्मण ! ब्राह्मणाधम ! 'असिजीवी मसीजीवी देवलो ग्रामयाचकः' ।

---

सुकुमार वायु के द्वारा पग-पग पर हिलने से तैल-पूर्ण पात्र में तरङ्ग-लहरियें उठती थीं । ऐसे दीप को किसी तरह रक्षाकर तथा लेकर के यहाँ आया हूँ ।

चेटी—( शकार को पैर से मारती हुई रोकर ) आर्य मैत्रेय ! यह मेरा अपमान है अथवा शकार जैसे लोगों का घमण्ड ।

विदूषक—ऐसा मत करो, ऐसा मत करो । ( खड्गयुक्त विट तथा शकार को देखकर शंकित हो रुक जाता है । )

विट—अरे ! यह तो आर्य चारुदत्त के मित्र मैत्रेय हैं यह भी वसन्तसेना नहीं है । हे महाब्राह्मण, हम लोगों ने अन्य स्त्री ( वसन्तसेना ) की शङ्का से ऐसा किया है, दर्प से नहीं । आप देखें—

अकामा ह्रियतेऽस्माभिः काचित् स्वाधीनयौवना ।
सा भ्रष्टा शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥ २५ ॥

शकारः—अविहा दलिद्दशत्थवाहपुत्तश्श चालुदत्तवडुअश्श चेडी खु इअं, ण होइ वशन्तशेणिआ । शाहु, वशन्तशेणिए ! शाहु ! अन्धआलं कलिअ अन्तला वञ्चिदे भावे, अहके दाव वञ्चिदे कूडकावडशीलए । शौविहा दुक्खडे कडे । [ अविहा दरिद्रसार्थवाहपुत्रस्य चारुदत्तवटुकस्य चेटी खल्वियं, न भवति वसन्तसेना । साधु वसन्तसेने ! साधु । अन्धकारं कृत्वाऽन्तरा वञ्चितो भावः । अहं तावद् वञ्चितः कूटकपटशीलया । सर्वथा दुष्करं कृतम् । ]

---

धावकः पाचकश्चैतान् षड्विप्रान्नाभिवादयेत्' इति स्मृत्युक्तदिशा गर्हितकर्मानुविधायित्वान्महाब्राह्मणत्वेन सम्बोधनं परोपजीवित्वादिति हरिदासभट्टाचार्याः । अपरं च 'शंखे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे । यात्रायां पथि निद्रायां महच्छब्दो न दीयते' इत्युक्तेर्महच्छब्दप्रयोगाद् महाब्राह्मणपदस्य नीचार्थप्रत्यायकत्वम् इति सूचितं भवति । अन्यशङ्कया—अन्यस्य शङ्का = धारणा तया ।

अकामेति—अकामा=अस्मासु कामरहिता निरभिलषिता इति भावः, स्वाधीनयौवना स्वाधीनं यौवनं यस्याः सा, अर्थात् स्वेच्छानुचरितयौवनव्यवहारा न तु पत्यधीनेत्यभिप्रायः । काचित् = वसन्तसेना नाम्नी रमणी अस्माभिः ह्रियते = नीयते खलु । गाढान्धकारे सा भ्रष्टा = अदृश्या पलायिता च जाता, तस्या एव शङ्कया = भ्रान्त्या अर्थात् इयं सा एव इति भ्रमबुद्ध्येत्यर्थः । इयं रदनिकाग्रहणजनिता शीलवञ्चना = शीलस्य स्वभावस्य वञ्चना = स्खलनं, सदाचारनष्टसम्भावना प्राप्ता ( अस्माभिरिति शेषः ) ॥ २५ ॥

कूटकपटशीलया—कूटं च = माया च कपटं च ते शीलम् = स्वभावः यस्याः

---

हम लोग ऐसी स्त्री का पीछा कर रहे थे जो हम से प्यार नहीं करती थी और जिसे अपनी जवानी का अभिमान था। पर वह तो हमारे हाथ से निकल गई उसके धोखे में इस बेचारी की बेइज्जती हो गई ॥ २५ ॥

शकार—हाय ! यह दरिद्र वणिक्पुत्र चारुदत्त की चेटी है, वसन्तसेना नहीं। साधु; वसन्तसेने ! साधु ! तुमने ( माया ) से अन्धकार करके विट को छला है। कपटशीलवाली तुमने मुझे भी वंचित किया। अतः तुमने सर्वथा दुष्कर ( अर्थात् प्रशंसनीय ) कार्य किया है।

विदूषकः—मा दाव । ण जुत्तमिदं । [ मा तावत् । न युक्तमिदम् । ]

विटः—भो महाब्राह्मण ! अयमनुनयसर्वस्वमञ्जलिः ।

विदूषकः—भोदु, भोदु ! अणवरद्धो भवं । अणुणीदो अहं एव्व एत्थ अवरद्धो । [ भवतु, भवतु । अनपराद्धो भवान् । अनुनीतोऽहमेवात्रापराद्धः । ]

शकारः—भावे ! दिढं खु भाआशि तं दलिद्दशत्थवाहपुत्तं चालुदत्तवडुअं । [ भाव ! दृढं खलु बिभेषि तं दरिद्रसार्थवाहपुत्रं चारुदत्तवटुकम् । ]

विटः—सत्यं भीतोऽस्मि ।

शकारः—किश्श भावे ! किश्श । [ कस्माद् भाव ! कस्मात् । ]

विटः—तस्य गुणेभ्यः ! पश्यतु भवान्,

स मद्विधानां प्रणयैः कृशीकृतो
न तस्य कश्चिद् विभवैरमण्डितः ।

---

सा एवंभूतया त्वयेति शेषः ।

अनुनयस्य = आदरातिशयस्य सर्वस्वं=परमप्रधानम् अयम् अञ्जलिः प्रणामाञ्जलिरिति भावः ।

**स इति**—सः = चारुदत्तः मद्विधानाम् = मादृशानां याचकानां प्रणयैः = प्रार्थनादिभिः कृशीकृतः = दरिद्रीकृतः, क्षीणकोषतां नीत इति भावः । तस्य = आर्यचारुदत्तस्य विभवैः = धनैः कश्चित् = सामान्योऽपि न अमण्डितः = असत्कृतः अर्थात् धनवितरणेन सर्व एव सत्कृता इति भावः । तु = किन्तु साम्प्रतं स

---

विदूषक—ऐसा मत कहो । यह असङ्गत है ।

विट—भो महाब्राह्मण, यह मेरी अनुनयरूपी अञ्जलि है ।

विदूषक—अच्छा, अच्छा, आप अपराधी नहीं हैं । आपसे अकारण अनुनय कराने के कारण मैं ही अपराधी हूँ ।

शकार—भाव ! दरिद्र वणिक्पुत्र से निश्चय ही आप डर रहे हैं ।

विट—मैं सचमुच में ( उससे ) डरता हूँ ।

शकार—क्यों महाशय, क्यों ( आप उससे डर रहे हैं ? )

विट—उसके गुणों से । आप देखें—

वह मुझ जैसे जनों की याचना के हेतु क्षीण काय हो गया है । उसके वैभव से कोई भी व्यक्ति असत्कृत नहीं हुआ ( अर्थात् उसके ऐश्वर्य से सब ही सत्कृत

निदाघसंशुष्क इव ह्रदो महान्
नृणां तु तृष्णामपनीय शुष्यति ॥ २६ ॥

महाब्राह्मण ! अयमर्थः सार्थवाहपुत्रस्य न कथयितव्यः ।

( निष्क्रान्तो विटः । )

शकारः—मालिश ! वडुअ ! मालिश ! भणेहि तं दलिद्दशत्थवाहपुत्तं चालुदत्तवडुअं मम वअणेण—लाअशाले शण्ठाणे शवट्टेण शीशेण अणुवन्दिअ भणादि—णाडइत्थिआ वशन्तशेणिआ णाम गणिआदारिआ शुवण्णवण्णा दुवेहि अम्मेहि वलक्कारेण णीअमाणा महन्तेण शुवण्णालङ्कारेण तव गेहं पविट्ठा । शा शुवे णिय्याअइदव्वा । मा दाव तव अ मम अ दालुणो खोहो होदि त्ति । वडुअ ! मालिश ! इदं च भणाहि—मा दाशीएपुत्त ! पालावदगलप्पविट्ठं विअ मूलकन्दं शीशकवालं मडमडाइश्शं । मा खु कवाडशम्पुडप्पविट्ठं विअ पक्ककविट्ठं शीशं दे चुण्णचुण्णं मडमडाइश्शं ति । [ मारिष ! वटुक ! मारिष ! भण तं दरिद्रसार्थवाहपुत्रं चारुदत्तवटुकं मम वचनेन—राजश्यालः संस्थानकः सपट्टेन शीर्षेणा-

---

चारुदत्तः निदाघे = ग्रीष्मर्तौ शुष्कः = संशुष्कः महान् ह्रद इव = जलाशयसदृशः नृणां = याचकवर्गाणाम् , ( ह्रदपक्षे ) पिपासूनां जनानां तृष्णां = धनाभिलाषां, जलपानाभिलाषाञ्च अपनीय = दूरीकृत्य शुष्यति = धनाभावमाप्नोति ॥ २६ ॥

---

एवं संतुष्ट हुए ) । ग्रीष्मकाल में सबकी प्यास बुझाने में ही स्वयं सूखे हुए एक महान सरोवर की भांति, वह सब ( याचकों ) की तृष्णा को शान्त करके निर्धन हो गया है ॥ २६ ॥

महाब्राह्मण, सार्थवाहपुत्र को यह कथा नहीं कहनी चाहिये । ( विट का निष्क्रमण । )

शकार—मारिष ! वटुक ! मारिष ! दरिद्र सार्थवाहपुत्र चारुदत्त को मेरी ओर से कहना कि, राजश्याल संस्थानक पगड़ी बाँधे हुए सिर से प्रणाम करके कहता है कि—सुवर्ण की तरह कान्तिवाली, नटी वेश्यापुत्री वसन्तसेना को हम दोनों लाए थे, जो सहसा बहुमूल्य सुवर्णालङ्कार के साथ आपके घर में प्रवेश कर गई । कल प्रातः उसे घर से निकाल दें । जिससे मेरे और आपके बीच दारुणतर मनोमालिन्य न हो जाय । वटुक ! मारिष ! और यह भी कहो कि, हे दासीपुत्र,

तुवन्त्र भणति-नाटकर्त्री वसन्तसेना नाम गणिकादारिका सुवर्णवर्णा द्वाभ्या-मावाभ्यां बलात्कारेण नीयमाना महता सुवर्णालङ्कारेण तव गेहं प्रविष्टा। सा श्वो निर्यातयितव्या। मा तावत् तव च मम च दारुणः क्षोभो भवतीति। वटुक! मारिप! इदं च भण-मा दास्याःपुत्र! पारावतगलप्रविष्टमिव मूलकन्दं शीर्षकपालं मडमडायिष्यामि। मा खलु कपाटसम्पुटप्रविष्टमिव पक्वकपित्थं शीर्षं ते चूर्णचूर्णं मटमडायिष्यामि इति।]

विदूषकः—भो! तह। (शकारं दीपेनोद्वेजयति।) [भोः! तथा।]

शकारः—(सर्वतो विलोक्य) कहिं भावे। गदे भावे। अविहा भावे!। [क्व भावः। गतो भावः। अविहा भाव!।]

(निष्क्रान्तः शकारः।)

विदूषकः—किदं देवकय्यं ति तत्तहोदो णिवेदइस्सामो। भोदि! अवणीअदु दे हिअअमण्णू। अअं वुत्तन्तो अब्भन्तरं ण पेसिदव्वो। [कृतं देवकार्यमिति तत्रभवतो निवेदयिष्यावः। भवति! अपनीयतां ते हृदय-मन्युः। अयं वृत्तान्तोऽभ्यन्तरं न प्रेषयितव्यः।]

चेटी—अय्य! रदणिआ खु अहं। [आर्य! रदनिका खल्वहम्।]

---

सुवर्णवर्णा—सुवर्णस्य वर्ण इव वर्णः कान्तिः आभा वा यस्याः सा।

---

मैं कपोत के कण्ठ में पड़े हुए मूलकन्द की भांति तुम्हारे सिर तथा कपाल को नहीं फोड़ूंगा, अथवा दरवाजा के मध्य में गिरे हुए पक्के कैथ की तरह तुम्हारे सिर को चूर-चूर करके नहीं खाऊंगा।

विदूषक—भो! ऐसा ही हो। (शकार को दीप दिखाकर व्याकुल करता है।)

शकार—(चारों ओर देखकर) महाशय, आप कहाँ है, आप कहाँ चले गए, हाय महाशय!

(शकार निकल जाता है।)

विदूषक—देव कार्य समाप्त हुआ। यह (संवाद हमलोग) सम्माननीय चारुदत्त से निवेदन करेंगे। माननीये, हृदयगत दुःख को दूर कीजिए। मैं भी इस वृत्तान्त को अन्तःपुर में नहीं कहूँगा।

चेटी—आर्य, मैं रदनिका हूँ।

विदूषकः—एहि गच्छामो ! [ एहि गच्छावः । ]

( उभौ परिक्रामतः । )

नायकः—भद्रे ! कृतं देवकार्यम् ।

गणिका—( आत्मगतम् ) परिजणत्ति मं सद्दावेदि । भोदु, रक्खिदम्हि । [ परिजन इति मां शब्दापयति । भवतु, रक्षितास्मि । ]

नायकः—मारुताभिलापी प्रदोषः । तद् गृह्यतां प्रावारकम् ।

गणिका—( प्रावारकं गृहीत्वा सहर्षमात्मगतम् ) अणुदासीणं जोव्वणं से पडवासगन्धो सूएदि । [ अनुदासीनं यौवनमस्य पटवासगन्धः सूचयति । ]

नायकः—रदनिके ! प्रवेश्यतामभ्यन्तरचतुःशालम् ।

गणिका—( आत्मगतम् ) अभाइणी अहं अब्भन्तरप्पवेसस्स । [ अभागिन्यहमभ्यन्तरप्रवेशस्य । ]

नायकः—किमिदानीं न प्रविशसि ।

गणिका—( आत्मगतम् ) इदाणिं अहं किं भणिस्सं । [ इदानीमहं किं भणिष्यामि । ]

नायकः—रदनिके ! किं विलम्बसे ।

---

प्रावारकम् = उत्तरीयवस्त्रम् 'दुपट्टा' इति लोकभाषायाम् ।

---

विदूषक—आओ, चलें । ( दोनों घूमते हैं । )

नायक—भद्रे ! क्या आपने देवकृत्य को पूरा कर लिया ?

गणिका—( स्वगत ) मुझे परिचारिका समझकर बुला रहे हैं । जो कुछ हो, मेरी रक्षा हुई है ।

नायक—संध्या समय ठंडी हवा चल रही है । अतः दुपट्टा ले लो !

गणिका—( सहर्ष दुपट्टा ग्रहण करके ) इस वस्त्र का सुगन्ध सूचित करता है कि इसका यौवनकाल उदासीन नहीं है ।

नायक—रदनिके, इसे ( वस्त्र को ) अन्तःपुर के चतुःशाला में रख दो ।

गणिका—( स्वगत ) मैं अन्तःपुर के प्रवेश के सम्बन्ध में अनधिकारिणी हूँ ।

नायक—क्यों अब भी अन्दर नहीं जा रही हो ?

गणिका—( स्वगत ) मैं इस समय क्या कहूँगी ।

नायक—रदनिके, क्यों विलम्ब कर रही हो ?

( रदनिकाविदूषकावुपसृत्य )

चेटी—भट्टिदारअ ! इअं म्हि । [ भर्तृदारक ! इयमस्मि । ]

नायकः—इयमिदानीं का ।

अविज्ञातप्रयुक्तेन धर्षिता मम वाससा ।
संवृता शरदभ्रेण चन्द्रलेखेव शोभते ॥ २७ ॥

गणिका—( आत्मगतम् ) दीवालोअसूइदरूवो सो एव्व दाणि एसो, जस्स किदे अहं णिस्सासमत्तलक्खिदं सरीरं उव्वहामि । [ दीपालोकसूचितरूपः स एवेदानीमेषः, यस्य कृतेऽहं निःश्वासमात्ररक्षितं शरीरमुद्वहामि । ]

विदूषकः—भो चारुदत्त ! राअसालो सण्ठाणो सवट्टेण सीसेण अणुवन्दिअ विण्णवेदि-णाडअइत्थिआ वसन्तसेणिआ णाम गणिआदारिआ अम्हेहिं वलक्कारेण णीअमाणा महन्तेण सुवण्णालङ्कारेण

---

अविज्ञात इति—अविज्ञातप्रयुक्तेन—न विज्ञातम् इति अविज्ञातम् अविज्ञातेन=अज्ञानेन प्रयुक्तम् = दत्तम् तेन, मम वाससा=वस्त्रेण धर्षिता=संयोजिता पीडिता वा इति भावः । शरदभ्रेण = शरत्कालीनमेघेन इत्यर्थः । संवृत्ता = संछन्ना, आवृता वा चन्द्रलेखा इव शोभते = राजते ॥ २७ ॥

दीपालोकसूचितरूपः = दीपस्य आलोकः = प्रकाशः तेन सूचितं तादृशं रूपम्= आकृतिः यस्य सः, निःश्वासमात्ररक्षितम् = निःश्वासमात्रेण धृतम् इति भावः । उद्वहामि = धारयामि ।

---

( रदनिका और विदूषक समीप जाकर )

चेटी—भर्तृदारक, मैं यहाँ हूँ ।

नायक—इस समय यह ( महिला ) कौन है जिसे मैंने अपनी अज्ञानता के कारण वस्त्र दे दिया है । इसे ओढ़कर यह शरत्कालीन मेघ से आच्छन्न चन्द्रमा की रेखा की तरह शोभा पा रही है ॥ २७ ॥

गणिका—( स्वगत ) दीप के प्रकाश से सूचित आकृति वाले यह चारुदत्त ही हैं, जिसके निमित्त केवल मैं श्वासों में जीवित हूँ ।

विदूषक—भो चारुदत्त ! राजश्याल, संस्थानक ( शकार ) सवस्त्र सिर से वंदना करके आपसे निवेदन करते हैं कि नटी युवती वेश्यापुत्री वसन्तसेना को

तुम्हाणं गेहं पविट्ठा। सा सुवे णिय्याअइदव्वत्ति। [ भोः चारुदत्त ! राजश्यालः संस्थानः सपट्टेन शीर्षेणानुवन्य विज्ञापयति—नाटकत्री वसन्तसेना नाम गणिकादारिकास्माभिर्बलात्कारेण नीयमाना महता सुवर्णालङ्कारेण युष्माकं गेहं प्रविष्टा। सा श्वो निर्यातयितव्येति। ]

गणिका—( आत्मगतम् ) हं बलक्कारेण णीअमाणत्ति णं भणादि। भोदु, अअं पत्तकालो। ( प्रकाशम् ) अय्य ! सरणागदम्हि। [हं बलात्कारेण नीयमानेति ननु भणति। भवतु, अयं प्राप्तकालः। आर्य ! शरणागतास्मि। ]

नायकः—न भेतव्यं, न भेतव्यम्। किं वसन्तसेनैषा।

विदूषकः—अविहा वसन्तसेणा। ( अपवार्य ) भो चारुदत्त ! वसन्तसेणा खु इअं, जा भवदा कामदेवाणुआणप्पहुदि णअणमत्तसंथुदा सण्णिहिदमणोभवेण हिअएण उव्वहीअदि। ता पेक्खदु इअं। [ अविहा वसन्तसेना। भोः चारुदत्त ! वसन्तसेना खल्वियं, या भवता कामदेवानुयानप्रभृति नयनमात्रसंस्तुता सन्निहितमनोभवेन हृदयेनोद्ह्यते। तत् पश्यत्विमाम्। ]

नायकः—वयस्य ! पश्याम्येनां,

---

नयनमात्रसंस्तुता—नयनमात्रेण संस्तुता = परिचिता, न तु आलपनसम्भाषणादिनेति भावः, सन्निहितमनोभवेन—मनसि भवः उत्पत्तिर्यस्य स मनोभवः = कामः, सन्निहितः = सञ्जातः मनोभवः यस्य तेन, अर्थात् उपचितकामेनेत्यर्थः एवंभूतेन ( हृदयेनेति भावः ) उद्ह्यते = उद्वाहस्वरूपेण धार्यते।

---

हमलोग बलात्कार करके लाये थे। वह प्रचुर अलङ्कार के साथ आपके महल में प्रवेश कर गई है। उसे कल प्रातः अपने यहां से निकाल दीजिये।

गणिका—( स्वगत ) अरे ! वह कहता है कि वह बलात्कार से लाई गई है। अच्छा, यह समय तो आ ही गया। ( प्रकाशरूप से ) आर्य मैं शरणागत हूँ।

नायक—डरो मत, डरो मत। क्या यह वसन्तसेना है।

विदूषक—हाय, वसन्तसेना। ( अलग करके ) भो चारुदत्त ! यह वसन्तसेना ही है जिसका आपने कामदेव के उत्सवारम्भ के दिन नयनमात्र से ही परिचय किया था, तथापि आपको प्रीतिपूर्ण हृदय से स्वागत करती है। अतः इसे आप देखें।

नायक—मित्र ! मैं इसे देखता हूँ—

यत्र मे पतितः कामः क्षीणे विभवसञ्चये ।
रोषः कुपुरुषस्येव स्वाङ्गेष्वेवावसीदति ॥ २८ ॥

गणिका—अदिण्णभूमिप्पवेसपधरिसणेण अवरद्धा अहं अय्यं सीसेण पसादेमि । [ अदत्तभूमिप्रवेशप्रधर्षणेनापराद्धाहमार्यं शीर्षेण प्रसादयामि । ]

नायकः—यद्येवमहमपि तावदविज्ञातप्रयुक्तेन प्रेष्यसमुदाचारेण सापराधो भवतीं प्रसादयामि ।

विदूषकः—भो ! विवहन्ता इव सअडिअं दुव्विणीदवलीवद्दा अण्णोण्णं सङ्किलेसन्ति । अहं दाणि कं पसादेमि । भोदु, दाणि रदणिअं

---

यत्रेति—विभवसञ्चये क्षीणे = विनष्टे सति यत्र = यस्यां ( वसन्तसेनायाम् ) पतितः = सञ्जातः मे = मम कामः = गाढानुरागः, सम्भोगवासना वा कुपुरुषस्य = अधमस्य, समर्थरहितस्य वा रोषः = क्रोध इव स्वांगेषु एव = स्वशरीरेषु एव अवसीदति = अन्तर्लीनो भवति नतु वहिर्भूय मनोरथपूरणादिना सफलीभवति अर्थात् करणीयशक्तेरभावाद् यथा मनुष्यस्य रोषः शत्रूणां कमपि अपकारन्न करोति अपितु क्रोधकर्तुरेव हानिरित्यभिप्रायः ॥ २८ ॥

अदत्तभूमिप्रवेशप्रधर्षणेन = अदत्तः भूमिप्रवेशः = भूमिप्रवेशानुमतिः तेन प्रधर्षणम् = पीडनम् तेन करणेनेत्यर्थः ।

प्रेष्यसमुदाचारेण—प्रेष्यस्य = भृत्यस्य समुदाचारः = योग्यव्यवहारः तेन हेतुनेति भावः ।

---

यद्यपि मेरा वैभव नष्ट हो गया है तथापि इसके ( वसन्तसेना के ) प्रति मेरी कामना ( दृढ अनुराग ) वनी हुई है । ( कामना का स्थान हृदय है ) जैसे वलहीन अधम पुरुष का क्रोध उसके शरीर में ही विलीन हो जाता है ॥ २८ ॥

गणिका—मैं गृह-प्रवेश की अनुमति के विना आपके घर में जवर्दस्ती प्रवेश करने के कारण अपराधी हूँ तथा इसके लिये आर्य को मस्तक नवाकर प्रार्थना करती हूँ ।

नायक—यदि ऐसी वात है तब तो मैं भी अनजाने में आपके साथ भृत्यवत् व्यवहार करने के कारण अपराधी हूँ और इसके लिये आपसे प्रार्थना करता हूँ ।

विदूषक—गाड़ी को खींचने में लगे हुए दो दुर्विनीत वैलों की तरह ये परस्पर एक दूसरे को अनुनय प्रार्थना द्वारा क्लेश पहुंचा रहे हैं । मैं इस समय किसको

पसादेसि। रदणिए! पसीददु, पसीददु होदी। [ भोः! विवदन्ताविव शकटिकां दुर्विनीतवलीवर्दावन्योन्यं संक्लेशयतः। अहमिदानीं कं प्रसादयामि। भवतु, इदानीं रदनिकां प्रसादयामि। रदनिके! प्रसीदतु, प्रसीदतु भवती। ]

नायकः—भवति! परवानस्मि। किमनुतिष्ठति स्नेहः।

गणिका—( आत्मगतम् ) महुरं खु इच्छिदव्वं। अदक्खिणं खु पढमदंसणे जइच्छागदाए इह वसिदुं। ता एवं करिस्सं। ( प्रकाशम् ) जइ मे अय्यो पसण्णो, अअं मे अलङ्कारो इह एव्व चिट्ठदु। अलङ्कारणिमित्तं पावा मं अणुसरन्ति। अहं पि अय्येण रक्खिदा गेहं गन्तुमिच्छामि। [ मधुरं खल्वेष्टव्यम्। अदक्षिणं खलु प्रथमदर्शने यदृच्छागतयेह वस्तुम्। तदेवं करिष्यामि। यदि मे आर्यः प्रसन्नः अयं मेऽलङ्कार इहैव तिष्ठतु। अलङ्कारनिमित्तं पापा मामनुसरन्ति। अहमप्यार्येण रक्षिता गेहं गन्तुमिच्छामि। ]

---

परवान् = अहं त्वद्विषयकानुरागेण तवाधीनः अस्मीति भावः, अतः मदीयस्नेहः = अनुरागः किमनुतिष्ठति = किम् तव विधास्यतीति त्वमेव वदेत्यभिप्रायः।

'मधुरम्' वस्तुवासनालिङ्गनादिरूपम् 'एष्टव्यम्' एषितुं योग्यं = प्रार्थनयोग्यमधुना। किन्तु 'प्रथमदर्शने' तत्काले 'यदृच्छागतया' अतर्कितोपस्थितया मया 'इह' चारुदत्तगृहे 'वस्तुम्' स्थातुम् 'अदक्षिणम्' अयोग्यं स्यात्, तदा अपराधो भवेदिति श्री कुमुदरञ्जनमहोदयाः। पापाः = दुष्टा इत्यर्थः।

---

प्रसन्न करूं? अच्छा, इस समय रदनिका को मनाता हूँ। अयि रदनिके! तुम प्रसन्न होओ, प्रसन्न होओ।

नायक—माननीये, मैं ( आपके प्रति प्रेम के कारण ) पराधीन हूँ। अतः यह मेरा स्नेह आपको क्या देगा?

गणिका—( स्वगत ) मधुर वस्तु प्राप्त करने योग्य समय है। किन्तु एक बार देख लेने पर ही स्वेच्छया यहाँ आकर रहना अनुचित है। तब ऐसा करूंगी। ( प्रकाश ) यदि आर्य मेरे ऊपर प्रसन्न हैं, तब ये अलङ्कार यहीं रहें। अलङ्कार के निमित्त पापीजन ( विट एवं शकार ) मेरा पीछा कर रहे हैं और मैं भी आर्य के द्वारा रक्षित होकर घर जाना चाहती हूँ।

नायकः—अन्वर्थमुपदिशति । मैत्रेय ! गृह्यताम् ।

विदूषकः—ण मे सद्धा । [ न मे श्रद्धा । ]

नायकः—मूर्ख ! गृह्यताम् ।

विदूषकः—जं भवं आणवेदि । आणेदु भोदी । [ यद् भवानाज्ञापयति । आनयतु भवती । ]

( गणिका विमुच्यालङ्कारं प्रयच्छति । )

विदूषकः—( गृहीत्वा ) रदणिए ! गह्ण एदं सुवण्णालङ्कारं तुवं । सट्ठीए सत्तमीए अ धारेहि । अहं अट्ठमीए अणज्झाए धारइस्सं । [ रदनिके ! गृहाणैतं सुवर्णालङ्कारं त्वम् । षष्ठ्यां सप्तम्यां च धारय । अहमष्टम्यामनध्याये धारयिष्यामि । ]

चेटी—( विहस्य ) सत्थं वक्खाणअन्तस्स भट्टिपुत्तस्स तदाणिं अवसरो होदि । आणेदु अय्यो । ( गृहीत्वा निष्क्रान्ता । )

[ शास्त्रं व्याचक्षाणस्य भर्तृपुत्रस्य तदानीमवसरो भवति । आनयत्वार्यः । ]

नायकः—कोऽत्र भोः ! । दीपिका तावत् ।

विदूषकः—भोः ! दीविआ गणिका विअ णिस्सिणेहा संवुत्ता । [ भोः ! दीपिका गणिकेव निःस्नेहा संवृत्ता । ]

---

अन्वर्थम् = प्रयोजनमिति भावः ।

निःस्नेहा—( दीपिकापक्षे ) निर्गतः स्नेहः ( तैलम् ) यस्याः सा, ( गणिका-

---

नायक—उचित कह रही हैं । मैत्रेय, इसे ले लो ।

विदूषक—मेरी श्रद्धा नहीं है ।

नायक—मूर्ख ! ( क्रोध के साथ ) ग्रहण करो ।

विदूषक—जो आपकी आज्ञा । महाशया लाइये ।

( गणिका अलङ्कार को उतार कर देती है )

विदूषक—( ग्रहण करके ) रदनिके, तुम इस सुवर्णालङ्कार को रखो । षष्ठी और सप्तमी को धारण करना । मैं अष्टमी तिथि को अनध्याय होने पर धारण करूंगा ।

चेटी—( हंसकर ) शास्त्रों के व्याख्यान में व्यस्त आपको उसी दिन अवसर मिलता है । आर्य, लाइये । ( ग्रहण करके निकल जाती है । )

नायक—अरे ! यहाँ कौन है ? दीप लाओ ।

विदूषक—यह दीपक गणिका की भांति निःस्नेह ( तेलहीन और प्रेमहीन ) हो गया है ।

नायकः—कृतं दीपिकया। ( विलोक्य ) उदितो भगवान् सर्वजनसामान्यप्रदीपश्चन्द्रः। अतः खलु,

उदयति हि शशाङ्कः क्लिन्नखर्जूरपाण्डु-
युवतिजनसहायो राजमार्गप्रदीपः।
तिमिरनिचयमध्ये रश्मयो यस्य गौरा
हृतजल इव पङ्के क्षीरधाराः पतन्ति ॥ २९ ॥

---

पक्षे ) निर्गतः स्नेहः = अनुरागः यस्याः सा, संवृत्ता = संजाता (दीपिकेति भावः)।

कृतम् = व्यर्थं पर्याप्तमिति यावत् 'युगपर्याप्तयोः कृतम्' इत्यमरः, दीपकस्य तैलाभावकृतं प्रज्वालनायोग्यत्वं वसन्तसेनामविवक्षुश्चारुदत्तः अधुना प्रकृतिनिर्मितस्वतःसिद्धप्रकाशमयचन्द्रकिरणैरेव कार्यस्य सम्पादनीयत्वं वक्ति।

**उदयतीति**—हि=यतः क्लिन्नखर्जूरपाण्डुः—क्लिन्नः=क्लेदयुक्तः खर्जूरः। ताडफलविशेषः तद्वत् पाण्डुः = श्वेतः, 'हरिणः पाण्डुरः पाण्डुः' इत्यमरः, समुज्ज्वल इत्यर्थः, युवतिजनसहायः = अभिसारविषये युवतिजनानाम् सहायः = पथप्रदर्शकः, राजमार्गस्य प्रदीपः = प्रकाशकः शशाङ्कः = चन्द्रः उदयति = आकाशमुद्गच्छति। तिमिरनिचयमध्ये— तिमिराणाम् = अन्धकाराणां निचयः = समूहः तस्य मध्ये यस्य चन्द्रस्य गौराः = शुभ्रवर्णाः 'गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयवत्' इति मेदिनी, रश्मयः = किरणाः 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः। हृतजले—हृतं, निर्गतं वा जलं यस्मात् यस्य वा

---

नायक—दीप की कोई आवश्यकता नहीं है। ( देखकर ) सबके लिये सामान्य प्रदीप स्वरूप भगवान् चन्द्रमा का उदय हो गया है। इसी लिए यह ऐसा कहा जाता है—

आर्द्र खजूर की तरह शुभ्र, युवतिजन के ( अभिसरणकाल में ) सहायक, राजमार्ग का प्रदीप चन्द्रमा उदय हो रहा है जिसकी शुभ्र रश्मियां घनान्धकार में जलशून्य पङ्क में दूध की धारा की तरह गिर रही है ( अर्थात् गाढ अन्धकार में शुभ्र चन्द्रमा की किरणें काले रङ्ग के पंक में दूध की धारा की तरह प्रतीत हो रही है। ) ॥ २९ ॥

भवति ! राजमार्गे निष्क्रमणः क्रियताम् । सखे ! अनुगच्छात्र-भवतीम् ।

विदूषकः—जं भवं आणवेदि । एदु एदु भोदी । [ यद् भवानाज्ञापयति । एत्वेतु भवती । ]

( निष्क्रान्ताः सर्वे । )

प्रथमोऽङ्कः ।




तादृशे पङ्के = कर्दमे 'पङ्कोऽस्त्री शादकर्दमौ' इत्यमरः, क्षीरधारा इव = दुग्धधारा इव पतन्ति । अयमत्राशयः—घनान्धकारे शुभ्राः चन्द्रकिरणाः कृष्णवर्णपङ्कमध्ये दुग्धधारा इव प्रतीयन्ते ॥ २९ ॥

इति प्रथमः अङ्कः-अङ्क्यते वर्ण्यते लोकचरितम् एव रूपः अङ्कः समाप्तः इति ।

प्रथमोऽङ्कः समाप्तः ।

---

आप राजमार्ग पर चलें । मित्र आपके पीछे-पीछे ( साथ ) जाओ ।

विदूषक—जो आपकी आज्ञा । माननीया इधर से आइये । ( सबके सब निकल जाते हैं ) ।

॥ प्रथम अङ्क समाप्त ॥

# अथ द्वितीयोऽङ्कः

( ततः प्रविशति गणिका चेटी च । )

गणिका—तदो तदो । [ ततस्ततः । ]

चेटी—अम्महे ण किञ्चि मए भणिदं । कि तदो तदो त्ति । [ अम्महे न किञ्चिन्मया भणितम् । किं ततस्तत इति । ]

गणिका—हञ्जे ! कि मए मन्तिदं । [ हञ्जे ! किं मया मन्त्रितम् । ]

चेटी—अज्जुए ! सिणेहो पुच्छदि, ण पुरोभाइदा[1] । किं चिन्तीअदि । [ अज्जुके ! स्नेहः पृच्छति, न पुरोभागिता । कि चिन्त्यते । ]

गणिका—हञ्जे । तुमं दाव किं ति तक्केसि । [ हञ्जे ! त्वं तावत् किमिति तर्कयसि । ]

---

कि ततस्ततः = न मया किञ्चित् उक्तम् । तथापि कथं श्रीमती 'ततः किं भूतम्' इति केन हेतुना ब्रूते इति भावः ।

'हण्डे हञ्जे हला ह्वानं नीचां चेटीं सखीं प्रती'त्यमरवचनात्, 'हञ्जे !' इति इति चेटीं प्रति सम्बोधनम् । मन्त्रितम् = भणितम् ।

'अज्जुके !' इति सम्बोधनपदम् , 'गणिके !' इत्यर्थे प्रयुक्तः, यथोक्तम् अमरकोषे—'नाट्योक्तौ गणिकाऽज्जुका' इति । स्नेहः पृच्छति=त्वां प्रति मदीयः स्नेहः पृच्छति, अर्थात् मां कथयितुं प्रेरयति, न मे पुरोभागिता = अवगुणैकदर्शिता, औद्धत्यं वा 'दोषैकदृक् पुरोभागी' इत्यमरः ।

---

( इसके बाद गणिका और चेटी का प्रवेश )

गणिका—तब फिर क्या हुआ ?

चेटी—मैंने कुछ भी नहीं कहा, तब आप क्यों पूछ रही हो कि 'तब फिर क्या हुआ' ?

गणिका—प्रिय दासी, मैंने क्या कहा ?

चेटी—माननीये ! आपके प्रति जो मेरा स्नेह है वही पूछने को बाध्य कर रहा है, न कि उद्दण्डता । आप क्या सोच रही हैं ?

गणिका—प्रियदासी ! ( इस विषय में ) तुम क्या अनुमान कर रही हो ?

---

१. पुरोभाइदाए ।

चेटी—अप्पओअणदाए गणिआभावस्स अज्जुआ कं पि कामेदि त्ति तक्केमि । [अप्रयोजनतया गणिकाभावस्याज्जुका कमपि कामयत इति तर्कयामि ।]

गणिका—सुट्ठु तुए किदं । अवक्खिदा दे दिट्ठी । ईदिसवण्णय्येव । [ सुष्ठु त्वया कृतम् । अवक्षिता ते दृष्टिः । ईदृशवर्णैव । ]

चेटी—अणलंकिदं पि अज्जुअं मण्डिदं विअ पेक्खामि । कामो हि भअवं अणवगीदो ऊसुवो तरुणजणस्स । [ अनलङ्कृतामप्यज्जुकां मण्डितामिव पश्यामि । कामो हि भगवाननवगीत उत्सवस्तरुणजनस्य । ]

गणिका—हदासे ! उक्कण्ठिदव्वे का दे रदी । [ हताशे ! उत्कण्ठितव्ये का ते रतिः । ]

---

गणिकाभावस्य—गणिकाया = वेश्यायाः भावस्य धनोपार्जनवृत्तेः त्वद्विषये अप्रयोजनतया = प्रयोजनाभावात् , यतः त्वं धनाढ्या एव अर्थात् वारांगना सम्बन्धे यत् प्रयोजनम् धनोपार्जनलक्षणं भवति तस्य अनावश्यकत्वात् अहं अनुमिनोमि यत् श्रीमती कमपि प्रियजनम् अभिलपति इति आशयः ।

कृतम् = तर्कितम् , आलोचितम् वा, ईदृशवर्णा—ईदृशो वर्णः स्वरूपं यस्याः सा एवंभूता अहम् अस्मि इत्यर्थः ।

अनवगीतः—न अवगीत इति अनवगीतः = अनिन्दितः; कामः = कामदेवः, उत्सवः = शोभादायकः ।

उत्कण्ठितव्ये = प्राप्तव्ये इष्टवस्तुनि अप्राप्ते ते का रतिः = संतोषः प्राप्ते हि तस्मिन् स युक्तः इत्यभिप्रायः इति गनपतिशास्त्री ।

---

चेटी—जब आपको गणिकावृत्ति ( धनोपार्जन वृत्ति ) की आवश्यकता नहीं है तब मैं कल्पना करती हूँ कि आप किसी 'प्रेमी' को चाहती हैं ।

गणिका—तुमने अच्छा अनुमान किया । तुम्हारी दृष्टि अचूक है । मेरी अवस्था सचमुच ऐसी ही है ।

चेटी—यद्यपि आप अलङ्कार से रहित हैं, फिर भी मैं आपको सुसज्जित एवं अलंकृत ( नारी ) की भांति देख रही हूँ । भगवान् कामदेव तरुणजन के उत्सव स्वरूप एवं शोभादायक ( आनन्दस्वरूप ) हैं ।

गणिका—हाय रे ! आकांक्षित एवं अभीष्ट वस्तु की अनुपलब्धि के पहले ही ( तुमको ) आनन्द कैसे हो सकता है ?

चेटी—अज्जुए ! इच्छामि पुच्छिदुं वहुमाणो विअ रमणीओ कोच्चि राअकुमारो । [ अज्जुके । इच्छामि प्रष्टुं वहुमान इव रमणीयः कश्चिद् राजकुमारः । ]

गणिका—रमिदुं इच्छामि, ण सेविदुं । [ रन्तुमिच्छामि, न सेवितुम् । ]

चेटी—किण्णु खु विज्जाविसेसरमणीओ कोच्चि वम्हणदारओ । [ किन्तु खलु विद्याविशेषरमणीयः कश्चिद् ब्राह्मणदारकः । ]

गणिका—अत्थि अदिवहुमदो विस्सम्भो । पूअणीओ खु सो जणो । [ अस्त्यतिवहुमतो विश्रम्भः । पूजनीयः खलु स जनः । ]

चेटी—किण्णु हु वणिजदारओ कोच्चि आगन्तुओ । [ किन्तु खलु वणिग्दारकः कश्चिदागन्तुकः । ]

---

विद्याविशेषरमणीयः—विद्यायाः विशेषेण रमणीयः गुणवान् एवंभूतः कश्चित् ब्राह्मणदारकः = ब्राह्मणपुत्रः कामयते किम् ?

अतिवहुमतः = मम ब्राह्मणपुत्रे वहुसमादरयुक्तः विस्रम्भः = प्रणयः अस्ति । खलु = निश्चयेन स जनः पूजनीयः = भोजनवस्त्रादिदानसम्मानाभ्यामर्हणीयः अत एव पूजार्हः न खलु रमणार्हः । अपरं च पूजनीयाः विलासवैमुख्यं भजन्ते इत्यभिप्रायः ।

कश्चित् आगन्तुकः = वैदेशिकः वणिग्दारकः = वणिक्पुत्रः कामयते किम् ।

---

चेटी—माननीये ! मैं यह पूछना चाहती हूँ कि क्या आप रमणीय एवं वहु-मानित किसी राजकुमार को चाहती हैं ?

गणिका—मैं किसी सुन्दर सुकुमार की सेवा करना नहीं चाहती वल्कि प्रेमी के साथ रमण करना चाहती हूँ ।

चेटी—क्या विद्या विशेष से रमणीय ( गुणी ) किसी ब्राह्मण कुमार को तो नहीं चाहती ?

गणिका—( मेरा ब्राह्मण पुत्र में ) वहुत वड़ा अनुराग है, परन्तु वह पूजा के योग्य है ( अर्थात् उपभोग एवं आनन्द के योग्य नहीं है ) ।

चेटी—तव क्या कोई आगन्तुक ( वैदेशिक ) वणिक्पुत्र को चाहती हैं ?

गणिका—उम्मत्तिए ! आसाच्छेदं उक्कण्ठन्ता का सहेदि । [ उन्मत्तिके ! आशाच्छेदमुत्कण्ठमाना का सहते । ]

चेटी—किं ण सक्कं सोदुं । को अम्हाणं मणोरहाउत्तो । [ किं न शक्यं श्रोतुम् । कोऽस्माकं मनोरथावुत्तः । ]

गणिका—किं तुवं कामदेवाणुयाणे ण आअदा सि । [ किं त्वं कामदेवानुयाने नागतासि । ]

चेटी—णं आअदम्हि । [ नन्वागतास्मि । ]

गणिका—केण उदासीणं मन्तेसि । [ केनोदासीनं मन्त्रयसे । ]

चेटी—भणादु, भणादु अज्जुआ, भणादु ! [ भणतु, भणत्वज्जुका, भणतु । ]

गणिका—हञ्जे ! सुणाहि दाव । अत्थि सत्थवाहपुत्तो चारुदत्तो णाम । [ हञ्जे ! शृणु तावत् । अस्ति सार्थवाहपुत्रश्चारुदत्तो नाम । ]

---

उत्कण्ठमाना=अभीष्टं कामयमाना, भोगकामा वा का नाम स्त्री वैदेशिके प्रीतिं संस्थाप्य वैदेशिकस्य अन्यत्र गमनात् आशाच्छेदम् = आशाभङ्गं सहते, न काचिदपि तत् सहते इत्यर्थः । अतस्ते मम अभीष्टविषये तादृशं वणिक्पुत्रस्य अनुमानं चित्तविभ्रमप्रसूतम् एव, तस्मात् त्वम् उन्मत्तिका असि ।

मनोरथावुत्तः—मनोरथस्य आवुत्तः = भगिनीपतिः ।

कामदेवानुयाने—कामदेवस्य अनुयाने = उत्सवे समागमे वा ।

---

गणिका—उन्मत्तिके ! क्या उत्कण्ठित एवं भोग की कामना करनेवाली कोई नारी वैदेशिक में प्रीति करके ( उसके अन्यत्र चले जाने के कारण ) आशाभंग को सहन कर सकती है ? अर्थात् कोई नहीं सहन कर सकती ।

चेटी—क्या मैं नहीं सुन सकती कि कौन हमारे जीजा साहब हैं ।

गणिका—क्या तुम कामदेव के उत्सव में नहीं आई थी ?

चेटी—हाँ, मैं आई थी ।

गणिका—क्यों उदासीन होकर बोलती हो ?

चेटी—आप कह लीजिए ।

गणिका—अरी ! तब तुम सुनो । वणिक्पुत्र चारुदत्त है ।

चेटी—जेण सरणागदा तुवं रक्खिदा। [ येन शरणागता त्वं रक्षिता। ]

गणिका—सो एव्व। [ स एव। ]

चेटी—हद्धि, दरिद्दो क्खु सो। [ हा धिक्, दरिद्रः खलुः सः। ]

गणिका—अदो क्खु कामीअदि। अदिदरिद्दपुरुससत्ता गणिआ अवअणीआ होइ। [ अतः खलुः काम्यते। अतिदरिद्रपुरुषसक्ता गणिका अवचनीया भवति। ]

चेटी—अज्जुए! उद्धूदपुप्फं सहआरं महुअरा उवासन्ति। [ अज्जुके! उद्धूतपुष्पं सहकारं मधुकरा उपासते। ]

गणिका—हञ्जे! एवं, उवासन्ति। दे महुअरा त्ति पुच्छीअन्ति। [ हञ्जे! एवम्, उपासते। ते मधुकरा इति पृच्छयन्ते। ]

---

अवचनीया—न वचनीया अवचनीया = अनिन्दनीया इत्यर्थः।

उद्धूतपुष्पम्—उद्धूतानि = उद्गतानि पुष्पाणि यस्य तत् एवंभूतम् सहकारम् = आम्रवृक्षम्, रसालं वा, मधुकराः = मधुग्रहणशीलाः भ्रमराः ( मधुहराः ) उपासते। लोकेऽपि मधुवद् धनरता गणिका अस्ति इति ख्यातिः। करोतेरनेकार्थत्वात् अत्र ग्रहणार्थे हरणार्थे वा व्यवह्रियते।

अत्र वसन्तसेना स्वकीयदास्याः कथनस्य प्रतिवादं कुर्वन्त्याह—एवमिति। अत एव ते = एवमुपासीनाः भ्रमराः 'मधुकराः' मधुग्रहणशीला इति पृच्छयन्ते = उपालभ्यन्ते इति भावः।

---

चेटी—जिसने आपकी रक्षा की थी।

गणिका—वही।

चेटी—हा धिक्! वास्तव में वह दरिद्र है।

गणिका—इसीलिये तो उसे चाहती हूँ। अति दरिद्र पुरुष में आसक्त वेश्या किसी से वचनीया नहीं होती।

चेटी—माननीये! जिसमें मञ्जरी निकल आई हो उसी आम्रवृक्ष की उपासना मधुकर किया करते हैं।

गणिका—सखि! वे बैठते हैं इसीलिए तो ( लोग ) उनको 'मधुकर' ( मधु-हारक या धनहारक ) ऐसा कहकर उपालम्भ देते हैं।

चेटी—किं, विहवमन्ददाए वेसवासप्पसङ्गकादरो दुक्खं त्ति जइ ण आअच्छे । [ किं, विभवमन्दतया वेशवासप्रसङ्गकातरो दुःखमिति यदि नागच्छेत् । ]

गणिका—णं अहं तं कामेमि । [ नन्वहं तं कामये । ]

चेटी—जइ एत्तओ बहुमाणो, किं णाभिसरीअदि । [ यद्येतावान् बहुमानः, किं नाभिसियते । ]

गणिका—ण हु ण गच्छामि । किन्तु सहसा अभिसरिदो पच्चुअआरदुल्लभदाए पुणो मे दुल्लभो भवे त्ति विलम्बेमि । [ न खलु न गच्छामि । किन्तु सहसाभिसृतः प्रत्युपकारदुर्लभतया पुनर्मे दुर्लभो भवेदिति विलम्बे । ]

---

विभवमन्दतया—विभवस्य = ऐश्वर्यस्य मन्दता = क्षीणता इति विभवमन्दता तया । वेशः ( =वेश्याजनसनाश्रयः ) वेशे वासः, तस्य प्रसङ्गः=प्रसक्तिः, आसक्तिः वा तस्मिन् कातरः ( सः चारुदत्तः ), एतादृशः चारुदत्तः वेशवासः दुःखम् = दुःखजनकम् इति मत्वा यदि नागच्छेत् तदा किं करिष्यामि इति आशयः ।

तदा विभवक्षीणतादुःखस्य स यथा विषयो न भवेत् तथा करिष्यामि, तं कामयमाना च तादृशम् आचरेयम् अत आह—'नन्वहं तं कामये' इति ।

अभिसियते = स किं न अभिसियते त्वया इति शेषः ।

न खलु न गच्छामि—अहं न खलु गच्छामि इति न, अपि तु गच्छाम्येव । किन्तु सहसा = हठात् इदानीमेव अभिसृतः सन् प्रत्युपकारदुर्लभतया—प्रत्युपकारे दुर्लभः = असमर्थः चारुदत्तः तद्भावतया, 'अहं प्रत्युपकर्तुं न समर्थोऽस्मि' इति

---

चेटी—यदि वेश्याजन में अनुराग होने से कातर ( चारुदत्त ) वैभव के विनाश के कारण यहाँ वेशवास में ( =वेश्यागृह में ) न आये, तब आप क्या करेंगी ?

गणिका—मैं तो वास्तव में उसे ही चाहती हूँ ।

चेटी—यदि उसके प्रति आपका बड़ा आकर्षण एवं समादर है तो क्यों नहीं आप स्वयं चली जातीं ?

गणिका—मैं अवश्य जाऊंगी । किन्तु इस समय मेरा सहसा अभिसरण बाद में उसे अनुपयोगी ( दुर्लभ ) बना देगा, क्योंकि वह इस समय प्रत्युपकार करने में असमर्थ है । इसीलिये, मैं विलम्ब कर रही हूँ ।

चेटी—हं, किं एतण्णिमित्तं तहि एव्व सो अलङ्कारो ठाविदो । [ हं. किमेतन्निमित्तं तत्रैव सोऽलङ्कारः स्थापितः । ]

गणिका—ईदिसं एव्व ! [ ईदृशमेव । ]

( ततः प्रविशत्यपटीक्षेपेण संवाहकः । )

संवाहकः—अय्ये ! सरणागदो म्हि । [ आर्ये ! शरणागतोऽस्मि । ]

गणिका—अलं अय्यस्स सम्भमेण । [ अलमार्यस्य सम्भ्रमेण । ]

---

हेतोः स पुनः मे = मम सम्बन्धे दुर्लभः = अप्राप्यः भवेत् यदि अर्थात् मम समीपं नागच्छेत् इति हेतोः अहम् इदानीं विलम्बे = विलम्बं करोमि, इत्यर्थः ।

[1]अपटीक्षेपेण—पट्याः पटस्य वा = जवनिकायाः क्षेपः = निरसनम् इति पटीक्षेपः जवनिकापसारणम् , न पटीक्षेपः तेन, जवनिकामनपसार्य एव प्रविशति संवाहकः = कश्चित् अङ्गमर्दनकलाजीवी इत्यर्थः । अत्र 'पटीक्षेपो न कर्तव्यः आर्तराजप्रवेशने' इति नियमबलात् आर्तस्य भयार्तस्य वा संवाहकस्य अपटाक्षेपेण प्रवेशो न असङ्गतः ।

'नाम' इति प्राकाश्ये वा सम्भावनायामव्ययम्, साहसेन चरतीति साहसिकः ।

सुलभचारित्रवञ्चनाः—चरित्रमेव चारित्रम् , चारित्रस्य वञ्चनम् = भ्रंशः, सुलभं चारित्रवञ्चनं येषाम् ते तथा । अपराधयितुम्—अपराधं कर्तुमित्यर्थः ।

अभिजनेन—जन्मना गणिका न तु शीलेन = चारित्रेण इत्याशयः ।

संवाहक इति—धनिकात् = धनिको द्यूतविजयी अतः तत् सकाशात् मम भयम् अस्ति इति भावः ।

अर्यस्य इत्यत्र सम्बन्धविवक्षया षष्ठी वस्तुतस्तु चतुर्थी एव उपयुक्ता ।

---

चेटी—हाँ, क्या इसी उद्देश्य से आप अपने अलङ्कारों को उनके ( चारुदत्त के ) पास रख आई हैं ?

गणिका—सचमुच यही बात है !

( तब पर्दा के विना गिराये ही संवाहक ( पैर दबानेवाले ) का प्रवेश ).

संवाहक— आर्ये ! मैं शरणागत हूँ ।

गणिका— आपको व्याकुल होने की आवश्यकता नहीं है ।

---

१. श्री पं० गणपति शास्त्री द्वारा सपादित ग्रन्थ में 'अपटाक्षेपेण' यह पाठ मिलता है ।

गणिका—अवहिदम्हि । [ अवहितास्मि । ]

संवाहकः—पाडलिपुत्तं मे जम्मभूमी। पकिदीए वणिजओ अहं। तदो भाअधेअपरिवुत्तदाए दसाए संवाहअवुत्तिं उवजीवामी। [ पाटलिपुत्रं मे जन्मभूमिः । प्रकृत्या वणिगहम् । ततो भागधेयपरिवृत्ततया दशया संवाहकवृत्तिमुपजीवामि । ]

गणिका—संवाहओ अय्यो। सुउमारा कला सिक्खिदा अय्येण। [ संवाहक आर्यः । सुकुमारा कला शिक्षितार्येण । ]

संवाहकः—कलेत्ति सिक्खिदा। आजीविअं दाणिं संवुत्तं। [ कलेति शिक्षिता । आजीविकेदानीं संवृत्ता । ]

गणिका—णिव्वेदसूअअं विअ वअणं अय्यस्स। तदो तदो। [ निर्वेदसूचकमिव वचनमार्यस्य । ततस्ततः । ]

संवाहकः—अज्जुए! सो दाणिं अहं आअन्तुआणं सुणिअ पुरुस-

---

अवहितास्मि = श्रोतुं सावधानास्मि ।

भागधेयस्य—भाग एव इति स्वार्थे धेय-प्रत्ययः-भागधेयम्, परिवृत्तम् 'तस्य भावः' इति भावे तल् प्रत्ययः, भागधेयस्य परिवृत्तता = प्रतिकूलता यस्याम् तया एवंभूतया दशया = अवस्थया या भाग्यदशा चक्रारपंक्तिरिव परिभ्रमति । संवाहकवृत्तिम्—संवाहकस्य = अङ्गमर्दकस्य वृत्तिम् = उपजीविकाम् उपजीवामि ।

निर्वेदसूचकम् = दुःखसूचकम् ।

---

गणिका—मैं सावधान हूँ।

संवाहक—पाटलिपुत्र (=पटना) मेरी जन्मभूमि है। मैं स्वभावतः वणिक् (=वनिया) हूँ। इसके बाद, मैं भाग्य के परिवर्तन होने के कारण संवाहक की वृत्ति को ग्रहण किये हुए हूँ।

गणिका—आप संवाहक हैं। आपने सुकुमार कला की शिक्षा ली है।

संवाहक—मैंने इसे कला के रूप में तो सीखा था पर साथ ही साथ इस समय मेरे लिये यही जीविका भी है।

गणिका—आर्य का यह वचन निर्वेदसूचक है। तव फिर क्या हुआ?

संवाहक—आर्ये! संवाहकवृत्ति के उपयुक्त वड़े लोग उज्जयिनी में सुलभ हैं

विसेसकोदूहलेण आअदो म्हि इमं उज्जअणिं। [ अज्जुके ! स इदानीमहमागन्तुकानां श्रुत्वा पुरुषविशेषकौतूहलेनागतोऽस्मीमामुज्जयनीम्। ]

गणिका— तदो तदो। [ ततस्ततः। ]

संवाहकः—तदो इह आअदमत्त एव्व कोचि सत्थवाहपुत्तो समासादिदो। [ तत इहागतमात्र एव कश्चित् सार्थवाहपुत्रः समासादितः। ]

गणिका—केरिसो। [ कीदृशः। ]

संवाहकः—आइदिमन्तो अविब्भमन्तो अणुच्छित्तो ललिदो ललिददाए अविम्हओ चउरो महुरो दक्खो सदक्खिण्णो अभिमदो आइदो तुट्ठो होदि। दय्य ण विकत्थेदि। अप्पं वि सुमरदि, बहुअं पि अवइदं विसुमरदि। अज्जुए ! किं बहुणा, तस्स कुलपुत्तस्स गुणाणं चउब्भाअं पि सुदिग्घेण वि गिम्हदिअहेण वण्णिदुं ण सक्कं। किं बहुणा, दक्खिण्णदाए परकेरअं विअ अत्तणो सरीरं धारेदि। [आकृतिमान् अविभ्रमन् अनुत्सिक्तो ललितो ललि-

---

आगन्तुकानाम्—इत्यत्र सम्बन्धसामान्ये षष्ठी, 'आगन्तुकेभ्यः' इति रमणीयः पाठः। पुरुषविशेषकौतूहलेन—पुरुषाणाम् विशेषः अर्थात् विशिष्टः पुरुष इत्यर्थः, पुरुषविशेषस्य वा तस्मिन् कौतूहलम् तेन हेतुना, अर्थात् 'संवाहकवृत्त्युपजीव्याः पुरुषविशेषा उज्जयिन्यां सुलभा इति आगन्तुकमुखात् विज्ञाय पुरुषविशेषकौतूहलेन = सेव्यपुरुषविशेषलिप्सया' इति शास्त्रिणोऽभिप्रायः।

आगतमात्रः—आगतम् आगमनम् मात्रा = परिमाणम् यस्य, तस्मिन् आगतमात्रे एव समासादितः = प्राप्तः।

अनुत्सिक्तः—न उत्सिक्तः = गर्वरहितः। अविस्मयः—विस्मयः = गर्वः, अवि-

---

यह बात आगन्तुकों के मुख से सुनकर यहां ( उज्जयिनी में ) आया।

गणिका—तब, क्या हुआ ?

संवाहक—तब यहां आते ही एक वणिक्पुत्र से मेरी भेंट हुई।

गणिका—वह कैसा है ?

संवाहक—वह रूपवान्, विद्वान्, मदरहित, ललित, एवं अपने सौन्दर्य पर अभिमान न करने वाला, चतुर, मधुर, दक्ष, सहृदय, प्रतिष्ठित और याचकों को सन्तुष्ट करने वाला है। दान देकर किसी से कहता नहीं। अल्प उपकार को भी स्मरण करता है। बहुत अपकार को भी विस्मृत कर देता है। माननीये, अधिक

ततयाविस्मयश्चतुरो मधुरो दक्षः सदाक्षिण्योऽभिमत आचितस्तुष्टो भवति । दत्त्वा न विकत्थते । अल्पमपि स्मरति, बहुकमप्यपकृतं विस्मरति । अज्जुके ! किं बहुना, तस्य कुलपुत्रस्य गुणानां चतुर्भागमपि सुदीर्घेणापि ग्रीष्मदिवसेन वर्णयितुं न शक्यम् । किं बहुना, दक्षिणतया परकीयमिवात्मनः शरीरं धारयति । ]

गणिका—( अपवार्य ) हञ्जे ! कोणु क्खु सो अय्यचारुदत्तस्स गुणाणं अणुकरेदि । [ हञ्जे ! को नु खलु स आर्यचारुदत्तस्य गुणानामनुकरोति ।

चेटी—मम वि कोदूहलं सोदुं । को णु हु उज्जइणिं अत्तणो गुणेहिं मण्डेदि । [ममापि कौतूहलं श्रोतुम् ! को नु खलूज्जयिनीमात्मनो गुणैर्मण्डयति । ]

गणिका—तदो तदो । [ ततस्ततः । ]

संवाहकः—तदो तस्स गुणविक्किणिदसरीरो विस्सरिदकलत्तो उवजीविओ संवुत्तो । ततस्तस्य गुणविक्रीतशरीरो विस्मृतकलत्र उपजीवी संवृत्तः । ]

गणिका—किं सो दरिद्दो । [किं स दरिद्रः । ]

---

यमानः विस्मयः यस्य स तथोक्तः । सदाक्षिण्यः—दाक्षिण्येन सह वर्तमानः सदाक्षिण्यः । किं बहुना = कथितेन किं स्यात् , न किमपि स्यात् । दक्षिणतया = सहृदयतया ।

गुणविक्रीतशरीरः—गुणेन विक्रीतं वशीकृतं तादृशं शरीरं यस्य सः । विस्मृतकलत्रः—विस्मृतं कलत्रं भार्या येन सः ।

---

क्या कहूँ ? उस गुणवान् कुलपुत्र के गुणों का वर्णन करने के लिये ग्रीष्मकाल का लम्बा दिन भी अपर्याप्त है । संक्षेप में, दया-दाक्षिण्यादि गुणों से वह ऐसा जान पड़ता है कि मानो अपना शरीर दूसरों के लिये ही धारण करता है ।

गणिका—( बीच में रोककर ) प्रिय दासी ? सचमुच में कौन है, जो आर्य चारुदत्त के गुणों का अनुकरण कर सके ? अर्थात् कोई नहीं ।

चेटी—मुझे भी सुनने में कौतूहल हो रहा है । वास्तव में कौन है जो अपने गुणों से उज्जयिनी को भूषित करता है ?

गणिका—तब क्या हुआ ?

संवाहक—तब उसके गुणों के वशीभूत हो मैं उसका सेवक बन गया और अपनी पत्नी को भी भुला दिया ।

गणिका—क्या वह दरिद्र है ?

संवाहकः—कहं अणाचक्खिदे अय्या जाणादि । [ कथमनाख्यात आर्या जानाति । ]

गणिका—एअस्सिं दुल्लहो गुणविभवो त्ति । तदो तदो । [ एकस्मिन् दुर्लभो गुणविभव इति । ततस्ततः । ]

चेटी—को णाम सो अय्यो । [ को नाम स आर्यः । ]

संवाहकः—अय्यचारुदत्तो णाम । [ आर्यचारुदत्तो नाम । ]

गणिका—जुज्जइ । तदो तदो । [ युज्यते ततस्ततः । ]

संवाहकः—तदो सो विभवसन्ददाए अस्साहीणपरिजणो विसज्जिअकुडुम्बभरणो चारित्तमत्तावसेसो सत्थवाहकुले पडिवसिदि । अहं पि तेण अय्येण अब्भणुण्णादो—अण्णं उवचिट्ठदु त्ति । कहं अण्णं एरिसं मणुस्सरअणं लभेअं त्ति, कहं च तस्स कोमललिदमहुरसरीरप्परिसिकिदत्थं मे हत्थं साहारणसरीरसम्मद्देण सोअणीअं करिस्सं त्ति जादणिव्वेदो दड्ढसरीररक्खणत्थं जूदोवजीवी संवुत्तो । [ ततः स विभवमन्दतया स्वाधीनपरिजनो विसर्जितकुटुम्बभरणश्चारित्रमात्रावशेषः सार्थवाहकुले प्रतिवसति ।

---

अस्वाधीनपरिजनः—न स्वाधीनः आत्माधीनः परिजनः यस्य सः । विसर्जितकुटुम्बभरणः—विसर्जितम् = दूरीकृतं, परित्यक्तं वा कुटुम्बभरणं = परिवारपालनं येन सः । चारित्रमात्रावशेषः—चारित्रमात्रम् = स्वकीयव्यक्तित्वमात्रम् अवशेषः यस्य सः । अभ्यनुज्ञातः = आदेशितः । उपतिष्ठताम्=सेवताम् , अन्यम्

---

संवाहक—बिना कही बात को भी आप कैसे जान जाती हैं ?

गणिका—एक व्यक्ति में यह सम्पूर्ण गुण दुर्लभ हैं ( इसीलिये मैं ऐसा कह रही हूँ )। तब फिर क्या हुआ ?

चेटी—उस आर्य का नाम क्या है ।

संवाहक—उसका नाम आर्य चारुदत्त है ।

गणिका—उपयुक्त ही है । तब क्या हुआ ?

संवाहक—इसके बाद वह अर्थहीनता के कारण अपने परिजनों से छूट गया और कुटुम्ब का भरण-पोषण त्यागकर एकमात्र अपने चरित्र की रक्षा करते हुए वणिक्कुल में रहने लगा । उस महात्मा ने मुझे भी आदेश दिया कि तुम भी किसी दूसरे की सेवा करो । ऐसा ही अन्य पुरुषरत्न कैसे उपलब्ध हो सकेगा

अहमपि तेनार्येणाभ्यनुज्ञातोऽन्यमुपतिष्ठतामिति । कथमन्यमीदृशं मनुष्यरत्नं लभेयेति, कथं च तस्य कोमलललितमधुरशरीरस्पर्शकृतार्थं मे हस्तं साधारण-शरीरसंमर्दनं शोचनीयं करिष्यामीति जातनिर्वेदो दग्धशरीररक्षणार्थं द्यूतो-पजीवी संवृत्तः । ]

( गणिका सहर्षवाष्पं चेटीमवलोकयति । )

चेटी—तदो तदो । [ ततस्ततः । ]

संवाहकः—तदो बहूणि दिणाणि मए पराइदेण पुरुसेण कदाइ अहं पि दहसु सुवण्णेसु पराइदो म्हि । [ ततो बहूनि दिनानि मया पराजितेन पुरुषेण कदाचिदहमपि दशसु सुवर्णेषु पराजितोऽस्मि । ]

गणिका—तदो तदो । [ ततस्ततः । ]

संवाहकः—तदो अज्ज वेसमग्गे जइच्छोवणदो समासादिदो म्हि ।

---

जनम् इति शेषः । कोमलललितमधुरशरीरस्पर्शकृतार्थम्—कोमलं च तत् ललितं च इति कोमलललितं च मधुरं च इति कोमलललितमधुरम् एवंभूतं शरीरं तस्य स्पर्शेन कृतार्थम् = कृतकृत्यम् एवंरूपं हस्तमित्यर्थः, साधारणशरीर-संमर्दनेन—साधारणशरीरस्य = सामान्यजनशरीरस्य संमर्दनेन । दग्धशरीररक्ष-णार्थम्—दग्धं शरीरं तस्य रक्षणार्थम् द्यूतोपजीवी—द्यूतेन उपजीवति आत्मनिर्वाहं करोतीत्यर्थः ।

---

और उसके कोमल, मधुर, एवं ललित शरीर के स्पर्श से कृतार्थ एवं अभ्यस्त यह मेरा हाथ सर्वसाधारण शरीर के सम्मर्दन से कैसे सन्तुष्ट होगा ? यही शोचनीय हो गया। उसी दुःख से दुखी मैं इस कम्बख्त शरीर की रक्षा के लिये 'जुआरी' हो गया हूँ।

( गणिका आनन्द की आँसू के साथ सहर्ष चेटी को देखती है )

चेटी—तब फिर क्या हुआ ?

संवाहक—तब मैंने जिसे बहुत दिनों तक पराजित किया उसी ने एक दिन जुए में मुझको दश स्वर्ण मुद्रा से पराजित कर दिया।

गणिका—तब क्या हुआ ?

संवाहक—इसके बाद आज, भाग्य के उलटा होने के कारण यहाँ.. मुझको इसी

तस्स भएण इह पविट्ठो। एवं अय्या जाणादु। [ ततोऽद्य वेशमार्गे यदृच्छोपनतः समासादितोऽस्मि। तस्य भयेनेह प्रविष्टः। एवमार्या जानातु। ]

गणिका—( आत्मगतम् ) अहो अच्चाहिदं ! एवं खु मण्णे वासपादपविणासेण पक्खिणो आहिण्डन्ति त्ति। ( प्रकाशम् ) एवं गदे अत्तकेरओ अय्यो। हला ! एहि तं जणं विसज्जेहि। [ अहो अत्याहितम्। एवं खलु मन्ये वासपादपविनाशेन पक्षिण आहिण्डन्त इति। एवं गत आत्मीय आर्यः। हला ! एहि तं जनं विसर्जय। ]

चेटी—तह। ( निष्क्रान्ता। ) [ तथा। ]

गणिका—ण खु अय्येण अत्थणिमित्ता चिन्ता कादव्वा। अय्यचारुदत्तो एव्व देदि त्ति अय्यो जाणादु। [ न खल्वार्येणार्थनिमित्ता चिन्ता कर्तव्या। आर्यचारुदत्त एव ददातीत्यार्यो जानातु। ]

( प्रविश्य )

---

वेशमार्गे—वेशस्य = वेश्यागृहस्य मार्गः तस्मिन् अर्थात् यत्र गणिकाः निवसन्ति इति भावः। यदृच्छोपनतः—यदृच्छया उपनतः = आगतः अहम् तैः समासादितः = प्राप्तः।

अत्याहितम्—अति अधिकम् अतिशयेन वा आहितम् = महद्भयम् समुपस्थितम् 'अत्याहितं महद्भयम्' इत्यमरः। वासपादपविनाशेन = निवासवृक्षविनाशेन हेतुना, आहिण्डन्ते = व्याकुलीभूय इतस्ततः उड्डीयन्ते पक्षिणः इति शेषः।

---

वेश्यालय ( की गली ) के समीप में वह धनिक ( विजयी जुआरी ) मिल गया। उसी के भय से मैं यहां आया हूँ। मेरी कहानी आप इस रूप से जानें।

गणिका—( स्वगत ) आह ! बहुत ब ी आपत्ति है। आवास-वृक्ष के विनाश के कारण जैसे पक्षी इधर-उधर आश्रयहीन होकर घूमते-फिरते हैं वैसा मैं समझती हूँ। ( प्रकाश रूप से ) ऐसी स्थिति में आप तो मेरे आत्मीय ( सम्बन्धी ) हैं। ( चेटी के प्रति ) हला ! जाओ विजयी जुआरी को ( कुछ द्रव्य देकर ) विदा करो।

चेटी—ऐसा ही हो ( निकल जाती है। )

गणिका—आप धन के विषय में चिन्ता न करें। आर्य चारुदत्त ही धन दे रहे हैं, ऐसा आप समझें।

( प्रवेश कर )

चेटी—अज्जुए! विसज्जिदो सो जणो, परितुट्ठो गदो अ । [अज्जुके! विसर्जितः स जनः, परितुष्टो गतश्च ।]

संवाहकः—अणुग्गहिदो म्हि । [अनुगृहीतोऽस्मि ।]

गणिका—गच्छदु अय्यो सुहिज्जणदंसणेण पीदिं णिव्वत्तेदुं । [गच्छत्वार्यः सुहृज्जनदर्शनेन प्रीतिं निर्वर्तयितुम् ।]

संवाहकः—अज्ज एव कदाइ णिव्वेदेण पव्वजेअं । जइ इअं परिअणे सङ्क्न्ता कला भवे, तदो अय्याए अणुग्गहिदो भवेअं । [अद्यैव कदाचिन्निर्वेदेन प्रव्रजेयम् । यदीयं परिजने सङ्क्रान्ता कला भवेत्, तत आर्ययानुगृहीतो भवेयम् ।]

गणिका—जस्स किदे इअं कला सिक्खिदा, सो एव्व अय्येण उवचिट्ठिदव्वो भविस्सदि । [यस्य कृते इयं कला शिक्षिता, स एवार्येणोपस्यातव्यो भविष्यति ।]

संवाहकः—(स्वगतम्) णिउणं खु पच्चाचक्खिदो म्हि । को हि णाम

---

सुहृज्जनदर्शनेन—सुहृज्जनानाम् दर्शनेन प्रीतिं निर्वर्तयितुम् = सम्पादयितुम् गच्छतु आर्यः इति भावः ।

निर्वेदेन = वैराग्येण हेतुना ।

उपस्यातव्यः = सेवितव्यः पूजयितव्यश्च ।

---

चेटी—माननीये! उसको द्रव्य दे दिया है और वह सन्तुष्ट होकर चला भी गया ।

संवाहक—मैं अनुगृहीत हूँ ।

गणिका—कृपया आप जायँ, अपने बन्धुओं को दर्शन देकर प्रसन्न करें ।

संवाहक—मैं आज ही उद्वेग के कारण 'संन्यास' या प्रव्रज्या ले लूँगा । किन्तु यदि आप अनुग्रह करके अनुमति दें तो अभ्यस्त सम्मर्दन कला को आपके परिवार के लोगों को सिखा दूँ ।

गणिका—जिसके लिये आपने इस कला का अभ्यास किया उसी की आप सेवा करें ।

संवाहक—(स्वगत) गणिका ने बड़ी निपुणता के साथ मेरी बात का प्रत्या-

अप्पणा किदं पच्चुअआरेण विणासेदि । ( प्रकाशम् ) अय्ये ! गच्छामि दाव अहं । [ निपुणं खलु प्रत्याख्यातोऽस्मि । को हि नामात्मना कृतं प्रत्युपकारेण विनाशयति । आर्ये ! गच्छामि तावदहम् । ]

गणिका—गच्छदु अय्यो पुणोदंसणाअ । [ गच्छत्वार्यः पुनर्दर्शनाय । ]

संवाहकः—अय्ये ! तह । ( निष्क्रान्तः । ) [ आर्ये ! तथा । ]

गणिका—हं, सद्दो विअ । [ हं शब्द इव । ]

( प्रविश्य )

चेटः—विच्छित्तिए ! विच्छित्तिए ! कहिं कहिं अज्जुआ । [ विच्छित्तिके ! विच्छित्तिके ! कुत्र कुत्राज्जुका । ]

गणिका—हञ्जे ! किं एदं । [ हञ्जे किमेतत् । ]

---

निपुणम् = सुस्पष्टं यथा स्यात् तथा प्रत्याख्यातः = अस्वीकृतः, निन्दितो वा गणिकया इति शेषः ।

दर्शनाय = दर्शनं दातुम् इत्यर्थः ।

तथा = तथा अस्तु । एवं 'तावत् नायकविषया रतिः परिपोषिता' इति तात्पर्यार्थः ।

'विच्छित्तिका' इति तत्रत्या काचित् परिचारिका अस्ति तस्या इयं संज्ञा अत एव सम्बोधयति 'विच्छित्तिके' इति ।

किमेतत् = किमेतत् आपतितम् इत्यर्थः ।

---

ख्यान किया । कौन व्यक्ति अपने किए उपकार को उपकार के द्वारा विनाश करना चाहता है ? ( प्रकाश रूप से ) आर्ये ! तब मैं जाता हूँ ।

गणिका— आर्य जाइये और फिर दर्शन दीजियेगा ।

संवाहक—ऐसा ही हो । ( निकल जाता है । )

गणिका—हाँ, किसी की आवाज आ रही है ।

( प्रवेश कर )

चेट ( वसन्तसेना का सेवक )—विच्छित्तिके, विच्छित्तिके ! माननीया गणिका ( वसन्तसेना ) कहाँ हैं ?

गणिका—आर्य ! क्या बात है ?

चेटः—हं, विप्पलद्धो म्हि, वादाअणणिक्खामिदपुव्वकाआए ओणमिअपओहराए कण्णऊरस्स परिप्फन्दो अज्जुआए जेण ण दिट्ठो। [ हं, विप्रलब्धोऽस्मि, वातायननिष्कामितपूर्वकाययाऽवनमितपयोधरया कर्णपूरस्य परिस्पन्दोऽज्जुकया येन न दृष्टः । ]

गणिका—लहुजणस्स सुलहो विम्हओ । किं दे उस्सेअस्स कारणम् । [ लघुजनस्य सुलभो विस्मयः । किं ते उत्सेकस्य कारणम् । ]

चेटः—सुणादु अज्जुआ—एसो उग्गवेगेण • ओगाहणणिव्वत्तिदेण पस्सुदमदगन्धं राअमग्गं करन्तेण मङ्गलहत्थिणा भद्दकपोदएण अणेअपुरुससङ्कुलेसु राअमग्गेसु उत्तरिअपडविराअदाए अहिअलक्खणीओ कोवि प्पव्वइदो समासादिदो । [ शृणोत्वज्जुकाएष उग्रवेगेनावगाहननिर्वर्तितेन प्रस्रुतमदगन्धं राजमार्गं कुर्वता मङ्गलहस्तिना भद्रकपोतकेनानेकपुरुषसङ्कुलेषु राजमार्गेषूत्तरीयपटविरागतयाऽधिकलक्षणीयः कश्चित् प्रव्रजितः समासादितः । ]

---

विप्रलब्धोस्मि = अहं वञ्चितः, अकृतार्थो वा अस्मि यतः वातायननिष्कामितपूर्वकायया—वातायने = गवाक्षे निष्कामितः = संक्रामितः पूर्वकायो यस्याः तया, अवनमितपयोधरया—धरतीति धरः, पयसां धरः इति पयोधरः, अवनमितः पयोधरः यस्याः तया, एवं भूतया अज्जुकया ( भवत्या ) कर्णपूरस्य = 'वसन्तसेनायाः भृत्यविशेषः सुधामधुरशब्देन श्रोतुः कर्णौ पूरयतीत्यर्थकः' ( एवंभूतस्य मम ) परिस्पन्दः = वीरतापूर्णकर्म न दृष्टः तेन हेतुना अहं वंचितः ।

उत्सेकस्य = गर्वस्य ।

भद्रकपोतकेन—दशवर्षः भवेत् पोतः स एव पोतकः स्वार्थे कः, भद्रकश्चासौ

---

चेट—मेरा दुर्भाग्य है क्योंकि गवाक्षके बाहर अपने शरीर का ऊपरी भाग निकालकर और नवनें के कारण झुके हुए स्तनों के साथ आपने मेरा ( कर्णपूरका ) वीर कर्म नहीं देखा।

गणिका—साधारणजन में सहज ही विस्मय होता है । तुम्हारे गर्व का क्या कारण है ?

चेट—आर्या सुनिये—मंगल कार्य के योग्य भद्रक नामक हाथी के बच्चा जब कि स्नान करके बड़ी तेजी से राजमार्ग को अपने मदगन्ध से आमोदित करते हुए लौट रहा था तब उसने अनेक पुरुषों से व्याप्त राजमार्ग में उत्तरीय वस्त्र से युक्त एक परिव्राजक को पकड़ लिया।

गणिका—हं, तदो तदो । [ हं, ततस्ततः । ]

चेटः—तदो मए हत्थिहत्थामिद्दताडिअमाणो दन्तन्तरपरिवत्तमाणो हत्थिहत्थपडिदचरणो तदो हा हा विपाडिदो हा हा हदो त्ति जणवादे संवुत्ते तदो दिण्णकरप्पहारेण परिवत्तिदं हत्थिं करिअ मोइदो सो परिव्वाजो । [ ततो मया हस्तिहस्तामर्दताड्यमानो दन्तान्तरपरिवर्तमानो हस्तिहस्तपतितचरणः ततो हा हा विपाटितो, हा हा हत इति जनवादे संवृत्ते ततो दत्तकरप्रहारेण परिवर्तितं हस्तिनं कृत्वा मोचितः स परिव्राट् । ]

गणिका—पिअं मे । तदो तदो । [ प्रियं मे । ततस्ततः । ]

---

पोतकश्च तेन, मंगलहस्तिना = माङ्गलिककर्मसु उपयुक्तेन हेतुना, प्रस्रुतमदगन्धम्-प्रस्रुतेन मदेन गन्धम्—गन्धयुक्तम् राजमार्गम् राजकीयपथम् इत्यर्थः; एवंभूतेन भद्रकपोतकेन प्रव्रजितः = परिव्राट् समासादितः = प्राप्तः ।

हस्तिहस्तामर्दताड्यमानः—हस्तिनः = गजस्य हस्तः शुण्डादण्डः तस्य आमर्देन = आघातेन ताड्यमानः, दन्तान्तरपरिवर्तमानः—दन्तयोः अन्तरम् = मध्यम् , तत्र परिवर्तमानः, हस्तिहस्तपतितचरणः—हस्तिहस्ते पतितः तादृशः चरणः यस्य सः करिकरगृहीतपादः इत्यर्थः । विपाटितः = विदलितः ( परिव्राट् इति शेषः ) जनवादे—जनानाम् वादः = रवः तस्मिन् प्रवृत्ते = उत्थिते सति, दत्तकरप्रहारेण—दत्तः करप्रहारः येन तेन ( मयेति शेषः )

मे प्रियम् = मम प्रियं ( वस्तु ) जातम् इति भावः ।

---

गणिका—हाँ ! तब फिर क्या हुआ ?

चेट—तब वह हाथी के दांतों के आघात से पीड़ित होकर उसके दांतों के भीतर आ गया । जब हाथी ने उसे सूँड़ के सहारे चरण से दबाना चाहा, तब जनता का 'हाय ! हाय ! फाड़ दिया गया, हाय ! हाय मारा गया'—यह राव (शब्द) हुआ । मैंने अपने हाथों के प्रहार के द्वारा उसकी स्थिति में परिवर्तन लाया और उस संन्यासी को बचाया ।

गणिका—मेरे लिये अच्छा हुआ ( अर्थात् मेरा प्रिय ही हुआ ) । तब फिर क्या हुआ ?

चेटः—तदो सव्वो जणो भणादि—अहो चेडस्स कम्म त्ति । ण उण कोचि किं पि इच्छइ दाउं । तदो अज्जुए ! केण वि कुलवुत्तेण उइदाणि आभरणट्ठाणाणि विलोइअ अङ्गुट्ठेणाणिअ वि उण अलद्धं पेक्खिअ दव्वं उवालभिअ दिग्घं णिस्ससिअ एत्तओ मे विभवो त्ति करिअ परिजणहत्थे अअं पावरओ पेसिदो । [ ततः सर्वो जनो भणति–अहो चेटस्य कर्मेति । न पुनः कश्चित् किमपीच्छति दातुम् । ततोऽज्जुके ! केनापि कुलपुत्रेणोचितान्याभरणस्थानानि विलोक्याङ्गुष्ठेनानीयापि पुनरलब्धं प्रेक्ष्य दैवमुपालभ्य दीर्घं निःश्वस्यैतावान् मे विभव इति कृत्वा परिजनहस्तेऽयं प्रावारकः प्रेषितः । ]

---

भणति = कथयति, चेटस्य = वसन्तसेनाभृत्यस्य कर्म = वीरकर्म एतत् भवति, यत् परिव्राजकः हस्तिहस्तात् रक्षितः ततः = तदनन्तरम् कुलपुत्रेण = कुलीनेन जनेन ( आर्यचारुदत्तेन इति शेषः ) उचितान्याभरणस्थानानि—उचितानि, अभ्यस्तानि, चिरपरिचितानि आत्मनः बहुमणिबन्धनानि आभरणस्थानानि = अलङ्कारधारणस्थानानि विलोक्य = तानि आभरणशून्यानि दृष्ट्वा अङ्गुष्ठेन = दक्षिणहस्ताङ्गुष्ठेन ( करणे तृतीया ) 'कर्णादिस्थानानि' अलङ्कारः अस्ति न वा इति ज्ञातुम् आनीय = सयत्नम् आकृष्य पुनः आभरणम् अलब्धम् = अप्राप्तं प्रेक्ष्य= विज्ञाय दैवम् उपालभ्य = तिरस्कृत्य दुःखात् दीर्घं निःश्वस्य = दीर्घश्वासं परित्यज्य 'एतावान् मे विभव इति कृत्वा' इति मत्वा परिजनहस्ते ( अधिकरणविवक्षया सप्तमी वस्तुतस्तु तृतीया एव भवितुमर्हति ) साधारणवस्तुदाने स्वयं संकुचितः भृत्यहस्तेन प्रावारकः = आत्मनः उत्तरीयवस्त्रम् प्रेषितः = वीरकर्मणः पुरस्काररूपं वस्त्रखण्डम् प्रेषितवान् ।

---

चेट—तब सब लोग एकत्रित हो गये और कहने लगे कि 'चेट का यह ( अद्भुत ) वीरतापूर्ण कार्य है' । किन्तु कोई कुछ देना नहीं चाहता था । तब माननीये ! किसी कुलीन महानुभाव ने अन्य आभरणों के सुपरिचित स्थानों को शून्य देखकर अंगूठे के द्वारा अदृष्ट कर्णादिगत स्थानों को भूषण है या नहीं यह जानने के लिये खींचा, पर कुछ भी नहीं उपलब्ध हुआ । तब दैव को उपालम्भ देकर और लम्बी सांस लेते हुए 'मेरा वैभव इतना ही है'—ऐसा कहकर परिजन के हाथ में ( सामान्य द्रव्य के दान देने में स्वयं संकुचित भाव से ) देकर यह उत्तरीय वस्त्र भेज दिया ।

गणिका—को णु खु अय्यचारुदत्तस्स गुणाणं अणुकरेदि। [ को नु खल्वार्यचारुदत्तस्य गुणाननुकरोति । ]

चेटी—अज्जुए ! मम वि कोदूहलं अत्थि। को णु खु एसो। [ अज्जुके ! ममापि कौतूहलमस्ति । को नु खल्वेषः । ]

गणिका—केण वि साहुणा पुरुसेण होदव्वं। [ केनापि साधुना पुरुषेण भवितव्यम् । ]

चेटी—साहु पुच्छीअदु दाव । [ साधु पृच्छयतां तावत् । ]

गणिका—हञ्जे ! एकपुरुसपक्खवादिदा सव्वगुणाणं हन्ति । [ हञ्जे ! एकपुरुषपक्षपातिता सर्वगुणान् हन्ति । ]

चेटी—भद्द ! से णाम तुवं जाणासि। [ भद्र ! अस्य नाम त्वं जानासि । ]

चेटः—ण हु जाणामि । [ न खलु जानामि । ]

गणिका—अदिलहु तुए किदं । [ अतिलघु त्वया कृतम् । ]

---

एकपुरुषपक्षपातिता—एकपुरुषे = चारुदत्तरूपे स्नेहविषयीभूते तादृशे एकपुरुषे पक्षपातिता = गुणपक्षपातिता अर्थात् 'को नु खल्वार्यचारुदस्य गुणान अनुकरोति' इति कथनेन गुणपक्षपातिता सिद्धयति, अत एव सर्वगुणाश्रयः नान्यः इति गुणविषये एकाङ्गिदृष्टिदोषता 'सर्वगुणान् अन्येषां सर्वगुणान् हन्ति = असहनेन न मर्षयति ।

अतिलघु = त्वया अतिशयेन लघु = हीनं कर्म कृतम् = आचरितम् , यतः त्वं तस्य नाम जिज्ञासयापि न जानासि ।

---

गणिका—( चेटी की ओर देखकर ) सचमुच में यह कौन है; जो आर्य चारुदत्त के गुणों का अनुकरण करता है ?

चेटी—माननीये ! मुझे भी कौतूहल हो रहा है । यह कौन है ?

गणिका—वह निश्चय ही कोई सत्पुरुष है ।

चेटी—अच्छा, तब पूछना चाहिये ।

गणिका—माननीये ! एक पुरुष के गुणों के प्रति पक्षपात दूसरों के गुणों को सहन नहीं करता ।

चेटी ( चेट के प्रति )—भद्र ! क्या आप उसका नाम जानते हैं ?

चेट—मैं नहीं जानता ।

गणिका—आपने ठीक नहीं किया ।

चेटी—जइ एवं, इह तुए को त्ति[1] मन्तिदं। [ यद्येवम् , इह त्वया क इति मन्त्रितम् । ]

चेटः—अहं एत्तअं तु जाणामि—भद्दओ अविम्हओ त्ति । [ अहमेतावत् तु जानामि—भद्रकोऽविस्मय इति । ]

गणिका—एहि दाव तं पेक्खामो । [ एहि तावत् तं पश्यावः । ]

चेटः—पेक्खदु पेक्खदु अज्जुआ । एसो गच्छइ । [ पश्यतु पश्यत्वज्जुका । एष गच्छति । ]

गणिका—( प्रासादाद् विलोक्य ) हञ्जे ! एसो हि सो अय्यचारुदत्तो एव्व जण्णोववीदमत्तपावरओ गच्छइ । ता जाव दूरं गओ ण भविस्सदि एसो, पेक्खम्ह दाव णं। [ हञ्जे ! एष हि स आर्यचारुदत्त एव यज्ञोपवीतमात्रप्रावारको गच्छति। तद् यावद् दूरं गतो न भविष्यत्येष, पश्यामस्तावदेनम् । ] ( निष्क्रान्ताः सर्वे । )

द्वितीयोऽङ्कः ।

इह = नाम विषये इत्यर्थः, कः इति = कः साधुजनः कः भवेत् इति त्वया मन्त्रितम् = युक्त्या निश्चितम् ।

भद्रकः = आकृत्या प्रकृत्या व्यवहारेण च भद्र एव, तथा अविस्मयः=गर्वहीनः ।

प्रासादात् = प्रासादमारुह्य इति भावः । यज्ञोपवीतमात्रप्रावारकः—यज्ञस्य उपवीतम् तदेव परिमाणं इति यज्ञोपवीतमात्रम् तदेव प्रावारकः = उत्तरीयः ( दुपट्टा ) यस्य सः ।

ततः सर्वे = अभिनेतारो जनाः निष्क्रान्ताः = रङ्गमंचात् अपगता इत्यर्थः ।

द्वितीयोऽङ्कः समाप्तः ।

चेटी—यदि ऐसा है, तो आपने इस नाम के विषय में किसको अनुमान किया है।

चेट—मैं इतना तो अवश्य जानता हूँ कि वह स्वभावतः निरभिमानी एवं भद्रपुरुष हैं।

गणिका—तब आओ हम लोग उसे देखेंगे।

चेट—आप देखें। यह जा रहा है।

गणिका—( प्रासाद से देखकर )—अयि ! ये वे ही आर्य चारुदत्त जा रहे हैं जिसका यज्ञोपवीत ही उत्तरीय वस्त्र का काम कर रहा है। अतः जब तक वे दूर न चले जायं तब तक हम लोग उन्हें देखते रहें। ( सबका प्रस्थान हो जाता है। )

॥ द्वितीय अङ्क समाप्त ॥

१. किं ति ।

# अथ तृतीयोऽङ्कः

( ततः प्रविशति नायको विदूषकश्च । )

नायकः—वयस्य ! वीणा नामासमुद्रोत्थितं रत्नम् । कुतः—

उत्कण्ठितस्य हृदयानुगता सखीव
सङ्कीर्णदोषरहिता विषयेषु गोष्ठी ।
क्रीडारसेषु मदनव्यसनेषु कान्ता
स्त्रीणां तु कान्तरतिविघ्नकरी सपत्नी ॥ १ ॥

---

असमुद्रोत्थितम्—समुद्रात् उत्थितम् इति समुद्रोत्थितम् , न तथा इति असमुद्रोत्थितम् । अर्थात् 'वीणा नाम' रत्नमिव उत्तमवस्तु, समुद्रस्तु रत्नाकरः अस्त्येव, परन्तु तत्प्राप्तरत्नात् अन्यत् रत्नं भुवने अस्ति चेत् , तत्तु वीणा एव इति तात्पर्यम् । कुतः = कस्मात् हेतोः एवं वच्मि इति चेत् ? तर्हि वीणायाः गुणान् शृणु ।

**उत्कण्ठितस्येति**—'वीणा' उत्कण्ठितस्य = इष्टप्राप्त्यै व्याकुलीभूतस्य, एवं कृतनिश्चयस्य ( जनस्य ) हृदयानुगता—हृदस्य हृदयं वा अनुगता इति हृदयानुगता = मनोनुकूला सखीव विनोदकरी भवतीति भावः, विषयेषु = भोग्यवस्तुषु संकीर्णदोषेण रहिता गोष्ठी = संगीतपरिषद् इव अस्ति, मदनव्यसनेषु—मदनस्य व्यसनानि तेषु, अर्थात कामव्यापारेषु इत्यर्थः, क्रीडारसेषु = कामलक्षणासु क्रीडासु कान्ता इव = स्वकीयवनिता इव, रागवर्द्धिनी अस्ति, तथैव स्त्रीणाम् कान्तरति-

---

( इसके बाद नायक और विदूषक का प्रवेश )

नायक—वयस्य ! वीणा एक ऐसा रत्न है जो समुद्र से उत्पन्न नहीं हुआ है ( समुद्र से चौदह रत्न उत्पन्न माने जाते हैं ) ।

क्योंकि—( वीणा ) उत्कण्ठित जन के लिये मनोनुकूल सखी की भांति, भोग्य विषय में सङ्कीर्ण दोषरहित, ( वीणा पक्ष में कनसुरा दोष से रहित ) गोष्ठी पक्ष में विषयान्तर=अस्पष्टता दोषरहित ) गोष्ठी की तरह, काम की रसीली क्रीड़ाओं में कान्ता की भांति, और पति के प्रति स्त्रियों के प्रेम में विघ्न डालने वाली सपत्नी के समान है ( वीणा के प्रति पुरुषों का विशेष आकर्षण पत्नियों को दुःसह होता है इसलिये वीणा से उनकी सपत्नी जैसी ईर्ष्या होती है ) ॥ १ ॥

विदूषकः—भो वयस्स ! को कालो किदपरिघोसणदाए णिस्सम्पादा राअमग्गा । कुक्कुरा वि ओसुत्ता । वअं णिद्दं ण लभामो । अण्णं च दाणि अच्छरीअं । इमं हदवीणं ण रमामि । अहिअदिढत्थाणे विच्छिण्णतन्तिआ होदु । [भो वयस्य ! कः कालः कृतपरिघोषणतया निःसम्पाता राजमार्गाः । कुक्कुरा अप्यवसुप्ताः । वयं निद्रां न लभामहे । अन्यच्चेदानीमाश्चर्यम् । इमां हतवीणां न रमे । अधिकदृढस्थाने विच्छिन्नतन्त्रीका भवतु ।]

नायकः—वयस्य ! भावशावलेन बहुशः खल्वद्य मधुरं गीतम् । न च भवान् रमते ।

विदूषकः—अदो एव्व एदं अहं ण रमामि । महुरं पि बहु खादिअं

---

विघ्नकरी = स्वामिप्रणयबाधिका सपत्नी इव भवति ( यतः सा पुरुषाणाम् परमाकर्षिणी इत्यर्थः ) ॥ १ ॥

कः कालः = कं कालं व्याप्येति भावः । कृतपरिघोषणतया—कृता परिघोषणा येषु, तेषां भावः तया । निःसम्पाताः—निर्गतः सम्पातः = गमनागमनम् यस्मात् ते । अर्थात् गमनागमनशून्याः राजमार्गाः = राजपथाः इत्यर्थः । अधिक दृढस्थाने = निरापदस्थाने इति भावः । विच्छिन्नतन्त्रीका = विच्छिन्ना श्लथीकृता तन्त्री यस्याः सा, अर्थात् श्लथतन्त्रीयुक्ता भवतु = तिष्ठतु इति आशयः ।

भावशावलेन—भावानां शावलेन = वैचित्र्येण । बहुशः = बहुवारमित्यर्थः ।

---

विदूषक—हे मित्र ! बहुत देर हुई, नगरपाल की घोषणा के हेतु इस समय राजमार्ग जन-समागम से शून्य है । कुक्कुर भी सो गये हैं, किन्तु हम लोग आनन्द ( अब भी ) नहीं ले रहे हैं । दूसरा आश्चर्य यह है कि मैं इस वीणा में भी आनन्द नहीं ले रहा हूँ । अतएव इसे किसी निरापदस्थान में श्लथतन्त्रीयुक्त बनाकर रख दिया जाय ( भावार्थ यह है कि किसी पक्की जगह पर पटक्कर इसकी तान तोड़ दी जाय ) ।

नायक—मित्र ! वीणा ने अनेक भावों के कारण आज कई बार मधुर गान किया । किन्तु आप क्यों नहीं आनन्दित हो रहे हैं ?

विदूषक—इसीलिये तो मैं इससे आनन्दित नहीं हूँ । ( क्योंकि ) मधुर

अजिण्णं होइ । [ अत एवैतामहं न रमे । मधुरमपि वहु खादितमजीर्णं भवति । ]

नायकः—सर्वथा सुव्यक्तं गीतम् । कुतः,

रक्तं च तारमधुरं च समं स्फुटं च
भावार्पितं च न च साभिनयप्रयोगम् ।
किं वा प्रशस्य विविधैर्बहु तत्तदुक्त्वा
भित्त्यन्तरं यदि भवेद् युवतीति विद्याम् ॥ २ ॥

विदूषकः—कामं पसंसेदु भवं । मम खु दाव गाअन्तो मणुस्सो इत्थिआ वि पठन्ती उभअं आदरं ण देदि । गाअन्तो दाव मणुस्सो

---

**रक्तेति**—( तथा = वीणया ) रक्तम् = अनुरागपूर्णम् च तारमधुरम्—तारम् = उच्चैश्च च मधुरम् = श्रुतिसुखम् , च इति तारमधुरम् , अर्थात् उच्चं तथा शोभनम् इत्यर्थः, च समम् = वैषम्याभावम् , स्वरतालसामञ्जस्यसंवलितम् वा स्फुटं च = प्रसन्नं सुव्यक्तं च, भावार्पितम्—भावेन = अनुरूपभावेन अर्पितम् = युक्तम् इत्यर्थः, अथवा अर्पितः = प्रदत्तः, भावः = अनुरूपश्रृङ्गारादिभावः यत्र, अथ च न साभिनयप्रयोगम् = अभिनयसंयुक्तभावमित्यर्थः, गीतम् ; वा तत्तत् बहुविधैः = नानाप्रकारैः उक्त्वा किं भवेत् , यदि सा भित्त्यन्तरं = कुड्यान्तरितं यथा स्यात् तथा भवेत् तर्हि अहम् ताम् युवती इति विद्याम् = जानीयाम् । ( यतः सामान्यतः पुरुषगीते स्वरकार्कश्यं जायते, रमणीगीते तु समधिकमधुरता भवतीति भावः । ) ॥ २ ॥

---

पदार्थ भी अधिक खा लेने पर अजीर्ण कर देता है । ( तात्पर्य यह कि अनेकों वार का गाया हुआ अत्यन्त मधुर गीत भी उद्वेग को बढ़ा देता है । )

नायक—वीणा ने सब प्रकार से सुस्पष्ट गान किया है । क्योंकि—

रागयुक्त, उच्च एवं मधुर, वैषम्यरहित, परिस्फुट, भावपूर्ण, तथा अभिनय प्रयोग से युक्त ( गान किया है ) । उपर्युक्त स्वरों को नाना प्रकार से कह-कहकर कहाँ तक प्रशंसा की जाय । ऐसा मालूम पड़ता है कि मानों दीवार की आड़ से कोई युवति ही गा रही हो ॥ २ ॥

विदूषक—आप भले ही प्रशंसा करें । किन्तु गाते हुए पुरुष या पढ़ती हुई स्त्री दोनों ही मेरे अनुराग को नहीं बढ़ा सकते । लालमाला को धारण किए हुए

रत्तसुमणावेट्ठिदो विअ पुरोहिदो दिढं ण सोहइ। इत्थिआ वि पठन्ती छिण्णणासिआ विअ घेणुआ अदिविरूवा होइ। [ कामं प्रशंसतु भवान्। मम खलु तावद् गायन् मनुष्यः स्त्र्यपि पठन्त्युभयमादरं न ददाति। गायंस्ताव-न्मनुष्यो रक्तसुमनोवेष्टित इव पुरोहितो दृढं न शोभते। स्त्र्यपि पठन्ती छिन्ना-सिकेव धेनुरतिविरूपा भवति। ]

नायकः—सखे! उपारूढोऽर्धरात्रः। स्थिरतिमिरा राजमार्गाः। निस्सम्पातपुरुषत्वात् प्रसुप्तेवोज्जयिनी प्रतिभाति। कुतः,

असौ हि दत्त्वा तिमिरावकाशमस्तं गतो ह्यष्टमपक्षचन्द्रः।
तोयावगाढस्य वनद्विपस्य विषाणकोटीव निमज्जमाना॥ २॥

---

आदरम् = प्रीतिम्। रक्तसुमनोवेष्टितः—रक्ताश्च ते सुमनसश्च ताभिः वेष्टितः, रक्तपुष्पभूषित इत्यर्थः। छिन्ननासिका—छिन्ना नासिका यस्याः सा तथा।

अर्धरात्रः—रात्रेः अर्धम् इति अर्धरात्रः। उपारूढः = संजातः, उपस्थितो वा। स्थिरतिमिराः—स्थिरम् = घनं तिमिरम् = अन्धकारम् यत्र एवंभूताः राज-मार्गाः सन्ति। निःसम्पातपुरुषत्वात्—निरस्तः सम्पातः गमनागमनं यस्मात्, एवंभूतः पुरुषः यत्र, तेषां भावः तस्मात्, अर्थात् सर्वत्र पुरुषसंचारा-भावात् इत्यर्थः।

असाविति—तोयावगाढस्य—तोये जले, अवगाढः = स्थितः तस्य, जल-मग्नस्येत्यर्थः, वनद्विपस्य = वनगजस्य, निमज्जमाना = मज्जनप्राया विषाणकोटीव= दन्ताग्रभागः इव, 'विषाणः स्यात्पशुश्रृङ्गेभदन्तयोः' इत्यमरः। असौ हि अष्टम-

---

पुरोहित की भांति गाता हुआ मनुष्य शोभा का पात्र नहीं होता और पाठ करती स्त्री भी कटी नासिका वाली गाय की तरह रूपहीन दिखाई पड़ती है।

नायक—मित्र आधी रात हो गई। राजमार्ग में घोर अन्धकार का साम्राज्य है। पुरुषों के गमनागमन के अभाव के हेतु मानों उज्जयिनी सोई हुई की तरह प्रतिभासित हो रही है।

क्योंकि—

वह अष्टमी का चन्द्रमा अन्धकार को अवकाश देकर अस्त हो रहा है। लगता है जैसे जल के भीतर डुबकी खाये हुए बनैले हाथी के दांतों की कोटियाँ भी डूब गई हों ( अष्टमी के चन्द्रमा की भी दो कोटियाँ होती हैं )॥ २॥

विदूषकः—सुट्ठु भवं भणादि। अन्तद्धिअमाणचन्दलद्धावआसो ओदरदी विअ पासादादो अन्धआरो। [ सुष्ठु भवान् भणति। अन्तर्धानचन्द्रलब्धावकाशोऽवतरतीव प्रासादादन्धकारः। ]

नायकः—( परिक्रम्य ) इदमस्मदीयं गृहम्। वर्धमानक! वर्धमानक!

विदूषकः—वड्ढमाणअ! वड्ढमाणअ! दुवारं अवावुद। [ वर्धमानक! वर्धमानक; द्वारमपावृणु। ]

( प्रविश्य )

चेटः—अम्मो अय्यमेत्तेओ। [ अम्मो आर्यमैत्रेयः। ]

नायकः—वर्धमानक!

चेटः—अम्मो भट्टिदारओ। भट्टिदारअ! वन्दामि। [ अम्मो भर्तृदारकः। भर्तृदारक! वन्दे। ]

नायकः—पादोदकमानय।

---

पक्षचन्द्रः = शुक्लपक्षाष्टम्याः क्षीणचन्द्रः तिमिरावकाशं = अन्धकारप्रसारस्थानम्, दत्त्वा अस्तं = तिरोहितं गतः ॥ २ ॥

अन्तर्धानचन्द्रलब्धावकाशः—अन्तर्धानश्चासौ चन्द्रश्च ( अस्तंगतचन्द्रः इत्यर्थः ) तस्मात् लब्धः = प्राप्तः, अवकाशः येन स तथा।

पादोदकम् = चरणोदकम्।

---

विदूषक—आपने ठीक कहा। अन्धकार मानों इस प्रासाद से उतर रहा हो, क्योंकि चन्द्रमा के अस्त होने से उसे अवसर उपलब्ध हो गया है।

नायक—(घूम करके) यह हम लोगों का घर है। हे वर्द्धमानक! हे वर्द्धमानक!

विदूषक—हे वर्द्धमानक, हे वर्द्धमानक! दरवाजा खोलो।

( प्रवेश कर )

चेट—आर्य मैत्रेय यहाँ हैं।

नायक—वर्द्धमानक!

चेट—भर्तृदारक भी यहाँ हैं। भर्तृदारक, मैं आपकी वन्दना करता हूँ।

नायक—पैर धोने के लिए जल लाओ।

चेटः—( परिक्रम्य ) इदं पादोदअं। ( नायकस्य पादौ प्रक्षालयति । ) [ इदं पादोदकम् । ]

विदूषकः—वड्ढमाणअ ! मम वि पादं पक्खालेहि । [ वर्धमानक ! ममापि पादं प्रक्षालय । ]

चेटः—सुहोदेसु पादेसु भूमीए पलोट्ठिदव्वं । उदअं विणासेहि । अहव आणेहि । पक्खालइस्सं । ( नाट्येन विदूषकस्य पादौ प्रक्षालयति । ) [ सुधौतयोः पादयोर्भूम्यां प्रलोठितव्यम् । उदकं विनाशय । अथवानय । प्रक्षालयिष्यामि । ]

विदूषकः—ण केवलं दासीएपुत्तेण पादा धोदा; मुहं वि धोदं । [ न केवलं दास्याः पुत्रेण पादौ धौतौ, मुखमपि धौतम् । ]

नायकः—वयस्य !

इयं हि निद्रा नयनावलम्बिनी ललाटदेशादुपसर्पतीव माम् ।
अदृश्यमाना चपला जरेव या मनुष्यवीर्यं परिभूय वर्धते ॥ ४ ॥

---

सुधौतयोः—सुष्ठु धौतौ सुधौतौ तयोः पादयोः = चरणयोः सुधौतयोः (सतोः) भूम्यां प्रलोठितव्यम् । उदकम् = जलम् ।

**इयमिति**—हि = यतः नयनावलम्बिनी—नयने अवलम्बते या सा इयं निद्रा ललाटदेशात्=मस्तकस्थानात् , माम् उपसर्पति इव=हठात् आगत्य परिभवति इव, अदृश्यमाना चपला = क्षणस्थायित्वेन चञ्चला, दुर्विनीता, अजेया इत्यर्थः,

---

चेट—( घूम करके ) यह चरणोदक है । ( नायक के चरणों को धोता है । )

विदूषक—वर्द्धमानक ! मेरा भी पैर प्रक्षालन करो ।

चेट—( चारुदत्त का सेवक ) अच्छी तरह धुले हुए पैरों को तो भूमिपर ही लोटना होगा । पानी खराब करो अथवा लाओ । पैरों को धो दूँ । ( नाटकीय ढङ्ग से विदूषक के पैरों को धोता है । )

विदूषक—दासीपुत्र ने केवल पैर ही नहीं धोए, अपितु मुख भी धो दिया ।

नायक—मित्र ! यह निद्रा आँखों में लटकती हुई ललाट प्रदेश से उतरकर उसी प्रकार सता रही है जैसे अदृश्य और चञ्चल वृद्धावस्था मनुष्य की शक्ति को परास्त करके बढ जाती है ॥ ४ ॥

मैत्रेय ! सुप्यताम्।

( निष्क्रान्तश्चेटः। )

( प्रविश्याभरणसमुद्गहस्ता )

चेटी—अय्यमेत्तेअ ! उट्ठेहि उट्ठेहि। [ आर्यमैत्रेय ! उत्तिष्ठोत्तिष्ठ। ]

विदूषकः—भोदि ! किं एदं। [ भवति ! किमेतत्। ]

चेटी—इअं सुवण्णभण्डं सट्ठीए सत्तमीए परिवट्टामि। अट्ठमी खु अज्ज। [ इदं सुवर्णभाण्डं षष्ठ्यां सप्तम्यां परिवर्तयामि। अष्टमी खल्वद्य। ]

नायकः—इदं तद् वसन्तसेनायाः स्वकम्।

चेटी—आम। भणादु भणादु भट्टिदारओ, गण्हदु त्ति। [ आम। भणतु भणतु भर्तृदारकः गृह्णात्विति। ]

नायकः—मैत्रेय ! गृह्यताम्।

विदूषकः—किं णिमित्तं अअं अलङ्कारो अब्भन्तरचउस्सालं ण प्पवेसीअदि। [ किंनिमित्तमयमलङ्कारोऽभ्यन्तरचतुःशालं न प्रवेश्यते। ]

---

जरा इव = वृद्धावस्था इव, या मनुष्यवीर्यम् = मनुष्यबलम्, प्रभावम् वा परिभूय = अभिभूय वर्द्धते एव = वृद्धिं प्राप्नोत्येव ॥ ४ ॥

आभरणसमुद्गहस्ता—आभरणस्य = अलङ्कारस्य समुद्गकम्, 'पेटी' इति लोके प्रसिद्धम् तत् हस्ते यस्याः सा तथा।

अभ्यन्तरचतुःशालम्—चतसृणाम् शालानाम् समाहारः इति चतुःशालम्,

---

( अतः ) हे मैत्रेय ! सो जाओ। ( चेट बाहर चला जाता है। )

( अलंकार की पेटी को हाथ में लिये हुए प्रवेश कर )

चेटी—आर्य मैत्रेय ! उठो, उठो।

विदूषक—माननीये ! यह क्या है ?

चेटी—यह सुवर्ण-भाण्ड है, षष्ठी तथा सप्तमी तिथि व्यतीत होने पर मैं इसे परिवर्तन कर देना चाहूँगी क्योंकि आज अष्टमी है।

नायक—क्या यह वसन्तसेना की सम्पत्ति है ?

चेटी—हां, भर्तृदारक ( विदूषक से ) कहें कि 'इसे ले लें'।

नायक—मैत्रेय ! इसे ले लो।

विदूषक—क्या कारण है कि यह अलङ्कार अन्तःपुर की चतुःशाला में नहीं रक्खा गया ?

नायकः—मूर्ख ! बाह्यजनधारितमलङ्कारं गृहजनो न द्रक्ष्यति ।

विदूषकः—का गई । आणेहि गण्हामि चोरेहिं गण्हिअमाणं । [ का गतिः । आनय गृह्णामि चोरैर्गृह्यमाणम् । ]

( चेटी दत्त्वा निष्क्रान्ता । )

विदूषकः—भो ! किंणिमित्तं सो पावरओ तस्स गणिआपरिआरअस्स दिण्णो । [ भोः ! किन्निमित्तं स प्रावारकस्तस्मै गणिकापरिचारकाय दत्तः । ]

नायकः—सानुक्रोशतया ।

विदूषकः—इह वि साणुक्कोसदा । [ इहापि सानुक्रोशता । ]

नायकः—वयस्य ! मा मैवम् ।

---

अभ्यन्तरे अभ्यन्तरस्य वा चतुःशालम् इति तथा ।

'बाह्यजन' इति पदेन 'गणिका' ( वसन्तसेना ) ध्वन्यते । 'गृहजन' इति पदेन चारुदत्तस्य पत्नी 'ब्राह्मणी' आक्षिप्यते । अत एव आह—बाह्यजनेन धारितम् एवंभूतम् अलङ्कारं गृहजनः = मम भार्या यथा न द्रक्ष्यति, ( अत एव आभ्यन्तरचतुःशालम् न प्रवेश्यते इति भावः ) ।

सानुक्रोशतया—अनुक्रोशेन = अनुकम्पया सह वर्तमानः इति सानुक्रोशः, तस्य भावः तया, दयाभावेन इत्यर्थः ।

---

नायक—मूर्ख ! बाह्यजन ( वेश्या ) के द्वारा धारण किए जानेवाले अलङ्कार को मेरी पत्नी नहीं देख सकेगी ।

विदूषक—दूसरा रास्ता ही क्या है ( अर्थात् दूसरा उपाय क्या है ? ) । लाओ, चोरों के द्वारा ग्रहण करने योग्य इस अलंकार को ग्रहण करता हूँ । ( चेटी आभूषण देकर चली जाती है । )

विदूषक—भो ! वह उत्तरीय गणिका के भृत्य ( कर्णपूरक ) को क्यों दिया गया ?

नायक—दया भाव से ।

विदूषक—क्या इसमें भी दया भाव है ?

नायक—मित्र ! ऐसा न कहो ।

विदूषकः—अहं भरिदगद्दभो विअ भूमीए पलोट्ठामि। [अहं भरितगर्दभ इव भूम्यां प्रलुठामि।]

नायकः—निद्रा मां बाधते। तूष्णीं भव।

विदूषकः—सअदु भवं सुहप्पवोहाअ। जाव अहं पि सुविस्सं। [शेतां भवान् सुखप्रबोधाय। यावदहमपि स्वप्स्यामि

( द्वावपि स्वपितः। )

( ततः प्रविशति सज्जलकः। )

सज्जलकः—एष भोः!

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च बलेन च कर्ममार्गम्।

---

भरितगर्दभ इव—भरः सञ्जातः अस्य इति भरितः, भरितश्चासौ गर्दभश्च इति भरितगर्दभः तद्वत् भूम्याम् प्रलुठामि।

सुखप्रबोधाय = सुखपूर्वकं यथा स्यात् तथा जागरणाय इत्यर्थः।

'भो!' इति विस्मयसूचकमव्ययम्।

कृत्वेति—( एषोऽहम् ) शिक्षाबलेन—शिक्षायाः, बलेन = सामर्थ्येन, चातुर्येण वा बलेन = शरीरबलेन च शरीरपरिणाहसुखप्रवेशम्—शरीरस्य = देहस्य, परिणाहः = विशालता 'परिणाहो विशालता' इत्यमरः, इति शरीरपरिणाहः तस्य सुखप्रवेशः सुखेन प्रवेशः यस्मात् तम् ( अनायासेन निर्गमप्रवेशयोग्यम् इत्यर्थः ) एतादृशम् कर्ममार्गम्—कर्मणः = चौर्यकर्मणः मार्गम् = सन्धिच्छेदम्, सुरंगम् वा

---

विदूषक—मैं बोझा लिए हुए गधे की भांति भूमि पर लोट रहा हूँ।

नायक—नींद मुझे सता रही है। चुप रहो।

विदूषक—आप सुखपूर्वक जागने के लिए सो जायं। तब तक मैं भी सो जाता हूँ ( दोनों सो जाते हैं। )

( तब सज्जलक का प्रवेश )

सज्जलक—भो!

शिक्षाबल से तथा शारीरिक बल के द्वारा विशाल शरीर के प्रवेश योग्य सुरङ्ग बनाकर भूमि पर परिसर्पण करने से कठोर पार्श्वभागवाला मैं केंचुल से

गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥ ५ ॥

भोः ! वृक्षवाटिकापक्षद्वारे सन्धिं छित्त्वा प्रविष्टोऽस्मि । यावदिदानीं चतुःशालमुपसर्पामि । ( सनिर्वेदं विचिन्त्य ) भोः

कामं नीचमिदं वदन्तु विबुधाः सुप्तेषु यद्वर्तते
विश्वस्तेषु हि वञ्चनापरिभवः शौर्यं न कार्कश्यता ।

---

कृत्वा = विधाय भूमिपरिसर्पणघृष्टपार्श्वः—भूमौ = सुरङ्गभूमौ परिसर्पणम्=शयितः सन् अग्रे गमनम् इत्यर्थः, तेन घृष्टौ = आघर्षणौ पार्श्वौ यस्य सः । निर्मुच्यमानः = कञ्चुकेन कञ्चुकात् वा हीयमानः सन् अतएव जीर्णतनुः = जीर्णा = जराजर्जरा तनुः शरीरम् यस्य स भुजङ्ग इव = सर्प इव गच्छामि = धीरं यथा स्यात् तथा प्रविशामि इत्यर्थः ॥ ५ ॥

सन्धिं छित्त्वा = छेदनकर्मणा सुरङ्गादिमार्गं सम्पाद्य अहम् प्रविष्टोऽस्मि इति भावः । सनिर्वेदम्—निर्वेदेन = दुःखेन सह वर्तमानं यथा स्यात् तथा विचिन्त्य = चिन्तयित्वा ( सज्जलक आह )

काममिति—यत् = चौर्यादिकर्म सुप्तेषु = निद्रावस्थां गतेषु जनेषु वर्तते = क्रियते इत्यर्थः, इदम् = कर्म विबुधाः = पण्डिताः कामम् = यद्यपि, यथेष्टं वा नीचम् = निकृष्टम् , पातकं वा वदन्ति = कथयन्ति । हि = यतः विश्वस्तेषु = स्निग्धेषु, विश्रम्भयुक्तेषु वा वञ्चनापरिभवः—वंचनया = कपटरीत्या, परिभवः = अनादरः घर्षणं वा शौर्यम् = वीरस्य कर्म न = नास्ति । अपितु कार्कश्यं = क्रूर-

---

मुक्त जीर्ण शरीरवाले ( वृद्ध ) सर्प की भांति ( धीरे-धीरे ) प्रवेश करता हूँ ( आगे ) जाता हूँ ॥ ५ ॥

भो ! मैंने वृक्षवाटिका वाले द्वार में सुरङ्ग बनाकर प्रवेश किया है । तब तक इस समय चतुःशाला में प्रवेश करता हूँ । ( दुःखपूर्वक सोचकर ) भो !—

लोगों के सो जाने पर जो ( चौरादि कर्म ) किया जाता है, उसे पण्डित लोग निकृष्ट ( कर्म ) कहते हैं । क्योंकि विश्वस्तजन का छल द्वारा जो अपमान किया जाता है वह वीर-कार्य नहीं, अपितु क्रूरकर्म ही कहा जाता है । तथापि निन्दनीय

स्वाधीना वचनीयतापि तु वरं बद्धो न सेवाञ्जलि-
र्मार्गश्चैष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना ॥ ६ ॥

( विचिन्त्य )

लुब्धोऽर्थवान् साधुजनावमानी वणिक् स्ववृत्तावतिकर्कशश्च ।
यस्तस्य गेहं यदि नाम लप्स्ये भवामि दुःखोपहतो न चित्ते ॥७॥

कर्म एव भवति । ( तथापि ) वचनीयतापि = निन्दा अपि स्वाधीना = स्वातन्त्र्य-गुणयोगिनी वरम् = मनाक् प्रिया भवति तु = किन्तु बद्धः सेवाञ्जलिः = दास्य-भावेन सेवार्थं हस्ताञ्जलिः प्रणामाद्याचारस्तु न वरं स्यात् = मनागपि न इष्यते । अर्थात् परभाग्योपजीवनापेक्षया चौर्यादिनीचकर्मजीवनं स्वातन्त्र्येण प्रशस्तम् इति आशयः । पूर्वम् = द्वापरयुग एव, महाभारतकाले वा एषः मार्गः = वधादिनिर्दयकर्ममार्गः नरेन्द्रसौप्तिकवधे सुप्ते भवः इति सौप्तिकः, नरेन्द्राणां सौप्तिकः अथवा नरेन्द्राश्च ते सौप्तिकाश्च, तेषाम् वधः तस्मिन् , अर्थात् विश्वस्तनिद्राकाले धृष्टद्युम्नादिनृपाणाम् वधे इत्यर्थः, द्रौणिना द्रोणपुत्रेण अश्व-त्थाम्ना कृतः = अनुसृतः, आचरितः । ( अतएव अहमपि चौर्यकर्म करिष्ये, द्रौणिप्रभृतिभिः आचरितत्वात् ) ॥ ६ ॥

लुब्ध इति । यः लुब्धः = परद्रव्यलोभी, अर्थवान् = धनवान् अथ च साधु-जनावमानी, यश्च वणिक् = व्यवसायी स्ववृत्तावतिकर्कशश्च—स्ववृत्तौ = क्रयविक्रय-व्यापारे अतिकर्कशश्च = असाधुत्वात् कठोरश्च तस्य = एतयोः द्वयोः एकतरस्य इत्यर्थः, गेहम् = गृहम् यदि नाम लप्स्ये = यदि वा प्रविशामि, तदा चित्ते = मनसि दुःखोपहतो न भवामि ॥ ७ ॥

तथा स्वाधीन चौर्यादि वृत्ति, सेवा के निमित्त हाथ जोड़ने की अपेक्षा कुछ अच्छी ही है । अतीतकाल ( महाभारतकाल ) में द्रोणपुत्र अश्वत्थामा ने विश्वस्त एवं निद्रामग्न द्रौपदी के पाचों पुत्रों के वध करने में इसी क्रूरकर्म का अनुसरण किया था ॥ ६ ॥

( चौर्यादि विषय में विशेष चिन्ता करके )

यदि मैं लोभी, धनी अथवा शिष्टजन के द्वेषी ( व्यक्ति ) या निज व्यवसाय में कठोर ( असाधु ) वणिक् के घर में प्रवेश करता हूँ तो अपने मन में कभी भी दुःखी नहीं होऊँगा ॥ ७ ॥

यद्वा तद्वा भवतु । किं वा न कारयति मन्मथः । यावदारभे कर्म । भोः !

देशः को नु जलावसेकशिथिलश्छेदादशब्दो भवेद्
भित्तीनां क्व नु दर्शितान्तरसुखः सन्धिः करालो भवेत् ।
क्षारक्षीणतया चलेष्टककृशं हर्म्यं क्व जीर्णं भवेत्
कुत्र स्त्रीजनदर्शनं च न भवेत् स्वन्तश्च यत्नो भवेत् ॥८॥

(परिक्रम्य) इयं वास्तुविभागक्रिया । सोपस्नेहतया गृहविशिष्ट-

---

देश इति—भित्तीनाम् = प्राकाराणाम् क्व नु देशः = स्थानम् जलावसेकशिथिलः—जलानाम् = वृष्टयादिजलानाम् अवसेकः = पतनम् तेन शिथिलः = कोमलः सन् छेदात् सुरङ्गादिनिर्माणसमये अशब्दः = खटखटाशब्दरहितः भवेत्, क्व नु सन्धिः = रन्ध्रम् ( सेंध इति लोकभाषायाम् ) दर्शितान्तरसुखः—दर्शितम् अन्तरम् अभ्यन्तरं येन, तादृशश्च सुखकरश्च सन् करालः = अभूतपूर्वदर्शनीयत्वेन विशालः, भयङ्करो वा भवेत् । क्षारक्षीणतया—क्षारेण = क्षारमृदा, लवणेन वा क्षीणतया = क्षीणताहेतोः, शिथिलतया वा चलेष्टककृशम्—चलम् इष्टकम्, तेन कृशम् = ह्रासप्राप्तम् अर्थात् कृशं च क्षीणं च एवंभूतं हर्म्यम् = भवनम् क्व = कुत्र जीर्णम् भवेत् = भग्नप्रायम् अतएव सुखपूर्वकं छेदनयोग्यं च भवेत्, कुत्र अनभिप्रेतम् स्त्रीजनदर्शनम्—स्त्रीजनानाम् दर्शनम् = साक्षात्कारः च न भवेत् तथा मम यत्नः = चौर्यरूपोपायः, स्वन्तः = फलप्रदः भवेत् ॥ ८ ॥

वास्तुविभागक्रिया—'वास्तु' इति पदेन वास्तुगृहं परामृश्यते अतः वास्तुनः=

---

जो कुछ भी हो । कामदेव मनुष्य से क्या नहीं करा लेता ? तब तक मैं अपना कार्य आरम्भ करता हूँ ।

सज्जलक—यहाँ दीवार का कौन स्थान वर्षा आदि जल से नरम हो गया है जिससे छेदन के समय शब्द न हो सके, अथवा कहाँ पर छेद ( सुरङ्ग ) विशाल होगा जिसके द्वारा भीतर की सारी चीजें सरलता से दिखाई पड़ें; भवन की किस स्थान पर भित्ति जीर्ण एवं क्षार ( लोना ) लगने के कारण नष्ट होकर शिथिल पड़ गई है, कहाँ पर स्त्रियाँ देख न सकेंगी । और ( इसी बीच में ) मेरा यत्न भी सफल हो जाय ॥ ८ ॥

( घूमकर ) यहाँ मकान की दर्ज है ( रद्दों के या ईंटों के बीच का अवकाश ) ।

इवायं भवनविन्यासः । इह तावत् प्रवेशावकाशं करिष्ये । भोः ! कीदृश इदानीं सन्धिच्छेदः कर्तव्यः स्यात् ।

**सिंहाक्रान्तं पूर्णचन्द्रं झषास्यं चन्द्रार्धं वा व्याघ्रवक्त्रं त्रिकोणम् ।**
**सन्धिच्छेदः पीठिका वा गजास्यमस्मत्पक्ष्या विस्मितास्ते कथं स्युः ॥९॥**

भवतु, सिंहाक्रान्तमेव च्छेदयिष्ये ।

विदूषकः—भो ! जागत्ति खु भवं, णहि । [ भोः ! जागर्ति खलु भवान् , न हि । ]

नायकः—किमर्थम् ।

विदूषकः—अहं खु दाव कत्तव्वकरत्थीकिदसङ्केदो विअ सक्किअस-

---

वास्तुगृहस्य विभागक्रिया इयमत्र दृश्यते इति भावः । सोपस्नेहतसा = स्निग्धतया इत्यर्थः । भवनविन्यासः = भवनस्य विन्यासः = सन्निवेशः गृहविशिष्ट इव विशिष्टं गृहं यत्र तादृशः अपि, सूचयति इति भावः ।

**सिंहेति**—सिंहाक्रान्तं, पूर्णचन्द्रं, झषास्यं, चन्द्रार्धं वा व्याघ्रवक्त्रं, त्रिकोणं, पीठिका, गजास्यम् , इति वा ( कतमः ) सन्धिच्छेदः स्यात् , कथं वा अस्मत्पक्ष्याः ते ( जनाः ) विस्मिताश्च स्युः ( अर्थात् सुरङ्गादिमार्गनिर्माणविधौ मम कर्मकौशलदर्शनात् आश्चर्यान्विता वा स्युः । ) ॥ ९ ॥

कर्तव्यकरस्त्रीकृतसंकेतः—कर्तव्यं करोतीति कर्तव्यकरः, तस्य स्त्री, तया कृतः,

---

नमी के कारण इस घर का बनाव कुछ विशेष प्रकार का है । यहीं पर प्रवेश के उपयुक्त सुरङ्ग बनाऊँगा । भो ! यहाँ कैसा सुरङ्ग बनाना उचित होगा ?

सिंह की उछाल के समान वक्रगति की या पूर्णचन्द्राकार जैसी, मकर के मुख की तरह की, अथवा अर्धचन्द्राकार सरीखी; व्याघ्र के मुख की भाँति अथवा तिकोनी, चौकोनी, ( पीठिका ) या गज के मुख की आकृति वाली सुरङ्ग हो जिससे चौरकार्य में दक्ष लोग भी ( मेरे सुरङ्ग-निर्माण की कला से ) आश्चर्यित हो जायँ ॥ ९ ॥

अच्छा, 'सिंहाक्रान्त' नामक सुरङ्ग का ही निर्माण करूँगा ।

विदूषक—भो ! क्या आप जाग रहे हैं या नहीं ?

नायक—किसलिये ?

विदूषक—मैं मजदूर की स्त्री के द्वारा संकेत-स्थल पर बुलाये गये बौद्ध संन्यासी

मणओ णिद्दं ण लभामि । वामं खु मे अक्खि फन्देदि । चोरो सन्धिं छिन्ददी विअ पेक्खामि । जइ ईदिसी अवत्था अत्थाणं, जादीए दरिद्दो एव्व होमि । [ अहं खलु तावत् कर्तव्यकरणीकृतसङ्केत इव शाक्यश्रमणको निद्रां न लभे । वामं खलु मेऽक्षि स्पन्दते । चोरः सन्धिं छिनत्तीव पश्यामि । यदीदृश्यवस्थाऽर्थानां, जात्या दरिद्र एव भवामि । ]

नायकः—मूर्ख ! धिक् त्वाम् ! दारिद्र्यमभिलपसि ।

सज्जलकः—अथ केनेदानीं सन्धिच्छेदमार्गः सूचयितव्यः स्यात् । नन्विदं दिवा ब्रह्मसूत्रं रात्रौ कर्मसूत्रं भविष्यति ।

अद्यास्य भित्तिपु मया निशि पाटितासु
छेदात् समासु सकृदर्पितकाकलीपु ।
काल्यं विषादविमुखः प्रतिवेशवर्गो
दोषांश्च मे वदतु कर्मसु कौशलं च ॥ १० ॥

---

तादृशः संकेतः=समयनिर्देशः यस्य यस्मै वा तथा । शाक्यश्रमणः = बौद्धश्रमणकः ।

सूचयितव्यः = परिमातव्यः स्यात् । ब्रह्मसूत्रम् = उपवीतम् ।

अद्येति—अद्य अस्य = गृहस्य भित्तिपु निशि = रात्रौ मया पाटितासु, छेदात् = छेदं प्राप्य अपि सकृदर्पितकाकलीपु—सकृत् अर्पिता काकली यत्र तासु अर्थात् सकृत् काकलीयन्त्रेण आहतासु अतश्च, समासु = रम्यासु सतीपु काल्यम् = कल्यमित्यर्थः । विषादविमुखः—विषादेन विमुखः = विवर्णमुखः, प्रतिवेशवर्गः = शत्रुवेश्यावर्गः मे = मम दोषान् वदतु कर्मसु कौशलं च वदतु ॥ १० ॥

---

की भांति निद्रा का आनन्द नहीं ले रहा हूँ और मेरी बांई आँख फड़क रही है । मुझे ऐसा लगता है कि चोर ( मेरे घर में ) सुरङ्ग बना रहा हो । यदि धन की यही हालत है, तब तो मैं जन्मना या स्वभावतः दरिद्र ही होना चाहूँगा ।

नायक—मूर्ख ! तुम्हें धिक्कार है । क्यों तुम दरिद्रता को पसन्द करते हो ?

सज्जलक—इस समय मैं किससे सुरङ्गमार्ग की माप करूंगा ! अथवा यह ब्रह्मसूत्र रात्रि में कर्मसूत्र होगा ( अर्थात् यज्ञोपवीत द्वारा माप करूँगा ) ।

आज रात्रि में इस घर के दिवाल में छेद कर दिया, काकलीयन्त्र ( खनती ) के एक ही वार के आघात से यह मनोरम सुरङ्ग वन गया । प्रातःकाल प्रसन्न होकर पड़ोसी लोग मेरे दोषों का तो वखान करेंगे ही साथ ही साथ मेरे कार्यकौशल की भी प्रशंसा करेंगे ॥ १० ॥

नमः खरपटाय। नमो रात्रिगोचरेभ्यो देवेभ्यः। (तथा करोति।) हन्त अवसितं कर्म। प्रविशामस्तावत्। (प्रविश्य) अये! ज्वलति दीपः। अपसरामि तावत्। धिक्, सज्जलकः खल्वहम्।

मार्जारः प्लवने वृकोऽपसरणे श्येनो गृहालोकने
निद्रा सुप्तमनुष्यवीर्यतुलने संसर्पणे पन्नगः।
माया वर्णशरीरभेदकरणे वाग् देशभाषान्तरे
दीपो रात्रिषु सङ्कटे च तिमिरं वायुः स्थले नौर्जले॥ ११॥

---

हन्त इति हर्षे। कर्म = छेदनकर्म अवसितम् = समाप्तम्। अतएव गृहे प्रविशाम इत्यर्थः।

**मार्जार इति**—(अहम्) प्लवने = उत्प्लुत्य पलायनविषये मार्जारः = विडालतुल्यः 'ओतुर्विडाल मार्जार' इत्यमरः, अपसरणे = द्रुतगमने वृकः, गृहावलोकने = गृहस्थवस्तुदर्शनविषये श्येनः (बाजपक्षी) तद्वत् खरदृष्टिः, सुप्तमनुष्यवीर्यतुलने—सुप्तमनुष्याणाम् वीर्यम् तस्य तुलने = परिमापने निद्रा यतः सा हि मनुष्यवीर्यम् कीदृक् इति जानाति इति भावः। देशभाषान्तरे = विभिन्नदेशभाषाविषये वाक् = वाग्देवी, सरस्वती भवामि, (तथा) अहं रात्रिषु = रजनीषु दीपः = आलोकः, अर्थात् दीपतुल्यः वस्तुदर्शनसमर्थः सङ्कटे = विपत्काले तिमिरम् = लौकिकपदार्थानां तिरोधानसामर्थ्यात् अन्धकार इव, स्थले = भूमौ वायुः = तत्तुल्यः सर्वत्रगः, दक्षः दक्षः जले च नौः=नौका इव भवामि॥११॥

---

खरपट को नमस्कार। रात्रि के देवता को नमस्कार। (वैसा वह करता है।) वाह! छेदन कर्म समाप्त हो गया। तब प्रवेश करता हूँ। (प्रवेश करके) अरे! दीपक जल रहा है। तब तक हट जाता हूं। मुझे धिक्कार है, मैं सचमुच में सज्जलक हूँ।

मैं कूदकर भागने में मार्जार, द्रुत गमन में वृक, गृह के वस्तुओं को अवलोकन करने में बाज, सुप्तमनुष्य के वीर्य (बल) को मापने में निद्रादेवी, चलने में सर्प के तुल्य, स्थूल शरीर के विश्लेषण करने में माया, देश-देशान्तर की विभिन्न भाषा के विषय में विद्यादेवी (सरस्वती), रात्रि में दीप, आपत्तिकाल में अन्धकार तुल्य (अदृश्य), स्थूल (पृथ्वी) पर वायु और जल में नौका की भांति हूँ॥११॥

( सर्वतो विलोक्य ) आगन्तुकत्वादविदितसमृद्धिविस्तरः केवलं भवनप्रत्ययादिह प्रविष्टोऽस्मि । न चेदानीं कञ्चित् परिच्छदविशेषं पश्यामि । किन्तु खलु दरिद्र एवायम् । उताहो अयं संयमननिरर्थकं द्रष्टव्यं धारयति । अथवा, अभिजातोऽयं भवनविन्यासः । उपभुक्तप्रनष्टविभवेनानेन भवितव्यम् ।

तथा विभवमन्दोऽपि जन्मभूमिव्यपेक्षया ।
गृहं विक्रयकालेऽपि नीलस्नेहेन रक्षति ॥ १२ ॥

---

आगन्तुकत्वात् = वैदेशिकत्वात् अविदितसमृद्धिविस्तरः—अविदितः = अज्ञातः समृद्धिविस्तरः = ऐश्वर्यप्रसरः येन । किन्तु भवनप्रत्ययात् = रमणीयभवनदर्शनात् अत्र ईप्सितम् , अस्ति इति हेतोः प्रविष्टोऽस्मि । संयमननिरर्थकम्—संयमनेन = भूमौ स्थापनादिना निरर्थकम् = निष्प्रयोजनम् अभिजातः = मनोरमः उपभुक्तप्रनष्टविभवः—पूर्वमुपभुक्तः पश्चात् प्रनष्टः इति उपभुक्तप्रनष्टः विभवः यस्य तादृशेन भवितव्यमित्यर्थः ।

तथेति—तथा = अनेन नष्टविभवप्रकारेण अयं गृहस्वामी विभवमन्दः अपि= क्षीणविभवोऽपि विक्रयकाले = दारिद्र्यात् गृहविक्रयकाले समुपस्थितेऽपि जन्मभूमिव्यपेक्षया—स्वकीयजन्मभूमौ व्यपेक्षया = अनुरागेण इत्यर्थः । गृहं नीलस्नेहेन = गाढस्नेहेन 'नीलीरागः स्थिरप्रेमा' इति यादवः, रक्षति ॥ १२ ॥

---

( चारों ओर देखकर ) आगन्तुक होने के नाते मुझे इस घर की सम्पत्ति के विषय में कुछ भी ज्ञान नहीं है । केवल सुन्दर भवन को देखकर मैंने प्रवेश किया है । परन्तु कोई विशेष पोशाक नहीं देख रहा हूँ । क्या यह सचमुच में दरिद्र है ? अथवा यह संयम के द्वारा (बहुमूल्यवान वस्तुओं को भूमि में गाडकर) निरर्थक वस्तु को ही बाहर रखकर रखा करता है । अथवा यह रमणीय भवनविन्यास, इस बात का साक्षी है कि यह ( व्यक्ति ) किसी समय धन का उपभोग कर चुका है, बाद में विभवहीन हो गया है ।

इस प्रकार निर्धन होकर भी यह गृहस्वामी केवल जन्मभूमि की ममता से इस घर की रक्षा कर रहा है अन्यथा ऐसी हालत में उसे यह घर बेच देना चाहिये था ॥ १२ ॥

भवतु पश्यामस्तावत्। अथवा, न खलु मे तुल्यावस्थः कुलपुत्रः पीडयितव्यः। गच्छामि तावत्।

विदूषकः—भो ! गण्ह एदं सुवण्णभण्डअं। [ भोः ! गृहाणैतत् सुवर्णभाण्डम्। ]

सज्जलकः—कथं सुवर्णभाण्डमित्याह। किं मां दृष्ट्वाऽभिभाषते। आहोस्वित् सत्त्वलाघवात् स्वप्नायते। भवतु पश्यामस्तावत्। ( दृष्ट्वा ) भूतार्थं सुप्त एवायम्। तथाहि,

निःश्वासोऽस्य न शङ्कितो न विषमस्तुल्यान्तरं जायते
गात्रं सन्धिषु दीर्घतामुपगतं शय्याप्रमाणाधिकम्।
दृष्टिर्गाढनिमीलिता न चपलं पक्ष्मान्तरं जायते

---

सत्त्वलाघवात्—सत्त्वस्य = मनसः लाघवम् दौर्बल्यम् तस्मात् क्षीणबलत्वात् इत्यर्थः।

**निःश्वास इति**—अस्य निःश्वासः न शङ्कितः = न शङ्काव्यञ्जकः, शङ्काहेतुः ( जागरणस्येति भावः ) न विषमः परन्तु तुल्यान्तरं = तुल्यरूपं यथा स्यात् तथा, जायते गात्रं सन्धिषु = जान्वादिसन्धिषु दीर्घतामुपगतम् = सुप्रसारणात् दीर्घं सत्। शय्याप्रमाणाधिकम्—शय्यायाः प्रमाणम् इति शय्याप्रमाणम् तस्मात् अधिकम् = बहिर्भूतम् च प्रतीयते दृष्टिः = नेत्रम् गाढम् = अत्यन्तम् निमीलिता =

---

अच्छा, तब तक देखता हूँ। अथवा मेरे समान दरिद्र इस कुलीन व्यक्ति को कष्ट नहीं दूँगा। तब मैं जाता हूँ।

विदूषक—भो ! इस सुवर्णभाण्ड को ग्रहण करो।

सज्जलक—क्यों सुवर्णभाण्ड की ( चर्चा ) करता है ? क्या मुझे देखकर कह रहा है ? अथवा दुर्बल मन के कारण स्वप्न देख रहा है अच्छा, तब तक देखता हूँ। ( देखकर ) यह सचमुच में सोया है।

क्योंकि—इसका श्वास निःशङ्क होकर, सम एवं तुल्यरूप से चल रहा है। शरीर की सन्धियों में फैलाव के कारण दीर्घता आ गई है, एवं शय्या के प्रमाण से वे अधिक लम्बी हो गई हैं। आंखें बन्द हैं एवं पलकें भी निश्चल हैं। यदि

दीपं चैव न मर्षयेदभिमुखः स्याल्लक्षसुप्तो यदि ॥ १२ ॥

क्व नु खलु तत् । अये जर्जरप्रावरणैकदेशे दीपप्रभाव्यक्तीकृतरूपं दृश्यते । सुपरिगृहीतमनेन । अयमत्र प्राप्तकालः । इमे मया गृहीताः शलभाः । दीपनिर्वापणार्थमेकं मुञ्चामि । ( भ्रमरकरण्डकादेकं मुञ्चति । ) अये एष दीपं निर्वाप्य पतति ।

विदूषकः—अविहा णिव्वाविदो दीवो दाणिं । मुसिदो म्हि । भो चारुदत्त ! गण्ह एदं सुवण्णालङ्कारं । अहं खु भीदीए उप्पहप्पवुत्तो विअ वणिजो णिद्दं ण लभामि । मम बम्हण्णेण साविदो सि, जइ ण गण्हसि । [ अविहा निर्वापितो दीप इदानीम् । मुषितोऽस्मि । भोश्चारुदत्त !

---

सम्पुटिता पक्ष्मान्तरम् = नेत्रलोमस्थानम् चपलं न जायते, यदि एष लक्ष-सुप्तः = व्याजसुप्तः भवेत् तदा अभिमुखम् = पुरोवर्तमानम् सः दीपम् न मर्षयेत् = न सहेत ( एतेन गाढा निद्रा व्यज्यते । अतः अनुमीयते यत् अयं सत्यमेव सुप्तः ॥ १२ ॥

जर्जरप्रावरणैकदेशे—जर्जरं = जीर्णं प्रावरणम् = आच्छादनवस्त्रं तस्य एक-देशः तस्मिन् । दीपप्रभाव्यक्तीकृतरूपम्—दीपस्य प्रभया व्यक्तीकृतं रूपं यस्य तत् । प्राप्तकालः = अपहरणस्य समुचितसमयः ।

मुषितः अस्मि=अहम् हृतसुवर्णभाण्डः अस्मि । भीत्या—भयेन उत्पथप्रवृत्तः= विमार्गे प्रवृत्तः । अर्थात् वाणिज्यमार्गमुल्लङ्घ्य गमनशील इत्यर्थः ।

---

यह सोने का बहाना कर रहा होता तो सामने दीपक की रोशनी को बर्दास्त न करता ( अर्थात् दीपक की ओर मुंह करके न सोता ) ॥ १२ ॥

वह ( सुवर्णभाण्ड ) कहाँ है ? अये ! पुराने वस्त्र के भीतर दीप के प्रकाश में इसका रूप दिखाई पड़ रहा है । इसने अच्छी तरह पकड़ लिया है । यही उपयुक्त समय है । मैंने इन शलभों को पकड़ लिया है । दीपक बुझाने के लिए एक को छोड़ देता हूँ । (भ्रमर-पेटिका से एक को छोड़ता है ।) अये ! यह दीप को बुझाकर गिर जाता है ( अर्थात् स्वयं नष्ट हो जाता है ) ।

विदूषक—आह ! खेद की बात है कि इस समय दीपक बुझा दिया गया । मैं बर्बाद हो गया । भो ! चारुदत्त ! इस सुवर्णालङ्कार को ग्रहण करो । मुझे

गृहाणेमं सुवर्णालङ्कारम्। अहं खलु भीत्योत्पथप्रवृत्त इव वणिग् निद्रां न लभे। मम ब्राह्मत्वेन शापितोऽसि, यदि न गृह्णासि। ]

सज्जलकः—किमत्र शपथपरिग्रहेण। एष प्रतिगृह्णामि। ( गृह्णाति। )

विदूषकः—( दत्त्वा ) अहं विक्किणिदभण्डओ विअ वणिजओ सुहं सइस्सं। [ *अहं विक्रीतभाण्डक इव वणिक् सुखं शयिष्ये।* ]

सज्जलकः—सुखं स्वपिहि महाब्राह्मण! ( विचिन्त्य ) भोः! ब्राह्मणेन विश्वासाद् दीयमानं मया हर्तव्यमासीत्।

धिगस्तु खलु दारिद्र्यमनिर्वेदं च यौवनम्।
यदिदं दारुणं कर्म निन्दामि च करोमि च ॥ १४ ॥

---

शपथपरिग्रहेण = शपथस्य परिग्रहेण किं स्यात् इत्यर्थः।

विक्रीतभाण्डकः—विक्रीतं भाण्डकं येन सः। शयिष्ये = निद्रां लभे।

**धिगिति**—दारिद्र्यम् = अकिञ्चनत्वम्, धिक्=धिक्कारः अस्तु अनिर्वेदम्—अविद्यमानः निर्वेदः=तृप्तिः यस्मिन् भोगेन अतृप्तम् इत्यर्थः, यौवनम्=मम यौवनम् खलु = निश्चयेन ( धिगस्तु ) यत् = यस्मात् कारणात् ( अहम् ) इदम् दारुणम् = चौर्यरूपनिन्दितम् कर्म निन्दामि च ( तथापि ) करोमि च ॥ १४ ॥

---

इसी प्रकार भय से नींद आ रही जैसे रास्ता भूले हुए व्यापारी को। यदि तुम नहीं लेते हो तो मैं ब्राह्मण के नाते तुम्हें शपथ दे दूँगा।

सज्जलक—इसमें शपथ लेने की आवश्यकता ही क्या है। मैं इसे ग्रहण करता हूँ। ( ग्रहण करता है। )

विदूषक—( देखकर ) मैं भाण्ड की बिक्री करनेवाले वणिक् की भांति सुखपूर्वक सो रहा हूँ।

सज्जलक—भो! महाब्राह्मण! सुखपूर्वक सोओ। ( चिन्ता करके ) भो! मैंने चुरा लिया, जो ब्राह्मण के विश्वास पर दिया गया था ( अर्थात् वह चारुदत्त को दिया जा रहा है उसे मैंने हरण किया )।

मेरी दरिद्रता को धिक्कार है तथा इस यौवन को धिक्कार है जो प्रायश्चित्त से रहित ( अतृप्त ) है। क्योंकि मैं बुरे कार्य की निंदा भी कर रहा हूँ और फिर भी इसे कर रहा हूँ ॥ १४ ॥

दीपं चैव न मर्षयेदभिमुखः स्याल्लक्षसुप्तो यदि ॥ १३ ॥

क नु खलु तत्। अये जर्जरप्रावरणैकदेशे दीपप्रभाव्यक्तीकृतरूपं दृश्यते। सुपरिगृहीतमनेन। अयमत्र प्राप्तकालः। इमे मया गृहीताः शलभाः। दीपनिर्वापणार्थमेकं मुञ्चामि। ( भ्रमरकरण्डकादेकं मुञ्चति। ) अये एष दीपं निर्वाप्य पतति।

विदूषकः—अविहा णिव्वाविदो दीवो दाणिं। मुसिदो म्हि। भो चारुदत्त! गण्ह एदं सुवण्णालङ्कारं। अहं खु भीदीए उप्पहप्पवुत्तो विअ वणिजो णिद्दं ण लभामि। मम वम्हत्तणेण साविदो सि, जइ ण गण्हसि। [ अविहा निर्वापितो दीप इदानीम्। मुषितोऽस्मि। भोश्चारुदत्त!

---

सम्पुटिता पक्ष्मान्तरम् = नेत्रलोमस्थानम् चपलं न जायते, यदि एष लक्ष-सुप्तः = व्याजसुप्तः भवेत् तदा अभिमुखम् = पुरोवर्तमानम् सः दीपम् न मर्षयेत् = न सहेत ( एतेन गाढा निद्रा व्यज्यते। अतः अनुमीयते यत् अयं सत्यमेव सुप्तः ॥ १३ ॥

जर्जरप्रावरणैकदेशे—जर्जरं = जीर्णं प्रावरणम् = आच्छादनवस्त्रं तस्य एक-देशः तस्मिन्। दीपप्रभाव्यक्तीकृतरूपम्—दीप्तस्य प्रभया व्यक्तीकृतं रूपं यस्य तत्। प्राप्तकालः = अपहरणस्य समुचितसमयः।

मुषितः अस्मि=अहम् हृतसुवर्णभाण्डः अस्मि। भीत्या—भयेन उत्पथप्रवृत्तः= विमार्गे प्रवृत्तः। अर्थात् वाणिज्यमार्गमुल्लङ्घ्य गमनशील इत्यर्थः।

---

यह सोने का बहाना कर रहा होता तो सामने दीपक की रोशनी को बर्दाश्त न करता ( अर्थात् दीपक की ओर मुंह करके न सोता ) ॥ १३ ॥

वह ( सुवर्णभाण्ड ) कहाँ है? अये! पुराने वस्त्र के भीतर दीप के प्रकाश में इसका रूप दिखाई पड़ रहा है। इसने अच्छी तरह पकड़ लिया है। यही उपयुक्त समय है। मैंने इन शलभों को पकड़ लिया है। दीपक बुझाने के लिए एक को छोड़ देता हूँ। (भ्रमर-पेटिका से एक को छोड़ता है।) अये! यह दीप को बुझाकर गिर जाता है ( अर्थात् स्वयं नष्ट हो जाता है )।

विदूषक—आह! खेद की बात है कि इस समय दीपक बुझा दिया गया। मैं बर्बाद हो गया। भो! चारुदत्त! इस सुवर्णालङ्कार को ग्रहण करो। मुझे

गृहाणेमं सुवर्णालङ्कारम् । अहं खलु भीत्योत्पथप्रवृत्त इव वणिग् निद्रां न लभे । मम ब्राह्मत्वेन शापितोऽसि, यदि न गृह्णासि । ]

सज्जलकः—किमत्र शपथपरिग्रहेण । एष प्रतिगृह्णामि । ( गृह्णाति । )

विदूषकः—( दत्त्वा ) अहं विक्किणिदभण्डओ विअ वणिजओ सुहं सइस्सं । [ अहं विक्रीतभाण्डक इव वणिक् सुखं शयिष्ये । ]

सज्जलकः—सुखं स्वपिहि महाब्राह्मण ! ( विचिन्त्य ) भोः ! ब्राह्मणेन विश्वासाद् दीयमानं मया हर्तव्यमासीत् ।

धिगस्तु खलु दारिद्र्यमनिर्वेदं च यौवनम् ।
यदिदं दारुणं कर्म निन्दामि च करोमि च ॥ १४ ॥

---

शपथपरिग्रहेण = शपथस्य परिग्रहेण किं स्यात् इत्यर्थः ।

विक्रीतभाण्डकः—विक्रीतं भाण्डकं येन सः । शयिष्ये = निद्रां लभे ।

**धिगिति**—दारिद्र्यम् = अकिञ्चनत्वम् , धिक्=धिक्कारः अस्तु अनिर्वेदम्—अविद्यमानः निर्वेदः=तृप्तिः यस्मिन् भोगेन अतृप्तम् इत्यर्थः, यौवनम्=मम यौवनम् खलु = निश्चयेन ( धिगस्तु ) यत् = यस्मात् कारणात् ( अहम् ) इदम् दारुणम् = चौर्यरूपनिन्दितम् कर्म निन्दामि च ( तथापि ) करोमि च ॥ १४ ॥

---

इसी प्रकार भय से नींद आ रही जैसे रास्ता भूले हुए व्यापारी को। यदि तुम नहीं लेते हो तो मैं ब्राह्मण के नाते तुम्हें शपथ दे दूँगा।

सज्जलक— इसमें शपथ लेने की आवश्यकता ही क्या है। मैं इसे ग्रहण करता हूँ। ( ग्रहण करता है। )

विदूषक—( देकर ) मैं भाण्ड की विक्री करनेवाले वणिक् की भांति सुख-पूर्वक सो रहा हूँ।

सज्जलक—भो ! महाब्राह्मण ! सुखपूर्वक सोओ। ( चिन्ता करके ) भो! मैंने चुरा लिया, जो ब्राह्मण के विश्वास पर दिया गया था ( अर्थात् यह चारुदत्त को दिया जा रहा है उसे मैंने हरण किया )।

मेरी दरिद्रता को धिक्कार है तथा इस यौवन को धिक्कार है जो प्रायश्चित्त से रहित ( अतृप्त ) है। क्योंकि मैं बुरे कार्य की निंदा भी कर रहा हूँ और फिर भी इसे कर रहा हूँ ॥ १४ ॥

( नेपथ्ये पटहशब्दः क्रियते । )

सज्जलकः—( कर्णं दत्त्वा ) अये प्रभातसमयः संवृत्तः । अपसरामि तावत् ।

( निष्क्रान्तः सज्जलकः । )

( प्रविश्य )

चेटी—( साक्रन्दम् ) अय्यमेत्तेअ ! अम्हाणं रुक्खवाडिआपक्खदुवाले सन्धि छिन्दिअ चोरो पविट्ठो । [ आर्यमैत्रेय ! अस्माकं वृक्षवाटिकापक्षद्वारे सन्धिं छित्त्वा चोरः प्रविष्टः । ]

विदूषकः—( सहसोत्थाय ) किं भणादि होदी । [ किं भणति भवती । ]

( चेटी रुक्खवाडिअत्ति पठति । )

विदूषकः—चोरं छिन्दिअ सन्धी पविट्ठो । [चोरं छित्त्वा सन्धिः प्रविष्टः।]

चेटी—हदास ! सन्धि छिन्दिअ चोरो पविट्ठो । [ हताश ! सन्धिं छित्त्वा चोरः प्रविष्टः । ]

विदूषकः—आअच्छ णं दंसेहि । [ आगच्छ ननु दर्शय । ]

चेटी—[ परिक्रम्य ) एदं । [ एतत् । ]

---

( नेपथ्य में नगाड़े का शब्द होता है । )

सज्जलक—( ध्यान देकर ) अरे ! सवेरा हो गया । तब मैं भाग जाता हूँ । ( सज्जलक निकल जाता है ) ।

( प्रवेश कर )

चेटी—( जोर से चिल्लाकर ) आर्य मैत्रेय ! मेरी वृक्षवाटिका के पक्ष द्वार में चोर सुरङ्ग बनाकर घुस गया ।

विदूषक—( सहसा उठकर ) आप क्या कह रही हैं ?

( चेटी फिर उसी को दुहराती है )

विदूषक—सुरङ्ग बनाकर चोर घुस गया ।

चेटी—हाय ! सुरङ्ग बनाकर चोर घुस गया ।

विदूषक—आइये और मुझे दिखाइये ।

चेटी—( घूमकर ) यह है ।

विदूषकः—अविहा दासीएवुत्तेण कुक्कुरेण पवेसो किदो। भोदि! आअच्छ, चारुदत्तस्स पिअं णिवेदेमि। [अविहा दास्याः पुत्रेण कुक्कुरेण प्रवेशः कृतः। भवति! आगच्छ चारुदत्तस्य प्रियं निवेदयामि।

( उभावुपगम्य )

भो चारुदत्त! पिअं दे णिवेदेमि। [भोश्चारुदत्त! प्रियं ते निवेदयामि।]

नायकः—( बुद्ध्वा ) किं मे प्रियम्। ननु वसन्तसेना प्राप्ता।

विदूषकः—ण खु वसन्तसेणा, वसन्तसेणो पत्तो। [न खलु वसन्तसेना, वसन्तसेनः प्राप्तः।]

नायकः—रदनिके! किमेतत्।

चेटी—भट्टिदारअ! अम्हाणं रुक्खवाडिआपक्खदुवारे सन्धि छिन्दिअ चोरो पविट्ठो। [भर्तृदारक! अस्माकं वृक्षवाटिकापक्षद्वारे सन्धि छित्वा चोरः प्रविष्टः।]

नायकः—किं चोरः प्रविष्टः।

विदूषकः—भो वअस्स! सव्वहा तुवं भणासि, मुक्खो मेत्तेओ अपण्डिदो मेत्तेओ त्ति। णं मए सोभणं किदं तं सुवण्णभण्डअं तव हत्थे समप्पअन्तेण। [भो वयस्य! सर्वथा त्वं भणसि, मूर्खो मैत्रेयोऽपण्डितो मैत्रेय इति। ननु मया शोभनं कृतं तत् सुवर्णभाण्डकं तव हस्ते समर्पयता।]

---

विदूषक—आह! दासीपुत्र कुक्कुर ने प्रवेश किया था। चलो चलें और यह प्रिय सन्देश आर्य चारुदत्त को निवेदन कर दें। ( दोनों समीप जाकर ) भो चारुदत्त! मैं आपसे कुछ प्रिय संदेश निवेदन करना चाहूँगा।

नायक—( उठकर ) मेरे लिए क्या प्रिय संदेश है? क्या वास्तव में वसन्तसेना आ गई?

विदूषक—वसन्त सेना नहीं, बल्कि वसन्तसेन आया है।

नायक—रदनिके! यह क्या है?

चेटी—महाशय! मेरी वृक्षवाटिका के पक्षद्वार में चोर सुरङ्ग बनाकर घुस गया।

नायक—क्या चोर घुस गया?

विदूषक—भो मित्र! आप हमेशा कहा करते थे कि मैत्रेय मूर्ख है अपण्डित है। परन्तु मैंने अच्छा किया कि सुवर्णभाण्ड आपके हाथ में दे दिया।

नायकः—किं भवता दत्तम् ।

विदूषकः—अहइं । [ अथ किम् । ]

नायकः—कस्यां वेलायाम् ।

विदूषकः—अद्धरत्ते । [ अर्धरात्रे । ]

नायकः—किमर्धरात्रे । वाढं दत्तम् ।

विदूषकः—भो चारुदत्त ! जं वेलं पडिवुद्धो आसि, तस्सिं वेलाअं खु दिण्णं । [ भोश्चारुदत्त ! यस्यां वेलायां प्रतिवुद्ध आसीः, तस्यां वेलायां खलु दत्तम् । ]

नायकः—हन्त हृतं सुवर्णभाण्डकम् ।

विदूषकः—दाणिं मे हत्थे पडिच्छिदु अत्तभवं । [ इदानीं मम हस्ते प्रयच्छत्वत्रभवान् । ]

नायकः—( आत्मगतम् )

कः श्रद्धास्यति भूतार्थं सर्वो मां तूलयिष्यति ।
शङ्कनीया हि दोषेषु निष्प्रभावा दरिद्रता ॥ १५ ॥

---

क इति—कः = लोकः भूतः = सत्यः अर्थः = चौरकर्तृकस्वर्णभाण्डापहरण-रूपा घटना तम् श्रद्धास्यति = विश्वसिष्यति ( अपितु ) सर्वः जनः माम् = दरिद्रं चारुदत्तम् तुलयिष्यति = शठो वा तस्करो वा इति तुल्या निर्णेष्यति, अर्थात् यथार्थवृत्तान्तेऽविश्वासतया स्वयमेवापहृतमिति अपवादोत्पादनेन तूलवत् लघु करिष्यति इत्याशयः । हि = यतः मयि दोषे असति अपि दोषेषु = दोषविषयेषु

---

नायक—क्या आपने दे दिया ?

विदूषक—और क्या ?

नायक—किस समय ?

विदूषक—आधी रात को ।

नायक—क्या आधी रात में ? क्या आपने सचमुच मुझे दे दिया ?

विदूषक—भो चारुदत्त ! जिस समय आप जगे हुए थे, उसी समय दिया था ।

नायक—हाय ! सुवर्णभाण्ड की चोरी हो गई ।

विदूषक—इस समय आप मेरे हाथ में दें ।

नायक—( मन में ) इस सही वात का कौन विश्वास करेगा, सव लोग मुझे ही चोर वतायेंगे । मुझमें दोष न होने पर भी प्रभाव मिटानेवाली दरिद्रता के कारण मुझे ही ( दोषी ) लगाया जायगा ॥ १५ ॥

( प्रविश्य )

ब्राह्मणी—रदणिए ! रदणिए ! आअच्छ । णहि सुणादि । कवाडसद्दं दाव करिस्सं । ( तथा करोति । ) [ रदनिके ! रदनिके ! आगच्छ । न हि शृणोति । कवाटशब्दं तावत् करिष्यामि । ]

चेटी—हं, कवाडसद्दो विअ । भट्टिदारिआ मं सद्दावेदि । ( परिक्रम्य ) भट्टिदारिए ! इअ म्हि । [ हं, कवाटशब्द इव । भर्तृदारिका मां शब्दापयति । भर्तृदारिके ! इयमस्मि । ]

ब्राह्मणी—ण परिक्खदो ण वावादिदो अय्यउत्तो अय्यमेत्तेओ वा । [ न परिक्षतो न व्यापादित आर्यपुत्र आर्यमैत्रेयो वा । ]

चेटी—कुसली भट्टिदारओ अय्यमेत्तेओ अ । जो तस्स जणस्स अलङ्कारो चोरेण गहीदो । [ कुशली भर्तृदारक आर्यमैत्रेयश्च । यस्तस्य जनस्यालङ्कारश्चोरेण गृहीतः । ]

ब्राह्मणी—किं भणासि चोरेण गहीद त्ति । [ किं भणसि चोरेण गृहीत इति । ]

चेटी—अह इं । [ अथ किं । ]

---

निष्प्रभावा = निर्गतः प्रभावः यस्याः सा एवंभूता दरिद्रता = दैन्यम् शङ्कनीया = ईक्षणीया, अर्थात् समस्य शङ्का स्थानम् भवतीति भावः ॥ १५ ॥

---

( प्रवेश कर )

ब्राह्मणी—रदनिके ! रदनिके ! आओ । नहीं सुनती हो । तब मैं दरवाजा खटखटाऊँगी । ( वैसा ही करती है । )

चेटी—यह कपाट के शब्द की तरह ( आवाज आ रही है )। भर्तृदारिका मुझको बुला रही हैं ? ( घूमकर ) भर्तृदारिके ! मैं यहाँ हूँ।

ब्राह्मणी—आर्यपुत्र अथवा मैत्रेय आहत या मारे तो नहीं गए ?

चेटी—आर्यपुत्र और मैत्रेय दोनों सकुशल हैं। केवल उनके भूषण चोर चुरा ले गया।

ब्राह्मणी—क्या कह रही है 'चोर ले गया है' ?

चेटी—हाँ,

ब्राह्मणी—किंणु खु तस्स जणस्स दादव्वं भविस्सदि। अहव एदं दइस्सं। ( कर्णौ स्पृष्ट्वा ) हद्धि तालीपत्तं खु एदं। सो दाणि परिअओ मं विलम्बेदि। किं दाणिं करिस्सं। ( विचिन्त्य ) भोदु, दिट्ठं। मम ञ्जादिकुलादो लद्धा सदसहस्समुल्ला मुत्तावली। तं पि अय्यउत्तो सोडीरदाए पडिच्छदि। भोदु, एवं दाव करिस्सं ( निष्क्रान्ता ) [ किन्तु खलु तस्मै जनाय दातव्यं भविष्यति। अथवैतद् दास्यामि। हा धिक् तालीपत्रं खल्वेतत्। स इदानीं परिचयो मां विडम्बयति। किमिदानीं करिष्यामि। भवतु, दृष्टम्। मम ज्ञातिकुलाद् लब्धा शतसहस्रमूल्या मुक्तावली। तामप्यार्यपुत्रः शौटीरतया प्रतीच्छति। भवतु, एवं तावत् करिष्यामि। ]

विदूषकः—इमस्स अन्धआरुप्पादिदस्स अवराहस्स किदे भवन्तं सीसेण पसादेमि। दाणिं मे हत्थे पडिच्छदु अत्तभवं। [ अस्यान्धकारोत्पादितस्यापराधस्य कृते भवन्तं शीर्षेण प्रसादयामि। इदानीं मे हस्ते प्रयच्छत्वत्रभवान्। ]

नायकः—किं भवानिदानीं मां बाधते।

भवांस्तावदविश्वासी शीलज्ञो मम नित्यशः।

---

शौटीरतया = अभिमानेन, आभिजात्येन हेतुना वा प्रतीच्छति किम् = ग्रहीष्यति किम्? इति प्रश्नकाकुः अर्थात् स्त्रीधनत्वात् न ग्रहीष्यति इति भावः।

अन्धकारोत्पादितस्य = अन्धकारे उत्पादितस्य इत्यर्थः।

भवानिति—यदि मम शीलज्ञः—शीलं स्वभावं जानाति इति शीलज्ञः,

---

ब्राह्मणी—अब उस वसन्तसेना को क्या दिया जायगा? अथवा इसको दे दूँगी। ( कानों को स्पर्श करके ) हाय! यह तो तालपत्र का कर्णभूषण है। आभूषणों के पुराने परिचय मुझे कष्ट दे रहे हैं। तब मैं इस समय क्या करूँ? ( चिन्ता करके ) अच्छा, मैंने उपाय सोच लिया। मुझे अपने सम्बन्धियों से सहस्रमूल्य वाली 'मुक्तावली' मिली है। क्या उसे आर्यपुत्र स्वकुल के अभिमान से चाहेंगे ( अर्थात् लेंगे )? अच्छा, तब ऐसा ही करूंगी। ( निकल जाती है। )

विदूषक—मैंने अंधेरे में आपको अलंकार देकर जो अपराध किया उसके लिए शिर नवाकर आपको प्रसन्न करता हूँ। इस समय आप उसे मेरे हाथ में दें।

नायक—आप मुझे ( इन शब्दों से ) क्यों पीडित कर रहे हैं?

आप मेरे दैनिक कर्म एवं स्वभाव से सुपरिचित हैं तथापि मेरे ऊपर अविश्वास

किं पुनः स कलाजीवी वञ्चनापण्डितो जनः ॥ १६ ॥

विदूषकः—मण्णे मए मन्दभग्गेण कुम्भीलस्स हत्थे दिण्णं। (विषण्णस्तिष्ठति। [ मन्ये मया मन्दभाग्येन कुम्भीलस्य हस्ते दत्तम्। ]

( प्रविश्य )

ब्राह्मणी—रदणिए! अय्यमेत्तेअं सद्दावेहि। [ रदनिके! आर्यमैत्रेयं शब्दापय। ]

चेटी—अय्यमेत्तेअ! भट्टिदारिआ तुमं सद्दावेदि। [ आर्यमैत्रेय! भर्तृदारिका त्वां शब्दापयति। ]

विदूषकः—भोदि! किं मं। [ भवति! किं माम्। ]

चेटी—आम्। [ आम्। ]

विदूषकः—एस आअच्छामि। [ एष आगच्छामि। ] ( उपसर्पति। )

ब्राह्मणी—अय्यमेत्तेअ! इमं पडिग्गहं पडिगण्ह। [ आर्यमैत्रेय! इमं प्रतिग्रहं प्रतिगृहाण। ]

---

नित्यज्ञ = नित्यकर्मज्ञः भवान् ( मयि ) अविश्वासी तावत्, ( तदा ) कलाजीवी = अभिनयादिकलोपजीवी वञ्चनापण्डितः = परवञ्चनायां पण्डितः = प्रवीणः जनः = वसन्तसेनारूपः वेश्याजनः किं पुनः विश्वासी भवेत्? न कदाचिदपि मां विश्वसेत् इति भावः ॥ १६ ॥

प्रतिग्रहम् = दानम्।

---

कर रहे हैं तो अभिनयादि कला की मर्मज्ञ तथा वञ्चना कला में पण्डित वसन्तसेना मेरा कैसे विश्वास करेगी? ॥ १६ ॥

विदूषक—तब मानता हूँ कि मुझ कम्बख्त ने उसे चोर के हाथ में दे दिया। ( दुःखी होकर बैठ जाता है। )

( प्रवेश कर )

ब्राह्मणी—रदनिके! आर्य मैत्रेय को बुलाओ।

चेटी—आर्यमैत्रेय! भर्तृदारिका आपको बुला रही हैं।

विदूषक—ओ माननीया, क्या मुझको बुला रही हैं?

चेटी—हां।

विदूषक—यह मैं आता हूँ। ( समीप जाता है। )

ब्राह्मणी—आर्यमैत्रेय! यह दान ग्रहण करें।





विदूषकः—अवत्थाविरुद्धो खु अअं पदाणविभवो । कुदो एदस्स आगमो । [ अवस्थाविरुद्धः खल्वयं प्रदानविभवः । कुत एतस्यागमः । ]

ब्राह्मणी—णं तहिं उववसामि । सव्वसारविभवेण बम्हणेण सोत्थि याअइदव्वं त्ति एसो इमस्स आगमो ! [ ननु षष्ठीमुपवसामि । सर्वसार विभवेन ब्राह्मणेन स्वस्ति याचयितव्येति एषोऽस्यागमः । ]

विदूषकः—अट्ठमी खु अज्ज । [ अष्टमी खल्वद्य । ]

ब्राह्मणी—पमादादो अदिक्कमो किदो । अज्ज पूआ णिव्वत्तीअदि । [ प्रमादाद् अतिक्रमः कृतः । अद्य पूजा निर्वर्त्यते । ]

विदूषकः—अणणुरूवदाए पदाणस्स अणुक्कोसो विअ पडिभादि । ( जनान्तिकम् ) रदणिए ! किं करिस्सं । [ अननुरूपतया प्रदानस्यानुक्रोश इव प्रतिभाति । रदनिके ! किं करिष्यामि । ]

चेटी—( अपवार्य ) किंणु खु तस्स जणस्स दादव्वं भविस्सदि त्ति

---

प्रदानविभवः = प्रदानस्य विभवः = संपत् तथा ।
सर्वसारविभवेन सर्वेषां सारः एवंभूतः विभवः तेन ।
जनान्तिकम्—जनान्ते = पात्रगणमध्ये यदन्योन्यामन्त्रणं परस्परमालापस्तज्जनान्तिकं भवति; यथोक्तं दर्पणे-'अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम्' इति अननुरूपतया = प्रदानस्य अवस्थाविरुद्धतया इत्यर्थः । अनुक्रोशः = दया ।

---

विदूषक—दान की यह संपत्ति इस अवस्था के अनुकूल नहीं है । यह कहां से मिली है ?

ब्राह्मणी—मैं षष्ठी के दिन उपवास रहती हूँ । ऐसी परिस्थिति में मैं अप सर्वश्रेष्ठ विभव के द्वारा ब्राह्मण से स्वस्ति-पाठ कराना चाहती हूँ । यही इ ( उपहार ) का कारण है ।

विदूषक—आज तो अष्टमी है ।

ब्राह्मणी—प्रमाद के कारण दिन का ध्यान नहीं रहा हो । आज पूजा करनी है ।

विदूषक—अवस्था-विरुद्ध होने के कारण यह दान दया की भांति मालूम हो रहा है । ( जनान्तिक में ) रदनिके ! क्या करूँ ?

चेटी—( सबको न सुनाकर ) वसन्तसेना को क्या दूँगा—इसी निमित्त से

एदणिमित्तं भट्टिदारओ सन्तप्पदि त्ति भट्टिदारिआ तव हत्थे दइअ अय्यउत्तं अणिरिणं करिस्सामि त्ति एवं करेदि। ता गण्ह एदं। [ किन्तु खलु तस्मै जनाय दातव्यं भविष्यतीत्येतन्निमित्तं भर्तृदारकः संतप्यत इति भर्तृदारिका तव हस्ते दत्त्वाऽऽर्यपुत्रमनृणं करिष्यामीत्येवं करोति। तद् गृहाणैतत्। ]

ब्राह्मणी—उदअसम्भवदाए मुत्तावलीए तव अदुल्लहदाए उवआरो विस्सरिदो। गण्ह एदं। ( ददाति। ) [ उदकसम्भवतया मुक्तावल्यास्तव च दुर्लभतयोपचारो विस्मृतः। गृहाणैतत्। ]

विदूषकः—( गृहीत्वा ) सव्वं दाव चिट्ठदु। रोदिदी विअ होदीए दिट्ठी। [ सर्वं तावत् तिष्ठतु। रोदितीव भवत्या दृष्टिः। ]

ब्राह्मणी—देवउलधूमेण रोदाविदा। [ देवकुलधूमेन रोदिता। ]

विदूषकः—साविदासि तत्तहोदा चारुदत्तेण, जइ अलिअं भणासि। [ शापितासि तत्रभवता चारुदत्तेन, यद्यलीकं भणसि। ]

---

अनृणम् = ऋणरहितम् इत्यर्थः।

उदकसम्भवतया—उदकात् = सलिलात् सम्भवः = उत्पत्तिर्यस्याः सा तस्या-भावः तया।

देवकुलधूमेन—देवकुलस्य = मन्दिरस्य धूमेन अहं रोदिता इति भावः।

---

स्वामी सन्तप्त हो रहे हैं' इसीलिए भर्तृदारिका आपके हाथ में यह ( मुक्तावली ) देकर स्वामी को ऋणमुक्त करना चाहती हैं। अतः आप इसे ले लें।

ब्राह्मणी—मुक्तावली की उत्पत्ति जल से हुई तिस पर भी आपके दर्शन उचित समय पर न हो सके। इसलिये इस भेंट द्वारा आपका सत्कार करना भूल गई थी। इसे ग्रहण करें। ( दे देती है। )

विदूषक—( ग्रहण करके ) ये सब रहने दीजिए। आपकी आँखें मानो रो रही हों।

ब्राह्मणी—देव-मन्दिर का धुँआ मुझे रुला रहा है।

विदूषक—आर्य चारुदत्त के नाम की शपथ है, यदि आप झूठ बोलोगी।

ब्राह्मणी—हद्धि । ( निष्क्रान्ता । ) [ हा धिक् । ]

विदूषकः—एसा वाआए दुक्खं रक्खिअ अस्सूहि सूइअ गआ। ( उपगम्य ) भो ! इदं । [ एषा वाचा दुःखं रक्षित्वाऽश्रुभिः सूचयित्वा गता। भोः ! इदम् । ]

नायकः—किमेतत् ।

विदूषकः—सरिसकुलदारसङ्गहस्स फलं । [ सदृशकुलदारसंग्रहस्य फलम् । ]

नायकः—किं ब्राह्मणी मामनुकम्पते ।

विदूषकः—एवं व्विअ । [ एवमिव । ]

नायकः—धिगात्मानम् । अद्य हतोऽस्मि ।

**मयि द्रव्यक्षयक्षीणे स्त्रीद्रव्येणानुकम्पितः ।**

---

सदृशकुलदारसंग्रहस्य—सदृशम् = समानं योग्यं वा कुलम् इति सदृशकुलम् दाराणां = स्त्रीणां संग्रहः इति दारसंग्रहः सदृशकुलात् दारसंग्रहः इति सदृशकुलदारसंग्रहः तस्य ।

**मयि इति**—मयि द्रव्यक्षयक्षीणे—द्रव्यक्षयेण = धननाशेन क्षीणः = दुर्बलः एवंभूते सति स्त्रीद्रव्येण = स्वकीयभार्यायाः मुक्तावलीरूपद्रव्येण = धनेन अनुकम्पितः = यथाकाले साहाय्यप्रदानेन दयाविषयीकृतः । पुरुषः = पौरुषगुणाश्रयः

---

ब्राह्मणी—हा धिक् ! ( निकल जाती है । )

विदूषक—इस वाक्य से दुःख का संवरण करके और आँसुओं द्वारा सूचना देकर चली गई ।

( नायक के समीप जाकर ) भो ! यह देखिये ।

नायक—यह क्या है ?

विदूषक—उपयुक्त कुल की पत्नी मिलने का यह फल है ।

नायक—क्या ब्राह्मणी ने मेरे ऊपर दया की है ?

विदूषक—ऐसा ही है ।

नायक—मुझे धिक्कार है । आज मर गया ।

मैं धन के नाश होने से दुर्बल दशा में स्त्रीरूप द्रव्य से अनुकम्पित हुआ हूँ ।

अर्थतः पुरुषो नारी या नारी साऽर्थतः पुमान् ॥ १७ ॥

विदूषकः—तत्तहोदी हिअएण तुमं याचेदि । अहं सीसेण याचेमि । गण्ह एदं । [ तत्रभवती हृदयेन त्वां याचते । अहं शीर्षेण याचे । गृहाणैतत् । ]

नायकः—तथा । ( गृहीत्वा ) वयस्य ! इमां मुक्तावलीं गृहीत्वा वसन्तसेनायाः सकाशं गच्छ ।

अर्थेषु काममुपलभ्य मनोरथो मे
स्त्रीणां धनेष्वनुचितं प्रणयं करोति ।
माने च कार्यकरणे च विलम्बमानो
धिग् भोः ! कुलं च पुरुषस्य दरिद्रतां च ॥ १८ ॥

विदूषकः—अहो अप्पमुल्लस्स सुवण्णभण्डअस्स किदे सदसहस्स-

---

अर्थतः = वस्तुतः नारीकार्यवशात् सम्पद्यते । एवं या साहाय्यविधायिनी नारी सा अर्थतः = कर्मतः पुमान् = पुरुषसदृशी, कार्यकाले पुरुषवत् कार्यकरणात् ॥१७॥

**अर्थेषु इति**—मे = मम मनोरथः अर्थेषु = धनविषयेषु कामम् = यथेष्टम् सन्तुष्टिम् इत्यर्थः, उपलभ्य = प्राप्य अधुना माने = स्वकीयमानरक्षणे च कर्तव्यकरणे = न्यासप्रत्यर्पणरूपकर्तव्यकरणे विलम्बमानः सन् = कालक्षेपं कुर्वन् स्त्रीणां धनेषु अनुचितम् = अयोग्यम् प्रणयम् = आसक्तिम् करोति = दर्शयति इति आशयः । अतः पुरुषस्य कुलम् = उच्चकुलं, दरिद्रतां च धिक् ॥ १८ ॥

---

सचमुच यहाँ पुरुष नारीतुल्य हो गया और नारी वास्तव में पुरुष हो गई ॥१७॥

विदूषक— माननीया ब्राह्मणी हृदय से आपको चाहती हैं और मैं नत मस्तक द्वारा । अतः इसे आप ग्रहण करें ।

नायक—ऐसा ही हो । ( ग्रहण कर ) मित्र ! इस मुक्तावली को लेकर वसन्तसेना के पास जाओ ।

धन के विषय में मेरा मनोरथ अत्यन्त तृप्ति को पाकर इस समय ( स्वकीय ) मानरक्षा करने में और कर्तव्य ( न्यास-प्रत्यर्पण रूप ) कार्य को करने में विलम्ब होता हुआ देखकर स्त्रियों के धन में अनुचित अनुराग दिखा रहा है । अतः इस मर्यादा से बद्ध उच्चकुल तथा दरिद्रता ( दोनों ) को धिक्कार है ॥ १८ ॥

विदूषक—अहो ! अल्पमूल्यवाले सुवर्णभाण्ड के लिए शत सहस्र (एक लाख)

मुल्ला मुत्तावली णीआदइदव्वा । [ अहो अल्पमूल्यस्य सुवर्णभाण्डकस्य कृते शतसहस्रमूल्या मुक्तावली निर्यातयितव्या । ]

नायकः—वयस्य ! मा मैवम् ।

यं समालक्ष्य विश्वासं न्यासोऽस्मासु कृतस्तया ।
तस्यैतन्महतो मूल्यं प्रत्ययस्य प्रदीयताम् ॥ १९ ॥

( निष्क्रान्ताः सर्वे । )

तृतीयोऽङ्कः ।

---

यमिति—तया = वसन्तसेनया यम् = इमम् विश्वासम् = प्रत्ययम् समालक्ष्य = मनसि उद्भाव्य, उद्दिश्य वा अस्मासु = धनहीनजनेषु न्यासः = स्वर्णभाण्डनिक्षेपः कृतः । तस्य = पूर्वोक्तस्य महतः = प्रधानभूतस्य प्रत्ययस्य = विश्वासस्य मूल्यम् = मूल्यस्वरूपम् एतत् = मुक्तावलीरूपम् द्रव्यम् प्रदीयताम् ॥ १९ ॥

तृतीयोऽङ्कः समाप्तः ।

---

मूल्यवाली यह मुक्तावली क्यों दी जानी चाहिये ?

नायक—मित्र ! ऐसी बात मत कहो ।

जिस विश्वास के ऊपर उसने ( वसन्तसेना ) मेरे पास धरोहर रक्खी, उस महान् विश्वास का मूल्यस्वरूप यह 'मुक्तावली' तुम उसे दो ॥ १९ ॥

( सबके सब चले जाते हैं । )

॥ तीसरा अङ्क समाप्त ॥



# अथ चतुर्थोऽङ्कः

( ततः प्रविशति सोत्कण्ठा वसन्तसेना, चित्रफलकमादाय वर्तिकाकरण्डहस्ता चेटी च । )

गणिका—हञ्जे ! पेक्खसि सरिसो तस्स जणस्स । [ हञ्जे ! पश्यसि सदृशस्तस्य जनस्य । ]

चेटी—अज्जुए ! तस्सिं हत्थिविमद्दकोलाहले बहुमाणपय्यत्थाए दिट्ठीए दूरदो दिट्ठो सो भट्टिदारओ ईदिसो एव्व । [ अज्जुके ! तस्मिन् हस्तिविमर्दकोलाहले बहुमानपर्यस्तया दृष्ट्या दूरतो दृष्टः स भर्तृदारक ईदृश एव । ]

गणिका—तुमं दाव दक्खो वेसवासजणो त्ति जणवादं पूरअन्ती अलिअं भणासि । [ त्वं तावद् दक्षो वेशवासजन इति जनवादं पूरयन्त्यलीकं भणसि । ]

---

वर्तिकाकरण्डहस्ता—वर्तिकाकरण्डः=तूलिकासमुद्गकः, हस्ते=करे, यस्याः सा ।

तस्य जनस्य = चारुदत्तस्य, सदृशः = अनुरूपः, किम् ? अर्थात् एष चित्राङ्कितो जनः चारुदत्तस्य सदृशः किम् इति प्रश्नः ।

हस्तिना हस्तिनो वा, विमर्दः = आक्रमणम् , तेन, कोलाहलः, तस्मिन् हस्तिविमर्दकोलाहले । बहुमानपर्यस्तया—बहुमानेन = समादरेण, पर्यस्ता = प्रेरिता, विक्षिप्ता वा, इति बहुमानपर्यस्ता, तया दृष्ट्या = लोचनेन ।

वेशवासजनः = वेश्याजनः । दक्षः = दक्षिणः, सुपण्डितः इति जनवादं =

---

( इसके बाद उत्कण्ठित वसन्तसेना एवं चित्रफलक, वर्तिका (ब्रश) और रंगों की पेटी हाथ में लिए हुए चेटी का प्रवेश । )

गणिका—अरी ! इसे देख रही हो, चारुदत्त के समान ही तो है ।

चेटी—श्रीमती जी, हाथी के आक्रमण-जनित कोलाहल के समय सम्मान भरी आंखों के द्वारा दूर से देखे गए भर्तृदारक के समान ही यह मालूम पड़ता है ।

गणिका—तब तुम 'वेश्याएँ ( वाक्चातुरी में ) दक्ष होती हैं' इस लोकापवाद को पुष्ट एवं सार्थक बनाती हुई झूठ बोल रही हो ।

चेटी—किं एदं वेसवासजणो सव्वो दक्खिणो होइ त्ति। पेक्खदु अज्जुआ, चम्पआरामे पिचुमन्दा जाअन्ति। अदिसरिस त्ति मम हिअअं अहिरमदि। परमत्थदो एव्व पसंसीअदि, णं कामदेवो। [किमेतद् वेशवासजनः सर्वो दक्षिणो भवतीति। पश्यत्वज्जुका, चम्पकारामे पिचुमन्दा जायन्ते। अतिसदृश इति मम हृदयमभिरमते। परमार्थत एव प्रशस्यते, ननु कामदेवः।]

गणिका—हञ्जे! सहीजणेण अवहसणीअत्तणं अत्तणो परिहरामि। [हञ्जे! सखीजनेनापहसनीयत्वमात्मनः परिहरामि।]

चेटी—एदं जुज्जइ। सहीजणसपत्तिओ गणिआजणो णाम। [एतद् युज्यते: सखीजनसपत्नीको गणिकाजनो नाम।]

(ततः प्रविशत्याभरणहस्ताऽपरा चेटी।)

चेटी—सुहं अज्जुआए। [सुखमज्जुकायाः।]

---

प्रवादं, पूरयन्ती = सार्थकं कुर्वती, त्वम्, अलीकं = मिथ्या ('अलीकं त्वप्रियेऽनृते' इत्यमरः) भणसि।

चम्पाकारामे = चम्पकोद्याने। पिचुमन्दाः = निम्बवृक्षाः इत्यर्थः।

अपहसनीयत्वम् = उपहास्यत्वम्।

सखीजनसपत्नीकः—समानः पतिर्यस्याः इति सपत्नी, सखीजनः सपत्नी यस्य सः।

---

चेटी—क्या सब वेश्याएँ दक्ष हुआ करती हैं? माननीये, देखिये। चम्पकोद्यान में निम्बवृक्ष भी उत्पन्न हो गये हैं। यह चित्रगत व्यक्ति इसके (चारुदत्त के अत्यन्त अनुरूप है। एतदर्थ इस चित्र में मुझे बड़ा आनन्द मिल रहा है अर्थात् मेरा मन इसमें रम रहा है। वास्तव में मैं इसकी प्रशंसा करती हूँ। सचमुच में इसका रूप प्रशंसा के योग्य है; लगता है जैसे कामदेव ही हो।

गणिका—अरी! मैं सखीजनों के द्वारा अपना उपहास नहीं चाहती।

चेटी—ठीक कह रही हैं। सखीजन तो गणिकाजन के सपत्नी स्वरूप ही हैं।

(इसके बाद आभरण हाथ में लिए हुए दूसरी दासी का प्रवेश।)

चेटी—श्रीमतीजी, (वसन्तसेने!) आप कुशल से तो हैं?

गणिका—हञ्जे ! साअदं दे। [ हञ्जे ! स्वागतं ते। ]

चेटी—अज्जुए ! अत्ता आणवेदि—इदं दुवारं पविट्ठं पोक्खरं उवावत्तिदं पहवणं। ता तुवरमाणमण्डणा गहीदावउण्ठणा आअच्छदु त्ति। इह अलङ्कारं अलङ्करेदु अज्जुआ। [ अज्जुके ! अम्बाऽऽज्ञापयति—इदं द्वारं प्रविष्टं पौष्करमुपावर्तितं प्रवहणम्। तत् त्वरमाणमण्डना गृहीतावगुण्ठनाऽऽगच्छत्विति। इहालङ्कारमलङ्करोत्वज्जुका। ]

गणिका—किं अय्यचारुदत्तो मण्डइस्सिदि। [ किमार्यचारुदत्तो मण्डयिष्यति। ]

चेटी—णहि, जेण अलङ्कारो पेसिदो सो राअसालो सण्ठाणो। [ न हि, येनालङ्कारः प्रेषितः स राजस्यालः संस्थानः। ]

गणिका—अवेहि अविणीदे !। [ अपेह्यविनीते। ]

---

पौष्करम् = पद्माकरसन्निवेशम् इति भावः। उपावर्तितम् = आगतम्, सुसज्जितम् वा प्रवहणम् = गोशकटम्, स्त्रीजनोचितगोयानम् इत्यर्थः। त्वरमाणमण्डना—त्वरमाणं मण्डनं यस्याः सा। गृहीतावगुण्ठना—गृहीतम् = धृतम् अवगुण्ठनं = वाह्यावरणम् यया सा।

संस्थानः = ( कामवासनादिदोषैः ) स्थीयतेऽस्मिन् इति अधिकरणे ल्युट् संस्थानमस्त्यस्मिन्निति अर्शादित्वादच् संस्थानः एतन्नामकः।

अपेहि = दूरमपसर इति भावः। कुत्सितः संस्थानः संस्थानकः ( कुत्सायां कप्रत्ययः ) राज्ञः स्यालः इति भावः।

---

गणिका—अरी ! तुम्हारा स्वागत हो।

चेटी—माननीये, अम्बा आज्ञा दे रही हैं कि तुम्हारे द्वार पर कमलध्वज से अंकित प्रवहण (=बैलगाड़ी) आया हुआ है। अतः आपको शीघ्र ही अलंकृत हो जाना चाहिए और घूंघट करके इस पर ( सवार होकर ) चला जाना चाहिए। ये रहे अलंकार आप इन्हें धारण कर लें।

गणिका—क्या आर्य चारुदत्त मुझे अलंकृत करेंगे ?

चेटी—नहीं, जिसने अलंकार भेजा है, वह राजा का साला संस्थान है।

गणिका—ओ अविनीते ! दूर हटो !

चेटी—पसीदद्दु पसीदद्दु अज्जुआ । सन्देसं खु अहं मन्तेमि । ( पादयोः पतति । ) [ प्रसीदतु प्रसीदत्वज्जुका । सन्देशं खल्वहं मन्त्रये । ]

गणिका—उट्ठेहि उट्ठेहि । कुसन्देसं असूआमि, ण तुवं । [ उत्तिष्ठोत्तिष्ठ । कुसन्देशमसूयामि, न त्वाम् । ]

चेटी—किं अहं अत्तं भणामि । ( किमहमम्बां भणामि । ]

गणिका—भणेहि अत्तं—जदा अय्यचारुदत्तो अभिसारइदव्वो तदा मण्डेमि त्ति । [ भणाम्बां—यदाऽऽर्यचारुदत्तोऽभिसारयितव्यस्तदा मण्डयामीति । ]

चेटी—तह । ( निष्क्रान्ता । ) [ तथा । ]

( ततः प्रविशति सज्जलकः । )

सज्जलकः—

**कृत्वा निशायां वचनीयदोषं निद्रां च हित्वा तिमिरं भयं च ।**
**स एव सूर्योदयमन्दवीर्यः शनैर्दिवाचन्द्र इवास्मि भीतः ॥ १ ॥**

---

कृत्वेति—निशायाम् = रात्रौ, निद्रां, तिमिरम् = अन्धकारम्, भयं च, हित्वा = त्यक्त्वा, वचनीयदोषम् = चौर्यरूपदोषम्, कृत्वा स एवाहं, शनैः = मन्दं मन्दमित्यर्थः, सूर्योदयमन्दवीर्यः ( सन् )—सूर्यस्य उदयेन मन्दम् = क्षीणम्,

---

चेटी—माननीये, प्रसन्न हों प्रसन्न हों ! मैं केवल सन्देश दे रही हूँ। ( पैरों पर गिर जाती है )।

गणिका—उठो, उठो ! मैं सन्देश को ही बुरा भला कह रही हूँ, न कि तुमको।

चेटी—मैं अम्बा से क्या कहूँगी ?

गणिका—माता से कहो कि जब मैं चारुदत्त के पास जाऊँगी उस समय अपने आपको अलंकृत करूँगी।

चेटी—अच्छी बात है। ( निकल जाती है। )

( तब सज्जलक का प्रवेश। )

सज्जलक—रात्रि में निद्रा, अन्धकार और भय को छोड़कर तथा चौर्यरूप दोष करके वही मैं इस समय सूर्योदय के कारण शनैः शनैः मन्दकान्ति वाले दिन के चन्द्रमा की भाँति भयभीत हो रहा हूँ ( दिन में चोर गण निस्तेज एवं असहाय हो जाते हैं ) ॥ १ ॥

दिष्ट्या कर्मान्ते प्रभातम्। यावदिदानीं वसन्तसेनायाः परिचारिकाया मदनिकाया निष्क्रयार्थं मयेदं कृतम्। (परिक्रम्य) इदं वसन्तसेनाया गृहम्। यावत् प्रविशामि। (प्रविश्य) किन्तु खल्वभ्यन्तरस्था मदनिका। अथवा, पूर्वाह्ले गणिकानामभ्यन्तरे सान्निध्यम्। अतस्तत्रैव तया भवितव्यम्। यावच्छब्दापयामि। मदनिके! मदनिके!।

चेटी—(आकर्ण्य) सज्जलअस्स विअ सरो। वावुदा अज्जुआ। ता उवसप्पिस्सं। (उपगम्य) इअम्हि। [सज्जलकस्येव स्वरः। व्यापृताऽज्जुका। तदुपसर्पिष्यामि। इयमस्मि।]

सज्जलकः—इतस्तावत्।

चेटी—किं तुवं सङ्किदवण्णो विअ। [किं त्वं शङ्कितवर्ण इव।]

---

दुर्बलम् वा, वीर्यम् = पराक्रमम्, सामर्थ्यम्, यस्य सः। दिवाचन्द्रः = दिवाकालीनः चन्द्र इव भीतः अस्मिन्॥ १॥

दिष्ट्या भाग्यक्रमेण, सौभाग्येन इत्यर्थः। कर्मान्ते = मम चौर्यरूपकर्मसमाप्तौ सत्यां प्रभातम् जातम् इत्यर्थः। निष्क्रयार्थम्—निष्क्रयाय इदम् इति निष्क्रयार्थम्= दासीत्वबन्धनान्मोचयितुमिति भावः। (Deliverance By paying money sansom) पूर्वाह्ले—पूर्वम् अह्नः इति पूर्वाह्नः तस्मिन्।

व्यापृता = कार्ये व्यस्ता इत्यर्थः।

शङ्कितवर्ण इव—शङ्कितः वर्णः = आकृतिः यस्य सः तद्वदिति भावः।

---

सौभाग्यवश चौर्य कर्म के समाप्त होते ही सवेरा हो गया। इस समय वसन्तसेना की परिचारिका मदनिका, जिसको मैं प्यार करता हूँ; के उद्धार के लिये (अर्थात् गुलामी के बन्धन से छुड़ाने के लिये) यह कार्य मैंने किया है। (घूम करके) यह वसन्तसेना का घर है। तब प्रवेश करता हूँ। (प्रवेश कर) क्या मदनिका अन्दर है? अथवा पूर्वाह्ण (= दिन के पहला पहर) में (वह) गणिकाओं के पास ही रहती है। अतः वह वहाँ होगी। तब उसे बुलाता हूँ। मदनिके! मदनिके!

चेटी—(सुनकर) सज्जलक की-सी आवाज है। आर्या तो अन्य कार्य में व्यस्त हैं। तब मैं ही जाऊँगी। (समीप जाकर) मैं यहाँ हूँ।

सज्जलक—तब यहाँ आओ।

चेटी—क्यों तुम शंकित की भांति दीख रहे हो।

सज्जलकः—न खलु, किञ्चित् कथयितुकामः ।

गणिका—हञ्जे ! इमं चित्तफलअं सअणीए ठावेहि । (विलोक्य) कहिं गआ हदासा । अहव अदूरगआए होदव्वं । जाव णं पेक्खिस्सं (परिक्रम्यावलोक्य) अम्मो इअं सा अदिसिणिद्धाए दिट्ठीए केण वि मणुस्सेण पिवन्ती विअ सह मन्तअन्ती चिट्ठइ । तक्केमि एसो जो कोवि कएण मं यावेदि । [ हञ्जे ! इदं चित्रफलकं शयनीये स्थापय । कुत्र गता हताशा । अथवा अदूरगतया भवितव्यम् । यावदेनां प्रेक्षिष्ये । अम्मो इयं साऽतिस्निग्धया दृष्ट्या केनापि मनुष्येण पिवन्तीव सह मन्त्रयमाणा तिष्ठति । तर्कयाम्येष यः कोऽपि क्रयेण मां याचते । ]

सज्जलकः—श्रूयतां रहस्यम् ।

गणिका—अजुत्तं पररहस्सं सोदुं, अहं गमिस्सं । [ अयुक्तं पररहस्यं श्रोतुम्, अहं गमिष्यामि । ]

सज्जलकः—अपि वसन्तसेना (इत्यर्धोक्ते) ।

गणिका—अहं अहिइदा एदाअं कहाअं । होदु, सुणिस्सं दाव भवि-

---

कथयितुकामः—कथयितुं कामः = अभिलाषो यस्य सः ।

हताशा = हता = विनष्टा आशा यस्याः सा । प्रेक्षिष्ये = पश्यामि इत्यर्थः । क्रयेण = मूल्येन ।

---

सज्जलक—वस्तुतः ऐसा नहीं है, मैं कुछ कहना चाहता हूँ ।

गणिका—अरी ! यह चित्रफलक शय्या पर रख दो । (इधर-उधर देखकर) वह कम्बख्त कहाँ चली गई । अथवा यहीं कहीं पास में ही है । तब तक इसे देखती हूँ । (घूमकर और देखकर) अरे ! यह तो यहीं स्नेहभरी आखों से देखती हुई किसी पुरुष से बात कर रही है । मैं अनुमान करती हूँ कि यह मुझे पैसों से खरीदना चाहता है ।

सज्जलक—रहस्य तो सुनो ।

गणिका—दूसरे का रहस्य सुनना असङ्गत है । इसलिये मैं चली जाती हूँ ।

सज्जलक—वसन्तसेना भी होगी · · · (इस प्रकार अधूरा कहने पर)

गणिका—इस बात-चीत से तो मैं भी संबन्धित हूँ । अच्छा, मैं भी सुनूँगी

स्सदि । ( पुनः प्रतिनिवृत्त्य स्थिता । ) [ अहमधिकृतैतस्यां कथायाम् । भवतु, श्रोष्यामि तावद् भविष्यति । ]

सज्जलकः—किं दास्यति त्वां निष्क्रयेण ।

गणिका—सो एव्व एसो । होदु, सुणिस्सं । [ स एवैषः । भवतु, श्रोष्यामि । ]

चेटी—सज्जलअ ! मम पदाणं पुढमं एव्वं अज्जुआए उत्तं । [ सज्जलक ! मम प्रदानं प्रथममेवाज्जुकयोक्तम् । ]

सज्जलकः—तेन हीममस्यै प्रयच्छ, एवं वक्तव्या च—

**अयं तव शरीरस्य प्रमाणादिव निर्मितः ।**
**अप्रकाश्यो ह्यलङ्कारो मत्स्नेहाद् धार्यतामिति ॥ २ ॥**

चेटी—पेक्खामि दाव । [ पश्यामि तावत् । ]

सज्जलकः—गृह्यताम् । ( दर्शयति । )

---

निष्क्रयेण = द्रव्यविनिमयेन ।

**अयमिति**—अयम् अप्रकाश्यः = चौर्यप्राप्तत्वात् । जनसमीपे प्रकाशयितुम् अयोग्यः गोपनीय इति भावः, अलङ्कारः तव = वसन्तसेनायाः शरीरस्य प्रमाणात् इव प्रमाणं कृत्वेवेति भावः ( ल्यब्लोपे एषा पञ्चमी बोद्धव्या ) निर्मितः = स्वर्णकारेण विनिर्मितः मत्स्नेहात्—मयि स्नेहहेतोः त्वया धार्यताम् = धारणं क्रियताम् , गृह्यताम् इति ॥ २ ॥

---

( यह वार्तालाप चाहे जिस ढंग की हो ) [ फिर घूमकर स्थित होती है ]।

सज्जलक—क्या ( वसन्तसेना ) पैसे से तुम्हें देगी ?

गणिका—यह तो वही ( व्यक्ति ) है । अच्छा, मैं सुनूंगी ।

चेटी—सज्जलक, आर्या मुझे पहले ही देने को कह रक्खा है ।

सज्जलक—तब इसे उन्हें दे दो और कहो कि—गुप्त रखने योग्य यह अलङ्कार तुम्हारे शरीर के प्रमाण से ही मानों निर्मित हुआ है । अतः मुझ में प्रेम होने के कारण तुम्हें इसे धारण करना चाहिए ॥ २ ॥

चेटी—तब इसे मैं देखूंगी ।

सज्जलक—लो । ( अलङ्कार को दिखाता है )।

चेटी—दिट्ठपुव्वो विअ अअं अलङ्कारो । [ दृष्टपूर्व इवायमलङ्कारः । ]

गणिका—ममकेरओ विअ अअं अलङ्कारो । [ मदीय इवायमलङ्कारः । ]

चेटी—भणाहि भणाहि । को इमस्स आअमो । [ भण भण । कोऽस्यागमः । ]

सज्जलकः—त्वत्स्नेहात् साहसं कृतम् ।

उभे—हं, साहसिओ । [ हं, साहसिकः । ]

चेटी—( आत्मगतम् ) आ, अज्जुआए खु इमस्स आइदी कम्मदारुणदाए उव्वेअणीआ संवुत्ता । ( प्रकाशम् ) हद्धि मम किदे उभअं संसइदं संवुत्तं—तव सरीरं चारित्तं च । [ आ, अज्जुकायाः खल्वस्याकृतिः कर्मदारुणतयोद्वेजनीया संवृत्ता । हा धिग् मम कृते उभयं संशयितं संवृत्तं—तव शरीरं चारित्रं च । ]

---

त्वत्स्नेहात्—तव त्वयि वा स्नेहः = अनुरागः तस्मात् हेतोः । साहसम्= चौर्यरूपकम् इत्यर्थः ।

हम् ( हुम् ) इति स्वीकारार्थकमव्ययम् ।

अस्य = सज्जलकस्य आकृतिः = आकारः अज्जुकायाः=गणिकायाः, वसन्तसेनाया इति भावः ( संमुखे ) कर्मदारुणतया = चौर्यादिक्रूरकर्महेतोः, उद्वेजनीया= उद्वेजयतीत्युद्वेजनीया ( कर्तरि अनीयर् ) उद्वेगसम्पादिका, क्षोभणीया इति यावत् । संवृत्ता=संजाता । उभयम्=द्वयम् , शरीरं चारित्रमिति उभयं मत्कृते संशयितम्= संशययुक्तम् संवृत्तम् = जातम् ।

---

चेटी—यह ( अलंकार ) पहले देखा गया हो ऐसा मालूम हो रहा है ।

गणिका—यह आभूषण मेरे अलंकार की भांति प्रतीत हो रहा है ।

चेटी—कहो, कहो । यह अलंकार तुम्हें कहाँ से उपलब्ध हुए हैं ?

सज्जलक—तुम्हारे स्नेह के कारण ऐसा साहस किया ।

दोनों—वाहरे ! साहसी ।

चेटी—( स्वगत ) अहा, इसकी आकृति चौर्यरूप दारुण कर्म करने के कारण माननीया ( वसन्तसेना ) के समक्ष उद्विग्न-सी हो गई । ( प्रकाश रूप से ) हाय धिक् ! मेरे लिये तुम्हारे शरीर एवं चरित्र दोनों संदेहयुक्त हो गए ।

सज्जलकः—उन्मत्तिके ! साहसे खलु श्रीर्वसति ।

चेटी—अपण्डिदो खु सि । को हि णाम जीविदेण सरीरं विक्कीणिस्सदि । अह कस्स गेहे इअं विस्सासवञ्चणा किदा । [ अपण्डितः खल्वसि । को हि नाम जीवितेन शरीरं विक्रेष्यति । अथ कस्य गेहे इयं विश्वासवञ्चना कृता । ]

सज्जलकः—यथा प्रभाते मया श्रुतं—श्रेष्ठिचत्वरे प्रतिवसति सार्थवाहपुत्रश्चारुदत्तो नाम ।

उभे—हुम् ।

सज्जलकः—अयि,

**विषादस्रस्तसर्वाङ्गी सम्भ्रमोत्फुल्ललोचना ।**
**मृगीव शरविद्धाङ्गी कम्पसे चानुकम्पसे ॥ ३ ॥**

---

श्रेष्ठिचत्वरे—श्रेष्ठिनां—वणिजानां चत्वरे = निवासस्थाने ( लक्षणया अयमर्थो बोद्धव्यः )। सार्थवाहपुत्रः—वणिक्पुत्रः 'वैदेहकः सार्थवाहो नैगमो वणिजो वणिक्' इत्यमरः ।

**विषादेति**—विषादस्रस्तसर्वाङ्गी—विषादेन = दुःखेन स्रस्तानि = शिथिलीभूतानि सर्वाण्यङ्गानि यस्याः सा, सम्भ्रमेण = चञ्चलतया उत्फुल्ले = विकसिते तादृशे लोचने = नयने यस्याः सा, शरविद्धाङ्गी—शरेण = वाणेन विद्धम् तादृशम् अङ्गं यस्याः एवंभूता मृगीव = हरिणीव ( भयात् ) त्वम् कम्पसे = वेपसे ( मां ) च अनुकम्पसे = दयसे च ॥ ३ ॥

---

सज्जलक—उन्मत्तिके ! साहस ( उद्योग ) में ही लक्ष्मी का निवास होता है ।

चेटी—तुम मूर्ख हो । कौन है, जो जीते जी अपने शरीर को बेच देगा । विश्वासघात किया है ।

सज्जलक—प्रातःकाल जैसा मैंने सुना कि सेठों के महल्ले में सार्थवाह पुत्र, चारुदत्त नामक व्यक्ति रहता है ।

दोनों—हाँ ।

सज्जलक—प्रिये, विषाद से त्रस्त, चञ्चलता के कारण विकसित नयनों वाली तथा शर ( वाण ) से विद्ध शरीर वाली मृगी की तरह ( भय से ) तुम कांप रही हो और दया भी कर रही हो ॥ ३ ॥

चेटी—सच्चं भणाहि। सत्थवाहकुले साहसं करन्तेण तुए कोच्चि कुलवुत्तो सत्थेण अत्थि परिक्खदो वावादिदो वा। [ सत्यं भण। सार्थवाहकुले साहसं कुर्वता त्वया कश्चित् कुलपुत्रः शस्त्रेणास्ति परिक्षतो व्यापादितो वा। ]

गणिका—सुट्ठु, मए वि पुच्छिदव्वं एदाए पुच्छिदं। [ सुष्ठु, मयापि प्रष्टव्यमेतया पृष्टम्। ]

सज्जलकः—मदनिके ! एतावत् किं न पर्याप्तं, द्वितीयमप्यकार्यं करिष्यामि। न खल्वत्र शस्त्रेण कश्चित् परिक्षतो व्यापादितो वा।

चेटी—सज्जलअ ! सच्चं। [ सज्जलक ! सत्यम्। ]

सज्जलकः—सत्यम्।

चेटी—साहु सज्जलअ ! पिअं मे। [ साधु सज्जलक ! प्रियं मे। ]

सज्जलकः—किं किं प्रियमित्याह। ईदृशं मदनिके !

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं
सन्तुष्टपूर्वपुरुषेऽपि कुले प्रसूतः।

---

एतावत् किं न पर्याप्तम् = अर्थात् मया अपहृतं धनं तव तोषाय किं न पर्याप्तमस्ति, तदा द्वितीयमपि अकार्यं = शस्त्रेण मारणरूपं क्रूरकर्म अपि करिष्यामि ? कदापि नैव।

त्वत्स्नेहेति—सन्तुष्टपूर्वपुरुषे = सन्तुष्टः पूर्वपुरुषः यस्मिन् एवंभूते

---

चेटी—ठीक २ कहो। वणिक्कुल में साहस करते हुए तुमने किसी कुलपुत्र को शस्त्र के प्रहार से घायल तो नहीं किया है ?

गणिका—अच्छा, मुझे भी यही पूछना था, जो इसने पूछा है।

सज्जलक—मदनिके ! क्या ( तुम्हारी प्रसन्नता के लिये ) इतना पर्याप्त नहीं है ? क्या दूसरा अकार्य ( शस्त्र से मारण रूप कर्म ) भी करूँगा ? मेरे चौर्यरूप कर्म में कोई भी शस्त्र-अस्त्र से घायल नहीं हुआ है।

चेटी—सज्जलक ! क्या यह सत्य है ?

सज्जलक—बिलकुल सत्य है।

चेटी— साधु सज्जलक ! साधु। यह मेरे लिये अच्छा ही हुआ।

सज्जलक—क्या, क्या 'प्रिय' ऐसा कह रही हो ? क्या ऐसी बात है ?

जिस कुल में पूर्व पुरुष सर्वतोभावेन संतुष्ट थे ऐसे वंश में उत्पन्न होकर भी तुम्हारे स्नेह के वशीभूत मैं चौरादि कुकर्म करता हूँ और काम से अभिभूत अपने

रक्षामि मन्मथगृहीतमिदं शरीरं
मित्रं च मां व्यपदिशस्यपरं च यासि ॥ ४ ॥

चेटी—सज्जलअ ! सुणाहि । अज्जुआए अअं अलङ्कारो । ( कर्णे । ) एव्वं विअ । [ सज्जलक ! शृणु । अज्जुकाया अयमलङ्कारः । एवमिव ]

सज्जलकः—एवम् ।

अज्ञानाद् या मया पूर्वं शाखा पत्रैर्वियोजिता ।
छायार्थी ग्रीष्मसन्तप्तस्तामेव पुनराश्रितः ॥ ५ ॥

---

कुले = वंशे प्रसूतः = उत्पन्नः अपि त्वत्स्नेहबद्धहृदयः—तव त्वयि वा स्नेहेन = प्रेम्णा बद्धम् = वशीभूतम् तत् तादृशं हृदयं – मनो यस्य सः, हि = निश्चयेन अकार्यम् = चौर्यादिनिन्दितं कर्म करोमि । मन्मथगृहीतम्—मन्मथेन = कामदेवेन गृहीतम् = अभिभूतम् इदं शरीरं रक्षामि, ( परन्तु त्वम् ) माम् = सज्जलकम् मित्रं = प्रियम् व्यपदिशसि = वाचा व्यवहरसि अपरं च । ( चारुदत्तम् ) यासि = हृदयेन प्रियतमम् अङ्गीकरोषि ॥ ४ ॥

अज्ञानादिति—अज्ञानात् = भ्रमवशात् मया या शाखा पूर्वम् पत्रैः = पर्णैः वियोजिता = रिक्तीकृता, पत्रवियोजनेन स्थाणुतां गमिता इति भावः, अर्थात् दुर्भाग्येन वसन्तसेनाया एवायमित्यनभिज्ञोऽहम् अलङ्कारम् अपहृतवान् ग्रीष्मसन्तप्तः—ग्रीष्मकालेन पीडितः (अत एव) छायार्थी=छायाजन्यशैत्यलाभार्थी (सोऽहम्) तामेव

---

शरीर की भी रक्षा करता हूँ । सामने तो तुम मुझे मित्र ( वल्लभ ) कहती हो फिर भी मन से किसी दूसरे ( चारुदत्त ) के साथ संबंध जोड़ती हो ॥ ४ ॥

चेटी—सज्जलक ! सुनो । माननीया ( वसन्तसेना ) का यह अलङ्कार है । ( कान में ) यह ऐसी बात है ।

सज्जलक—ऐसा है ।

अज्ञानवश मैंने जिस [1]शाखा को पहले पत्रों से रहित किया उसी का, ग्रीष्म से सन्तप्त होकर, छाया की खोज करते हुए मैंने आश्रय लिया है, भावार्थ यह है कि मदनाग्नि से सन्तप्त होकर मैं जिस वसन्तसेना से मदनिका को मुक्ति दिलाना चाहा उसी वसन्तसेना का मैंने अलंकार अपहरण किया ॥ ५ ॥

---

१. यहाँ पर 'शाखा' शब्द से वसन्तसेना और 'पर्णैः' शब्द से धन की तुलना की गई है ।

गणिका—सन्तप्पदि त्ति तक्केमि एदेण अकय्यं किदं ति । [ संतप्यत इति तर्कयामि एतेनाकार्यं कृतमिति । ]

सज्जलकः—मदनिके ! एवं गते किं कर्तव्यम् ।

चेटी—तहिं एव णिय्यादेहि, णहि मण्डइस्सदि अज्जुआ । [ तत्रैव निर्यातय, नहि मण्डयिष्यत्यज्जुका । ]

सज्जलकः—अथेदानीं सोऽमर्षान्मां चोर इति रक्षिपुरुषैर्ग्राहयिष्यति चेदत्र किं करिष्यामि ।

चेटी—मा भाआहि मा भाआहि । कुलवुत्तो खु सो गुणाणं परितुस्सदि । [ मा बिभीहि मा बिभीहि । कुलपुत्रः खलु स गुणानां परितुष्यति । ]

गणिका—साहु भद्दे ! अवत्तव्वासि, अलङ्किदा विअ एदेण वअणेण । [ साधु भद्रे ! अवक्तव्यासि, अलङ्कृतेवैतेन वचनेन । ]

सज्जलकः—सर्वथा न शक्याम्यहं तत्र गन्तुम् ।

---

( शाखाम् ) पुनः आश्रितः = आश्रितवान् । अर्थात् वसन्तसेनापरिचारिकायां मदनिकायामनुरक्तेन मया न्यासरूपालङ्कारापहरणेन वसन्तसेना वियोजिता इति हेतोः रुष्टा सा मह्यं मदनिकां नैव समर्पयिष्यति इति भावः ॥ ५ ॥

सन्तप्यते = सन्तप्तो भवति । अकार्यम् = असत्कार्यम् इत्यर्थः ।

रक्षिपुरुषैः = रक्षिणश्च ते पुरुषाश्च तैः राजपुरुषैः ( सिपाही इति भाषायाम् )

---

गणिका—इसने अपमानित कार्य किया है । इसीलिये पश्चात्ताप कर रहा है ऐसा अनुमान करती हूँ ।

सज्जलक—मदनिके ! ऐसी परिस्थिति में क्या करना चाहिये ?

चेटी—इसे वहीं ( चारुदत्त के पास ) ले जाओ; माननीया ( वसन्तसेना ) अपने आपको अलंकृत नहीं करेंगी ।

सज्जलक—यदि इस समय गुस्से के कारण रक्षित-पुरुष ( पुलिस ) के द्वारा चोर समझकर मैं पकड़ लिया गया, तब क्या करूंगा ?

चेटी—तुम डरो मत । चारुदत्त कुलीन हैं; अतएव गुणों से सन्तुष्ट होंगे ।

गणिका—साधुभद्रे ! तुम आलोचना नहीं कर रही हो, बल्कि तुम्हारे वचन से हम दोनों अलंकृत ही हुये हैं ।

सज्जलक—मैं सर्वथा वहां ( चारुदत्त के पास ) जाने में समर्थ नहीं होऊंगा ।

चेटी—अअं अण्णो उवाओ । [ अयमन्य उपायः । ]

गणिका—एदे गुणा वेसवासस्स । [ एते गुणा वेशवासस्य । ]

सज्जलकः—कोऽन्य उपायः ।

चेटी—णं तव रूपज्जा अज्जुआ अवि सत्थवाहपुत्तो अ । [ ननु तव रूपज्ञाऽज्जुकाऽपि सार्थवाहपुत्रश्च । ]

सज्जलकः—न खलु ।

चेटी—तेण हि इमं दाव अलङ्कारं तस्स सत्थवाहपुत्तस्स वअणादो अज्जुआए णिय्यादेहि । एवं च किदे तुवं रक्खिदो, सो अय्यो अ अणिव्विण्णो भविस्सदि । अहं च पीडिदा ण भविस्सं । अादु अज्जुअं च पुणो वञ्चिअ पुणो एव्व दासभावो भवे । [ तेन हीमं तावदलङ्कारं तस्य सार्थवाहपुत्रस्य वचनादज्जुकायै निर्यातय । एवं च कृते त्वं रक्षितः, स आर्यश्चानिर्विण्णो भविष्यति । अहं च पीडिता न भविष्यामि । अथवा अज्जुकां च पुनर्वञ्चयित्वा पुनरेव दासभावो भवेत् । ]

---

सार्थवाहपुत्रः—सार्थवाहस्य = वणिजः पुत्रः = चारुदत्तः इत्यर्थः, तथा अज्जुका च = गणिका, वसन्तसेनेति भावः, तव रूपज्ञा-रूपम् आकृतिं गुणञ्च जानातीति रूपज्ञा ।

तेन = तेन कारणेन, सार्थवाहपुत्रस्य = चारुदत्तस्य, वचनात् = वचनमा-

---

चेटी—यह दूसरा उपाय है ।

गणिका—ये वेश्याओं के गुण हैं ।

सज्जलक—दूसरा उपाय क्या है ?

चेटी—निश्चय ही तुम्हारे रूप एवं गुणों को आर्य चारुदत्त और श्रीमती वसन्तसेना भी जानती हैं ।

सज्जलक—नहीं ।

चेटी—इसलिये सार्थवाहपुत्र ( चारुदत्त ) के वचनों का आश्रय करके आर्या ( वसन्तसेना ) के लिये इस अलंकार को ले जाओ । इस प्रकार तुम भी बच जाओगे और वह ( चारुदत्त ) भी अलंकारों के खो जाने के हेतु दुःखी नहीं होगा और मैं भी दुःखी नहीं होऊँगी । यदि ऐसा न किया तो स्वामिनी की वञ्चना करने के कारण मुझे फिर दूसरे जन्म में दासी होना पड़ेगा ।

सज्जलकः—मदनिके ! प्रीतोऽस्मि ।

गणिका—भोदु अब्भन्तरं पविसिअ उवविसामि। ( तथा करोति। ) [ भवत्वभ्यन्तरं प्रविश्योपविशामि । ]

चेटी—सज्जलअ ! आअच्छ, कामदेवउले मं पडिवालेहि। अहं ओसरं जाणिअ अज्जुआए णिवेदेमि। [ सज्जलक ! आगच्छ, कामदेवकुले मां प्रतिपालय । अहमवसरं ज्ञात्वाऽज्जुकायै निवेदयामि । ]

सज्जलकः—बाढम्। ( निष्क्रान्तः। )

( ततः प्रविशत्यपरा चेटी। )

चेटी—सुहं अज्जुआए। एसो सत्थवाहपुत्तस्स सआसादो कोवि वम्हणो आअदो अज्जुअं पेक्खिदुं। [ सुखमज्जुकायाः। एष सार्थवाहपुत्रस्य सकाशात् कश्चिद् ब्राह्मण आगतोऽज्जुकां द्रष्टुम्। ]

गणिका—( सादरम् ) गच्छ, सिग्घं पवेसेहि णं। [ गच्छ, शीघ्रं प्रवेशयैनम्। ]

चेटी—तह। ( उपसृत्य ) एदु एदु अय्यो। [ तथा। एत्वेत्वार्यः। ]

---

श्रित्य इति भावः, वचनादित्यत्र ल्यब्लोपे कर्मणि पञ्चमी। 'अज्जुकायै' इत्यत्र सम्प्रदाने चतुर्थी, निर्यातय = समर्पय, अनिर्विण्णः=प्रसन्नः।

कामदेवकुले—कामस्य=मदनस्य उत्सवाय निर्मिते देवकुले=मन्दिरे इत्याशयः।

सकाशात् = समीपात्।

---

सज्जलक—मदनिके! मैं तुमसे प्रसन्न हूँ।

गणिका—अच्छा, भीतर घुसकर बैठ जाती हूँ। ( वैसा ही करती है। )

चेटी—सज्जलक आओ और कामदेव के मन्दिर में मेरी प्रतीक्षा करो। मैं अवसर जानकर आर्या से निवेदन कर दूँगी।

सज्जलक—बिलकुल ठीक। ( निकल जाता है। )

( इसके बाद दूसरी दासी का प्रवेश )

चेटी—आर्या का मंगल हो। यह ब्राह्मण सार्थवाहपुत्र ( चारुदत्त ) के यहाँ से आया है, जो आपसे मिलना चाहता है।

गणिका—( आदर के साथ ) जाओ उसे शीघ्र ही अन्दर लाओ।

चेटी—ऐसा ही हो। ( समीप जाकर ) आर्य! आइये! आइये।

( प्रविश्य )

विदूषकः—( सर्वतो विलोक्य ) अहो गणिआवाडस्स सस्सिरीअदा। णाणापट्टणसमागदेहि आअमिएहि पुत्थआ वाईअन्ति। संजोजअन्ति अ आहारप्पआराणि। वीणा वादीअन्ति। सुवण्णआरा अलङ्कारप्पआराणि आदरेण जोजअन्ति। [ अहो गणिकावाटस्य सश्रीकता। नानापट्टणसमागतैरागमिकैः पुस्तकानि वाच्यन्ते। संयोज्यन्ते चाहारप्रकाराः। वीणा वाद्यन्ते। सुवर्णकारा अलङ्कारप्रकारानादरेण योजयन्ति। ]

चेटी—एसा अज्जुआ। उवसप्पदु अय्यो। [ एषाज्जुका। उपसर्पत्वार्यः। ]

विदूषकः—( उपगम्य ) सोत्थि होदीए। [ स्वस्ति भवत्यै। ]

गणिका—साअदं अय्यस्स। हञ्जे ! आसणं अय्यस्स, पादोदअं च। [ स्वागतमार्यस्य। हञ्जे ! आसनमार्यस्य, पादोदकं च। ]

---

गणिकावाटस्य = वेश्यागृहस्य, सश्रीकता—श्रिया = लक्ष्म्या, शोभया वा सह वर्तमानम् इति सश्रीकम्, तस्य भावः सश्रीकता = रमणीयता इति भावः। नानापट्टनसमागतैः—नानाविधानि पट्टनानि = पत्तनानि, नगराणि वा तेभ्यः समागताः तैः, आगमिकैः आगमः = आगमरूपशास्त्रं तं विदन्ति इति आगमिकाः तैः। अर्थात् निगमागमशास्त्रस्य वेत्तारः पुस्तकानि वाच्यन्ते = पठ्यन्ते इत्यर्थः।

---

( प्रवेश कर )

विदूषक—( अपने आप चारों ओर देखकर ) अहो ! गणिका के घर का यह आकर्षण एवं सौन्दर्य ! विभिन्न नगरों से आए हुए शास्त्रों के वेत्ता लोग शास्त्रों का पाठ कर रहे हैं। नाना प्रकार के भोजनों का प्रबन्ध किया जा रहा है। वीणा बजाई जा रही है। सुनार ध्यान से नानाविध अलङ्कारों का निर्माण कर रहे हैं।

चेटी—आर्या यहाँ हैं। आर्य स्वयं समीप जायँ।

विदूषक—( समीप जाकर ) आपका मंगल हो।

गणिका—आर्य का स्वागत है। चेटी ! श्रीमान् जी के लिए आसन और पादार्घ्य दो।

